पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

।।श्रीः।।

विद्याभवन प्राच्यविद्या ग्रन्थमाला

३५

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

षष्ठो ऽष्टक

चौखम्बा विद्याभवन

वाराणसी

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )
पो. बा. नं. 1069, वाराणसी 221001
दूरभाष : 2420404
ई-मेल : cvbhawan@yahoo.co.in

© सर्वाधिकार प्रकाशकाधीन
पुनर्मुद्रित 2007 ई०
**१-९ भाग (सम्पूर्ण)**
मूल्य : ३५००.००

अन्य प्राप्तिस्थान

**चौखम्बा पब्लिशिंग हाउस**

4697/2, भू-तल ( ग्राउण्ड फ्लोर )
गली नं. 21-ए, अंसारी रोड
दरियागंज, नई दिल्ली 110002
दूरभाष : 23286537

❖

**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड, जवाहर नगर
पो. बा. नं. 2113
दिल्ली 110007
दूरभाष : 23856391

❖

**चौखम्बा सुरभारती प्रकाशन**

के. 37/117 गोपालमान्दिर लेन
पो. बा. नं. 1129, वाराणसी 221001
दूरभाष : 2335263

THE
VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA
35

# ṚG-VEDA-SAṀHITĀ

Together with

## PADAPĀṬHA
## &
## SĀYAṆABHĀṢYA

Hindi Translation
by
Pt. Ram Govind Trivedi

## SIXTH AṢṬAKA

CHOWKHAMBA VIDYABHAWAN
VARANASI

*Publishers :*
**CHOWKHAMBA VIDYABHAWAN**
*(Oriental Publishers & Distributors)*
Chowk (Behind Bank of Baroda Building)
Post Box No. 1069
Varanasi 221001
Tel. : 2420404
E-mail : cvbhawan@yahoo.co.in

© All rights reserved
Edition : 2007
Price : 3500.00

*Also can be had from :*
**CHAUKHAMBA PUBLISHING HOUSE**
4697/2, Ground Floor
Gali No. 21-A, Ansari Road
Daryaganj, New Delhi 110002
Tel. : 23286537

**CHAUKHAMBA SANSKRIT PRATISHTHAN**
38 U.A. Bungalow Road, Jawahar Nagar
Post Box No. 2113
Delhi 110007
Tel. : 23856391

**CHAUKHAMBA SURBHARATI PRAKASHAN**
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
Varanasi 221001
Tel. : 2335263

## ॥ श्रीगणेशाय नमः ॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममे तमहंवंदे विद्यातीर्थमहेश्वरं ॥ १ ॥

इत्थंपंचमाष्टकं व्याख्यायेदानीं ऋषिच्छन्दोदेवताविनियोगप्रदर्शनपुरःसरं षष्ठस्य प्रथमोध्यायोव्याख्यातुमारभ्यते। अष्टममण्डलस्य द्वितीयेनुवाके षट्सूक्तानि जातानि। यइन्द्रेति त्रयस्त्रिंशदृचं सप्तमं सूक्तं कण्वगोत्रस्य पर्वताख्यस्यार्षं औष्णिहमैन्द्रम्। तथाचानुक्रांतम्—यइन्द्रत्रयस्त्रिंशत्पर्वतऔष्णिहंत्विति। महाव्रतेनिष्केवल्ये औष्णिहतृचाशीतौ इदमादिके द्वे सूक्ते। तथैवपंचमारण्यकेसूत्र्यते—औष्णिहीतृचाशीतिर्यइन्द्रसोमपातमइति सूक्ते इति। दशमेहनि निष्केवल्ये आदितः षळृचः शंसनीयाः। सूत्र्यतेहि—यइंद्रसोमपातमइति षळुष्णिहइति। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्रह्मशस्त्रे आद्यस्तृचोवैकल्पिकोनुरूपः सूत्रितंच—यइन्द्रसोमपातमएन्द्रनोगधीति। तृतीयेपर्यायेच्छावाकशस्त्रेप्ययमेवतृचोनुरूपः सूत्रितंच—इन्द्रःसुतेषुसोमेषु यइन्द्रसोमपातमइति।

तत्र प्रथमा—

ओम् यइ॑न्द्र॒सोम॒पात॑मो॒मदः॑शविष्ठ॒चेत॑ति।
येना॒हंसि॒न्य१॒त्रिणं॒तमी॑महे ॥ १ ॥

यः। इ॒न्द्र॒। सो॒म॒ऽपात॑मः। मदः॑। श॒वि॒ष्ठ॒। चेत॑ति।
येन॑। हंसि॑। नि। अ॒त्रिण॑म्। तम्। ई॒म॒हे॒ ॥ १ ॥

हे इन्द्र यस्त्वं सोमपातमः अतिशयेन सोमस्य पाता हे शविष्ठ बलवत्तम शवइति बलनाम तस्माद्विनंतादातिशायनिकइष्ठन् विन्मतोर्लुक् टिलोपः हे ईदृशेन्द्र तस्य तव सोमपानजनितोयोमदश्चेतति सम्यग्जानाति वृत्रवधादीनि कार्याणि कर्तुं यइत्यस्य चेततीत्यनेनापि संबंधात् यद्वृत्तान्नित्यमिति तिङ् न निहन्यते। अथवैतदेवंवाक्यम् हे बलवत्तमेन्द्र सोमपातमः सोमस्यपातृतमोयस्त्वं मदः सोमैर्मादयितव्यः तर्पणीयः सन् चेतति पुरुषव्यत्ययः चेतसि सम्यग्जानासि मदोनुपसर्गे इति मदेः कर्मण्यप्। येन सोमपानजनितेन मदेन अत्रिणमत्तारं रा-



दृ

क्षसादिकं निहंसि निकृष्टां हिंसां प्रापयसि तं मदं तादृङ्मदोपेतं त्वां वा ईमहे याञ्चाकर्मा-यम् याचामहे। यद्वा ई गतौ दैवादिकः छांदसोविकरणस्य लुक् ईयामहे उपगच्छामः स्तुतिभिः संभजामहइत्यर्थः॥ १॥

१. इन्द्र, तुम अत्यन्त सोम का पान करनेवाले हो। बलवानों में श्रेष्ठ इन्द्र, सोमपान-जनित मद से प्रसन्न होकर तुम अपने कार्यों को भली भाँति जानते हो। तुम जैसे सोम-जन्य मद से राक्षसों को मारते हो, वैसे ही मद से युक्त होने पर तुमसे हम याचना करते हैं।

येनादशग्वमध्रिगुंवेपयन्तंस्वर्णरम्। येनासमुद्रमाविथातमीमहे॥ २॥

येन। दशऽग्वम्। अध्रिऽगुम्। वेपयन्तम्। स्वःऽनरम्।
येन। समुद्रम्। आविथ। तम्। ईमहे॥ २॥

हे इन्द्र येन सोमपानजनितेन मदेन दशग्वं ये दशभिर्मासैः सत्रासनं परिसमाप्य निरगमन् ते दशग्वा अंगिरसः। तेषामन्यतमं अध्रिगुं अधृतगमनं अनिवारितगतिं एतत्संज्ञंच ऋषिं वेपयंतं तमांसि वर्जयंतं स्वर्णरं सर्वस्य नेतारं सूर्यं च आविथ वृत्रादेर्दस्योरपनयनेन ररक्षिथ। येनच मदेन समुद्रमुदधिं अंतरिक्षं वा आविथ ररक्षिथ त्वदीयं मदं तद्वंतं त्वां वा ईमहे याचामहे। मदे हि सति हृष्टःसन् इन्द्रोबहुधनं प्रयच्छति अतस्तत्कारणस्य मदस्य याञ्चोपपन्ना॥ २॥

२. तुमने सोम के जिस प्रकार के मद से युक्त होकर अंगिरोगोत्रीय अध्रिगु को और अन्धकार-विनाशक तथा सबके नेता सूर्य को बचाया था और जैसे मद से युक्त होकर तुमने समुद्र (वा अन्तरिक्ष) को बचाया था, वैसे ही मद से सम्पन्न होने पर हम तुमसे (धन की) याचना करते हैं। अथ तृतीया—

येनसिन्धुंमहीरपोरथाँइवप्रचोदयः। पन्थामृतस्ययातवेतमीमहे॥ ३॥

येन। सिन्धुम्। महीः। अपः। रथान्ऽइव।
प्रऽचोदयः। पन्थाम्। ऋतस्य। यातवे। तम्। ईमहे॥ ३॥

हे इन्द्र महीर्महतीरपः वृष्ट्युदकानि सिन्धुं स्यन्दनशीलांनदीं समुद्रं वा प्रति येन सोमपानजन्येन मदेन प्रचोदयः प्रेरयसि। तत्रदृष्टान्तः—रथाँइव यथा रथिनोरथान् स्वाभिलषितदेशगमनाय प्रेरयन्ति तद्वत् ऋतस्य यज्ञस्य पन्थां पन्थानं मार्गं यातवे यातुं प्राप्तुं तं मदमीमहे याचामहे॥ ३॥

३. जैसे सोमपान-जन्य मद के कारण (रथी के) रथ के समान प्रचुर वृष्टि-जल को तुम समुद्र की ओर भेजते हो, तुम्हारे वैसे ही मद से युक्त होने पर हम, यागपथ की प्राप्ति के लिए, याचना करते हैं।

इमंस्तोमम॒भिष्ट॑येघृतंनपूतमद्रिवः । येनानुस॒द्यओज॑सावव॒क्षिथ ॥४॥

इ॒मम् । स्तोम॑म् । अ॒भिष्ट॑ये । घृतम् । न । पूतम् ।

अ॒द्रि॒ऽव॒ः । येन॑ । नु । स॒द्यः । ओज॑सा । व॒वक्षिथ ॥ ४ ॥

हे अद्रिवोवज्रवन्निन्द्र घृतंन घृतमिव मन्त्रपूतमाज्यमिव पूतंशुद्धं इममस्मदीयं स्तोमं स्तोत्रं बुध्यस्वेतिशेषः । किमर्थं अभिष्टये अभिप्राप्त्यै इष्टस्य धनादेरस्माकं लाभायेत्यर्थः । येन स्तोत्रेण स्तूयमानः सन् ओजसात्मीयेन बलेन सद्यस्तदानीमेव स्तुतिसमयएव नु क्षिप्रं ववक्षिथास्मान्वहसि अभिलषितं प्रापयसि इमं स्तोममित्यन्वयः ॥ ४ ॥

४. वज्री इन्द्र, जिस स्तोत्र से स्तुत होकर तुम अपने बल से तुरत हमारा मनोरथ पूर्ण करते हो, अभीष्ट-प्राप्ति के लिए घृत के समान उसी पवित्र स्तोत्र को जानो (ग्रहण करो)।

इ॒मंजु॑षस्वगिर्वणःसमु॒द्रइ॑वपिन्वते।इन्द्र॒विश्वा॑भिरू॒तिभि॑र्वव॒क्षिथ॥५॥१॥

इ॒मम् । जु॒षस्व॒ । गि॒र्व॒ण॒ः । स॒मु॒द्रःऽइ॑व । पि॒न्व॒ते॒ ।

इन्द्र॑ । विश्वा॑भिः । ऊ॒तिऽभि॑ः । व॒वक्षिथ ॥ ५ ॥ १ ॥

हे गिर्वणोगिरां स्तुतीनां संभक्तः यद्वा स्तुतिभिः संभजनीयेन्द्र इमं स्तोमं मया क्रियमाणं जुषस्व सेवस्व सच स्तोमः समुद्रइव समुद्रोयथा चन्द्रोदयं प्राप्य पिन्वते वर्धते अभिधेयस्येन्द्रगुणगणस्याधिक्येन तत्प्रतिपादिकास्तुतिरपि विस्तृता भवतीत्यर्थः । पूर्वस्यामृचि ववक्षिथेत्यनेन युक्तो येनेतिशब्दोत्रापि सामर्थ्यात्तेन संबध्यते अतएवास्य तिङ्ङतिङइति निघाताभावः । हे इंद्र येन स्तोमेन हेतुना विश्वाभिर्व्याप्ताभिरूतिभीरक्षाभिः ववक्षिथ वहसि श्रेयांस्यस्मान्प्रापयसि वहेःसन्नन्ताल्लिटि अमन्त्रइति निषेधादामभावे थलि लिटि रूपमेतत्॥५॥

५. स्तुति-द्वारा आराधनीय इन्द्र, इस स्तोत्र को ग्रहण करो। वह स्तोत्र समुद्र के समान बढ़ता है। इन्द्र, उस स्तोत्र से तुम सारी रक्षाओं के साथ हमें कल्याण देते हो।

॥ इति षष्ठस्य प्रथमे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

योनो॑दे॒वःप॑रा॒वतः॑सखि॒त्व॒नाय॑मामहे । दि॒वोनवृ॒ष्टिंप्र॒थय॑न्वव॒क्षिथ॥६॥

यः । न॒ः । दे॒वः । प॒रा॒ऽवतः॑ । स॒खि॒ऽत्व॒नाय॑ । म॒म॒हे ।

दि॒वः । न । वृ॒ष्टिम् । प्र॒थय॑न् । व॒वक्षिथ ॥ ६ ॥

योनोदेवो दानादिगुणयुक्तइंद्रः परावतः परावतात् दूरात् द्युलोकादागत्य नोस्माकं सखित्वनाय सखित्वाय मामहे धनानि प्रददौ मंहतेर्दानकर्मणएतद्रूपं । यद्वा अस्माभिः पूज्यते मह-

पूजायाम् अस्माच्छान्दसः कर्मणिलिट्। उत्तरार्धर्चः प्रत्यक्षकृतः हे इन्द्र दिवोन वृष्टिं दिवः सकाशात् वृष्टिमिव प्रथयन् अस्मदीयानि धनानि विस्तारयन् यस्त्वं ववक्षिथ अस्मान्वोढुमिच्छसि तादृशं त्वां स्तौमीति शेषः ॥ ६ ॥

६. दूर देश से आकर इन्द्र ने हमारी मैत्री के लिए धन दिया है। इन्द्र, द्युलोक से वृष्टि के समान हमारे धन का विस्तार करते हुए तुम हमें श्रेय देने की इच्छा करते हो।

ववक्षुरस्यकेतवंउतवज्रोगभस्त्योः। यत्सूर्योनरोदसीअवर्धयत् ॥ ७ ॥

ववक्षुः। अस्य। केतवः। उत। वज्रः। गभस्त्योः।
यत्। सूर्यः। न। रोदसी इति। अवर्धयत् ॥ ७ ॥

अस्येन्द्रस्य केतवः प्रज्ञानानि अस्मत्स्तुतिविषयाणि यद्वा रथे उत्क्षिप्ताः पताकाः केतवः ववक्षुरवहन् अस्मान् श्रेयांसि प्रापयन्। उतापिच गभस्त्योः बाहुनामैतत् इन्द्रस्य हस्तयोरवस्थितोवज्रश्चावहत् यद्यदा अयमिन्द्रः सूर्योन सर्वस्य प्रेरकआदित्यइव रोदसी द्यावापृथिव्यौ वृष्ट्यादिप्रदानेनावर्धयत् तदानीमित्यर्थः ॥ ७ ॥

७. जब इन्द्र सबके प्रेरक आदित्य के समान द्यावापृथिवी को वृष्टि आदि से बढ़ाते हैं, तब इन्द्र की पताकायें और इन्द्र के हाथों में अवस्थित वज्र हमें कल्याण देते हैं।

यदिप्रवृद्धसत्पतेसहस्रंमहिषाँअघः। आदित्तइन्द्रियंमहिप्रवावृधे॥ ८ ॥

यदि। प्रऽवृद्ध। सत्ऽपते। सहस्रम्। महिषान्।
अघः। आत्। इत्। ते। इन्द्रियम्। महि। प्र। वावृधे ॥ ८ ॥

हे प्रवृद्ध प्रकर्षेणमहन् हे सत्पते सतामनुष्ठातॄणां पालयितरिन्द्र सहस्रं सहस्रसंख्याकान् महिषान्महन्नामैतत् महतोसुरान् वृत्रादीन् यदि यदा अघः अवधीः हन्तेश्छान्दसमेतद्रूपम्। यद्वा घस्लृअदने लुङिसिपि मन्त्रेघसेति च्लेर्लुक्। आदित् अनंतरमेव हे इन्द्र ते तव इन्द्रियं वीर्यं महि महद्बहुलं सत्प्रवावृधे प्रकर्षेण वर्धते ॥ ८ ॥

८. प्रवृद्ध और अनुष्ठाताओं के रक्षक इन्द्र, जिस समय तुमने सहस्रसंख्यक वृत्र आदि असुरों का वध किया, उसके अनन्तर ही तुम्हारा महान् बल भली भाँति बढ़ा। अथ नवमी—

इन्द्रःसूर्यस्यरश्मिभिर्न्यर्शसानमोषति। अग्निर्वनेवसासहिःप्रवावृधे॥ ९ ॥

इन्द्रः। सूर्यस्य। रश्मिऽभिः। नि। अर्शसानम्।
ओषति। अग्निः। वनाऽइव। ससहिः। प्र। वावृधे ॥ ९ ॥

अयमिन्द्रः सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य रश्मिभिः किरणैः करणभूतैः अर्शसानं अर्तेर्गुणः शुट्चेति ऋगतावित्यस्मादसानच्प्रत्ययः शुडागमश्च अयं केवलोप्यर्तिराङ्पूर्वार्थोद्रष्टव्यः आङ्पूर्वश्च बाधनेवर्तते यथा आर्तिमार्तोरिति। अर्शसानं बाधमानं मन्देहादिकमसुरं न्योषति नितरां दहति उषदाहे।तत्रदृष्टांतः—अग्निर्वनेव यथा वनान्यरण्यानि दावानलोभस्मसात्करोति तद्वत्। एवं सासहिः शत्रूणामभिभवनशीलइन्द्रः प्रवावृधे प्रकर्षेण वर्धते॥ ९॥

९. जैसे आग (दावानल) वनों को जलाती है, वैसे ही इन्द्र सूर्य की किरणों के द्वारा बाधक शत्रु को जलाते हैं। शत्रुओं को दबानेवाले इन्द्र भली भाँति बढ़ते हैं।

इयंतऋत्वियांवतीधीतिरेतिनवीयसी।
सपर्यन्तीपुरुप्रियामिमीतइत्॥ १०॥ २॥

इयम्। ते। ऋत्वियऽवती। धीतिः। एति। नवीयसी।
सपर्यन्ती। पुरुऽप्रिया। मिमीते। इत्॥ १०॥ २॥

हे इन्द्र ते त्वां इयं पुरोवर्तिनी मया क्रियमाणा धीतिः स्तुतिः एति गच्छति कीदृशी ऋत्वियावती ऋतौ वसंतादिकाले अनुष्ठेयं यज्ञकर्म ऋत्वियं तद्वती नवीयसीअतिशयेनाभिनवा स्तुतिः सपर्यंती पूजयन्ती पुरुप्रिया पुरु बहुलं प्रीणयित्री सती मिमीतइत् इन्द्रगतान्गुणान् परिच्छिनत्त्येव माहात्म्यं प्रख्यापयत्येव सेयमित्यन्वयः। अनुमायमानेन यच्छब्देनच योगात् मिमीत इत्यस्य निघाताभावः। यद्वा सपर्यन्ती पुरुप्रियेतीदमपि एतीत्यनेन संबंधनीयं अतः पूर्वपदस्य भिन्नवाक्यस्थत्वात् समानवाक्ये युष्मदस्मदादेशावक्तव्याइति वचनात्तदपेक्षया निघाताभावे सत्यभ्यस्तानामादिरित्याद्युदात्तत्वम्॥ १०॥

१०. मेरी यह स्तुति तुम्हारे पास जाती है। वह स्तुति वसन्त आदि में किये जाने योग्य यज्ञ-कार्यवाली, अतीव अभिनव, पूजक और बहुत ही प्रसन्नताकारक है।

॥ इति षष्ठस्य प्रथमे द्वितीयोवर्गः॥ २॥

अथैकादशी—

गर्भोयज्ञस्यदेवयुःक्रतुंपुनीतआनुषक्।
स्तोमैरिन्द्रस्यवावृधेमिमीतइत्॥ ११॥

गर्भः। यज्ञस्य। देवऽयुः। क्रतुम्। पुनीते।
आनुषक्। स्तोमैः। इन्द्रस्य। ववृधे। मिमीते। इत्॥ ११॥

यज्ञस्य यष्टव्यस्येन्द्रस्य गर्भोगरिता स्तोता गृशब्दे अर्तिगृभ्यांभन् यद्वा यजेर्भावएव नङ्प्रत्ययः यागस्य गर्भोगृहीता अनुष्ठाता देवयुः देवं दानादिगुणयुक्तमिन्द्रमा-

त्मनइच्छन् आनुषगनुषक्तं आनुपूर्व्येण संततं यथा भवति तथा ऋतुं मज्ञापकं सोमं पुनीते दशापवित्रेण शोधयति इन्द्रपानार्थमितिशेषः। यद्वा यज्ञस्य गर्भोदीक्षितः। पुनर्वा एतमृत्विजोगर्भंकुर्वन्तीत्यादिब्राह्मणम्। सदेवकामः ऋतुं ज्योतिष्टोमादिकं आनुषक् आनुपूर्व्यनामैतत् यदाहयास्कः— आनुषगिति नामानुपूर्व्यस्येति। सः स्तोता इन्द्रस्य कर्मणि षष्ठी इन्द्रविषयैः स्तोमैः स्तोत्रैर्ववृधे वर्धते यद्वा वृधिना प्रयोज्यव्यापारवाचिना प्रयोजकव्यापारोलक्ष्यते। स्तोमैः स्तोत्रैः तमिन्द्रं वर्धयति सच स्तोमैर्मिमीतइत् इन्द्रस्य गुणजातं परिच्छिनत्त्येव अनुगतार्थो भवतीत्यर्थः॥ ११॥

११. स्तोता इन्द्र के यज्ञ का कर्त्ता है। वह इन्द्र के पान के लिए अनुषङ्गी सोम को "दशापवित्र" से पवित्र करता है। वह स्तोत्र-द्वारा इन्द्र को वर्द्धित करता है और स्तोत्रों से इन्द्र के गुणों की सीमा बांधता है।

सनिर्मित्रस्यपप्रथइन्द्रःसोमस्यपीतये।
प्राचीवाशीवसुन्वतेमिमीतइत्॥ १२॥

सनिः। मित्रस्य। पप्रथे। इन्द्रः। सोमस्य। पीतये।
प्राची। वाशीऽइव। सुन्वते। मिमीते। इत्॥ १२॥

मित्रस्य मित्रभूतस्य स्तोतुः सनिर्धनस्य दाता इन्द्रः सोमस्य पीतये पानाय पप्रथे प्रथितोविस्तीर्णशरीरोबभूव यथा पीतोवहुलः सोमउदरेन्तर्भवति तथा प्रवृद्धशरीरोबभूवेत्यर्थः। तत्र प्रथमे दृष्टांतः—प्राची प्रांचती प्रकर्षेण स्तुत्यगुणगणं प्राप्नुवती वाशीव वाङ्नामैतत् स्तुतिरूपा वाक् सुन्वते। षष्ठ्यर्थे चतुर्थीवक्तव्येतिचतुर्थी। सुन्वतः सोमाभिषवं कुर्वतोयजमानस्य संबंधिनी यथा स्तुत्यगुणबाहुल्येन विस्तीर्णाभवति तथेन्द्रः पप्रथइत्यर्थः। प्रथिताच सा मिमीतइव इन्द्रमाहात्म्यं यथावत्परिच्छिनत्त्येव॥ १२॥

१२. मित्र स्तोता के लिए दाता इन्द्र ने गुण-गान करनेवाले अभिषव-कर्त्ता के वाक्य की तरह धन-दान के लिए अपने शरीर को बढ़ा लिया। यह स्तुत वाक्य इन्द्र के गुणों की सीमा करता है।

अथ त्रयोदशी—

यंविप्राउक्थवाहसोभिप्रमन्दुरायवः।
घृतंनपिप्यआसन्यृतस्ययत्॥ १३॥

यम्। विप्राः। उक्थऽवाहसः। अभिऽप्रमन्दुः।
आयवः। घृतम्। न। पिप्ये। आसनि। ऋतस्य। यत्॥ १३॥

---

१ ऐ०ब्रा० १. ३. । २ नि० ६. १४. ।

विप्रामेधाविनः उक्थवाहसः उक्थानां शस्त्राणां वोढारः मापयितारः आयवोमनुष्याः यमिन्द्रं अभिप्रमन्दुः अभि प्रकर्षेण मादयन्ति मदेर्व्यत्ययेन परस्परं द्विर्वचनपरेण छन्दसिवेतिवचनात् द्विर्वचनाभावः। तस्येन्द्रस्य आसनि आस्ये पद्दन्नित्यादिना आस्य शब्दस्यासन्नादेशः घृतंन घृतमिव शुद्धं पिप्ये सेचनेन वर्धये प्यायतेश्छान्दसोलिट् लिङ्च-ङोश्चेतिपीभावः। किंतद्धविः ऋतस्य यज्ञस्य संबंधि यत्सोमलक्षणं हविरस्ति तदित्यर्थः॥१३॥

१३. विप्र अथवा मेधावी और स्तोत्र-वाहक मनुष्य जिन इन्द्र को भली भाँति प्रमत्त करते हैं, इन इन्द्र के मुख में घृत के समान यज्ञ का हव्य सिक्त करूँगा।

उतस्वराजेअदितिःस्तोममिन्द्रायजीजनत्।
पुरुप्रशस्तमूतयऋतस्ययत्॥ १४ ॥

उत। स्वऽराजे। अदितिः। स्तोमम्। इन्द्राय।
जीजनत्। पुरुऽप्रशस्तम्। ऊतये। ऋतस्य। यत्॥ १४ ॥

उतापिच अदितिरदीनादेवमाता अखंडनीयस्तोतावा स्वराजे स्वयमेव राजमानायेन्द्राय पुरुप्रशस्तं बहुलमुत्कृष्टं यद्वा पुरुभिर्बहुभिः प्रशंसितव्यं स्तोमं स्तोत्रं जीजनत् अजीजनत् अजनयत्। किमर्थं ऊतये रक्षणार्थं यत्स्तोत्रं ऋतस्य सत्यस्य वा संबंधि भवति तं स्तोममित्यन्वयः॥ १४ ॥

१४. अदिति ने स्वयं शोभमान (स्वराट्) इन्द्र के लिए, रक्षा के निमित्त, अनेकों के द्वारा प्रशंसित सत्य-सम्बन्धी स्तोत्र को उत्पन्न किया।

अभिवह्नयऊतयेनूषतप्रशस्तये।
नदेवविव्रताहरीऋतस्ययत्॥ १५ ॥ ३ ॥

अभि। वह्नयः। ऊतये। अनूषत। प्रऽशस्तये। न।
देव। विऽव्रता। हरी इति। ऋतस्य। यत्॥ १५ ॥ ३ ॥

वह्नयोवोढारऋत्विजः ऊतये रक्षणार्थं प्रशस्तये प्रशस्त्यर्थंच अभ्यनूषत इन्द्रमभ्यस्तुवन् नु स्तुतौ कुटादिः हे देव दानादिगुणयुक्तेन्द्र नेति संप्रत्यर्थे संप्रति विव्रता विविधकर्माणौ हरी तदीयावश्वौ ऋतस्य यज्ञस्य सत्यस्य वा संबंधि यत् स्तोत्रं हविर्वा विद्यते तदभिलक्ष्य त्वा वहतइतिशेषः॥ १५ ॥

१५. यज्ञ-वाहक ऋत्विक् लोग रक्षा और प्रशंसा के लिए इन्द्र की स्तुति करते हैं। देव इन्द्र, इस समय विविध-कर्मा हरि नामक दोनों अश्व, यज्ञ में जो है, उसके लिए तुम्हें वहन करते हैं।

॥ इति षष्ठस्य प्रथमे तृतीयोवर्गः॥ ३ ॥

अथ षोडशी—

यत्सोममिन्द्रविष्णविवद्वाघत्रितआप्त्ये ।
यद्वांमरुत्सुमन्दसेसमिन्दुभिः ॥ १६ ॥

यत् । सोमम् । इन्द्र । विष्णवि । यत् । वा । घ । त्रिते ।
आप्त्ये । यत् । वा । मरुत्ऽसु । मन्दसे । सम् । इन्दुऽभिः ॥ १६ ॥

हे इन्द्र विष्णवि विष्णौ पानार्थमागतेसति अन्यदीये यागे सोमं यद्यदि तेन विष्णुना सार्धं पिबसि यद्वा यदिच आप्त्ये अपांपुत्रे त्रिते एतत्संज्ञे राजर्षौ यजमाने सोमं पिबसि घेतिपूरणः यद्वा यदिच मरुत्सुच सोमपानायागतेषु अन्यदीये यज्ञे मन्दसे माद्यसि तथाप्यस्मदीयैरेवेन्दुभिः सोमैः सं सम्यङ्माद्य ॥ १६ ॥

१६. हे इन्द्र, विष्णु, आप्तत्रित (राजर्षि) अथवा मरुतों के आने पर दूसरों के यज्ञ में उनके साथ सोम पीकर प्रमत्त होते हो, तथापि हमारे सोम से भली भाँति प्रमत्त होओ।

यद्वाशक्रपरावतिसमुद्रेअधिमन्दसे ।
अस्माकमित्सुतेरणासमिन्दुभिः ॥ १७ ॥

यत् । वा । शक्र । पराऽवति । समुद्रे । अधि । मन्दसे ।
अस्माकम् । इत् । सुते । रण । सम् । इन्दुऽभिः ॥ १७ ॥

हे शक्रेन्द्र परावति परागते दूरदेशे समुद्रे समुन्दनशीले सोमे अधिः सप्तम्यर्थानुवादी यद्वा यदिवा मन्दसे माद्यसि तथापि अस्माकमित् अस्माकमेव सोमेभिषुते सति इन्दुभिः सोमरसैः संरण सम्यग्रमस्व ॥ १७॥

१७. इन्द्र, यद्यपि दूर देश में द्रवशील सोमपान से प्रमत्त होते हो, तथापि हमारा सोम प्रस्तुत होने पर उसके साथ भली भाँति रमण करो।

अथाष्टादशी—

यद्वासिसुन्वतोवृधोयजमानस्यसत्पते ।
उक्थेवायस्यरण्यसिसमिन्दुभिः ॥ १८ ॥

यत् । वा । असि । सुन्वतः । वृधः । यजमानस्य ।
सत्ऽपते । उक्थे । वा । यस्य । रण्यसि । सम् । इन्दुऽभिः ॥ १८ ॥

हे सत्पते सतां पालयितरिन्द्र सुन्वतः सोमाभिषवं कुर्वतोयजमानस्य यद्वा यदिवा वृधोसि वर्धयिता भवसि वृधेरन्तर्णीतण्यर्थादिगुपधलक्षणः कः। यस्यच यजमानस्य उक्थे शस्त्रे वा शंसिते सति रण्यसि रमसे एवमपि इन्द्रुभिरस्मदीयैरेवसोमैः सम्यग्रमस्व ॥ १८ ॥

**१८. सत्यपालक इन्द्र, तुम सोमाभिषव-कर्त्ता यजमान के वर्द्धक हो। तुम जिस यजमान के उक्थ मन्त्र से प्रसन्न होते हो, उसके सोम से प्रसन्न होओ।**

अथैकोनविंशी—

देवंदेवंवोवसइन्द्रमिन्द्रंगृणीषणि ।
अधायज्ञायतुर्वणेव्यानशुः ॥ १९ ॥

देवम्ऽदेवम् । वः । अवसे । इन्द्रम्ऽइन्द्रम् । गृणीषणि ।
अध । यज्ञाय । तुर्वणे । वि । आनशुः ॥ १९ ॥

हे ऋत्विग्यजमानाः वोयुष्माकमवसे रक्षणाय देवं देवमिन्द्रं इन्द्रं दानादिगुणयुक्तं इन्द्रः बहुषु देशेषु युगपत्प्रवृत्तेषु यागेषु तत्रतत्र हविःस्वीकरणाय बहूनि शरीराण्याददानः स्वयमेकोप्यनेकःसन् तत्रतत्र सन्निधत्ते तथाचनिगमांतरं—इन्द्रोमायाभिः पुरुरूपईयतइति। तदपेक्षयेयं वीप्सा बहुविभज्य वर्तमानं सर्वं तमिन्द्रं गृणीषणि अहं स्तौमि गृणातेर्लिङि छान्दसमेतद्रूपम्। यद्वा कारकमेवैतत गृणीषणि स्तवनेच्छायां सत्यां अधानंतरं सर्वमिन्द्रं मदीयाः स्तुतयः व्यानशुर्व्याप्नुवन्ति किमर्थं तुर्वणे तूर्णं संभजनाय यज्ञाय यागार्थं। यद्वा क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी। यज्ञं यष्टव्यं तुर्वणे शत्रूणां हिंसितारं तूर्णसंभजनं वा ॥१९॥

**१९. ऋत्विको, तुम्हारे रक्षण के लिए जिन इन्द्र की मैं स्तुति करता हूँ, उन्हीं इन्द्र को मेरी स्तुतियाँ, शीघ्र भजन और यज्ञ के लिए, व्याप्त करें।**

अथ विंशी—

यज्ञेभिर्यज्ञवाहसंसोमेभिःसोमपातमम् ।
होत्राभिरिन्द्रंवावृधुर्व्यानशुः ॥ २० ॥ ४ ॥

यज्ञेभिः । यज्ञऽवाहसम् । सोमेभिः । सोमऽपातमम् ।
होत्राभिः । इन्द्रम् । ववृधुः । वि । आनशुः ॥ २० ॥ ४ ॥

यज्ञेभिर्यज्ञैर्यजमानसाधनैर्हविर्भिर्यज्ञवाहसं यज्ञं वोढव्यं प्रापणीयं यज्ञैर्यागैः यज्ञानां यजमानानां फलस्य प्रापयितारं वा अथवा यज्ञवाहसं यज्ञेनप्राप्यं न केवलमेकेन यज्ञेन अपितु सर्वैरित्याह यज्ञेभिरिति एवं सोमेभिः सोमपातमं सर्वेषां सोमानां पातृतममिन्द्रं

---

१ ऋ० सं० ४. ७. ३३.।

होत्राभिः स्तुतिभिः वावृधुः स्तोतारोवर्धयन्ति ताश्च क्रियमाणाः स्तुतयः व्यानशुः तमिन्द्रं व्याप्नुवन्तिच अश्नोतेर्व्यत्ययेन परस्मैपदम् ॥ २० ॥

२०. हव्य, स्तुति और सोम-द्वारा यज्ञ में लाने योग्य और सबसे अधिक सोम पान करनेवाले इन्द्र को स्तोता लोग वर्द्धित और व्याप्त करते हैं। ॥ इति षष्ठस्य प्रथमे चतुर्थोवर्गः ॥ ४ ॥

अथैकविंशी—

म॒हीर॑स्य॒ प्रणी॑तयः पू॒र्वीरु॒त प्रश॑स्तयः ।
विश्वा॒ वसू॑नि दा॒शुषे॒ व्या॑नशुः ॥ २१ ॥

म॒हीः । अ॒स्य॒ । प्रऽनी॑तयः । पू॒र्वीः । उ॒त । प्रऽश॑स्तयः ।
विश्वा॑ । वसू॑नि । दा॒शुषे॑ । वि । आ॒न॒शुः॒ ॥ २१ ॥

अस्येन्द्रस्य प्रणीतयः प्रणयनानि धनानां प्रकृष्टप्रापणानि महीर्महत्यः महांति भवन्ति उतापिच अस्य प्रशस्तयः प्रशंसनीयाः कीर्तयः पूर्वीर्बह्व्योविस्तृततमाभवन्ति ताउभयविधाः दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय दातुं विश्वा विश्वानि सर्वाणि वसूनि धनानि व्यानशुर्व्याप्नुवन्ति ॥ २१ ॥

२१. इन्द्र का धन-प्रदान प्रचुर है, इन्द्र की कीर्त्ति बहुत है। वे हव्यदाता यजमान के लिए सारा धन व्याप्त करते हैं।

अथ द्वाविंशी—

इन्द्रं॑ वृ॒त्राय॒ हन्त॑वे दे॒वासो॑ दधिरे पु॒रः ।
इन्द्रं॒ वाणी॑रनूषता॒ सम्ओज॑से ॥ २२ ॥

इन्द्र॑म् । वृ॒त्राय॑ । हन्त॑वे । दे॒वासः॑ । द॒धि॒रे॒ । पु॒रः ।
इन्द्र॑म् । वाणीः॑ । अ॒नू॒ष॒त॒ । सम् । ओज॑से ॥ २२ ॥

देवासोदेवाः वृत्राय हन्तवे वृत्रमावरकमसुरं हंतुं हंतेस्तुमर्थे तवेन्प्रत्ययः इममिन्द्रं पुरोदधिरे पुरस्तात् स्वामित्वेनाधारयन् वाणीः वाण्यः स्तुतिरूपावाचश्च इममेवेन्द्रमनूषत स्तुवन्ति- किमर्थं सं समीचीनाय ओजसे बलार्थं यथा वृत्रवधानुगुणमुत्कृष्टं बलमस्यजायते तथास्तुवन्तीत्यर्थः ॥ २२ ॥

२२. वृत्र-वध के लिए देवों ने इन्द्र को (स्वामि-रूप से) धारण किया था। समीचीन बल के लिए स्तुति-वचन इन्द्र का स्तव करते हैं।

म॒हान्तं॑ महि॒ना व॒यं स्तोमे॑भिर्हवन॒श्रुत॑म् ।
अ॒र्कैर॒भि प्रणो॑नुमः॒ समोज॑से ॥ २३ ॥

म॒हान्त॑म् । म॒हि॒ना । व॒यम् । स्तोमे॑भिः । ह॒व॒न॒ऽश्रु॒त॑म् । अ॒र्कैः ।
अ॒भि । प्र । नो॒नु॒मः॒ । सम् । ओज॑से ॥ २३ ॥

महिना महिम्ना महान्तं सर्वेभ्योधिकं हवनश्रुतं हवनस्याह्वानस्य श्रोतारमिन्द्रं वयं स्तोमेभिः स्तोमैः त्रिवृत्पञ्चदशादिभिः अर्कैः अर्चनसाधनैः शस्त्रैश्च अभिप्रणोनुमः आभिमुख्येन प्रकर्षेण पुनःपुनः स्तुमः ॥ २३ ॥

२३. महिमा में महान् और आह्वान सुननेवाले इन्द्र की, स्तोत्र-द्वारा और पूजा-मन्त्र-द्वारा, समीचीन बल की प्राप्ति के लिए, बार-बार स्तुति करते हैं।

अथ चतुर्विंशी—

नयंवि॑वि॒क्तोरोद॑सी॒नान्तरि॑क्षाणिव॒ज्रिण॑म् ।
अमा॒दिद॑स्यतित्विषे॒समोज॑सः ॥ २४ ॥

न । यम् । वि॒वि॒क्तः । रोद॑सी॒ इति॑ । न । अ॒न्तरि॑क्षाणि । व॒ज्रिण॑म् ।
अमा॑त् । इत् । अ॒स्य॒ । ति॒त्वि॒षे॒ । सम् । ओज॑सः ॥ २४ ॥

यं वज्रिणं वज्रवन्तमिन्द्रं रोदसी द्यावापृथिव्यौ नविविक्तः नपृथक्कुरुतः स्वसमीपात् पृथक्कर्तुं नशक्नुतः द्यावापृथिव्यौ व्याप्य यइन्द्रोवर्धते इत्यर्थः विचिर्पृथग्भावे अन्तरिक्षाणि अन्तरा क्षांतानि द्यावापृथिव्योर्वर्तमानानि गंधर्वादीनां स्थानानिच यन्नपृथक्कुर्वन्ति अस्येन्द्रस्य अमादित् अमति रुजति शत्रूननेनेत्यमोबलं बलादेव सर्वं तित्विषे सर्वं जगद्दीप्यते। किमर्थं ओजसः बलस्य संगमाय। यद्वा ओजःशब्दाद्विहितस्य विनो बहुलंछन्दसीतिलुक् ओजस्विनो बलवतोस्येन्द्रस्येति योज्यम्। समित्युपसर्गः सतित्विषइत्यनेन संबध्यते ॥ २४ ॥

२४. जिन वज्रधर इन्द्र को द्यावापृथिवी और अन्तरिक्ष अपने पास से अलग नहीं कर सकते, उन्हीं इन्द्र के बल से बल लेने के लिए संसार प्रदीप्त होता है।

षोडशिशस्त्रे यदिन्द्रपृतनाज्यइति तृचः स्तुत्यतेहि—यदिन्द्रपृतनाज्येयन्तेअस्तुहर्यतइत्यौष्णिहबार्हतौतृचाविति ।

तृचे प्रथमा सूक्ते पञ्चविंशी—

यदि॑न्द्रपृत॒नाज्ये॑दे॒वास्त्वा॑दधि॒रेपु॒रः ।
आदित्ते॑ह॒र्य॒ताहरी॑ववक्षतुः ॥ २५ ॥ ५ ॥

यत् । इ॒न्द्र॒ । पृ॒त॒नाज्ये॑ । दे॒वाः । त्वा॒ । द॒धि॒रे । पु॒रः । आत् । इत् ।
ते॒ । ह॒र्य॒ता । हरी॒ इति॑ । व॒व॒क्ष॒तुः॒ ॥ २५ ॥ ५ ॥

हे इन्द्र पृतनाज्ये संग्रामनामैतत् पृतनाः सेनाः अजंति गच्छन्त्यस्मिन्निति वा पृतना जीयतेनेति वा पृतनाज्यं संग्रामस्तत्र त्वा त्वां यद्यदा देवाः पुरोदधिरे वृत्रहननाय पुरतोधारयन्

आदित् अनंतरमेव हर्यता हर्यंतौ कांतौ हर्यगतिकान्त्योः भृमृदृशीत्यादिना औणादिकःअतच् प्रत्ययः ईदृशौ हरी अश्वौ ते त्वां ववक्षतुः आवहताम् ॥ २५ ॥

२५. इन्द्र, जिस समय युद्ध में देवों ने तुम्हें सम्मुख धारण किया था, उसी समय कमनीय हरि नामक अश्वों ने तुम्हें वहन किया था।

॥ इति षष्ठस्य प्रथमे पञ्चमोवर्गः ॥ ५ ॥

अथ षड्विंशी—

यदावृत्रंनदीवृतंशवसावज्रिन्नवधीः ।
आदित्तेहर्यताहरीववक्षतुः ॥ २६ ॥

यदा । वृत्रम् । नदीऽवृतम् । शवसा । वज्रिन् । अवधीः । आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २६ ॥

हे वज्रिन् वज्रवन्निन्द्र नदीवृतं नदीनां नद्यआपः श्रूयतेहि—अहावनदताहतेतस्माद्दानद्यो-नामस्थेति[1] । ताआवृण्वंतं वृत्रमवर्षणशीलंमेघमसुरं वा यदा यस्मिन्काले शवसा बलेनावधीराहिं-सीः शिष्टं समानं ॥ २६ ॥

२६. वज्रधर इन्द्र, जिस समय तुमने जल को रोकनेवाले वृत्र को बल के द्वारा मारा था, उसी समय कमनीय हरि तुम्हें ले आये थे।

यदातेविष्णुरोजसात्रीणिपदाविचक्रमे ।
आदित्तेहर्यताहरीववक्षतुः ॥ २७ ॥

यदा । ते । विष्णुः । ओजसा । त्रीणि । पदा । विऽचक्रमे । आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २७ ॥

हे इन्द्र ते तव अनुजोविष्णुर्व्यापनशीलोदेवः ओजसा बलेन यदा यस्मिन्काले त्रीणि पदा पदानि पदत्रयरूपेण त्रीन् लोकान् विचक्रमे विक्रांतवान् परिच्छिन्नवान् गतमन्यत् ॥ २७ ॥

२७. जिस समय तुम्हारे (अनुज) विष्णु ने अपने तीन पैरों से तीनों लोकों को (वामनावतार में) नापा था, उसी समय तुम्हें दोनों कमनीय हरि ले आये थे।

अथाष्टाविंशी—

यदातेहर्यताहरीवावृधातेदिवेदिवे ।
आदित्तेविश्वाभुवनानियेमिरे ॥ २८ ॥

यदा । ते । हर्यता । हरी इति । ववृधाते इति । दिवेऽदिवे । आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ २८ ॥

१ तै० सं० ५. ६.१.

हे इन्द्र त्वदीयौ हर्यता हर्यतौ कांतौ हरी हरणशीलावश्वौ दिवेदिवे प्रतिदिवसं यदा यस्मिन्काले ववृधाते प्रवृद्धौ बभूवतुः। आदित् अनंतरमेव ते त्वया विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि येमिरे नियम्यन्तेस्म ॥ २८ ॥

**२८. इन्द्र, जब तुम्हारे दोनों कमनीय हरि प्रतिदिन बढ़े थे, उसके बाद ही तुम्हारे द्वारा सारा संसार नियमित होता है।**

यदातेमारुतीर्विशस्तुभ्यमिन्द्रनियेमिरे ।
आदित्तेविश्वाभुवनानियेमिरे ॥ २९ ॥

यदा । ते । मारुतीः । विशः । तुभ्यम् । इन्द्र । निऽयेमिरे । आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ २९ ॥

हे इन्द्र तुभ्यं त्वदर्थं मारुतीर्मारुत्यः मरुद्रूपाः ते त्वदीयाः विशः प्रजाः यदा यस्मिन्काले नियेमिरे नियच्छन्ति भूतजातानि । अन्यद्गतम् ॥ २९ ॥

**२९. इन्द्र, जिस समय तुम्हारी मरुद्रूप प्रजा सारे भूतों को नियमित करती है, उसी समय तुम सारे संसार को नियमित करते हो।**

यदासूर्यममुंदिविशुक्रंज्योतिरधारयः ।
आदित्तेविश्वाभुवनानियेमिरे ॥ ३० ॥

यदा । सूर्यम् । अमुम् । दिवि । शुक्रम् । ज्योतिः । अधारयः । आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ ३० ॥

हे इन्द्र अमुं विप्रकृष्टं शुक्रं निर्मलं ज्योतिर्द्योतमानं सूर्यं सर्वस्य प्रेरकं शोभनवीर्यं वा आदित्यं दिवि द्युलोके जगतः प्रकाशनाय यदा यस्मिन्काले अधारयः धारितवानसि । समानमन्यत् ॥ ३० ॥

**३०. इन्द्र, जिस समय इन निर्मल-ज्योति सूर्य को तुम द्युलोक में स्थापित करते हो, उसी समय तुम सारा संसार नियमित करते हो।**

अथैकत्रिंशी—

इमान्तइन्द्रसुष्टुतिंविप्रइयर्तिधीतिभिः ।
जामिंपदेवपिप्रतींप्राध्वरे ॥ ३१ ॥

इमाम् । ते । इन्द्र । सुऽस्तुतिम् । विप्रः । इयर्ति । धीतिऽभिः ।
जामिम् । पदाऽइव । पिप्रतीम् । प्र । अध्वरे ॥ ३१ ॥

हे इन्द्र विप्रोमेधावी स्तोता अध्वरे यज्ञे इमां पुरोवर्तिनीं पिप्रतीं पूजयन्तीं प्रीणयन्तीं वा सुष्टुतिं शोभनां स्तुतिं धीतिभिः कर्मभिः परिचरणैः सार्धं ते त्वां प्रेयर्ति प्रेरयति प्रगमयति । जामिं पदेव यथा बंधुभूतं पुरुषं उत्कृष्टानि पदानि स्थानानि प्रापयति तद्वत् ॥ ३१ ॥

**३१. इन्द्र, जैसे लोग संसार में अपने बन्धु को उच्च स्थान में ले जाते हैं, वैसे ही मेधावी स्तोता इस प्रसन्नता-दायक सुन्दर स्तुति को, परिचर्य्या के साथ, यज्ञ में तुम्हारे पास ले जाता है।**

अथ द्वात्रिंशी—

यदस्यधामनिप्रियेसमीचीनासोअस्वरन् ।
नाभायज्ञस्यदोहनाप्राध्वरे ॥ ३२ ॥

यत् । अस्य । धामनि । प्रिये । सम्ऽईचीनासः । अस्वरन् ।
नाभा । यज्ञस्य । दोहना । प्र । अध्वरे ॥ ३२ ॥

अध्वरे यज्ञे अस्येन्द्रस्य धामनि स्थाने तेजसि वा प्रिये प्रीणयितव्ये सति समीचीनासः संगताः स्तोतारः यद्यदा प्रास्वरन् प्रकर्षेणास्तुवन् स्वृशब्दोपतापयोः । अयाळिन्द्रस्यप्रियाधामानीतिहिनिगमः । कस्मिन्देशे नाभा नाभौ पृथिव्या नाभिस्थानीये मध्ये यज्ञस्य यजनसाधनस्य सोमस्य दोहना दोहने दोहनाधिकरणेभिषवस्थाने वेद्यामित्यर्थः तदानीं धनं प्रदेहीति उत्तरत्र संबंधः ॥ ३२ ॥

**३२. यज्ञ में इन्द्र के तेज के प्रीत होने पर एकत्र स्तोता लोग जिस समय उत्तम रीति से स्तुति करते हैं, उस समय इन्द्र, नाभि-स्वरूप यज्ञ के अभिषव-स्थान (वेदी) पर धन दो।**

अथ त्रयस्त्रिंशी—

सुवीर्यंस्वश्व्यंसुगव्यमिन्द्रदद्धिनः ।
होतेवपूर्वचित्तयेप्राध्वरे ॥ ३३ ॥ ६ ॥

सुऽवीर्यम् । सुऽअश्व्यम् । सुऽगव्यम् । इन्द्र । दद्धि । नः ।
होताऽइव । पूर्वऽचित्तये । प्र । अध्वरे ॥ ३३ ॥ ६ ॥

---

तै० ब्रा० ३.५.११.।

सुवीर्यं शोभनवीर्योपेतं स्वश्व्यं शोभनेनाश्वसंघेन च युक्तं सुगव्यं शोभनगोसंघयुक्तंच धनं हे इन्द्र नोस्मभ्यं दद्धि ददस्व। दददाने अनुदात्तेत् व्यत्ययेन परस्मैपदम् छांदसः शपोलुक्। अहं च अध्वरे यागे होतेव यथा मानुषोहोता ऋत्विक् स्तौति एवमेव पूर्वचित्तये पूर्वप्रज्ञानाय अन्येभ्यः स्तोतृभ्यः पूर्वमेवास्मत्स्तोत्रपरिज्ञानाय प्राशंसिषमिति शेषः॥ ३३॥

३३. इन्द्र, उत्तम वीर्य, उत्तम गौ और उत्तम अश्व से युक्त धन हमें दो। मैंने प्रथम ही ज्ञान-लाभ के लिए होता की तरह यज्ञ में स्तव किया था।

॥ इति षष्ठस्य प्रथमे षष्ठोवर्गः॥ ६॥

॥ इत्यष्टमे मण्डले द्वितीयोनुवाकः॥ २॥

तृतीयेनुवाकेऽष्टसूक्तानि तत्रेन्द्रःसुतेष्विति त्रयस्त्रिंशदृचं प्रथमं सूक्तं काण्वस्य नारदस्यार्षमौष्णिहमैन्द्रं तथाचानुक्रांतम्—इन्द्रःसुतेषु नारदइति। महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ पूर्वसूक्तेनसहोक्तोविनियोगः। तृतीयेपर्यायेच्छावाकशस्त्रे इन्द्रःसुतेष्वितितृचःस्तोत्रियः सूत्र्यतेहि—इन्द्रःसुतेषुसोमेषु यइन्द्रसोमपातमइति।

इन्द्रः॑सु॒तेषु॒सोमे॑षु॒क्रतुं॑पुनीतउ॒क्थ्य॑म्।
वि॒देद्वृ॒धस्य॒दक्ष॑सोम॒हान्हिषः॥ १॥

इन्द्रः॑। सु॒तेषु॑। सोमे॑षु। क्रतु॑म्। पु॒नी॒ते। उ॒क्थ्य॑म्। वि॒दे।
वृ॒धस्य॑। दक्ष॑सः। म॒हान्। हि। सः॥ १॥

सोमेषु सुतेष्वभिषुतेषु सत्सु इन्द्रस्तान्पीत्वा क्रतुं कर्मणां कर्तारं उक्थ्यं स्तोतारंच पुनीते शोधयति। यद्वा सोमेष्वभिषुतेषु उक्थ्याख्यं क्रतुं यागं तैः सोमैः पुनीते यजमानैः पूतं कारयति। किमर्थं वृधस्य वर्धकस्य दक्षसोबलस्य विदे लाभाय सतादृशइन्द्रोमहान् हि महान् खलु अतएवं कर्तुं शक्नोतीतिभावः॥ १॥

१. सोम के प्रस्तुत होने पर इन्द्र यज्ञ-कर्त्ता और स्तोता को पवित्र करते हैं। इन्द्र ही वर्द्धक बल की प्राप्ति के लिए महान् हुए हैं।

अथ द्वितीया—

स प्र॑थ॒मे व्यो॑मनि दे॒वानां॒ सद॑ने वृ॒धः।
सु॒पा॒रः सु॒श्रव॑स्तमः॒ सम॑प्सु॒जित्॥ २॥

सः । प्रथमे । विऽओमनि । देवानाम् । सदने । वृधः । सुऽपारः ।
सुश्रवःऽतमः । सम् । अप्सुऽजित् ॥ २ ॥

सइन्द्रः प्रथमे प्रथिते विस्तीर्णे मुख्ये वा व्योमनि विशेषेणरक्षके देवानां सदने सीदंत्यस्मिन्निति सदनं स्थानंस्वर्गाख्यं तत्र स्थितः सन् वृधोयजमानानां वर्धयिता भवति। तथा सुपारः सुष्ठु पारयिता प्रारब्धस्य सम्यक्परिसमापयिता सुश्रवस्तमः अतिशयेन शोभनं श्रवोन्नं यशोवा यस्य सतथोक्तः समप्सुजित् सम्यक् अप्सूदकेषु प्राप्येषु सत्सु तद्विघातिनोवृत्रादेर्जेता यद्वा आपइत्यंतरिक्षनाम अंतरिक्षे वर्तमानानामसुराणां जेता तमह्वइत्युत्तरत्रसंबंधः ॥ २ ॥

२. इन्द्र प्रथम विस्तीर्ण व्योम (विशेष रक्षक) देवसदन (स्वर्ग) में यजमानों के वर्द्धक हैं। वह प्रारम्भ किये हुए कर्म के समापक हैं। अतीव यश से युक्त जल-प्राप्ति के लिए वृत्र को जीतते हैं।

अथ तृतीया—

तमह्वेवाजसातयइन्द्रंभरायशुष्मिणम् ।
भवानःसुम्नेअन्तमःसखावृधे ॥ ३ ॥

तम् । अह्वे । वाजऽसातये । इन्द्रम् । भराय । शुष्मिणम् । भव । नः ।
सुम्ने । अन्तमः । सखा । वृधे ॥ ३ ॥

तं पूर्वोक्तगुणं शुष्मिणं बलवंतमिन्द्रं वाजसातये बलानामन्नानां वा सातिर्लाभोयस्मिन् तादृशाय भराय संग्रामाय यद्वा भ्रियंते तस्मिन् हवींषीति भरोयज्ञः प्रायेण संग्रामनामानि यज्ञनामत्वेन च दृश्यंते भराय यज्ञार्थं अह्वे आह्वये । लिपिसिचिह्वश्च आत्मनेपदेष्वन्यतरस्यामिति ह्वयतेश्छान्दसे लुङि च्लेरङादेशः । हे इन्द्र त्वं सुम्ने सुखे धनेवा लिप्सिते सति नोस्माकं अंतमः अंतिकतमः सन्निकृष्टतमोभव । तमेतादेश्चेति अन्तिकशब्दस्य तादिलोपः । तथा वृधे वर्धनार्थं च सखा समानख्यानोमित्रभूतोभव ॥ ३॥

३. बलवान् इन्द्र को मैं बल-प्राप्ति-कर युद्ध में बुलाता हूँ। इन्द्र, धन के अभिलषित होने पर तुम वर्द्धन के लिए हमारे सखा होओ।

अथ चतुर्थी—

इयन्तइन्द्रगिर्वणोरातिःक्षरतिसुन्वतः ।
मन्दानोअस्यबर्हिषोविराजसि ॥ ४ ॥

इयम् । ते । इन्द्र । गिर्वणः । रातिः । क्षरति । सुन्वतः । मन्दानः ।
अस्य । बर्हिषः । वि । राजसि ॥ ४ ॥

हे गिर्वणः गीर्भिः स्तुतिभिर्वननीय संभजनीयेन्द्र ते तुभ्यं त्वदर्थं इयं पुरोवर्तिनी सुन्वतः सोमाभिषवं कुर्वतोयजमानस्य संबन्धिनी रातिः ऋत्विग्भिः दीयमाना सोमाहुतिः क्षरति आहवनीयं प्रतिगच्छति त्वंच तया मन्दानोमन्दमानोमोदमानः तृप्यन् अस्य बर्हिषोयज्ञस्य विराजसि विशेषेणेशिषे। राजतिरैश्वर्यकर्मा ॥ ४ ॥

४. स्तुतियों-द्वारा भजनीय इन्द्र, तुम्हारे लिए सोमाभिषव-कर्त्ता यजमान की दी हुई आहुति जाती है। मत्त होकर तुम उस यज्ञ में विराजो।

नूनंतदिन्द्रदद्धिनोयत्त्वासुन्वन्तईमहे।
रयिंनश्चित्रमाभरास्वर्विदम् ॥ ५ ॥ ७ ॥

नूनम्। तत्। इन्द्र। दद्धि। नः। यत्। त्वा। सुन्वन्तः। ईमहे।
रयिम्। नः। चित्रम्। आ। भर। स्वःऽविदम् ॥ ५ ॥ ७ ॥

हे इन्द्र नूनमवश्यं तद्धनं नोस्मभ्यं दद्धि ददस्व ददतने व्यत्ययेन परस्मैपदम् छांदसः शपोलुक्। यद्धनं त्वा त्वां सुन्वंतः सोममभिषुण्वंतोवयं ईमहे। अपिच चित्रं चायनीयं स्वर्विदं सर्वस्य लंभकं यद्वा स्वर्गस्य वेदितारं आस्तिकं रयिं पुत्रं नोस्मभ्यमाभराहर॥ ५॥

५. इन्द्र सोमाभिषव-कर्त्ता जिस धन की तुमसे प्रत्याशा करते हैं, वह धन तुम अवश्य मुझे दो। विचित्र और स्वर्ग-प्रापक धन भी हमारे लिए ले आओ।

॥ इति षष्ठस्य प्रथमे सप्तमोवर्गः ॥ ७ ॥

अथ षष्ठी—

स्तोतायत्तेविचर्षणिरतिप्रशर्धयद्गिरः।
वयाइवानुरोहतेजुषन्तयत् ॥ ६ ॥

स्तोता। यत्। ते। विऽचर्षणिः। अतिऽप्रशर्धयत्। गिरः।
वयाःऽइव। अनु। रोहते। जुषन्त। यत् ॥ ६ ॥

हे इन्द्र विचर्षणिर्विशेषेण द्रष्टा स्तोता ते तुभ्यं त्वदर्थं गिरः स्तुतीः यद्यदा अतिप्रशर्धयत् अतिशयेन प्रशर्धयित्नीरकरोत् शत्रूणां प्रसहनसमर्थाः। शृधुप्रसहने। यद्यदाच ता गिरः जुषंत त्वामसेवन्त अप्रीणयन् वा। तदा वयाइव शाखाइव यथा एकस्मिन्वृक्षे बह्वाः शाखाउपरि प्ररोहंति तथा अनुरोहते स्तुत्या सर्वेगुणाः त्वयि प्ररोहन्ति ॥ ६ ॥

६. इन्द्र, विशेषदर्शी स्तोता जिस समय तुम्हारे लिए शत्रुओं की पराजय-समर्थ स्तुति करता है और जब सकल वाक्य तुमको प्रसन्न करते हैं, तब शाखा के समान सारे गुण तुम पर आरोहण करते हैं।

अथ सप्तमी—

प्रत्नवज्जनयागिरःशृणुधीजरितुर्हवम् ।
मदेमदेववक्षिथासुकृत्वने ॥ ७ ॥

प्रत्नऽवत् । जनय । गिरः । शृणुधि । जरितुः । हवम् । मदेऽमदे ।
ववक्षिथ । सुऽकृत्वने ॥ ७ ॥

हे इन्द्र प्रत्नवत् पुरा यथा स्तोतृभ्योपेक्षितफलप्रदानेन स्तुतीर्जनयसि एवमिदानीमपि गिरः स्तुतीर्जनयोत्पादय जरितुः स्तोतुः हवमाह्वानंच शृणुधि शृणु जानीहि। तादृशस्त्वं मदेमदे सोमेन तर्पणेतर्पणे सति सुकृत्वने शोभनकर्त्रे यजमानाय ववक्षिथापेक्षितं फलं वहसि ददासीत्यर्थः ॥ ७ ॥

७. इन्द्र, पहले के समान स्तोत्र उत्पन्न करो और स्तोता का आह्वान सुनो। जिसी समय सोम के द्वारा प्रमत्त होते हो, उसी समय शोभन कार्य करनेवाले यजमान के लिए फल देते हो।

क्रीळन्त्यस्यसूनृताआपोनप्रवतायतीः ।
अयाधियायउच्यतेपतिर्दिवः ॥ ८ ॥

क्रीळन्ति । अस्य । सूनृताः । आपः । न । प्रऽवता । यतीः ।
अया । धिया । यः । उच्यते । पतिः । दिवः ॥ ८ ॥

अस्येन्द्रस्य सूनृताः प्रियसत्यात्मिकावाचः क्रीळन्ति विहरन्ति तत्रदृष्टांतः—प्रवता प्रवणेन मार्गेण यतीर्गच्छन्त्यआपोन आपइव यथानिम्नोन्नतेन पथा गच्छन्त्यआपउत्पतननिपतनेन विहरन्ति तद्वत् दिवः स्वर्गस्य पतिः पालयिता यइन्द्रः अया अनया धिया स्तुत्या उच्यते प्रतिपाद्यते अस्येन्द्रस्येत्यन्वयः ॥ ८ ॥

८. इन्द्र के सत्य वचन निम्नगामी जल के समान विहार करते हैं। स्वर्ग-पति इन्द्र इस स्तुति के द्वारा कीर्त्तित होते हैं।

अथ नवमी—

उतोपतिर्यउच्यतेकृष्टीनामेकइद्वशी ।
नमोवृधैरवस्युभिःसुतेरण ॥ ९ ॥

उतो इति । पतिः । यः । उच्यते । कृष्टीनाम् । एकः । इत् ।
वशी । नमःऽवृधैः । अवस्युऽभिः । सुते । रण ॥ ९ ॥

उतो अपिच वशी वशयिता एकइत् एकएव कृष्टीनां मनुष्याणां पतिः पालयितेति य-इन्द्रउच्यते कैः नमोवृधैः नमसा स्तोत्रेण हविषा वा वर्धयितृभिः अवस्युभिः रक्षणेच्छुभिः सत्वं पूर्वोक्ते सुतेभिषुते सोमे रण रमस्व। यद्वा हे स्तोतः तमिन्द्रं सुते सोमे स्तुहि रणतिः शब्दार्थः ॥ ९ ॥

९. वशवाले एक इन्द्र ही मनुष्यों के पालक कहे गये हैं। वही तुम इन्द्र स्तोत्र-द्वारा वर्द्धकों और रक्षणेच्छुओं के साथ सोमाभिषव में रमण करो।        अथ दशमी—

स्तुहिश्रुतंविपश्चितंहरीयस्यप्रसक्षिणा।
गन्तारादाशुषोगृहंनमस्विनः॥ १० ॥ ८ ॥

स्तुहि। श्रुतम्। विपःऽचितम्। हरी इति। यस्य। प्रऽसक्षिणा।
गन्तारा। दाशुषः। गृहम्। नमस्विनः॥ १० ॥ ८ ॥

हे स्तोतः विपश्चितं विशिष्टज्ञानं श्रुतं विश्रुतं प्रख्यातं तमिन्द्रं स्तुहि प्रशंस। यस्येन्द्रस्य हरी अश्वौ प्रसक्षिणा शत्रूणां प्रसहनशीलौ नमस्विनोहविष्मतः दाशुषोदत्तवतोयजमानस्य गृहं गंतारा गमनशीलौच तमिन्द्रं स्तुहीति संबंधः गमेस्ताच्छीलिकस्तृन् ॥ १० ॥

१०. स्तोता, तुम विद्वान् और विख्यात इन्द्र की स्तुति करो। इन्द्र के शत्रुजेता दोनों अश्व नमस्कार और हविवाले यजमान के घर में जाते हैं।        ॥ इति षष्ठस्य प्रथमेष्टमोवर्गः ॥ ८ ॥

अथैकादशी—

तूतुजानोमहेमतेश्वेभिःप्रुषितप्सुभिः।
आयाहियज्ञमाशुभिःशमिद्धिते॥ ११ ॥

तूतुजानः महेऽमते। अश्वेभिः। प्रुषितप्सुऽभिः। आ। याहि।
यज्ञम्। आशुऽभिः। शम्। इत्। हि। ते॥ ११ ॥

हे महेमते महते फलाय मतिर्बुद्धिर्यस्यासौ महेमतिः अलुक् छान्दसः सतादृश हे इन्द्र तूतुजानस्त्वरमाणः सन् प्रुषितप्सुभिः स्निग्धरूपैराशुभिः शीघ्रगामिभिरश्वेभिः अश्वैर्यज्ञमस्मदीयमायाह्यागच्छ। हि यस्मात्ते तव तस्मिन् यज्ञे शमित् सुखं विद्यतएव अतआगच्छेत्यर्थः ॥ ११ ॥

११. तुम्हारी बुद्धि महाफल-दायिका है। तुम स्निग्ध हो। शीघ्रगामी अश्व के साथ यज्ञ में आगमन करो; क्योंकि उस यज्ञ में ही तुम्हें सुख है।

अथ द्वादशी—

इन्द्रशविष्ठसत्पतेरयिंगृणत्सुधारय ।
श्रवःसूरिभ्योअमृतंवसुत्वनम् ॥ १२ ॥

इन्द्र । शविष्ठ । सत्ऽपते । रयिम् । गृणत्ऽसु ।
धारय । श्रवः । सूरिऽभ्यः । अमृतम् । वसुऽत्वनम् ॥ १२ ॥

हे शविष्ठ बलवत्तम सत्पते सतां पालयितरिन्द्र गृणत्स्वस्मासु रयिं धनं धारयाऽवस्थापय । अपिच सूरिभ्यः स्तोतृभ्योमृतमनश्वरं वसुत्वनं व्याप्तिमत् श्रवोन्नं यशोवा देहीति शेषः ॥ १२ ॥

१२. श्रेष्ठ, बली और साधु-रक्षक इन्द्र, हम स्तुति करते हैं; हमें धन दो। स्तोताओं को अविनाशी और व्यापक अन्न वा यश दो।

हवेत्वासूरउदितेहवेमध्यन्दिनेदिवः ।
जुषाणइन्द्रसप्तिभिर्नआगहि ॥ १३ ॥

हवे । त्वा । सूरे । उत्ऽइते । हवे । मध्यन्दिने । दिवः ।
जुषाणः । इन्द्र । सप्तिऽभिः । नः । आ । गहि ॥ १३ ॥

हे इन्द्र सूरे सूर्ये उदिते उदयं प्राप्ते सति प्रातःसवने त्वा त्वां हवे आह्वये । तथा दिवोदिवसस्य मध्यन्दिने मध्यभागे माध्यन्दिने सवने त्वां हवे आह्वये । हे इन्द्र सत्वं जुषाणः प्रीयमाणः सन् सप्तिभिः सर्पणशीलैरश्वैर्नोस्मानागह्यागच्छ ॥ १३ ॥

१३. इन्द्र, सूर्योदय होने पर मैं तुम्हें बुलाता हूँ; दिन के मध्य भाग में तुम्हें बुलाता हूँ। प्रसन्न होकर गतिशील अश्वों के साथ आओ।

अथ चतुर्दशी—

आतूगहिप्रतुद्रवमत्स्वासुतस्यगोमतः ।
तन्तुंतनुष्वपूर्व्यंयथाविदे ॥ १४ ॥

आ । तु । गहि । प्र । तु । द्रव । मत्स्व । सुतस्य ।
गोऽमतः । तन्तुम् । तनुष्व । पूर्व्यम् । यथा । विदे ॥ १४ ॥

हे इन्द्र तु क्षिप्रमागह्यागच्छ आगत्यच तु क्षिप्रं पद्रव सोमोयत्र निवसति तं देशं प्रति शीघ्रं गच्छ। गत्वाच गोमतः गोविकारैः पयःप्रभृतिभिः श्रयणद्रव्यैर्युक्तस्य सुतस्याभिषुतस्य सोमस्य पानेन मत्स्व माद्य हृष्टोभव। तदनंतरं यथा अहं विदे उपलभे तथा पूर्व्यं पूर्वैःकृतं तंतुं विस्तृतं यज्ञं तनुष्व सम्यङ्निष्पादय फलोत्पादनसमर्थं कुर्वित्यर्थः॥ १४॥

१४. इन्द्र, शीघ्र आओ और सोम जहाँ है, वहाँ शीघ्र जाओ। दुग्ध-मिश्रित अभिषुत सोम से प्रीत होओ। अनन्तर मैं जैसा जानता हूँ, वैसे ही पूर्व-कृत विस्तृत यज्ञ को निष्पन्न करो।

यच्छक्रासिपरावतियदर्वावतिवृत्रहन्।
यद्वासमुद्रेअन्धसोवितेदसि॥ १५॥ ९॥

यत्। शक्र। असि। पराऽवति। यत्। अर्वाऽवति। वृत्रऽहन्।
यत्। वा। समुद्रे। अन्धसः। अविता। इत्। असि॥ १५॥ ९॥

हे शक्रेन्द्र परावति दूरदेशे यद्यदि असि भवसि हे वृत्रहन् यद्यदिवा अर्वावति समीपे भवसि वर्तसे यद्वा यदिवा समुद्रे जलधावंतरिक्षे वा वर्तसे तस्मात्सर्वस्मात्स्थानादागत्य अन्धसः अन्नस्य सोमलक्षणस्य पानेन अवितेदसि रक्षितैव भवसि॥ १५॥

१५. हे शक्र और वृत्रघ्न, यदि तुम दूर देश में हो, यदि समीप में हो, यदि अन्तरिक्ष में हो, तथापि उन सब स्थानों से आकर और सोम-पान करके रक्षक होओ।

॥ इति षष्ठस्य प्रथमे नवमो वर्गः॥ ९॥

इन्द्रंवर्धन्तुनोगिरइन्द्रंसुतासइन्दवः।
इन्द्रेहविष्मतीर्विशोअराणिषुः॥ १६॥

इन्द्रम्। वर्धन्तु। नः। गिरः। इन्द्रम्। सुतासः।
इन्दवः। इन्द्रे। हविष्मतीः। विशः। अराणिषुः। १६॥

नोस्माकं गिरः स्तुतिरूपावाचः इन्द्रं वर्धन्तु वर्धयन्तु सुतासोभिषुताः इन्दवः सोमाश्चास्मदीयास्तमिन्द्रं वर्धयन्तु हविष्मतीर्हविष्मत्यः हविर्भिश्चरुपुरोडाशादिभिर्युक्ताः विशः प्रजा तस्मिन्निन्द्रे अराणिषुररंसिषुः॥ १६॥

१६. हमारी स्तुतियाँ इन्द्र को वर्द्धित करें। अभिषोत सोम इन्द्र को वर्द्धित करें। हविष्मान् मनुष्य इन्द्र के प्रति रत हुए हैं।

अथ सप्तदशी–

तमिद्विप्राअवस्यवःप्रवत्वतीभिरूतिभिः ।
इन्द्रंक्षोणीरवर्धयन्वयाइव ॥ १७ ॥

तम् । इत् । विप्राः । अवस्यवः । प्रवत्वतीभिः ।
ऊतिऽभिः । इन्द्रम् । क्षोणीः । अवर्धयन् । वयाःऽइव ॥ १७ ॥

विप्रामेधाविनः अवस्यवोरक्षणकामाः स्तोतारः तमित् तमेवेन्द्रं प्रवत्वतीभिः प्रकर्षेणाभिगन्त्रीभिः ऊतिभिस्तृप्तिकरीभिराहुतिभिः स्तुतिभिर्वा वर्धयन्ति तथा क्षोणीः क्षोण्यः क्षोणीति पृथिवीनाम तदुपलक्षिताः सर्वे लोकावयाइव वृक्षस्य शाखाइव तदधीनाः सन्तोवर्धयन्वर्धयन्ति ॥ १७ ॥

१७. मेधावी और रक्षाभिलाषी उन इन्द्र को ही तृप्त कर आहुतियों द्वारा वर्द्धित करते हैं। पृथिवी के समस्त प्राणी इन्द्र को वृक्ष-शाखा की तरह वर्द्धित करते हैं।

अथाष्टादशी–

त्रिकद्रुकेषुचेतनंदेवासोयज्ञमत्नत ।
तमिद्वर्धन्तुनोगिरःसदावृधम् ॥ १८ ॥

त्रिऽकद्रुकेषु । चेतनम् । देवासः । यज्ञम् । अत्नत ।
तम् । इत् । वर्धन्तु । नः । गिरः । सदाऽवृधम् ॥ १८ ॥

त्रिकद्रुकेषु त्रिकद्रुकानाम ज्योतिर्गौरायुरिति त्रीण्याभिप्लविकान्यहानि तेषु देवासो देवाः चेतनं चेतयितारमिन्द्रं यज्ञं यष्टव्यं अत्नत अतन्वताकुर्वत तनोतेर्लङि छान्दसोविकरणस्य लुक् तनिपत्योश्छन्दसीत्युपधालोपः । तमित् तमेवेन्द्रं नोस्माकं गिरः स्तुतयश्च वर्धन्तु वर्धयन्तु । कीदृशं सदावृधं सर्वदास्तोतॄणां वर्धयितारम् ॥ १८ ॥

१८. "त्रिकद्रुक" नामक यज्ञ में देवों ने चैतन्य-दाता इन्द्र का मान किया था; हमारी स्तुतियाँ उन्हें सदा वर्द्धक इन्द्र को वर्द्धित करें।

अथैकोनविंशी–

स्तोतायत्तेअनुव्रतउक्थान्यृतुथादधे ।
शुचिःपावकउच्यतेसोअद्भुतः ॥ १९ ॥

स्तोता । यत् । ते । अनुऽव्रतः । उक्थानि । ऋतुऽथा ।
दधे । शुचिः । पावकः । उच्यते । सः । अद्भुतः ॥ १९ ॥

हे इन्द्र यत् यस्य ते तव स्तोता अनुव्रतः अनुकूलकर्मासन् ऋतुथा ऋतुषु कालेकाले उक्थानि शस्त्रादि दधे विधत्ते करोति लोपस्तआत्मनेपदेष्वितितलोपः। परोर्वचः परोक्षकृतः। सइन्द्रः अद्भुतः आश्चर्यभूतः शुचिः शुद्धः पावकोन्येषामपिशोधकइति उच्यते स्तोतृभिः स्तूयते ॥ १९ ॥

१९. इन्द्र, तुम्हारे स्तोता अनुकूलकर्मा होकर समय-समय पर उक्थों का उच्चारण करते हैं तुम अद्भुत, शुद्ध और पावक (दूसरों को पवित्र करनेवाले) होने से स्तुत होते हो।

तदिद्रुद्रस्यचेततियह्वंप्रत्नेषुधामसु।
मनोयत्राविततद्धुर्विचेतसः ॥ २० ॥ १० ॥

तत्। इत्। रुद्रस्य। चेतति। यह्वम्। प्रत्नेषु। धामऽसु।
मनः। यत्र। वि। तत्। दधुः। विऽचेतसः ॥ २० ॥ १० ॥

तदित् तदेव रुद्रस्य रुत् दुःखं तस्य द्रावयितुरीश्वरस्य यह्वं अपत्यं मरुत्संघात्मकं यद्वा रुद्रशब्देन लक्षणया मरुद्गणउच्यते रुद्रस्य रुद्रपुत्रस्य मरुद्गणस्य यह्वं महन्नामैतत् महत्तदेवबलं प्रत्नेषु चिरंतनेषु धामसु पृथिव्यादिस्थानेषु चेतति ज्ञायते वर्तते यत्र यस्मिन्बलविषये विचेतसो-विशिष्टज्ञानाः स्तोतारः तत्प्रसिद्धं मनोमननसाधनं स्तोत्रं विदधुः कुर्वन्ति तदित्यन्वयः ॥२०॥

२०. जिनके लिए विशिष्ट ज्ञानवाले व्यक्ति स्तोत्र उच्चारण करते हैं, वे ही रुद्र-पुत्र मरुद्गण अपने प्राचीन स्थानों में हैं।

॥ इति षष्ठस्य प्रथमे दशमोवर्गः ॥१०॥

यदिमेसख्यमावरइमस्यपाह्यन्धसः।
येनविश्वाअतिद्विषोअतारिम ॥ २१ ॥

यदि। मे। सख्यम्। आऽवरः। इमस्य। पाहि।
अन्धसः। येन। विश्वाः। अति। द्विषः। अतारिम ॥ २१॥

हे इन्द्र मे मम सख्यं सखित्वं यद्यावरः यदि आभिमुख्येन वृणुयाः तर्हि इमस्य अस्य हलिलोपाभावश्छान्दसः पुरोवर्तिनः अंधसः अन्नस्य सोमलक्षणस्य स्वांशं पाहि पिब। अंधसइति कर्मणि वा षष्ठी पिबतेश्छान्दसोविकरणस्य शपोलुक्। येन त्वत्पीतेन सोमेन हेतुना वयं विश्वाः सर्वाद्विषोद्वेष्ट्रीः शत्रुसेनाः अत्यतारिम अतितरेम अतिक्रामेम ॥ २१ ॥

२१. इन्द्र, यदि तुम मुझे मैत्री प्रदान करो और इस सोम-रूप अन्न का पान करो, तो हम सारे शत्रुओं का अतिक्रमण कर सकते हैं।

अथ द्वाविंशी—

कदातंइन्द्रगिर्वणःस्तोताभवातिशन्तमः।
कदानोगव्येअश्व्येवसौदधः ॥ २२ ॥

कदा । ते । इन्द्र । गिर्वणः । स्तोता । भवाति ।
शम्ऽतमः । कदा । नः । गव्ये । अश्व्ये । वसौ । दधः ॥ २२ ॥

हे गिर्वणोगिरां स्तुतीनां संभक्तरिन्द्र ते तव स्तोता शंतमः सुखतमोतिशयेनसुखवान् कदा कस्मिन्काले भवाति भवेत् कदा कस्मिंश्च काले नोस्मान् गव्ये गोसमूहे अश्व्ये अश्वसंघे वसौ निवासभूतेन्यस्मिन्नपि धने दधः धारयेः ॥ २२ ॥

२२. स्तुति-पात्र इन्द्र, कब तुम्हारा स्तोता अत्यन्त सुखी होगा? तुम कब हमें गौ, अश्व और निवास-योग्य धन दोगे?

उततेसुष्टुताहरीवृषणावहतोरथम्।
अजुर्यस्यमदिन्तमंयमीमहे ॥ २३ ॥

उत । ते । सुऽस्तुता । हरी इति । वृषणा । वहतः ।
रथम् । अजुर्यस्य । मदिन्तमम् । यम् । ईमहे ॥ २३ ॥

उतापिच हेइन्द्र सुष्टुता शोभनस्तुतौ वृषणा वृषणौ कामानां वर्षितारौ हरी अश्वौ अजुर्यस्य जरारहितस्य ते तव रथं इदानीं वहतः अस्मन्निकटं प्रापयतः मदिन्तमं अतिशयेन मदवन्तं यं त्वां धनं ईमहे याचामहे तस्य तदित्यन्वयः ॥ २३ ॥

२३. अजर इन्द्र, भली भाँति स्तुत और काम-वर्षक हरि नामक दोनों अश्व तुम्हारा रथ हमारे पास ले आवें। तुम अतीव मद से युक्त हो; हम तुम्हारे पास याचना करते हैं।

अथ चतुर्विंशी—

तमीमहेपुरुष्टुतंयह्वंप्रत्नाभिरूतिभिः।
निबर्हिषिप्रियेसददधद्विता ॥ २४ ॥

तम् । ईमहे । पुरुऽस्तुतम् । यह्वम् । प्रत्नाभिः ।
ऊतिऽभिः । नि । बर्हिषि । प्रिये । सदत् । अध । द्विता ॥ २४ ॥

यह्वं महांतं पुरुष्टुतं बहुभिः स्तुतमिन्द्रं प्रत्नाभिः पुराणीभिः ऊतिभिस्तृप्तिकरीभिः सोमाहुतिभिर्हेतुभिः ईमहे याचामहे सचेन्द्रः प्रिये प्रीतिकरे बर्हिषि आस्तीर्णे दर्भे निषदव् निषीदतु हविःस्वीकरणायोपविशतु अधानंतरं द्विता द्वैधं वर्तमानानि चरुपुरोडाशादीनि सोमलक्षणानिच हवींषि स्वीकरोत्विति शेषः ॥ २४ ॥

२४. महान् और अनेकों द्वारा स्तुत उन्हीं इन्द्र से तृप्तिकर आहुतियों के द्वारा हम याचना करते हैं। वे प्रसन्नता-दायक कुशों पर बैठें। अनन्तर द्विविध (सोम और पुरोडाश) हव्य स्वीकार करें।

वर्धस्वा सु पुरुष्टुत ऋषिष्टुताभिरूतिभिः ।
धुक्षस्व पिप्युषीमिषमवा च नः ॥ २५ ॥ ११ ॥

वर्धस्व । सु । पुरुऽस्तुत । ऋषिऽस्तुताभिः । ऊतिऽभिः ।
धुक्षस्व । पिप्युषीम् । इषम् । अव । च । नः ॥ २५ ॥ ११ ॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र ऋषिस्तुताभिः ऋषिभिर्मंत्रदर्शिभिः पुरा स्तुताभिः ऊतिभीरक्षाभिः सु सुष्ठु वर्धस्वास्मान्वर्धय। यद्वा ऋषिभिरुत्पादिताभिः ऊतिभिः स्तुतिभिः त्वं वर्धस्व वृद्धिं प्राप्नुहि। नोस्मभ्यंच पिप्युषीं प्रवृद्धां इषं इष्यमाणमन्नं अवधुक्षस्व अवाङ्मुखमस्मदभिमुखं धुक्षस्व क्षारय देहीत्यर्थः ॥ २५ ॥

२५. बहुतों-द्वारा स्तुत इन्द्र, तुम ऋषियों-द्वारा स्तुत हो। अपने रक्षणों के द्वारा हमें वर्द्धित करो और हमारे सामने प्रवृद्ध अन्न दान करो।  ॥ इति षष्ठस्य प्रथमे एकादशोवर्गः ॥ ११ ॥

अथ षड्विंशी—

इन्द्र त्वमवितेदसीत्था स्तुवतो अद्रिवः ।
ऋतादियर्मि ते धियं मनोयुजम् ॥ २६ ॥

इन्द्र । त्वम् । अविता । इत् । असि । इत्था । स्तुवतः । अद्रिऽवः ।
ऋतात् । इयर्मि । ते । धियम् । मनःऽयुजम् ॥ २६ ॥

हे अद्रिवः वज्रवन्निन्द्र त्वं इत्था इत्थमनेन प्रकारेण स्तुवतः स्तोत्रं कुर्वतोयजमानस्य अवितेदसि रक्षितैवभवसि। यतएवमतःकारणाव् अहमपि ऋताद्यज्ञाद्धेतोः मनोयुजं मनसा मननीयेन स्तोत्रेण प्राप्यां ते त्वदीयां धियमनुग्रहबुद्धिं इयर्मि प्राप्नोमि। यद्वा ऋतात्सत्यभूताव् त्वचः स्तोत्रेण युक्तं त्वत्प्रीतिकरं कर्माहं प्राप्नोमि ॥ २६॥

२६. वज्रधर इन्द्र, इस प्रकार तुम स्तोता के रक्षक हो। सत्यभूत, तुम्हारे स्तोत्र से युक्त तुम्हारे प्रसन्नता-दायक कर्म को मैं प्राप्त करता हूँ।

अथ सप्तविंशी—

इहत्यासंधमाद्यांयुजानःसोमपीतये
हरींइन्द्रप्रतद्वंसूअभिस्वंर ॥ २७ ॥

इह । त्या । सधऽमाद्यां । युजानः । सोमंऽपीतये । हरी । इतिं ।
इन्द्र । प्रतद्वंसू इतिं प्रततुऽवंसू । अभि । स्वर ॥ २७ ॥

हे इन्द्र इहास्मिन्यागे सोमपीतयेसोमपानायाभिस्वराभिगच्छ । किंकुर्वन् त्या त्यौ तौ प्रसिद्धौ सधमाद्या त्वया सह हविर्भिर्मादयितव्यौ तर्पयितव्यौ प्रतद्वसू प्राप्तवसू विस्तीर्णधनौ ईदृशौ हरी त्वदीयावश्वौ युजानः रथेन संयोजयन् ॥ २७ ॥

२७. इन्द्र, प्रसिद्ध, प्रसन्न और विस्तीर्ण धनवाले दोनों अश्वों को रथ में जोत करके इस यज्ञ में, सोमपान के लिए, आओ।

अथाष्टाविंशी—

अभिस्वंरन्तुयेतवंरुद्रासंःसक्षतश्रियंम् ।
उतोमरुत्वंतीर्विशोंअभिप्रयंः ॥ २८ ॥

अभि । स्वरन्तु । ये । तवं । रुद्रासंः । सक्षत । श्रियंम् ।
उतो इतिं । मरुत्वंतीः । विशंः । अभि । प्रयंः ॥ २८ ॥

अभिस्वरंतु अभिगच्छंतु ते। हे इन्द्र तवानुचराः रुद्रासोरुद्रपुत्रा येमरुतः संति।अपिच ते श्रियं श्रयणीयमिमं यज्ञं सक्षत सचंतु प्राप्नुवन्तु। उतो अपिच मरुत्वतीर्मरुद्भिर्युक्ताः विशः अन्यापि दैवीःप्रजाः प्रयः अन्ननामैतत् अस्मदीयं हविर्लक्षणमन्नमभिगच्छन्तु ॥ २८ ॥

२८. तुम्हारे जो रुद्र-पुत्र मरुद्गण हैं, वे आश्रय-योग्य इस यज्ञ में आवें और मरुतों से युक्त प्रजायें भी हमारे हव्य के पास आवें।

अथैकोनत्रिंशी—

इमाअंस्यप्रतूंर्तयंःपदंजुंषन्तयद्दिवि ।
नाभांयज्ञस्यसन्दंधुर्यथांविदे ॥ २९ ॥

इमाः । अस्य । प्रऽतूंर्तयः । पदम् । जुषन्त । यत् । दिवि ।
नाभां । यज्ञस्यं । सम् । दधुः । यथां । विदे ॥ २९॥

अस्येन्द्रस्य संबंधिन्यः इमाः पूर्वोक्तामरुदादिरूपाः प्रजाः प्रतूर्तयः प्रकर्षेण शत्रूणां हिंसित्र्यः पदं स्थानं जुषंत असेवन्त । दिवि द्युलोके यत्स्थानं अन्यैर्दुःप्रापमस्ति

तत्पदमित्यर्थः। अपिच ताः यज्ञस्य ज्योतिष्टोमादेः नाभा नाभौ नाभिस्थानीये हविर्धाने उत्तरवेद्यां वा संदधुः संनिदधते। यथा येन प्रकारेण विदे विन्दे अपेक्षितं धनं लभे तथेत्यर्थः। यद्वा विदे ज्ञानाय यथास्माकं वरं ज्ञानं भवति तथेत्यर्थः॥ २९॥

२९. इन्द्र की ये हिंसक मरुत आदि प्रजायें द्युलोक में जिस स्थान में हैं, उसकी सेवा (आश्रय) करते हैं। हम लोग जैसे धन प्राप्त कर सकें, इस प्रकार यज्ञ के नाभिप्रदेश (उत्तर वेदी) पर रहते हैं।

अयंदीर्घायचक्षसेप्राचिंप्रयत्यध्वरे।
मिमीतेयज्ञमानुषग्विचक्ष्य॥ ३०॥ १२॥

अयम्। दीर्घाय। चक्षसे। प्राचि। प्रऽयति। अध्वरे।
मिमीते। यज्ञम्। आनुषक्। विऽचक्ष्य॥ ३०॥ १२॥

प्राचि प्राचीने प्रागायते यज्ञगृहे अध्वरे हिंसारहिते यज्ञे प्रयति गच्छति प्रवर्तमाने सति अयमिन्द्रः प्रवर्तमानं तं यज्ञं आनुषक् आनुषक्तमानुपूर्व्येण विचक्ष्य विशेषेण दृष्ट्वा मिमीते निष्पादयति किमर्थं दीर्घायायताय चक्षसे दर्शनाय। यद्वा द्रष्टव्याय फलाय॥३०॥

३०. प्राचीन यज्ञ-गृह में यज्ञ आरम्भ होने पर ये इन्द्र द्रष्टव्य फल के लिए यज्ञ को क्रम-बद्ध देखकर यज्ञ को सम्पादित करते हैं।

॥ इति षष्ठस्य प्रथमे द्वादशोवर्गः॥ १२॥

वृषायमिन्द्रतेरथउतोतेवृषणाहरी।
वृषात्वंशतक्रतोवृषाहवः॥ ३१॥

वृषा। अयम्। इन्द्र। ते। रथः। उतो इति। ते। वृषणा।
हरी इति। वृषा। त्वम्। शतक्रतो इति शतऽक्रतो। वृषा। हवः॥३१॥

हे इन्द्र ते त्वदीयः अयं रथः वृषा कामानां वर्षिता उतो अपिच तव हरी अश्वौ वृषणा वृषणौ वर्षितारौ हे शतक्रतो बहुकर्मन् बहुप्रज्ञेन्द्र त्वं च वृषा वर्षिता कामानां तथा हवस्त्वद्विषयमाह्वानं च वृषा वर्षिता त्वद्विषयमाह्वानमपि कामान्वर्षति किमु वक्तव्यं त्वदीयारथादयोवर्षन्तीति भावः॥ ३१॥

३१. इन्द्र, तुम्हारा यह रथ मनोरथ-पूरक है, तुम्हारे ये दोनों घोड़े काम-वर्षक हैं। शत-क्रतु (बहु-कर्मा) इन्द्र, तुम अभीष्टवर्षी हो और तुम्हारा आह्वान भी ईप्सित-फल-दाता है।

अथ द्वात्रिंशी—

वृषाग्रावावृषामदोवृषासोमोअयंसुतः।
वृषायज्ञोयमिन्वसिवृषाहवः॥ ३२॥

वृषा । ग्रावा । वृषा । मदः । वृषा । सोमः । अयम् ।
सुतः । वृषा । यज्ञः । यम् । इन्वसि । वृषा । हवः ॥ ३२ ॥

ग्रावा अभिषवसाधनपाषाणः वृषा वर्षिता कामानां हे इन्द्र त्वदीयः सोमपानजन्योमदश्च वृषा वर्षिता सुतस्त्वदर्थमभिषुतोयं सोमश्च वृषा वर्षिता यं यज्ञमिन्वसि त्वं प्राप्नोषि सच यज्ञोवृषा अभीष्टस्य फलस्य वर्षिता त्वदीयोहवश्च वृषा ॥ ३२ ॥

३२. अभिषव करनेवाला पत्थर अभीष्ट-वर्षी है, मत्तता मनोरथ-दायिनी है। यह अभिषुत सोम भी काम-वर्षक है। जिस यज्ञ को तुम प्राप्त करते हो, वह भी अभिलषित-वर्षक है। तुम्हारा आह्वान ईप्सित-फल-दाता है।

वृषात्वावृषणंहुवेवज्रिञ्चित्राभिरूतिभिः ।
वावन्थहिप्रतिष्टुतिंवृषाहवः ॥ ३३ ॥ १३ ॥

वृषा । त्वा । वृषणम् । हुवे । वज्रिन् । चित्राभिः ।
ऊतिऽभिः । ववन्थ । हि । प्रतिऽस्तुतिम् । वृषा । हवः ॥३३॥१३॥

हे वज्रिन् वज्रवन्निन्द्र वृषणं वृषाणं वर्षितारं त्वा त्वां वृषा वर्षिता हविषामासेक्ताऽहं चित्राभिश्चायनीयाभिः नानाविधाभिर्वा ऊतिभिस्तृप्तिकरीभिःस्तुतिभिः हुवे आह्वये । हि यस्मात् त्वं प्रतिष्टुतिं त्वामभिलक्ष्य कृतं स्तोत्रं ववन्थ वनसि संभजसि अतस्त्वदीयोहवआह्वानं वृषा वर्षिता। यद्वा हवोह्वातव्योवृषा वर्षिता त्वां यस्मात् स्तुतिं वनसि तस्मात् त्वां हुवइत्यर्थः॥३३॥

३३. वज्रधर, तुम अभीष्ट-वर्षक हो। मैं हवि का सेचन-कर्त्ता हूँ। मैं नानाविध स्तुतियों-द्वारा तुम्हें बुलाता हूँ। तुम अपने लिए की गई स्तुति को ग्रहण करते हो; इसलिए तुम्हारा आह्वान अभीष्ट-दाता है।

॥ इति षष्ठस्य प्रथमे त्रयोदशोवर्गः ॥ १३ ॥

यदिन्द्राहमिति पञ्चदशर्चं द्वितीयं सूक्तं गोषूक्त्यश्वसूक्तिनोः काण्वगोत्रयोरार्षं गायत्रमैन्द्रं तथाचानुक्रान्तम्— यदिन्द्रपञ्चोना गोषूक्त्यश्वसूक्तिनौ काण्वायनाविति । महाव्रते निष्केवल्यएतत्सूक्तम् । तथैव पञ्चमारण्यकेसूत्र्यते—यदिंद्राहंयथात्वं प्रसम्राजंचर्षणीनामितिसूक्तेइति । तृतीये पर्याये ब्रह्मशस्त्रेपीदंसूक्तं सूत्रितंच—यदिन्द्राहंप्रतेमहइति।

तत्र प्रथमा—

यदिन्द्राहंयथात्वमीशीयवस्वएकइत् । स्तोतामेगोषखास्यात्॥१॥

यत् । इन्द्र । अहम् । यथा । त्वम् । ईशीय । वस्वः । एकः ।
इत् । स्तोता । मे । गोऽसखा । स्यात् ॥ १ ॥

हे इन्द्र यथा त्वं एकइत् एकएव केवलं वस्वोवसुनोधनस्य ईशिषे एवमपि यद्यदि अहं ईशीय ऐश्वर्ययुक्तःस्याम् तदानीं मे मम स्तोता गोसाखा स्यात् गोभिः सहितोभवेत् ईश्वरस्य तव स्तोता कुतोहेतोः गोः सहितोन भवेत् अपितु भवेदित्यभिप्रायः ॥ १॥

१. इन्द्र, जैसे तुम्हीं केवल धनाधिपति हो, वैसे ही यदि मैं भी ऐश्वर्य-युक्त हो जाऊँ, तो मेरा स्तोता गो-युक्त हो जाय।

अथ द्वितीया—

शिक्षेयमस्मैदित्सेयंशचीपतेमनीषिणे । यदहंगोपतिःस्याम् ॥ २॥

शिक्षेयम् । अस्मै । दित्सेयम् । शचीऽपते । मनीषिणे । यत् । अहम् । गोऽपतिः । स्याम् ॥ २ ॥

हे शचीपते शक्तिमन्निन्द्र अस्मै मनीषिणे मनसईशित्रे स्तोत्रे दित्सेयं दातुमिच्छेयम् तदनंतरं शिक्षेयं प्रार्थितं धनं दद्यां च। यद्यदि अहं गोपतिः गवामधिपतिः स्यां भवेयम् त्वत्प्रसादादितिशेषः ॥ २ ॥

२. शक्तिमान् इन्द्र, यदि तुम्हारी कृपा से मैं गोपति हो जाऊँ, तो इस स्तोता को दान देने की इच्छा करूँगा और प्रार्थित धन दूंगा।

धेनुष्टइंद्रसूनृतायजमानायसुन्वते । गामश्वंपिप्युषीदुहे ॥ ३ ॥

धेनुः । ते । इन्द्र । सूनृता । यजमानाय । सुन्वते । गाम् । अश्वम् । पिप्युषी । दुहे ॥ ३ ॥

हे इन्द्र ते तव सूनृता स्तुतिरूपा वाग्धेनुः दोग्ध्री गौर्भूत्वा सुन्वते सोमाभिषवं कुर्वते यजमानाय गामश्वं च उपलक्षणमेतत् गवाश्वादिकं सर्वमभिलषितं दुहे दुग्धे। किंकुर्वती पिप्युषी तमेव प्रवर्धयित्री ॥ ३ ॥

३. इन्द्र, तुम्हारी सत्यप्रिय और वर्द्धक स्तुति-रूप धेनु सोमाभिषव-कर्त्ता को गौ और अश्व देती है।

अथ चतुर्थी—

नतेवर्तास्तिराधसइन्द्रदेवोनमर्त्यः । यद्दित्ससिस्तुतोमघम् ॥ ४ ॥

न । ते । वर्ता । अस्ति । राधसः । इन्द्र । देवः । न । मर्त्यः । यत् । दित्ससि । स्तुतः । मघम् ॥ ४ ॥

हे इन्द्र ते तव राधसोधनस्य स्तोतृभ्योदातव्यस्य वर्ता निवारकोदेवोनास्ति नविद्यते। न मर्त्यः मनुष्योपि निवारकोनास्ति। स्तुतः स्तोतृभिः प्रख्यापितगुणः सन् यन्मत्ध्यं मघं मंहनीयं धनं दित्ससि त्वं दातुमिच्छसि ॥ ४ ॥

४. इन्द्र, तुम स्तुत होकर धन-दान करने की इच्छा करते हो। उस समय तुम्हारे धन का निवारक देवता वा मनुष्य नहीं है।

यज्ञइन्द्रमवर्धयद्यद्भूमिंव्यवर्तयत्। चक्राणओपशंदिवि॥५॥१४॥

यज्ञः। इन्द्रम्। अवर्धयत्। यत्। भूमिम्। वि। अवर्तयत्। चक्राणः। ओपशम्। दिवि ॥ ५ ॥ १४ ॥

यज्ञोयजमानैरनुष्ठीयमानोयागः इन्द्रं देवमवर्धयत् श्रूयतेहि—इन्द्रइदंहविरजुषतावीवृधत-महोज्ययोकृतेति[1]। सइन्द्रोयद्यस्माद्भूमिं पृथिवीं व्यवर्तयत् वृष्ट्यादिप्रदानेन विशेषेण वर्तमानामकरोत्। किंकुर्वन् दिव्यन्तरिक्षे मेघं ओपशं उपेत्यशयानं चक्राणः कुर्वन् यद्वा आत्मनि समवेतोवीर्यविशेषओपशः तमन्तरिक्षेकुर्वन् ॥ ५ ॥

५. यज्ञ ने इन्द्र को वर्द्धित किया है। इसलिए कि इन्द्र ने द्युलोक में मेघ को सुलाते हुए पृथिवी को वृष्टि-दान से सुस्थिर किया है।

॥ इति षष्ठस्य प्रथमे चतुर्दशोवर्गः ॥ १४ ॥

अथ षष्ठी—

वावृधानस्यंतेवयंविश्वाधनानिजिग्युषः। ऊतिमिन्द्रावृणीमहे॥६॥

वावृधानस्य। ते। वयम्। विश्वा। धनानि। जिग्युषः। ऊतिम्। इन्द्र। आ। वृणीमहे ॥ ६ ॥

हे इन्द्र वावृधानस्य वर्धमानस्य विश्वा विश्वानि सर्वाणि धनानि शत्रुसंबंधीनि जिग्युषोजितवतस्ते तव ऊतिं रक्षां वयमावृणीमहे आभिमुख्येनसंभजामहे ॥ ६ ॥

६. इन्द्र, तुम वर्द्धन-शील और शत्रुओं के सारे धनों के जेता हो। हम तुम्हारी रक्षा प्राप्त करेंगे।

चातुर्विंशिकेहनि प्रातःसवने ब्रह्मशस्त्रे व्यन्तरिक्षमतिरदित्ययं पर्यासस्तृचः सूत्र्यतेहि—व्यन्तरिक्षमतिरत्श्यावाश्वस्यसुन्वतइति तृचाः पर्यासाइति। अहर्गणेषु द्वितीयादिष्वहःस्वपि तस्यैव तस्मिन्नेवशस्त्रेऽयंपर्यासस्तृचः सूत्रितंच—पर्यासाकद्वतोहरहःशस्यानीति होत्रकाद्वितीयादिष्वेवेति।

---

1 तै० ब्रा० ३. ५. ९.।

तत्र प्रथमा सूक्ते सप्तमी—

व्यं१न्तरिक्षमतिरन्मदेसोमस्यरोचना । इन्द्रोयदभिनद्वलम् ॥ ७॥

वि । अन्तरिक्षम् । अतिरत् । मदे । सोमस्य । रोचना । इन्द्रः । यत् । अभिनत् । वलम् ॥ ७ ॥

सोमस्यपानेन मदे हर्षे सति रोचना रोचमानमन्तरिक्षं अयमिन्द्रोव्यतिरत् व्यवर्धयत् यत् यस्मात्कारणात् वलं आवृत्य स्थितमसुरं मेघं वा अभिनत् व्यदारयत् ॥ ७ ॥

७. सोम-जन्य मत्तता के होने पर इन्द्र ने दीप्तिमान् अन्तरिक्ष को वर्द्धित किया है; क्योंकि उन्होंने बली मेघ को भिन्न किया है।

उद्गाआजदङ्गिरोभ्यआविष्कृण्वन्गुहासतीः । अर्वाञ्चंनुनुदेवलम् ॥८॥

उत् । गाः । आजत् । अङ्गिरःऽभ्यः । आविः । कृण्वन् । गुहा । सतीः । अर्वाञ्चम् । नुनुदे । वलम् ॥ ८ ॥

अंगिरोभ्यऋषिभ्यः वलानुचरैः पणिभिरपहतागाः उदाजत् उदगमयत् किंकुर्वन् गुहा गुहायां बिले सतीः विद्यमानाः यथा नदृश्यन्ते तथा पणिभिर्गूढाः ता गाः आविष्कृण्वन् प्रकाशयन् अपिच पणीनां अधिपतिं वलमसुरमपि अर्वाञ्चमधोमुखं नुनुदे प्रेरितवान् ॥ ८ ॥

८. इन्द्र ने गुहा में छिपाई हुई गायों को प्रकट करके अङ्गिरा लोगों को प्रदान किया था और गायें चुरानेवाले पणियों के नेता "बल" असुर को अधोमुख किया था।

इन्द्रेणरोचनादिवोदृह्ळानिदृंहितानिच । स्थिराणिनपराणुदे ॥ ९॥

इन्द्रेण । रोचना । दिवः । दृह्ळानि । दृंहितानि । च । स्थिराणि । न । पराऽनुदे ॥ ९ ॥

दिवोद्युलोकस्य संबंधीनि रोचना रोचमानानि देवगृहात्मकानि नक्षत्राणि इन्द्रेण दृह्ळानि दृढावयवानि बलवन्ति कृतानि दृंहितानि च दृढीकृतानि यथा एकत्रनैश्चल्येनावतिष्ठन्ते तथाकृतानीत्यर्थः । यद्वा दृह दहि वृहि वृद्धौ दृंहितानि वर्धितानिचेत्यर्थः । अपिच स्थिराणि स्थास्नूनि दृढानि तानि न पराणुदे परानोदनीयानि नभवन्ति न केनापि स्थानात्प्रच्यावयितुं शक्यानीत्यर्थः नुदप्रेरणे अस्मात्कृत्यार्थइति केन्प्रत्ययः ॥ ९ ॥

९. इन्द्र ने द्युलोक के नक्षत्रों को बल-युक्त और दृढ़ किया था। नक्षत्रों को उनके स्थानों से कोई गिरा नहीं सकता।

अथ दशमी—

अपामूर्मिर्मदन्निव स्तोम इन्द्राजिरायते। वि ते मदा अराजिषुः॥१०॥१५॥

अपाम्। ऊर्मिः। मदन्ऽइव। स्तोमः। इन्द्र। अजिरऽयते। वि। ते। मदाः। अराजिषुः॥ १०॥ १५॥

अपां समुद्राणामूर्मिस्तरंगः मदन्निव यथा माद्यन् उपर्युपरिजायते हे इन्द्र स्तोमस्त्वदीयं स्तोत्रं तथा अजिरायते अजिरः क्षिप्रगामी सइवाचरति। अपिच ते त्वदीया मदाः स्तोत्रजन्याः सोमपानजन्याश्च विअराजिषुः विशेषेण राजन्ते दीप्यन्ते॥ १०॥

१०. इन्द्र, समुद्र की तरङ्गों के समान तुम्हारी स्तुतियाँ शीघ्र गमन करती हैं। तुम्हारी प्रमत्तता विशेष रूप से दीप्ति प्राप्त करती है।

॥ इति षष्ठस्य प्रथमे पञ्चदशोवर्गः॥ १५॥

अथैकादशी—

त्वं हि स्तोमवर्धन इन्द्रास्युक्थवर्धनः। स्तोतॄणामुत भद्रकृत्॥ ११॥

त्वम्। हि। स्तोमऽवर्धनः। इन्द्र। असि। उक्थऽवर्धनः। स्तोतॄणाम्। उत। भद्रऽकृत्॥ ११॥

हे इन्द्र त्वं हि त्वं खलु स्तोमवर्धनः स्तोमेन त्रिवृत्पञ्चदशादिना वर्धनीयोसि तथा उक्थवर्धनः उक्थैः शस्त्रैर्वर्धनीयश्च त्वमेवासि। उतापिच स्तोतॄणामस्माकं भद्रकृत् भद्रस्य कल्याणस्य फलस्य कर्तापि त्वमेवासि॥ ११॥

११. इन्द्र, तुम स्तोत्र-द्वारा वर्द्धनीय हो और उक्थ (शस्त्र नामक मन्त्र) द्वारा भी वर्द्धनीय हो। तुम स्तोताओं के कल्याणकर्ता हो।

अथ द्वादशी—

इन्द्रमित्केशिना हरी सोमपेयाय वक्षतः। उप यज्ञं सुराधसम्॥ १२॥

इन्द्रम्। इत्। केशिना। हरी इति। सोमऽपेयाय। वक्षतः। उप। यज्ञम्। सुऽराधसम्॥ १२॥

केशिना केशिनौ मूर्धजानि लोमानि केशास्तद्वन्तौ हरी अश्वौ सुराधसं शोभनधनं इन्द्रमित् इन्द्रमेव यज्ञमुपास्मद्यज्ञं प्रति सोमपेयाय सोमपानार्थं वक्षतः वहतां यद्वा यज्ञं यष्टव्यमिंद्रं उपवहताम् ॥ १२ ॥

१२. केशवाले हरि नाम के दोनों अश्व सोमपान के लिए शोभन दानवाले इन्द्र को यज्ञ में ले आते हैं।

अपांफेनेननमुचेःशिरइन्द्रोदवर्तयः । विश्वायदजयःस्पृधः ॥१३॥

अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उत् । अवर्तयः । विश्वाः । यत् । अजयः । स्पृधः ॥ १३ ॥

पुरा किलेन्द्रोऽसुरान् जित्वा न मुचिमसुरं ग्रहीतुं न शशाक सच युध्यमानस्तेनासुरेण जगृहे सच गृहीतमिन्द्रमेवमवोचत् त्वां विसृजामि रात्रावह्निच शुष्केणार्द्रेण चायुधेन यदि मां माहिंसीरिति । सइन्द्रस्तेनविसृष्टः सन् अहोरात्रयोः संधौ शुष्कार्द्रविलक्षणेन फेनेन तस्यशिरश्चिच्छेद अयमर्थोऽस्यां प्रतिपाद्यते—हे इन्द्र अपां फेनेन वज्रीभूतेन नमुचेरसुरस्य शिरः उदवर्तयः शरीरादुद्गतमवर्तयःअच्छेत्सीरित्यर्थः । कदेतिचेत् यद्यदा विश्वाःसर्वाः स्पृधः स्पर्धमानाः आसुरीः सेनाः अजयः जितवानसि ॥ १३ ॥

१३. इन्द्र, जिस समय तुमने सारे शत्रुओं (असुरों) को जीता था, उस समय जल के फेन के द्वारा ही नमुचि के सिर को छिन्न किया था।

अथ चतुर्दशी—

मायाभिरुत्सिसृप्सतइन्द्रद्यामारुरुक्षतः । अवदस्यूँरधूनुथाः ॥१४॥

मायाभिः । उत्ऽसिसृप्सतः । इन्द्र । द्याम् । आऽरुरुक्षतः । अव । दस्यून् । अधूनुथाः ॥ १४ ॥

हे इन्द्र मायाभिः उत्सिसृप्सतः सर्वत्र प्रसरतः द्यां आरुरुक्षतः द्युलोकं आरोहतः दस्यून् शत्रून् उपक्षेपृन् अवाधूनुथाः अवाङ्मुखं प्रेरितवानसि ॥ १४ ॥

१४. तुम माया के द्वारा सर्वत्र फैलनेवाले हो। तुमने द्युलोक में चढ़ने की इच्छा करनेवाले शत्रुओं (दस्युओं) को निम्नाभिमुख प्रेरित किया था।

अथ पञ्चदशी—



असुन्वामिन्द्रसंसदंविषूचींव्यनाशयः । सोमपाउत्तरोभवन् ॥१५॥१६॥

असुन्वाम् । इन्द्र । सम्ऽसदम् । विषूचीम् । वि । अनाशयः ।
सोमऽपाः । उत्ऽतरः । भवन् ॥ १५ ॥ १६ ॥

हे इन्द्र त्वं सोमपाः सोमस्य पाता भूत्वा उत्तरः उत्कृष्टतरोभवन् असुन्वां सोमाभिषवहीनां संसदं जनसंहतिं विषूचीं परस्परविरोधेन विषु नाना गन्त्रीं व्यनाशयः विशेषेण नाशयसि ॥ १५ ॥

१५. इन्द्र, सोमपान करने से उत्कृष्टतर होते हुए तुमने सोमाभिषव से हीन जन-समुदाय को, परस्पर विरोध कराकर, विनष्ट किया था।

॥ इति षष्ठस्य प्रथमे षोडशोवर्गः ॥ १६ ॥

तम्वभीति त्रयोदशर्चं तृतीयं सूक्तं औष्णिहमैन्द्रं पूर्वोक्तावेवऋषी तथाचानुक्रम्यते—तम्वभिसप्तोनौष्णिहमिति । महाव्रते निष्केवल्ये औष्णिहतृचाशीतावुत्तमावर्जमेतत्सूक्तम् सूत्र्यतेहि—तम्वभिप्रगायतेत्युत्तमामुद्धरतीति । आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्रह्मशस्त्रे आद्यस्तृचोवैकल्पिकोनुरूपः सूत्रितश्च—तम्वभिप्रगायतवयमुत्वामपूर्व्ये ति ।

तत्र प्रथमा—

तम्वभिप्रगायतपुरुहूतंपुरुष्टुतम् । इन्द्रंगीर्भिस्तविषमाविवासत ॥१॥

तम् । ऊँ इति । अभि । प्र । गायत । पुरुऽहूतम् । पुरुऽस्तुतम् ।
इन्द्रम् । गीःऽभिः । तविषम् । आ । विवासत ॥ १ ॥

पुरुहूतं बहुभिराहूतं पुरुष्टुतं बहुभिःस्तुतं तमु तमेवेन्द्रं हे स्तोतारः अभिप्रगायत अभिमुखं प्रकर्षेणस्तुध्वम् एतदेवस्पष्टयति तविषं महान्तमिन्द्रं गीर्भिर्वाग्भिः आविवासत परिचरत॥१॥

१. अनेकों के द्वारा बुलाये गये और अनेकों के द्वारा स्तव किये गये उन्हीं इन्द्र की स्तुति करो। वचनों के द्वारा महान् इन्द्र की परिचर्य्या करो।

अथ द्वितीया—

यस्यद्विबर्हसोबृहत्सहोदाधाररोदसी । गिरीँरज्राँअपःस्वर्वृषत्वना ॥२॥

यस्य । द्विऽबर्हसः । बृहत् । सहः । दाधार । रोदसी इति ।
गिरीन् । अज्रान् । अपः । स्वः । वृषऽत्वना ॥ २ ॥

द्विबर्हसः द्वयोःस्थानयोः परिवृढस्य यस्येन्द्रस्य बृहन्महत् सहोबलं रोदसी द्यावापृथिव्यौ दाधार धारयति छान्दसोलिट् तुजादित्वादभ्यासदीर्घः तथा अज्रान् क्षिप्रगमनान् गिरीन्

पर्वतान् मेघान् वा स्वः सरणशीला अपउदकानिच वृषत्वना वीर्येण यस्येन्द्रस्य वलंधारयंति तत्रावस्थापयति तम्वभीति पूर्वया संबंधः सत्वमित्युत्तरया वा ॥ २ ॥

२. दोनों स्थानों में इन्द्र का पूजनीय महाबल द्यावापृथिवी को धारण करता है। वह शीघ्रगामी मेघ और गमनशील जल को वीर्य-द्वारा धारण करते हैं। अथ तृतीया—

सरांजसिपुरुष्टुतएकोवृत्राणिजिघ्नसे। इन्द्रजैत्राश्रवस्याचयन्तवे॥३॥

सः। राजसि। पुरुऽस्तुत। एकः। वृत्राणि। जिघ्नसे। इन्द्र। जैत्रा। श्रवस्या। च। यन्तवे ॥ ३ ॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र सपूर्वोक्तगुणस्त्वं राजसि दीप्यसे ईशिषे वा अपिच त्वमेकः सहायरहितः केवलएवसन् वृत्राण्यावरकाणि शत्रुजातानि जिघ्नसे हतवानसि। किमर्थं जैत्रा जैत्राणि जेतव्यानि धनानि श्रवस्या श्रवस्यानि श्रवणीयान्यन्नानि यद्वा श्रवणार्हाणि यशांसि च यंतवे यन्तुं नियन्तुं स्वाधीनं कर्तुम् ॥ ३ ॥

३. अनेकों के द्वारा स्तुत इन्द्र, तुम शोभा पाते हो। जीतने और सुनने योग्य धन को स्वाधीन करने के लिए तुम अकेले ही वृत्र आदि का वध करते हो।

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्रह्मशस्त्रे तंतेमदमिति तृचोवैकल्पिकःस्तोत्रियः सूत्र्यतेहि—तंतेमदंगृणीमसितम्वभिप्रगायतेति।

तत्राद्या सूक्ते चतुर्थी—

तंतेमदंगृणीमसिवृषणंपृत्सुसासहिम्। उलोककृत्नुमद्रिवोहरिश्रियम्॥४॥

तम्। ते। मदम्। गृणीमसि। वृषणम्। पृत्ऽसु। ससहिम्। ऊँ इति। लोकऽकृत्नुम्। अद्रिऽवः। हरिऽश्रियम् ॥ ४ ॥

हे अद्रिवोवज्रवन्निन्द्र ते त्वदीयं तं मदं सोमपानजनितं हर्षं गृणीमसि गृणीमः प्रशंसामः गृशब्दे क्र्यादिः प्वादीनांह्रस्वः इदंतोमसीति मसइकारागमः। कीदृशं वृषणं वर्षितारं कामानां पृत्सु संग्रामेषु सासहिं शत्रूणामभिभवितारं लोककृत्नुं लोकस्य स्थानस्य कर्तारं हरिश्रियं हरिभ्यामश्वाभ्यां श्रयणीयं सेव्यं उशब्दः समुच्चये पदपूरणे वा ॥ ४ ॥

४. वज्रधर इन्द्र, तुम्हारे हर्ष की हम प्रशंसा करते हैं। वह मनोरथ-पूरक, संग्राम में शत्रुओं के लिए अभिभव-कर्त्ता, स्थान विधाता और हरि नामक अश्वों के द्वारा सेवनीय है।

येन॒ज्योतींष्या॒यवे॒मन॑वेच॒वि॒वेदि॑थ ।
म॒न्दा॒नोअ॒स्यव॒र्हिषो॒विरा॑जसि ॥ ५ ॥ १७ ॥

येन॑ । ज्योतीं॑षि । आ॒यवे॑ । मन॑वे । च॒ । वि॒वेदि॑थ । म॒न्दा॒नः ।
अ॒स्य । ब॒र्हिषः॑ । वि । रा॒ज॒सि॒ ॥ ५ ॥ १७ ॥

हे इन्द्र येनात्मीयेन मदेन आयवे और्वशेयाय मनवे विवस्वतः पुत्राय च ज्योतींषि सूर्यादीनि वृत्रादिभिरावृतानि तद्धरणेन विवेदिथ अलंभयः प्रज्ञापितवान् प्रकाशितवानसीत्यर्थः तेन मदेन मन्दानोमोदमानस्त्वं अस्य बर्हिषा वृद्धस्य यज्ञस्य विराजसि विशेषेणेशिषे । यद्वा अस्येति तृतीयार्थेषष्ठी अनेन बर्हिषा वृद्धेन हृष्यन् विराजसि विशेषेण दीप्यसे ॥ ५ ॥

५. इन्द्र जिस मद (हर्ष) के द्वारा ("आयु" और "मनु" के लिए सूर्य आदि ज्योतियों को तुमने प्रकाशित किया था, उसी हर्ष से प्रसन्न होकर तुम प्रवृद्ध यज्ञ के कर्त्ता हुए हो।

॥ इति षष्ठस्य प्रथमे सप्तदशोवर्गः ॥ १७ ॥

तद॒द्याचि॑त्तउ॒क्थिनोनु॑ष्टुवन्ति॒पूर्व॑था । वृष॑पत्नीर॒पोज॑या॒दि॒वेदि॑वे ॥ ६ ॥

तत् । अ॒द्य । चि॒त् । ते॒ । उ॒क्थिनः॑ । अनु॑ । स्तु॒व॒न्ति॒ । पू॒र्व॒ऽथा॑ ।
वृष॑ऽपत्नीः । अ॒पः । ज॒य॒ । दि॒वेऽदि॑वे ॥ ६ ॥

हे इन्द्र ते त्वदीयं तत्प्रसिद्धं बलं अद्याचित् अद्यापि पूर्वथा पूर्वस्मिन्काले इव उक्थिनः शस्त्रिणः स्तोतारःअनुष्टुवन्ति क्रमेण प्रशंसन्ति सत्वं वृषपत्नीः वृषा वर्षिता पर्जन्यः पतिर्यासां तादृशीरपः दिवेदिवे प्रतिदिवसं जय स्वायत्तंकुरु ॥ ६ ॥

६. इन्द्र, प्राचीन समय के समान आज भी उक्थ मन्त्रों का उच्चारण करनेवाले तुम्हारे उस बल की प्रशंसा करते हैं। जिस जल के स्वामी पर्जन्य हैं, उसको तुम प्रतिदिन स्वाधीन करो।

तव॒त्यदि॑न्द्रि॒यंबृ॒हत्तव॒शुष्म॑मु॒तक्रतु॑म् । वज्रं॑शिशाति॒धि॒षणा॒वरे॑ण्यम् ॥ ७ ॥

तव॑ । त्यत् । इ॒न्द्रि॒यम् । बृ॒हत् । तव॑ । शुष्म॑म् । उ॒त । क्रतु॑म् ।
वज्र॑म् । शि॒शा॒ति॒ । धि॒षणा॑ । वरे॑ण्यम् ॥ ७ ॥

हे इन्द्र तव त्यत् तत्प्रसिद्धं इन्द्रियमिन्द्रस्यालिंगं बृहत्प्रभूतं वीर्यं धिषणा स्तुतिः शिशाति निश्यति तीक्ष्णीकरोति । तथा तव त्वदीयं शुष्मं शोषकं बलं उतापिच क्रतुं प्रज्ञानं बलं कर्म वा वरेण्यं वरणीयं वज्रमायुधंच स्तुतिः तीक्ष्णीकरोति ॥ ७ ॥

७. इन्द्र, स्तुति तुम्हारे उस महान् वीर्य को और तुम्हारा बल तुम्हारे कर्म और वरणीय वज्र को तीक्ष्ण करते हैं।

तव॒द्यौरि॑न्द्र॒पौंस्यं॑पृथि॒वीव॑र्धति॒श्रवः॑। त्वामापः॒पर्व॑तास॒श्च॑हिन्विरे ॥८॥

तव॑। द्यौः। इ॒न्द्र॒। पौंस्य॑म्। पृ॒थि॒वी। व॒र्ध॒ति॒।

श्रवः॑। त्वाम्। आपः॑। पर्व॑तासः। च॒। हि॒न्वि॒रे॒ ॥ ८ ॥

हे इन्द्र तव त्वदीयं पौंस्यं बलं द्यौः वर्धति वर्धयति त्वदीयं श्रवो यशः पृथिवी वर्धयति वृधेर्ण्यन्ताल्लटि शपि छन्दस्युभयथेत्यार्धधातुकत्वात् णेरनिटीतिणिलोपः तं त्वां आप उदकान्यन्तरिक्षाणि पर्वतासः पर्वताः पर्ववन्तोमेघाश्च गिरयश्चवा हिन्विरे प्रीणयन्ति स्वामित्वेन प्राप्नुवन्ति वा ॥ ८ ॥

८. इन्द्र, द्युलोक तुम्हारे बल को बढ़ाता है, पृथिवी तुम्हारे यश को वर्द्धित करती है। अन्तरिक्ष और मेघ तुम्हें प्रसन्न करते हैं।

त्वांविष्णु॑र्बृ॒हन्क्षयो॑मि॒त्रोगृ॑णाति॒वरु॑णः।

त्वांशर्धो॑मद॒त्यनु॒मारु॑तम् ॥ ९ ॥

त्वाम्। विष्णुः॑। बृ॒हन्। क्षयः॑। मि॒त्रः। गृ॒णा॒ति॒।

वरु॑णः। त्वाम्। शर्धः॑। म॒द॒ति॒। अनु॑। मारु॑तम् ॥ ९ ॥

हे इन्द्र बृहन्महान् क्षयोनिवासहेतुर्विष्णुर्मित्रोवरुणश्च त्वां गृणाति स्तौति तथा मारुतं मरुत्संबंधि शर्धोबलं त्वामनु मदति तव मदमनुलक्ष्य पश्चान्माद्यति त्वामनु मादयति वा ॥ ९॥

९. इन्द्र महान् और निवास-कारण विष्णु, मित्र और वरुण तुम्हारी स्तुति करते हैं। मरुद्गण तुम्हारी मत्तता के अनन्तर मत्त होते हैं।

त्वंवृ॒षा॒जना॑नां॒मंहि॑ष्ठइन्द्रजज्ञि॒षे।

स॒त्राविश्वा॑स्वप॒त्यानि॑दधिषे ॥ १० ॥ १८ ॥

त्वम्। वृषा॑। जना॑नाम्। मंहि॑ष्ठः। इ॒न्द्र॒। ज॒ज्ञि॒षे॒।

स॒त्रा। विश्वा॑। सु॒ऽअ॒प॒त्यानि॑। द॒धि॒षे॒ ॥ १० ॥ १८ ॥

हे इन्द्र वृषा वर्षिता त्वं जनानां देवजनानां मध्ये मंहिष्ठोदातृतमोजज्ञिषे प्रादुर्भवसि।अतएव विश्वा सर्वाणि स्वपत्यानि शोभनैः पुत्रादिभिः सहितानि सत्रा सह दधिषे। यद्वा स्तोतृतमोजज्ञिषे प्रादुर्भवसि अतएव विश्वा सर्वाणि दातुं धारयसि ददासि वा ॥ १० ॥

१०. तुम वर्षक और देवों में सर्वापेक्षा दाता हो। तुम सुन्दर पुत्रादि के साथ सारा धन धारण करते हो।

॥ इति षष्ठस्य प्रथमेष्टादशोवर्गः ॥ १८ ॥

अथैकादशी—

सत्रात्वंपुरुष्टुतँएकोवृत्राणितोशसे।
नान्यइन्द्रात्करणंभूयइन्वति॥ ११॥

सत्रा। त्वम्। पुरुऽस्तुत। एकः। वृत्राणि। तोशसे।
न। अन्यः। इन्द्रात्। करणम्। भूयः। इन्वति॥ ११॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र त्वमेकोसहायएवसन् सत्रा महन्नामैतत् महान्ति वृत्राणि शत्रुजातानि यद्वा सत्रेति सहार्थे सहैव युगपदेव एकयत्नेनैव तोशसे हिनस्सि तोशतिर्वधकर्मा अकर्तुं शक्तानीतिभावः। अपिचास्मादिन्द्रादन्यः कश्चिद्भूयोबहुतरं करणं कर्म वृत्रवधादिकं न इन्वति प्राप्नोति इन्द्रएव कर्तुं शक्नोतीतिभावः॥ ११॥

११. बहु-स्तुत इन्द्र तुम अकेले ही महान् शत्रुओं का विनाश करते हो। इन्द्र की अपेक्षा कोई भी अधिकतर कर्म (वृत्र-वधादि) नहीं कर सकता।

यदिन्द्रमन्मशस्त्वानानाहवन्तऊतये।
अस्माकेभिर्नृभिरत्रास्वर्जय॥ १२॥

यत्। इन्द्र। मन्मऽशः। त्वा। नाना। हवन्ते।
ऊतये। अस्माकेभिः। नृऽभिः। अत्र। स्वः। जय॥ १२॥

हे इन्द्र यद्यस्मिन् संग्रामे त्वा त्वां मन्मशः मन्मना मननीयेन स्तोत्रेण नाना बहुप्रकारं हवन्ते आह्वयन्ति। किमर्थं ऊतये रक्षायै। अत्रास्मिन् संग्रामे अस्माकेभिः अस्माकैरस्मदीयैरेव नृभिर्नेतृभिः स्तोतृभिः आहूतः सन् स्वः शत्रुबलं जयाभिभव॥ १२॥

१२. इन्द्र, जिस युद्ध में तुम रक्षा के लिए स्तोत्र-द्वारा नाना प्रकार से स्तुत होते हो, उसी युद्ध में हमारे स्तोताओं-द्वारा आहूत होकर शत्रु-बल को जीतो।

अथ त्रयोदशी—

अरंक्षयायनोमहेविश्वारूपाण्याविशन्।
इन्द्रंजैत्रायहर्षयाशचीपतिम्॥ १३॥ १९॥

अरम्। क्षयाय। नः। महे। विश्वा। रूपाणि।
आऽविशन्। इन्द्रम्। जैत्राय। हर्षय। शचीऽपतिम्॥ १३॥ १९॥

हे स्तोतः महे महते नोस्माकं क्षयाय गृहनामैतद् गृहाय तादर्थ्ये चतुर्थी गृहार्थं अरमलं पर्याप्तं विश्वा विश्वानि व्याप्तानि रूपाणि इन्द्रगतानि गुणजातानि आविशन् स्तुत्याव्याप्नुवन् शचीपतिं शचीतिकर्मनाम कर्मणां पालकं यद्वा शच्या इन्द्राण्याभर्तारं तमेवेन्द्रं जैत्राय जेतव्यधनार्थं हर्षय तोषय स्तुत्यापरिचरणेनवेति शेषः ॥ १३ ॥

१३. स्तोता, हमारे महान् गृह के लिए पर्याप्त और परिव्याप्त रूप (इन्द्रगुण-जात) को स्तुति-द्वारा व्याप्त करते हुए कर्म-पालक (शचीपति) इन्द्र की, जीतने योग्य धन के लिए, स्तुति करो।

॥ इति षष्ठस्य प्रथमे एकोनविंशोवर्गः ॥ १९ ॥

प्रसम्राजमिति द्वादशर्चं चतुर्थं सूक्तं इरिंबिठिनाम्नः काण्वस्यार्षं गायत्रमैन्द्रं अनुक्रम्यतेहि—प्रसम्राजं द्वादशेरिंबिठिरिति । अतिरात्रेद्वितीयेपर्यायेच्छावाकशस्त्रे एतत्सूक्तं सूत्रितंच—प्रसम्राजमुपक्रमस्वाभरेति। महाव्रतेपि निष्केवल्ये एतदादिकेद्वेसूक्ते उपरितनस्यान्त्यं द्वृचं वर्जयित्वा तथैवपंचमारण्यकेसूत्रितम्—प्रसम्राजंचर्षणीनामितिसूक्ते उत्तरस्योत्तमे उद्धरतीति ।

तत्र प्रथमा—

प्रसम्राजंचर्षणीनामिन्द्रंस्तोतानव्यंगीर्भिः ।
नरंनृषाहंमंहिष्ठम् ॥ १ ॥

प्र । सम्ऽराजम् । चर्षणीनाम् । इन्द्रम् । स्तोत ।
नव्यम् । गीःऽभिः । नरम् । नृऽसहम् । मंहिष्ठम् ॥ १ ॥

चर्षणीनां मनुष्याणां मध्ये सम्राजम् सम्यग्राजमानं यद्वा मनुष्याणामधीश्वरमिन्द्रं हे स्तोतारः प्रस्तोत प्रकर्षेणस्तुत । कीदृशं गीर्भिः स्तुतिभिर्नव्यं स्तुत्यं नरं नेतारं नृषाहं नृणां शत्रुमनुष्याणां अभिभवितारं मंहिष्ठं दातृतमं ॥ १ ॥

१. मनुष्यों के सम्राट् इन्द्र की स्तुति करो। इन्द्र स्तुति-द्वारा स्तुत्य, नेता, शत्रुओं के अभिभवकर्त्ता और सर्वापेक्षा दाता हैं।

अथ द्वितीया—

यस्मिन्नुक्थानिरण्यन्तिविश्वानिचश्रवस्या । अपामवोनसमुद्रे॥२॥

यस्मिन् । उक्थानि । रण्यन्ति । विश्वानि ।
च । श्रवस्या । अपाम् । अवः । न । समुद्रे ॥ २ ॥

यस्मिन्निन्द्रे उक्थानि शस्त्राणि रण्यंति रमंते विश्वानि सर्वाणि श्रवस्या श्रवस्यानि श्रवणीयानि हविर्लक्षणानि अन्नानिच रमन्ते तत्रदृष्टांतः—समुद्रे उदधौ अपामुदकानां अवोन अवति गच्छतीत्यवस्तरंगजालं तद्यथा समुद्रेन्तर्भवति तथारण्यन्तीत्यर्थः ॥ २ ॥

२. जैसे जल-तरङ्गें समुद्र में शोभा पाती हैं, वैसे ही उक्थ और सुननें योग्य हविष्मान् अन्न इन्द्र में शोभा पाते हैं।

तंसुंष्टुत्याविंवासेज्येष्ठराजंभरेंकृत्नुम् । महोवाजिनंसनिभ्यः ॥३॥

तम् । सुऽस्तुत्या । आ । विवासे । ज्येष्ठऽराजम् ।
भरे । कृत्नुम् । महः । वाजिनम् । सनिऽभ्यः ॥ ३ ॥

तमिन्द्रं सुष्टुत्या शोभनया स्तुत्या आविवासे परिचरामि कीदृशं ज्येष्ठराजं ज्येष्ठेषु प्रशस्यतमेषु देवेषु मध्ये राजमानम् राजतेः सत्सूद्विषेतिक्विप् भरे संग्रामे महोमहतः वृत्रवधादेः कृत्नुं कर्तारं वाजिनमन्नवंतं बलवन्तं वा । किमर्थं सनिभ्योधनेभ्यः धनलाभायेत्यर्थः ॥ ३ ॥

३. मैं शोभन स्तुति-द्वारा, धन-प्राप्ति के लिए, उन इन्द्र की सेवा करता हूँ। इन्द्र प्रशस्ततम देवों में शोभा पाते हैं। संग्राम में महान् कार्य करते हैं। वे बली हैं। अथ चतुर्थी—

यस्यानूंनागभीरामदाउरवस्तरुत्राः । हर्षुमन्तःशूरंसातौ ॥ ४ ॥

यस्य । अनूंनाः । गभीराः । मदाः । उरवः ।
तरुत्राः । हर्षुऽमन्तः । शूरंऽसातौ ॥ ४ ॥

यस्येन्द्रस्य मदाः सोमपानजनिताः अनूनाः अन्यूनाः गभीराः गांभीर्योपेताः उरवोविस्तीर्णाः तरुत्राः शत्रूणां तारकाः शूरसातौ शूरसंभजनीये संग्रामे हर्षुमन्तोहर्षयुक्ताः संग्रामोत्सुकाभवन्ति तमिन्द्रमिति पूर्वयोत्तरया वा संबंधः ॥ ४ ॥

४. इन्द्र का मद महान्, गम्भीर, विस्तीर्ण, शत्रु-तारक और शूरों के युद्ध में प्रसन्नता-युक्त है।

अथ पंचमी—

तमिद्धनेषुहितेष्वधिवाकायहवन्ते । येषामिन्द्रस्तेजयन्ति ॥ ५ ॥

तम् । इत् । धनेषु । हितेषु । अधिऽवाकाय ।
हवन्ते । येषाम् । इन्द्रः । ते । जयन्ति ॥ ५ ॥

धनेषु हितेषु शत्रुषु निहितेषु प्राप्तेषु सत्सु तमित् तं पूर्वोक्तगुणमेवेन्द्रं अधिवाकाय अधिवचनाय पक्षपातवचनाय हवन्ते स्तोतारआह्वयन्ति । तत्रच येषां पक्षे इन्द्रोवर्तते तएव जयन्ति। जयेन तानि धनानि लभंते नान्ये ॥ ५॥

५. धन-लाभ होने पर उन्हीं इन्द्र को, पक्षपात के लिए, स्तोता लोग बुलाते हैं। जिनके इन्द्र हैं, वह जय प्राप्त करते हैं।

तमिच्च्यौत्नैरार्यन्तितंकृतेभिश्चर्षणयः । एषइन्द्रोवरिवस्कृत् ॥६॥२०॥

तम् । इत् । च्यौत्नैः । आर्यन्ति । तम् । कृतेभिः ।
चर्षणयः । एषः । इन्द्रः । वरिवःऽकृत् ॥ ६ ॥ २० ॥

तमित् तमेवेन्द्रं च्यौत्नैर्बलकरैः स्तोत्रैः आर्यन्ति आर्यमभिज्ञं ईश्वरं कुर्वन्ति चर्षणयोमनुष्याः कृतेभिः कृतैः कर्मभिश्च आर्यन्ति एषएवंगुणकइन्द्रोवरिवस्कृत् धनस्य कर्ता भवति स्तोतॄणाम् ॥ ६ ॥

६. बलकर स्तोत्रों-द्वारा उन इन्द्र को ही ईश्वर बनाया जाता है। कर्म-द्वारा मनुष्य उन्हें ईश्वर बनाते हैं। इन्द्र ही धन के कर्त्ता होते हैं।

॥ इति षष्ठस्य प्रथमे विंशोवर्गः ॥२०॥

अथ सप्तमी—

इन्द्रोब्रह्मेन्द्रऋषिरिन्द्रःपुरूपुरुहूतः । महान्महीभिःशचीभिः॥७॥

इन्द्रः । ब्रह्मा । इन्द्रः । ऋषिः । इन्द्रः । पुरु ।
पुरुऽहूतः । महान् । महीभिः । शचीभिः ॥ ७ ॥

अयमिन्द्रोब्रह्मा परिवृढः सर्वेभ्योधिकः सएवेन्द्रऋषिर्द्रष्टा सर्वस्यार्थजातस्य सइन्द्रः पुरु बहुलं पुरुहूतोबहुभिराहूतश्च महीभिर्महतीभिः शचीभिः क्रियाभिः वृत्रवधादिरूपाभिः महान्प्रभूतो भवति ॥ ७॥

७. इन्द्र सबसे अधिक, ऋषि, बहुतों द्वारा आहूत हैं। वे महान् कार्यों (वृत्र-वधादि) के द्वारा महान् हैं।

अथाष्टमी—

सस्तोम्यःसहव्यःसत्यःसत्वातुविकूर्मिः । एकश्चित्सन्नभिभूतिः ॥ ८ ॥

सः । स्तोम्यः । सः । हव्यः । सत्यः । सत्वा ।
तुविऽकूर्मिः । एकः । चित् । सन् । अभिऽभूतिः ॥ ८ ॥

सपूर्वोक्तइन्द्रः स्तोम्यः स्तोमार्हः स्तुत्यर्हः सएव हव्योह्वातव्यश्च सत्यः सत्सुसाधुः अवितथस्वभावोसत्वा शत्रूणामवसादयिता तुविकूर्मिः बहुकर्मा यतएवातः कारणात् एकश्चित्सन् असहायोपिभवन् अभिभूतिः शत्रूणामभिभविता तिरस्कर्ता भवति ॥ ८॥

८. वे इन्द्र स्तोत्र और आह्वान के योग्य हैं। वे साधु, शत्रुओं को अवसाद देनेवाले, बहुकर्मा और एक होने पर भी शत्रुओं के अभिभविता हैं।

तमर्कैभिस्तंसामभिस्तंगायत्रैश्चर्षणयः। इन्द्रंवर्धन्तिक्षितयः॥९॥

तम्। अर्केभिः। तम्। सामऽभिः। तम्। गायत्रैः।
चर्षणयः। इन्द्रम्। वर्धन्ति। क्षितयः॥ ९॥

चर्षणयोद्रष्टारोमंत्राणां क्षितयोमनुष्यास्तमिन्द्रं अर्केभिरर्चनसाधनैर्यजूरूपैः मंत्रैर्वर्धन्ति वर्धयन्ति तथोद्गातारः सामभिर्गानविशिष्टैर्मंत्रैस्तंवर्धयन्ति तथा गायत्रैर्गायत्र्यादिछन्दोयुक्तैः शस्त्ररूपैरप्रगीतैर्मंत्रैः तमेवेन्द्रं होतारोवर्धयन्ति ॥ ९ ॥

९. द्रष्टा और मनुष्य इन्द्र को पूजा-साधक (यजुर्वेदीय) मन्त्रों-द्वारा वर्द्धित करते हैं, गेय (सामवेदीय) मन्त्रों-द्वारा वर्द्धित करते हैं और उक्थ वा गायत्री आदि छन्दों से युक्त शस्त्र-रूप (ऋग्वेदीय) मन्त्रों-द्वारा वर्द्धित करते हैं। अथ दशमी—

प्रणेतारंवस्योअच्छाकर्तारंज्योतिःसमत्सु। सासह्वांसंयुधामित्रान्॥१०॥

प्रऽनेतारम्। वस्यः। अच्छ। कर्तारम्। ज्योतिः।
समत्ऽसु। ससह्वांसम्। युधा। अमित्रान्॥१०॥

वस्योवसीयः प्रशस्तं वसु धनं अच्छाभिमुख्येन प्रणेतारं प्रापयितारं समत्सु संग्रामेषु शत्रुनिरसनेन ज्योतिःप्रकाशं जयलक्षणं कर्तारं करणशीलं करोतेःताच्छीलिकस्तृन्। कुतइत्यतआह युधा युद्धेन अमित्रान् शत्रून्ससह्वांसमभिभूतवंतं एवंगुणकमिन्द्रं वर्धयन्तीतिशेषः॥१०॥

१०. इन्द्र प्रशंसनीय धन के प्रापक, युद्ध में ज्योति के प्रकाशक और आयुध-द्वारा शत्रुओं के लिए अभिभवकर हैं।

सनःपप्रिःपारयातिस्वस्तिनावापुरुहूतः। इन्द्रोविश्वाअतिद्विषः॥११॥

सः। नः। पप्रिः। पारयाति। स्वस्ति। नावा।
पुरुऽहूतः। इन्द्रः। विश्वाः। अति। द्विषः॥ ११॥

पप्रिः प्राता पूरयिता पुरुहूतोबहुभिराहूतः सइन्द्रः विश्वाः सर्वाद्विषोद्वेष्ट्रीः प्रजाः नोस्मान् नावा तरणसाधनेन स्वस्ति क्षेमेण अतिपारयाति अतिपारयतु ॥ ११॥

११. इन्द्र पूरयिता और बहुतों द्वारा बुलाये गये हैं। इन्द्र हमें शत्रुओं से नौका-द्वारा निर्विघ्न पार लगावें।

अथ द्वादशी–

सत्वंनंइन्द्रवाजेभिर्दशस्याचंगातुयाचं।अच्छांचनःसुम्नंनेषि॥१२॥२१॥

सः। त्वम्। नः। इन्द्र। वाजेभिः। दशस्य।

च। गातुऽय। च। अच्छं। च। नः। सुम्नम्। नेषि॥ १२ ॥२१॥

हे इंद्र सताद्दशस्त्वं नोस्मभ्यं वाजेभिर्बलैः दशस्यच धनं प्रयच्छच। दशस्यतिर्दानकर्मा। गातुय च गातुं मार्गं अस्मभ्यमिच्छ च गातुशब्दात् छंदसिपरेच्छायामिति क्यच् नच्छन्दस्यपुत्रस्येति दीर्घनिषेधः। तथा नोस्मान्सुम्नं सुखं चाच्छ नेषि अभिप्रापय ॥ १२ ॥

**१२. इन्द्र, तुम हमें बल-द्वारा धन प्रदान करो। हमारे लिए मार्ग प्रदान करो। हमारे सम्मुख सुख प्रदान करो।**

॥ इति षष्ठस्य प्रथमे एकविंशोवर्गः ॥ २१ ॥

आयाहीति पंचदशर्चं पञ्चमं सूक्तम् इरिंबिठेरार्षमैन्द्रं चतुर्दशीबृहती पञ्चदशीसतोबृहती आदितस्त्रयोदशगायत्र्यः। अनुक्रम्यतेहि–आयाहिपंचोना प्रगाथांतमिति। अन्त्यंप्रगाथं वर्जयित्वा शिष्टस्य महाव्रतेउक्तोविनियोगः। ज्योतिष्टोमे प्रातःसवने ब्रह्मशस्त्रे आद्याःषळृचः स्तोत्रियानुरूपार्थाः तथानंतराः सप्तचैश्च शंसनीयाः सूत्र्यतेहि–आयाहिसुषुमाहितइतिषट् स्तोत्रियानुरूपावनन्तराःसप्तेति। चातुर्विंशिकेहनि प्रातःसवने आद्यस्तृचोस्मिन्नेवशस्त्रे षळहस्तोत्रियसंज्ञकआवापार्थः सूत्रितश्च–आयाहिसुषुमाहितइन्द्रमिद्गाथिनोबृहदिति।

तत्र प्रथमा–

आयाहिसुषुमाहितइन्द्रसोमंपिबाइमम्। एदंबर्हिःसंदोमम ॥ १॥

आ। याहि। सुसुम। हि। ते। इन्द्र। सोमम्।

पिब। इमम्। आ। इदम्। बर्हिः। सदः। मम ॥ १ ॥

हे इन्द्र त्वमायाह्यागच्छ ते त्वदर्थं सुषुमाहि अभिषुतवंतः खलु सोमं वयं। तमिममभिषुतं सोमं पिब। तदर्थं मम मदीयं इदं बर्हिर्वेद्यामास्तीर्णं आसदः आसीद अभिनिषीद ॥१॥

**१. इन्द्र, आओ। तुम्हारे लिए सोम अभिषुत हुआ है। इस सोम को पियो। मेरे इस कुश के ऊपर बैठो।**

अथ द्वितीया–

आत्वांब्रह्मयुजाहरीवहंतामिन्द्रकेशिना। उपब्रह्माणिनःशृणु॥२॥

आ। त्वा। ब्रह्मऽयुजा। हरी इति। वहताम्।

इन्द्र। केशिना। उप। ब्रह्माणि। नः। शृणु ॥ २ ॥

हे इन्द्र ब्रह्मयुजा ब्रह्मणा मंत्रेण युज्यमानौ केशिना केशिनौ केशवन्तौ हरी हरणशीलावश्वौ त्वा त्वां आवहतां अभिप्रापयताम्। त्वंचास्मद्यज्ञमुपेत्य नोस्माकं ब्रह्माणि-स्तोत्राणि शृणु स्तोत्राणि गृहाण सम्यक् चित्ते धारय ॥ २ ॥

२. इन्द्र, मन्त्रों-द्वारा योजित और केशवाले हरि नाम के अश्व तुम्हें ले आवें। तुम इस यज्ञ में आकर हमारे स्तोत्र को सुनो।

ब्रह्माणस्त्वावयंयुजासोमपामिन्द्रसोमिनः । सुतावन्तोहवामहे ॥३॥

ब्रह्माणः । त्वा । वयम् । युजा । सोमऽपाम् ।
इन्द्र । सोमिनः । सुतऽवन्तः । हवामहे ॥ ३ ॥

हे इन्द्र ब्रह्माणोब्राह्मणावयं त्वा त्वां युजा योग्येन स्तोत्रेण हवामहे आह्वयामहे। कथंभूतं सोमपां सोमस्य पातारं । कीदृशावयं सोमिनः सोमयुक्ताः सुतवन्तः अभिषुतैश्च सोमैरुपेताः ॥ ३ ॥

३. इन्द्र, हम स्तोता (ब्राह्मण) हैं। तुम्हें योग्य स्तोत्र-द्वारा बुलाते हैं। हम सोम से युक्त और अभिषुत सोमवाले हैं। हम सोमपाता इन्द्र को बुलाते हैं। अथ चतुर्थी—

आनोयाहिसुतावतोस्माकंसुष्टुतीरुप । पिबासुशिप्रिन्नन्धसः॥४॥

आ । नः । याहि । सुतऽवतः । अस्माकम् ।
सुऽस्तुतीः । उप । पिब । सु । शिप्रिन् । अन्धसः ॥ ४ ॥

हे इन्द्र सुतवतः अभिषुतसोमयुक्तान् नोस्मानायाह्यभिगच्छ ततोस्माकं संबंधीनि सुष्टुतीः शोभनानि स्तोत्राणि उपगच्छ जानीहि। हे सुशिप्रिन् शोभनशिरस्त्राण शोभनहनुकवेन्द्र अन्धसः अन्नस्य सोमलक्षणस्य स्वांशलक्षणं भागं पिब यद्वा कर्मणिषष्ठी अंधोस्मदीयं सोमं पिब ॥ ४ ॥

४. इन्द्र, हम अभिषुत सोमवाले हैं। हमारे सामने आओ। हमारी सुन्दर स्तुतियों को जानो। शोभन शिरस्त्राणवाले इन्द्र, अन्न (सोम) भक्षण या पान करो। अथ पञ्चमी—

आतेसिञ्चामिकुक्ष्योरनुगात्राविधावतु ।
गृभायजिह्वयामधु ॥ ५ ॥ २२ ॥

आ । ते । सिंचामि । कुक्ष्योः । अनु । गात्रा । वि । धावतु ।
गृभाय । जिह्वया । मधु ॥ ५ ॥ २२ ॥

हे इन्द्र ते तव कुक्ष्योरुदरयोः आसिञ्चामि सोमानवनयामि कुक्षी सोमेन पूरयामीत्यर्थः। इन्द्रस्यहि द्वे उदरे। तथाचश्रूयते—ओभाकुक्षीपृणता वार्त्रघ्नं च माघोनंचेति[1]। यद्वा एकस्यैवोदरस्य सव्यदक्षिणभेदेन ऊर्ध्वाधोभागभेदेनवा द्वित्वम् सचासिक्तः सोमः गात्रा गात्राणि शरीरावयवानि हस्तपादादीनि सर्वाण्यनुक्रमेण विधावतु व्याप्नोतु त्वञ्च मधु मधुरं मयासिच्यमानं सोमं जिह्वया रसनेन्द्रियेण गृभाय गृहाण। छन्दसि शायजपीति ग्रहउत्तरस्यश्नः शायजादेशः हृग्रहोर्भइति भत्वम्॥ ५॥

५. इन्द्र, तुम्हारे दाहिने और बायें उदर को मैं सोम पूरण करता हूँ। वह सोम तुम्हारे गात्रों को व्याप्त करें। मधुर सोम को जीभ से ग्रहण करो। ॥ इति षष्ठस्य प्रथमे द्वाविंशोवर्गः॥ २२॥

अथ षष्ठी—

स्वादुष्टेअस्तुसंसुदेमधुमान्तन्वे३तवं। सोमःशमस्तुतेहृदे॥ ६॥

स्वादुः। ते। अस्तु। सम्ऽसुदे। मधुऽमान्। तन्वे। तवं। सोमः। शम्। अस्तु। ते। हृदे॥ ६॥

संसुदे सम्यक् सुष्ठु दात्रे हे इन्द्र ते तुभ्यं मधुमान् माधुर्यवानयं सोमः स्वादुरस्तु रुचिकरोभवतु तव तन्वे शरीराय च स्वादुरस्तु। ते तव हृदे हृदयायच ससोमः शमस्तु सुखजनकं भवतु॥६॥

६. इन्द्र, सुन्दर दानवाले तुम्हारे शरीर के लिए यह माधुर्य से युक्त सोम स्वादिष्ठ हो। यह सोम तुम्हारे हृदय के लिए सुख-जनक हो।

अथ सप्तमी—

अयमुत्वाविचर्षणेजनीरिवाभिसंवृतः। प्रसोमइन्द्रसर्पतु॥ ७॥

अयम्। ऊँ इति। त्वा। विऽचर्षणे। जनीःऽइव। अभि। सम्ऽवृतः। प्र। सोमः। इन्द्र। सर्पतु॥ ७॥

हे विचर्षणे विद्रष्टरिन्द्र जनीरिव जनयोजायाइव तायथा शुक्लैर्वस्त्रैः संवृताभवन्ति एवं संवृतः पयःप्रभृतिभिः श्रयणद्रव्यैरावृतोयं सोमः अभिप्रसर्पतु अभिगच्छतु उइतिपूरकः॥ ७॥

७. विशेष द्रष्टा (लोकपति) इन्द्र, स्त्री के समान संवृत (ढका हुआ) होकर यह सोम तुम्हारे पास जाय।

अथाष्टमी—

तुविग्रीवोवपोदरःसुबाहुरन्धसोमदे। इन्द्रोवृत्राणिजिघ्नते॥ ८॥

तुविऽग्रीवः। वपाऽउदरः। सुऽबाहुः। अन्धसः। मदे। इन्द्रः। वृत्राणि। जिघ्नते॥ ८॥

---

[1] बृहदारण्यके।

तुविग्रीवः विस्तीर्णकंधरः वपोदरः पीवरोदरः यथा बहवः सोमाः पीता अन्तर्भवन्ति तथा विस्तृतउदरइत्यर्थः सुबाहुः शोभनबाहुः एवंगुणकइन्द्रः अंधसोन्नस्य सोमात्मकस्य मदे हर्षेसति वृत्राणि शत्रुजातानि जिघ्नते हिनस्ति ॥ ८ ॥

८. विस्तृत कन्धावाले, स्थूल उदरवाले और सुन्दर भुजावाले इन्द्र अन्न-रूप सोम की मत्तता होने पर वृत्र आदि शत्रुओं का विनाश करते हैं।

इन्द्रप्रेहिपुरस्त्वंविश्वस्येशानओजसा । वृत्राणिवृत्रहञ्जहि ॥ ९ ॥

इन्द्र । प्र । इहि । पुरः । त्वम् । विश्वस्य । ईशानः । ओजसा । वृत्राणि । वृत्रऽहन् । जहि ॥ ९ ॥

हे इन्द्र ओजसा बलेन विश्वस्य सर्वस्य जगतः ईशानः स्वामी भवन् त्वं पुरः अस्माकं पुरस्तात्प्रेहि प्रगच्छ प्रामुहि । हे वृत्रहन् वृत्राणामावरकाणां शत्रूणां हन्तः वृत्राणि अस्मदीयानि शत्रुजातानि जहि विनाशय ॥ ९ ॥

९. इन्द्र, बल के कारण तुम सारे संसार के स्वामी होकर हमारे आगे गमन करो। वृत्रघ्न इन्द्र, तुम शत्रुओं का वध करो।

अभ्युदयेष्टौ इन्द्रस्य प्रदातुः दीर्घस्तेअस्त्वंकुशइत्यनुवाक्या सूत्र्यतेहि—दीर्घस्तेअस्त्वंकुशो भद्रातेहस्तासुकृतोतपाणीइति ।

सैषा सूक्ते दशमी—

दीर्घस्तेअस्त्वंकुशोयेनावसुप्रयच्छसि । यजमानायसुन्वते ॥ १० ॥ २३ ॥

दीर्घः । ते । अस्तु । अंकुशः । येन । वसु । प्रऽयच्छसि । यजमानाय । सुन्वते ॥ १० ॥ २३ ॥

हे इन्द्र ते तव अंकुशः सृणिः आकर्षणसाधनमायुधं दीर्घोस्तु आयतोभवतु । यथा दूरस्थमपि वस्तुव्यामोति तथा आयामवान्भवत्वित्यर्थः येनांकुशेन सुन्वते सोमाभिषवं कुर्वते यजमानाय वसु धनमाहृत्य प्रयच्छसि ददासि ॥ १० ॥

१०. जिससे तुम सोम का अभिषव करनेवाले यजमान को धन देते हो, वह तुम्हारा अंकुश (आकर्षण करनेवाला आयुध) दीर्घ हो।

॥ इति षष्ठस्य प्रथमे त्रयोविंशोवर्गः ॥ २३ ॥

द्वितीयपर्याये होतुःशस्त्रे अयंतइन्द्रेति स्तोत्रियस्तृचः सूतिरंच—अयन्तइन्द्रसोमोयन्तेमानुषेजने इति ।

तत्राद्या सूक्ते एकादशी—

अयंतइन्द्रसोमोनिपूतोअधिबर्हिषि । एहीमस्यद्रवापिब ॥ ११॥

अयम् । ते । इन्द्र । सोमः । निऽपूतः । अधि । बर्हिषि । आ ।
इहि । ईम् । अस्य । द्रव । पिब ॥ ११ ॥

हे इन्द्र ते तुभ्यं त्वदर्थं अयं सोमोबर्हिष्यधि वेद्यामास्तीर्णे दर्भे निपूतः नितरांदशापवित्रेण शोधितः अभिषवादिसंस्कारैः संस्कृतइत्यर्थः । ईं इदानीं अस्य इमं सोमं प्रति एहि आगच्छ आगत्य यत्र रसात्मकः सोमोहूयते तं देशं प्रति द्रव शीघ्रंगच्छ तदनंतरं तं सोमं पिब ॥ ११॥

११. इन्द्र, तुम्हारे लिए यह सोम वेदी पर बिछे हुए कुश विशेष रूप से शोधित किया हुआ है। इस समय इस सोम के सम्मुख आओ। शीघ्र पास जाओ और पियो।

शाचिगोशाचिपूजनायंरणायतेसुतः । आखण्डलप्रहूयसे ॥१२॥

शाचिगो इति शाचिऽगो । शाचिऽपूजन । अयम् । रणाय । ते ।
सुतः । आखण्डल । प्र । हूयसे ॥ १२ ॥

हे शाचिगो शाचयः शक्तागावोयस्यासौ शाचिगुः । यद्वा शच व्यक्तायां वाचि अस्मादौणादिकइञ्प्रत्ययः शाचयोव्यक्ताः प्रख्याता गावोरश्मयोगावएववा यस्यतादृश । हे शाचिपूजन पूज्यतेऽनेनेति पूजनं स्तोत्रादि प्रख्यातपूजन ते तव रणाय रमणाय सुखजननाय अयं सोमः सुतोभिषुतः । यतः कारणात् हे आखंडल शत्रूणामाखंडयितः प्रहूयसे प्रकृष्टाभिः स्तुतिभिराहूयसे अतः आगत्य इमं सोमं पिबेति भावः ॥ १२ ॥

१२. शक्तिशाली गौओंवाले और प्रसिद्ध पूजावाले इन्द्र, तुम्हारे सुख के लिए सोम अभिषुत हुआ है। हे आखण्डल (शत्रु-खण्डयिता), उत्कृष्ट स्तुतियों के द्वारा तुम आहूत होते हो।

अथ त्रयोदशी—

यस्तेशृङ्गवृषोनपात्प्रणपात्कुण्डपाय्यः । न्यस्मिन्दध्रआमनः॥१३॥

यः । ते । शृङ्गऽवृषः । नपात् । प्रनपादिति प्रऽनपात् । कुण्डऽपाय्यः ।
नि । अस्मिन् । दध्रे । आ । मनः ॥ १३ ॥

हे शृंगवृषोनपात् शृंगवृषा नाम कश्चिदृषिः तस्यचेन्द्रः स्वयं पुत्रतयाजज्ञइत्याख्यायिका। नपादित्यपत्यनाम शृंगवृषःपुत्र। यद्वा शृणन्ति हिंसन्तीति शृंगाणि रश्मयः तैर्वर्षतीति शृंगवृडादित्यः तस्य नपातयितः स्वकीये स्थानेवस्थापयितः सुबामंत्रितइति षष्ठयंतस्य परांगवद्भावेनामन्त्रितानुप्रवेशाव् समुदायस्याष्टमिकं सर्वानुदात्तत्वम्। ईदृश हे इन्द्र ते तव संबंधी प्रणपात् प्रकर्षेण नपातयिता रक्षिता कुंडपाय्यः कुंडैः पीयते अस्मिन् सोमइति कुंडपाय्यः क्रतुविशेषः क्रतौ कुंडपाय्यसंचाय्याविति पिबतेरधिकरणे यत्प्रत्ययोयुगागमश्चनिपात्यते एतत्संज्ञोयः क्रतुरस्ति अस्मिन् कुंडपाय्ये क्रतौ मनः स्वान्तं आनिदध्रे अभितोवर्तमानाः कुंडपायिनामानऋषयः पुरा निदधिरे सम्यक् त्वद्देवत्यंक्रतुमनुष्ठितवन्तइत्यर्थः। दधातेर्लिटि इरयोरे इतिरेभावः॥१३॥

१३. हे शृङ्गवृषा नामक ऋषि के पुत्र इन्द्र, तुम्हारा जो उत्तम रक्षक कुण्डपायी यज्ञ (जिसमें कुण्ड में सोम पिया जाता है) है, उसमें ऋषियों ने मन लगाया है।

वास्तोष्पतेध्रुवास्थूणांसंत्रंसोम्यानाम्।
द्रप्सोभेत्तापुरांशश्वंतीनामिन्द्रोमुनीनांसखा॥ १४॥

वास्तोः। पते। ध्रुवा। स्थूणा। अंसत्रम्। सोम्यानाम्। द्रप्सः।
भेत्ता। पुराम्। शश्वंतीनाम्। इन्द्रः। मुनीनाम्। सखा॥ १४॥

हे वास्तोष्पते गृहपते स्थूणा गृहाधारभूतस्तंभः ध्रुवा स्थिरा भवतु सोम्यानां सोमार्हाणां सोमसंपादिनां वास्माकं अंसत्रं अंसत्राणंअंसोपलक्षितस्य कृत्स्नशरीरस्य त्रायकं रक्षकं बलं भवतु। अपिच द्रप्सः द्रवणशीलः सोमः तद्वान् अर्शआदित्वादच्प्रत्ययः शश्वतीनां बह्वीनां पुरामसुरपुरीणां भेत्ता विदारयिता एवंभूतइन्द्रोमुनीनामृषीणामस्माकं सखा मित्रभूतोभवतु॥१४॥

१४. गृहपति इन्द्र, गृहाधार स्तम्भ सुदृढ़ हो। हम सोम-सम्पादक हैं। हमारे कन्धे में रक्षा-समर्थ बल हो। क्षरण-शील सोमवाले और अनेक पुरियों को तोड़नेवाले इन्द्र ऋषियों के मित्र हों।

अथ पञ्चदशी—

पृदाकुसानुर्यजतोगवेषणएकःसन्नभिभूयसः।
भूर्णिमश्वंनयत्तुजापुरोगृभेन्द्रंसोमस्यपीतये॥१५॥२४॥

पृदाकुऽसानुः। यजतः। गोऽएषणः। एकः। सन्। अभि। भूयसः।
भूर्णिम्। अश्वम्। नयत्। तुजा। पुरः। गृभा। इन्द्रम्।
सोमस्य। पीतये॥ १५॥ २४॥

पृदाकुसानुः पृदाकुः सर्पः सइव सानुः समुच्छ्रितः तद्वदुन्नतशिरस्कइत्यर्थः। यद्वा पृदाकुवत्सानुः संभजनीयः सयथा बहुभिर्मणिमन्त्रौषधादिभिः संसेव्योनाल्पैः एवमिन्द्रोपि बहुभिःस्तोत्रादिभिः यत्नैः सेव्य इत्यर्थः । यजतोयष्टव्यः गवेषणोगवामेषयिता प्रापयिता एवंगुणकोयइन्द्रः एकः सन् असहायः केवलएवसन् भूयसोबहुतरान् शत्रून् अभिभवति। भूर्णिं भरणशीलं अश्वं व्याप्नुवन्तं तमिन्द्रं सोमस्य पीतये पानार्थं पुरः अस्माकं पुरस्तात् नयत् नयति प्रापयति। सामर्थ्यात् स्तोतेतिलभ्यते। केन साधनेन तुजा क्षिप्रगामिना गृभा ग्रहणसाधनेन स्तोत्रेण।यद्वा अश्वमिति लुप्तोपममेतत् यथा वोढारमश्वं दुर्ग्रहं पाशेनानयन्ति एवमुक्तेन प्रकारेण महानुभावमिन्द्रं स्तुत्या स्तोता आनयतीत्यर्थः ॥ १५ ॥

१५. सर्प के समान उच्च शिरवाले, याग-योग्य और गो-प्रापक इन्द्र अकेले होकर भी अनेक शत्रुओं को अभिभूत करते हैं। स्तोता मरण-शील और व्यापक इन्द्र को सोमपान के लिए हमारे सम्मुख ले आते हैं।

॥ इति षष्ठस्य प्रथमे चतुर्विंशोवर्गः ॥ २४ ॥

इदंहेति द्वाविंशर्चं षष्ठं सूक्तं इरिंबिठेरार्षं उष्णिक् छंदस्कं उत्तत्यैषा अश्विदेवताका शमग्निरित्येषाग्निसूर्यवायुदेवताका शिष्टाआदित्यदेवताकाः ।तथाचानुक्रम्यते—इदंहद्व्यधिकादित्यमौष्णिहमष्टम्यश्विभ्यांपराग्निसूर्यानिलानामिति । गतोविनियोगः ।

तत्र प्रथमा—

इ॒दं ह॑ नू॒नमे॑षां सु॒म्नं भि॑क्षेत॒ मर्त्यः॑ । आ॒दि॒त्याना॒मपू॑र्व्यं॒ सवी॑मनि ॥ १ ॥

इ॒दम् । ह॒ । नू॒नम् । ए॒षा॒म् । सु॒म्नम् । भि॒क्षे॒त॒ । मर्त्यः॑ ।
आ॒दि॒त्याना॑म् । अपू॑र्व्यम् । सवी॑मनि ॥ १ ॥

इदंह इदानीं खलु नूनमवश्यं आदित्यानां अदितेः पुत्राणामेषां देवादीनां मित्रादीनां सवीमनि प्रसवे प्रेरणेसति मर्त्योमनुष्यः स्तोता अपूर्व्यमभिनवं सुम्नं सुखकरं धनं भिक्षेत याचेत नकालांतरे॥ १॥

१. इस समय आदित्यों के निकट मनुष्य अपूर्व सुख की याचना करे।

अथ द्वितीया—

अ॒न॒र्वाणो॒ ह्ये॑षां॒ पन्था॑ आदि॒त्याना॑म् । अद॑ब्धाः॒ सन्ति॑ पा॒यवः॑ सुगे॒वृधः॑ ॥ २ ॥

अ॒न॒र्वाणः॑ । हि । ए॒षा॒म् । पन्था॑ः । आ॒दि॒त्याना॑म् । अद॑ब्धाः ।
सन्ति॑ । पा॒यवः॑ । सु॒गे॒ऽवृधः॑ ॥ २ ॥

एषां आदित्यानां पंथाः पन्थानोमार्गाः सुपांसुलुगिति जसःसुः अनर्वाणः अप्रत्यृताः परैरप्रतिगताः अतएव अदब्धाः अहिंसिताश्च सन्ति भवन्ति। हि यस्मादेवं तस्मात्पायवः पालयितारस्तेमार्गाः सुगेवृधः सुगमे सुखे विषयें वर्धका भवन्तु ॥ २ ॥

२. इन आदित्यों के मार्ग दूसरों के द्वारा नहीं गमन किये गये और अहिंसित हैं। फलतः वे पालक मार्ग सुख-वर्द्धक हैं।

तत्सुनःसविताभगोवरुणोमित्रोअर्यमा।
शर्मयच्छन्तुसप्रथोयदीमहे ॥ ३ ॥

तत्। सु। नः। सविता। भगः। वरुणः। मित्रः। अर्यमा। शर्म। यच्छन्तु। सऽप्रथः। यत्। ईमहे ॥ ३ ॥

सवित्रादयश्चत्वारोदेवाः सप्रथः सर्वतः पृथु विस्तीर्णं तच्छर्म सुखं गृहं वा नोस्मभ्यं सुसुष्ठु यच्छंतु ददतु। यच्छर्म ईमहे वयं याचामहे ॥ ३ ॥

३. हम जिस विस्तीर्ण सुख की याचना करते हैं, उसी सुख को सविता, भग, मित्र, वरुण और अर्यमा हमें प्रदान करो।

अथ चतुर्थी—

देवेभिर्देव्यदितेरिष्टभर्मन्नागहि। स्मत्सूरिभिःपुरुप्रियेसुशर्मभिः॥४॥

देवेभिः। देवि। अदिते। अरिष्टऽभर्मन्। आ। गहि। स्मत्। सूरिऽभिः। पुरुऽप्रिये। सुशर्मऽभिः ॥ ४ ॥

हे देवि दानादिगुणयुक्ते हे अरिष्टभर्मन् अहिंसितभरणे हे पुरुप्रिये बहुभिः प्रीयमाणे हे एवंगुणविशिष्टे अदिते सूरिभिः प्राज्ञैः सुशर्मभिः सुसुखैः देवेभिःदेवैः आत्मीयैः पुत्रैः सार्धं स्मदितिनिपातः शोभनार्थः स्मत् शोभनं यथा भवति तथा आगहि आगच्छ ॥ ४ ॥

४. देवो, अहिंसित-पोषक और बहुतों द्वारा प्रीयमाणा अदिति, प्राज्ञ और सुखदाता देवों के साथ सुन्दर रूप से आगमन करो।

अथ पञ्चमी—

तेहिपुत्रासोअदितेर्विदुर्द्वेषांसियोतवे।
अंहोश्चिदुरुचक्रयोनेहसः ॥ ५ ॥ २५ ॥

ते। हि। पुत्रासः। अदितेः। विदुः। द्वेषांसि। योतवे। अंहोः। चित्। उरुऽचक्रयः। अनेहसः। ५ ॥ २५ ॥

अदितेः पुत्रासः पुत्राः तेहि ते खलु मित्रादयोदेवाः द्वेषांसि द्वेष्टृणि राक्षसादीनि योतवे पृथक्कर्तुं विदुः जानन्ति विदोलटोवेति विदउत्तरस्यझेरुसादेशः । तथा उरुचक्रयः विस्तीर्णस्य कमर्णः कर्तारोनेहसः अनाहंतारो रक्षकास्ते अंहोश्चिद् आहननशीलात्पापादपि योतवे पृथक्कर्तुमस्मान् जानन्ति ॥ ५॥

५. अदिति के वे मित्रादि पुत्रगण द्वेषियों को पृथक् करना जानते हैं। विस्तीर्ण कर्म-कर्त्ता और रक्षक लोग हमें पाप से अलग करना जानते हैं।

॥ इति षष्ठस्य प्रथमे पञ्चविंशोवर्गः ॥ २५ ॥

अथ षष्ठी—

अदितिर्नोदिवापशुमदितिर्नक्तमद्वयाः ।
अदितिःपात्वंहसःसदावृधा ॥ ६ ॥

अदितिः । नः । दिवा । पशुम् । अदितिः । नक्तम् । अद्वयाः ।
अदितिः । पातु । अंहसः । सदाऽवृधा ॥ ६ ॥

नोस्माकं पशुं अदितिरदीना अखंडनीयावा देवमाता दिवा अहनि पातु रक्षतु । तथा अद्वयाः बाह्याभ्यंतरभेदेन प्रकारद्वयरहिताः सर्वदैकप्रकारा कपटरहिता सा अदितिः नक्तं रात्रौ च अस्मदीयं गवादिपशुजातं रक्षतु तथास्मानपि अंहसः पापात् पातु रक्षतु । केनसाधनेन सदावृधा सर्वदा वृद्धिमतात्मीयेन रक्षणेन ॥ ६ ॥

६. दिन में हमारे पशुओं की रक्षा अदिति (अखण्डनीया देवमाता) करें, सदा एक-सी रहनेवाली अदिति रात्रि में भी हमारे पशुओं की रक्षा करें। सदा वर्द्धनशील रक्षण-द्वारा हमें पाप से बचावें।

उतस्यानोदिवामतिरदितिरूत्यागमत् ।
साशन्तातिमयस्करदपस्रिधः ॥ ७ ॥

उत । स्या । नः । दिवा । मतिः । अदितिः । ऊत्या । आ । गमत् ।
सा । शम्ऽताति । मयः । करत् । अप । स्रिधः ॥ ७ ॥

उतापिच स्या सा पूर्वोक्तामतिर्मंत्री मंतव्या स्तोतव्या वा अदितिरूत्या रक्षयासार्धं दिवा अहनि नोस्मानागमत् आगच्छतु आगत्य च शंताति शांतिकरं मयः सुखं साऽदितिः करत् करोतु । स्रिधोबाधकान् शत्रूंश्चापगमयतु स्रिधिर्बाधनार्थः शिव शमरिष्टस्यकरइति शंशब्दात्करणेर्थे तातिलूप्रत्ययः ॥ ७ ॥

७. स्तुतियोग्य वे अदिति रक्षा के साथ दिन में हमारे पास आवें। वे शान्तिदाता सुख दें। वे बाधकों को दूर करें।

अथाष्टमी—

उतत्यादैव्याभिषजाशंनःकरतोअश्विना ।
युयुयातामितोरपोअपस्रिधः ॥ ८ ॥

उत । त्या । दैव्या । भिषजा । शम् । नः । करतः । अश्विना ।
युयुयाताम् । इतः । रपः । अप । स्रिधः ॥ ८ ॥

उतापिच त्या तौ प्रसिद्धौ दैव्या देवेषुभवौ भिषजा चिकित्सकौ ईदृशावश्विना अश्विनौ नोस्माकं शं सुखं रोगाणां शमनं वा करतः कुरुताम्। इतोस्मत्तः रपः पापं युयुयातां पृथक्कुर्यातां स्रिधः शत्रूंश्चापगमयताम् ॥ ८ ॥

८. प्रख्यात देव-भिषक् अश्विनीकुमार हमें सुख दें। हमसे पाप को हटावें। शत्रुओं को दूर करें।

अथ नवमी—

शमग्निरग्निभिःकरच्छंनस्तपतुसूर्यः ।
शंवातोवात्वरपाअपस्रिधः ॥ ९ ॥

शम् । अग्निः । अग्निऽभिः । करत् । शम् । नः । तपतु । सूर्यः ।
शम् । वातः । वातु । अरपाः । अप । स्रिधः ॥ ९ ॥

अग्निभिः स्वविभूत्या विभिन्नैर्गार्हपत्यादिभिः अग्निर्देवः शं करत् अस्माकं रोगशांतिं सुखंवा करोतु । सूर्यः सर्वस्य प्रेरकआदित्यश्च नोस्माकं शंसुखं यथाभवति तथा तपतु प्रदीप्यताम्। वातोवायुश्च अरपाः अपापः सन् शं यथा भवति तथा वातु अनुवर्तताम् । स्रिधः शत्रूंश्च एतेग्न्यादयः अपगमयन्तु ॥ ९ ॥

९. नाना गार्हपत्य आदि अग्नियों के द्वारा अग्निदेव हमारे रोग की शान्ति करें। सुखदाता होकर सूर्य तपें। पाप-ताप-शून्य होकर वायु बहें। शत्रुओं को दूर करें।

अथ दशमी—

अपामीवामपस्रिधमपसेधतदुर्मतिम् ।
आदित्यासोयुयोतनानोअंहसः ॥ १० ॥ २६ ॥

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत ।
दुःऽमतिम् । आदित्यासः । युयोतन । नः । अंहसः ॥ १० ॥ २६ ॥

हे आदित्याः अमीवां रोगं अपसेधत अस्मत्तोपगमयत स्निधं चापसेधकं शत्रुं चापसेधत दुर्मतिं अस्माकं दुःखस्य मंतारं चापसेधत। अपिच हे आदित्यासः आदित्याः नोस्मानंहसः पापात् युयोतन पृथक्कुरुत। यौतेर्लोटि छान्दसः शपःश्लुः तप्तनप्तनथनाश्चेति तस्यतनबादेशः पित्वादनुदात्तत्वे धातुस्वरः शिष्यते आमन्त्रितं पूर्वमविद्यमानवदिति पूर्वस्यामंत्रितस्याविद्यमानत्वेन पदादपरत्वान्निघातोनभवति ॥ १० ॥

१०. आदित्यगण, हमसे रोग को दूर करो। शत्रुओं को भी दूर करो। दुर्गति को दूर करो। आदित्यगण हमें पापों से दूर रख।

॥ इति षष्ठस्य प्रथमे षड्विंशोवर्गः ॥ २६ ॥

अथैकादशी—

युयोता शरुमस्मदाँ आदित्यास उतामतिम्।
ऋधग्द्वेषः कृणुत विश्ववेदसः ॥ ११ ॥

युयोत। शरुम्। अस्मत्। आ। आदित्यासः।
उत। अमतिम्। ऋधक्। द्वेषः। कृणुत। विश्वऽवेदसः ॥ ११ ॥

हे आदित्यासः आदित्याः शरुं हिंसकं अस्मदा अस्मत्तश्च युयोत पृथक्कुरुत। उतापिच अमतिं दुर्बुद्धिंच पृथक्कुरुत हे विश्ववेदसः सर्वधनाः सर्वज्ञावा द्वेषोद्वेष्टृन् शत्रून् ऋधक् पृथक्कृणुत कुरुत अस्मत्तोवियोजयत ॥ ११ ॥

११. आदित्यो, हमसे हिंसक को अलग करो। दुर्बुद्धि को हमसे दूर करो। सर्वज्ञ आदित्यो, शत्रुओं को हमसे पृथक् करो।

तत्सु नः शर्म यच्छतादित्या यन्मुमोचति।
एनस्वन्तं चिदेनसः सुदानवः ॥ १२ ॥

तत्। सु। नः। शर्म। यच्छत। आदित्याः। यत्।
मुमोचति। एनस्वन्तम्। चित्। एनसः। सुऽदानवः ॥ १२ ॥

हे आदित्याः तच्छर्म सुखं नोस्मभ्यं सु सुष्ठु यच्छत दत्त। हे सुदानवः शोभनदानाः युष्मदीयं यच्छर्म एनस्वंतं चित् पापिनमपि स्तोतारं एनसः पापात् मुमोचति मोचयति तद्यच्छतेत्यन्वयः ॥ १२ ॥

१२. शोभन-दान आदित्यो, तुम लोगों का जो सुख पापी स्तोता को भी पाप से मुक्त करता है, उसे ही हमें दो।

अथ त्रयोदशी–

योनःकश्चिद्रिरिक्षतिरक्षस्त्वेनमर्त्यः।
स्वैःपएवैरिरिषीष्टयुर्जनः॥ १३॥

यः। नः। कः। चित्। रिरिक्षति। रक्षःऽत्वेन। मर्त्यः।
स्वैः। सः। एवैः। रिरिषीष्ट। युः। जनः॥ १३॥

यः कश्चिन्मर्त्योमनुष्यो नोस्मान्रक्षस्त्वेन रक्षोभावेन पिशाचाद्यात्मना रिरिक्षति जिहिंसिषति रिषहिंसायामितिधातुः समनुष्यः स्वैरेवैरात्मीयैरेव चेष्टितैः रिरिषीष्ट हिंसितोभूयात्। सजनोयुः याता अपगमनशीलश्च भवतु। यद्वा सजनः स्वैरेव गमनैः युःदुःखं गच्छन् हिंसितोभवतु॥१३॥

१३. जो कोई मनुष्य हमें राक्षस-भाव से मारना चाहता है, वह अपने ही कार्यों से हिंसित हो जाय। वह मनुष्य दूर हो।

अथ चतुर्दशी–

समित्तमघमश्नवद्दुःशंसंमर्त्यंरिपुम्।
योअस्मत्रादुर्हणावाँउपद्वयुः॥ १४॥

सम्। इत्। तम्। अघम्। अश्नवत्। दुःऽशंसम्।
मर्त्यम्। रिपुम्। यः। अस्मऽत्रा। दुःऽहनावान्। उप। द्वयुः॥१४॥

दुःशंसं दुष्कीर्तिं रिपुं शत्रुं तं मर्त्यं मनुष्यं इत् एवमघं पापं समश्नवत् सम्यग्व्याप्नोतु। योमर्त्यः अस्मत्रा अस्मासु अस्मद्विषये दुर्हणावान् दुष्टहननवानुपजायते द्वयुः द्वाभ्यां मकाराभ्यां युक्तश्च भवति। अयमर्थः–प्रत्यक्षकृतोहितं वदति परोक्षकृतस्त्वहितं तादृशः कपटोद्वयुरित्युच्यते यश्चास्मद्विषये कपटोभवति तमपि पापं व्याप्नोत्विति॥ १४॥

१४. जो दुष्कीर्त्ति मनुष्य हमें मारनेवाला और कपटी है, उसे पाप व्याप्त करे।

अथ पञ्चदशी–

पाकत्रास्थनदेवाहृत्सुजानीथमर्त्यम्।
उपद्वयुंचाद्वयुंचवसवः॥ १५॥ २७॥

पाकऽत्रा। स्थन। देवाः। हृत्ऽसु। जानीथ। मर्त्यम्।
उप। द्वयुम्। च। अद्वयुम्। च। वसवः॥ १५॥ २७॥

हे देवा दानादिगुणयुक्ता आदित्यायूयं पाकत्रा पाकेषु विपक्कप्रज्ञेषु स्तोतृषु स्थन भवथ। यद्वा प्रथमार्थेत्राप्रत्ययः पाकत्राः पाकाः परिपक्कज्ञानाः भवथ। यतएवं अतः कारणात् हृत्सु आत्मीयेषु हृदयेषु द्वयुं द्विप्रकारयुक्तं कपटिनं च अद्वयुं च तद्विलक्षणं कापट्यरहितं च मर्त्यं मनुष्यं उपेत्य हे वसवोवासका जानीथ अवगच्छथ ॥ १५ ॥

१५. निवास-दाता आदित्यो, तुम परिपक्व-ज्ञान हो; इसलिए कपटी और अकपटी—दोनों प्रकार के मनुष्यों को तुम जानते हो।

॥ इति षष्ठस्य प्रथमे सप्तविंशोवर्गः ॥ २७ ॥

अथ षोडशी–

आशर्मपर्वतानामोतापांवृणीमहे।
द्यावाक्षामारेअस्मद्रपस्कृतम् ॥ १६ ॥

आ। शर्म। पर्वतानाम्। आ। उत। अपाम्। वृणीमहे॥
द्यावाक्षामा। आरे। अस्मत्। रपः। कृतम् ॥ १६ ॥

पर्वतानां मेघानां गिरीणां वा संबंधि शर्म सुखं वयं आवृणीमहे आभिमुख्येन संभजामहे। उतापिच अपामुदकानां च हे द्यावाक्षामा द्यावापृथिव्यौ अस्मदारे अस्मत्तोविप्रकृष्टेदेशे रपः पापं कृतं कुरुतं अस्मत्तोवियोजयतमित्यर्थः ॥ १६ ॥

१६. हम पर्वतीय और जलीय सुख का भजन करते हैं। द्यावापृथिवी, पाप को हमसे दूर देश में प्रेरित करो।

तेनोभद्रेणशर्मणायुष्माकंनावावसवः।
अतिविश्वानिदुरितापिपर्तन ॥ १७ ॥

ते। नः। भद्रेण। शर्मणा। युष्माकम्। नावा। वसवः।
अति। विश्वानि। दुःऽइता। पिपर्तन ॥ १७ ॥

हे वसवोवासयितारआदित्याः तेपूर्वोक्तगुणा यूयं भद्रेण शोभनेन शर्मणा सुखेन युष्माकं नावा नोस्मान् विश्वानि सर्वाणि दुरिता दुर्गमनानि अति पिपर्तन पिपृत अतिपारयत ॥ १७ ॥

१७. वास-दाता आदित्यो, अपनी सुन्दर और सुखद नौका में हमें सारे पापों से पार कराओ।

अथाष्टादशी–

तुचेतनायतत्सुनोद्राघीयआयुर्जीवसे।
आदित्यासःसुमहसःकृणोतन ॥ १८ ॥

तुचे । तनाय । तत् । सु । नः । द्राघीयः । आयुः ।
जीवसे । आदित्यासः । सुऽमहसः । कृणोतन ॥ १८ ॥

हे आदित्यासः अदितेःपुत्राः सुमहसः शोभनतेजस्काः नोस्माकं तुचे पुत्राय तनाय तनयाय पौत्राय च जीवसे जीवनाय द्राघीयोदीर्घतमं तत्प्रसिद्धमायुः जीवितं सु सुष्ठु कृणोतन कुरुत ॥ १८ ॥

१८. आदित्यो, तुम शोभन तेजवाले हो। हमारे पुत्र, पौत्र और जीवन के लिए दीर्घतम (खूब लम्बी) आयु दो।

यज्ञोहीळोवोअन्तरआदित्याअस्तिमृळत ।
युष्मेइद्वोअपिष्मसिसजात्ये ॥ १९ ॥

यज्ञः । हीळः । वः । अन्तरः । आदित्याः । अस्ति । मृळत ।
युष्मे इति । इत् । वः । अपि । स्मसि । सऽजात्ये ॥ १९ ॥

हे आदित्याः हीळः हीडिर्गत्यर्थः गंतव्यः प्राप्तव्योस्माभिः अनुष्ठितोयज्ञोवोयुष्माकमंतरोस्ति अंतिकेवर्तमानोभवति । अतोस्मान्मृळत सुखयत वोयुष्माकं सजात्ये सजातत्वे ज्ञातित्वे बान्धवे वर्तमानावयं युष्मेइत् युष्मास्वेव अपि स्मसि सर्वदा भवामोपि इदंतोमसिः ॥ १९ ॥

१९. आदित्यो, हमारा किया हुआ यज्ञ तुम्हारे पास ही वर्त्तमान है। तुम हमें सुखी करो। तुम्हारा बंधुत्व प्राप्त करके हम सदा तुम्हारे ही रहेंगे।

अथ विंशी—

बृहद्वरूथंमरुतांदेवंत्रातारमश्विना ।
मित्रमीमहेवरुणंस्वस्तये ॥ २० ॥

बृहत् । वरूथम् । मरुताम् । देवम् । त्रातारम् ।
अश्विना । मित्रम् । ईमहे । वरुणम् । स्वस्तये ॥ २० ॥

मरुतां देवानां स्वामिनां त्रातारं पालयितारं देवमिन्द्रं अश्विना अश्विनौ च मित्रं वरुणं च बृहत्प्रौढं वरूथं शीतातपादिनिवारकं गृहं स्वस्तये अविनाशाय ईमहे याचामहे ॥ २० ॥

२०. मरुतों के पालक इन्द्र, अश्विद्वय, मित्र और वरुणदेव के निकट प्रौढ़ और शीत, आतप आदि के निवारक गृह को मङ्गल के लिए, हम माँगते हैं।

अथैकविंशी—

अनेहोमित्रार्यमन्नृवद्वरुणशंस्यम् ।
त्रिवरूथंमरुतोयन्तनश्छर्दिः ॥ २१ ॥

अनेहः । मित्र । अर्यमन् । नृऽवत् । वरुण । शंस्यम् ।
त्रिऽवरूथम् । मरुतः । यन्त । नः । छर्दिः ॥ २१ ॥

हे मित्र हे अर्यमन् हेवरुण हे मरुतः ते सर्वे यूयं अनेहः अहिंसितं नृवत् नृभिः पुत्रादिभिरुपेतं शंस्यं स्तुत्यं त्रिवरूथं त्रयाणां शीतातपवर्षाणां निवारकं यद्वा त्रिभूमिकं छर्दिर्गृहं नः अस्मभ्यं यन्त यच्छत दत्तेत्यर्थः ॥ २१ ॥

२१. मित्र, अर्यमा, वरुण और मरुद्गण, तुम लोग हिंसा-शून्य, पुत्रादि-युक्त और स्तुत्य हो। शीत, आतप और वर्षा से निवारण करनेवाला घर हमें दो।

अथ द्वाविंशी—

येचिद्धिमृत्युबंन्धवआदित्यामनंवःस्मसि ।
प्रसूनआयुंर्जीवसेंतिरेतन ॥ २२ ॥ २८ ॥

ये । चित् । हि । मृत्युऽबंन्धवः । आदित्याः । मनंवः ।
स्मसिं । प्र । सु । नः । आयुः । जीवसें । तिरेतन ॥ २२ ॥ २८ ॥

हे आदित्याः येचित् येच वयं मनवोमनुष्याः हि यस्मात् मृत्युबन्धवः स्मसि मृत्योर्यमस्यबन्धुभूताः प्रत्यासन्नमरणाभवामः। अतोहेतोः तेषां नोस्माकं जीवसे जीवनाय चिरकालावस्थानाय आयुर्जीवितं सुप्रतिरेतन शोभनं प्रवर्धयत ॥ २२ ॥

२२. आदित्यो, जो मनुष्य मरणासन्न अथवा मृत्यु के बन्धु हैं, उनके जीने के लिए उनकी आयु को बढ़ाओ।

॥ इति षष्ठस्य प्रथमेष्टाविंशोवर्गः ॥ २८ ॥

तंगूर्धयेति सप्तत्रिंशदृचं सप्तमं सूक्तं काण्वस्य सोभरेरार्षं प्रथमतृतीयाद्ययुजः ककुभः द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः पितुर्नपुत्र एषा सप्तविंशी द्विपदा विंशत्यक्षराविराट् यमादित्यासइत्येषा चतुस्त्रिंशीउष्णिक् यूयंराजानएषा पंचत्रिंशी सतोबृहती अदान्मइत्येषा ककुप् उतमइत्येषा सप्तत्रिंशीपंक्तिः षट्त्रिंशी सप्तत्रिंशीच त्रसदस्युनाम्नोराज्ञोदानस्तुतिरूपत्वात्तद्देवताके चतुस्त्रिंशीपंचत्रिंश्यौ आदित्यदेवताके शिष्टाआग्नेय्यः। तथाचानुक्रान्तम्—तंगूर्धयसप्तत्रिंशत्सोभरिराग्नेयं काकुभं प्रागाथंह पितुर्नद्विपदा अंत्येककुप्पंक्ती त्रसदस्योर्दानस्तुतिस्तत्पूर्वे उष्णिक्सतोबृहत्यावादित्येभ्यइति । गतः सूक्तविनियोगः।

तत्र प्रथमा—

तंगूर्धयास्वंर्णरंदेवासोदेवमंरतिंदंधन्विरे । देवत्राहव्यमोहिरे ॥ १ ॥

तम् । गूर्धय । स्वःऽनरम् । देवासः । देवम् । अरतिम् ।
दधन्विरे । देवऽत्रा । हव्यम् । आ । ऊहिरे ॥ १ ॥

हे स्तोतः तं प्रसिद्धमग्निं गूर्धय स्तुहि गूर्धयतिःस्तुतिकर्मा कीदृशं स्वर्णरं सर्वस्य नेतारं सर्वैर्यजमानैः कर्मादौ नीतं वा अथवा स्वर्गं प्रति हविषां नेतारं देवासः दीव्यन्ति स्तुवन्तीति देवाः ऋत्विजः देवं दानादिगुणयुक्तं अरतिम् अर्यं स्वामिनम्। यद्वा अभिप्राप्तव्यं दधन्विरे धन्वन्ति गच्छंति स्तुत्यादिभिः प्राप्नुवन्ति । धविर्गत्यर्थः । प्राप्य च तेनाग्निना देवत्रा देवान् देवमनुष्येत्यादिना द्वितीयार्थे त्रा प्रत्ययः हव्यं चरुपुरोडाशादिलक्षणं हविः आऊहिरे अभिप्रापयन्ति वहेर्यजादित्वात्सम्प्रसारणम् ॥ १ ॥

१. स्तोता, प्रख्यात अग्नि की स्तुति करो। अग्नि स्वर्ग में हवि ले जानेवाले हैं। ऋत्विक् लोग स्वामी अग्निदेव के पास जाते हैं और देवों को पुरोडाशादि देते हैं।

विभूतरातिंविप्रचित्रशोचिषमग्निमीळिष्वयन्तुरम् ।
अस्यमेधस्यसोम्यस्यसोभरेप्रेमध्वरायपूर्व्यम् ॥ २ ॥

विभूतऽरातिम् । विप्र । चित्रऽशोचिषम् । अग्निम् ।
ईळिष्व । यन्तुरम् । अस्य । मेधस्य ।
सोम्यस्य । सोभरे । प्र । ईम् । अध्वराय । पूर्व्यम् ॥ २ ॥

ऋषिरात्मानं संबोध्य स्तुतौ प्रेरयति।हे विप्र मेधाविन् सोभरे एतत्संज्ञऋषे अध्वराय यागाय ईमिममग्निं प्रईळिष्व प्रस्तुहि ।कीदृशं विभूतरातिं व्याप्तधनं प्रभूतदानं वा चित्रशोचिषं चायनीयतेजस्कं विचित्रदीप्तिकं वा सोम्यस्य सोमसाध्यस्य अस्य मेधस्य यज्ञस्य यंतुरं नियंतारं पूर्व्यं चिरन्तनम् ॥ २ ॥

२. मेधावी सोभरि, प्रभूत दानी, विचित्र-तेजस्वी, सोम साध्य, इस यज्ञ के नियन्ता और पुरातन अग्नि की, यज्ञ करने के लिए, स्तुति करो।

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुःशस्त्रे यजिष्ठंत्वेत्यादिकौ प्रगाथौ वैकल्पिकौ स्तोत्रियानुरूपौ सूत्रितश्च—यजिष्ठंत्वाववृमहेयःसमिधायआहुतीति ।

तत्राद्या सूक्ते तृतीया—

यजिष्ठंत्वाववृमहेदेवंदेवत्राहोतारममर्त्यम्। अस्ययज्ञस्यसुक्रतुम्॥३॥

यजिष्ठम् । त्वा । ववृमहे । देवम् । देवऽत्रा ।
होतारम् । अमर्त्यम् । अस्य । यज्ञस्य । सुऽक्रतुम् ॥ ३ ॥

हे अग्ने यजिष्ठं यष्टृतमं त्वा त्वां ववृमहे वृणीमहे संभजामहे। कीदृशं त्वां देवत्रा देवेषु मध्ये देवं अतिशयेन दानादिगुणयुक्तं होतारं देवानामाह्वातारं अमर्त्यमविनाशं अस्य यज्ञस्य यागस्य सुक्रतुं सुष्ठु कर्तारम् ॥ ३ ॥

३. अग्नि, तुम याज्ञिकों में श्रेष्ठ, देवों में अतिशय दानादिगुण-युक्त, होता, अमर और इस यज्ञ के सुन्दर कर्त्ता हो । हम तुम्हारा भजन करते हैं ।

ऊर्जोनपातंसुभगंसुदीदितिमग्निंश्रेष्ठशोचिषम् ।
सनोमित्रस्यवरुणस्यसोअपामासुम्नंयक्षतेदिवि ॥ ४ ॥

ऊर्जः । नपातम् । सुऽभगम् । सुऽदीदितिम् । अग्निम् ।
श्रेष्ठऽशोचिषम् । सः । नः । मित्रस्य । वरुणस्य ।
सः । अपाम् । आ । सुम्नम् । यक्षते । दिवि ॥ ४ ॥

ऊर्जोन्नस्य नपातं नपातयितारं यद्वा नप्तारं चतुर्थम्। हविर्लक्षणेनान्नेन आपोजायन्ते अद्भ्यश्चोषधिवनस्पतयः तेभ्यएषजातइति चतुर्थत्वं। नभ्राण्नपादिति नञःप्रकृतिभावः। सुभगं शोभनधनम् सुदीदितिं सुष्ठु दीपयितारं श्रेष्ठशोचिषं प्रशस्यतमतेजस्कं अग्निं स्तौमीतिशेषः। सतादृशोग्निः नोस्मदर्थं दिवि द्योतमाने देवयजने द्युलोकेवा मित्रस्य देवस्य वरुणस्यच सुम्नं सुखम् आ अभिलक्ष्य यक्षते यजतु तथा सोग्निरपामब्देवतानां सुम्नमभियजतु ॥ ४ ॥

४. अन्न के प्रदाता, शोभन-धन, सुन्दर प्रकाशक और प्रशस्य तेजवाले अग्नि की मैं स्तुति करता हूँ। वे हमारे लिए द्योतमान देव-यज्ञ में मित्र और वरुण के सुख को लक्ष्य करके और जल देवता के सुख के लिए यज्ञ करें।

अथ पञ्चमी—

यःसमिधायआहुतीयोवेदेनददाशमर्तोअग्नये ।
योनमसास्वध्वरः ॥ ५ ॥ २९ ॥

यः । सम्ऽइधा । यः । आऽहुती । यः । वेदेन । ददाश ।
मर्तः । अग्नये । यः । नमसा । सुऽअध्वरः ॥ ५ ॥ २९ ॥

इयं पाकयज्ञप्रशंसापरेति भगवताश्वलायनेन व्याख्याता। योमर्तोमनुष्यः समिधा पालाशादिनेध्मेन अग्नये अग्न्यर्थं ददाश परिचरति यश्च आहुती आहुत्या आज्यादिसाध्यया परिचरति यश्च वेदेन वेदाध्ययनेन ब्रह्मयज्ञेन परिचरति यश्चस्वध्वरः शोभनेनाध्वरेण ज्योतिष्टोमादिना युक्तःसन् नमसा अन्नेन चरुपुरोडाशादिना अग्नये ददाशः अग्न्यर्थं परिचरति तस्येदर्वन्तइत्युत्तरत्रसंबन्धः ॥ ५ ॥

५. जो मनुष्य समिधा (पलाश आदि इन्धन) से अग्नि की परिचर्या करता है, जो आहुति (आज्य आदि से) अग्नि की परिचर्या करता है, जो वेदाध्ययन (ब्रह्मयज्ञ) से परिचर्या करता है और जो ज्योतिष्टोम आदि सुन्दर यज्ञों से युक्त होकर नमस्कार (चरु-पुरोडाश आदि) से अग्नि की परिचर्या करता है—॥ इति षष्ठस्य प्रथमे एकोनत्रिंशोवर्गः ॥ २९ ॥

तस्येदर्वन्तोरंहयन्तआशवस्तस्यद्युम्नितमंयशः ।
नतमंहोदेवकृतंकुतश्चननमर्त्यकृतंनशत् ॥ ६ ॥

तस्य । इत् । अर्वन्तः । रंहयन्ते । आशवः ।
तस्य । द्युम्निऽतमम् । यशः । न । तम् । अंहः ।
देवऽकृतम् । कुतः । चन । न । मर्त्यऽकृतम् । नशत् ॥ ६ ॥

यः पूर्वोक्तः तस्येत् तस्यैव आशवोव्यापनशीलाः अर्वन्तःअश्वाः रंहयंते वेगंकुर्वन्ति शत्रून्प्रसहन्तइत्यर्थः। द्युम्नितमं दीप्तिमत्तमं यशः कीर्तिश्च तस्यैवभवति यद्वा द्युम्नमिति धननाम धनवत्तमं यशोन्नंच तस्यभवति।अपिच देवकृतं देवैःकृतं अंहः पापं कुतश्चन कस्मादपि हेतोः तं न नशत् न प्राप्नोति न मर्त्यकृतं मनुष्यैः कृतम् ॥ ६ ॥

६. उसके ही व्यापक अश्व वेगवान् होते हैं, उसी का यश सबसे अधिक होता है तथा उसे देव-कृत और मनुष्य-विहित पाप नहीं व्याप्त करते।

स्वग्नयोवोअग्निभिःस्यामसूनोसहसऊर्जांपते । सुवीरस्त्वमस्मयुः ॥ ७ ॥

सुऽअग्नयः । वः । अग्निऽभिः । स्याम । सूनो इति । सहसः ।
ऊर्जाम् । पते । सुऽवीरः । त्वम् । अस्मऽयुः ॥ ७ ॥

हे सहसःसूनो बलस्यपुत्र अग्निर्हि बलेन मथ्यमानोजायते हे ऊर्जांपते अन्नानां हविर्लक्षणानां स्वामिन् अग्ने वः वचनव्यत्ययः तव अवयवभूतैरग्निभिर्गार्हपत्यादिभिर्वयं स्वग्नयः शोभनाग्निकाः स्याम भवेम। सुवीरः शोभनैः वीरैरुपेतस्त्वंच अस्मयुः अस्मान्कामयमानोभव ॥ ७ ॥

७. हे बल के पुत्र और हवि आदि अन्नों के पति, हम तुम्हारे गार्हपत्यादि अग्नि-समूह के द्वारा शोभन अग्निवाले होंगे। शोभन वीरों से युक्त होकर तुम हमारी इच्छा करो।

अथाष्टमी—

प्रशंसमानोअतिथिर्नमित्रियोग्नीरथोनवेद्यः ।
त्वेक्षेमासोअपिसन्तिसाधवस्त्वंराजारयीणाम् ॥ ८ ॥

प्रऽशंसमानः । अतिथिः । न । मित्रियः । अग्निः । रथः । न । वेद्यः ।
त्वे इति । क्षेमासः । अपि । सन्ति । साधवः । त्वम् । राजा ।
रयीणाम् ॥ ८ ॥

प्रशंसमानः स्तुवन् अतिथिर्न अतिथिरिव यद्वा व्यत्ययेन कर्मणि कर्तृप्रत्ययः प्रशस्यमानः सोग्निर्मित्रियः मित्राणां स्तोतॄणां हितोभवति । तथा रथोन रथइव वेद्योलंभनीयः अभीष्टफलसाधनत्वेन ज्ञातव्योवा । उत्तरोर्धर्चः प्रत्यक्षकृतः । हे अग्ने त्वे त्वयि साधवः साधकाः समीचीनाः क्षेमासोधारणान्यपि सन्ति भवन्ति । तथा त्वं रयीणां धनानामेव राजा ईश्वरोभवसि ॥ ८॥

८. प्रशंसक अतिथि के समान अग्नि स्तोताओं के हितैषी और रथ के समान फल-दाता हैं। अग्नि, तुममें समीचीन रक्षण है। तुम धन के राजा हो।

अथ नवमी—

सोअद्धादाश्वध्वरोग्नेमर्तःसुभगसप्रशंस्यः ।
सधीभिरस्तुसनिता ॥ ९ ॥

सः । अद्धा । दाशुऽअध्वरः । अग्ने । मर्तः । सुऽभग । सः ।
प्रऽशंस्यः । सः । धीभिः । अस्तु । सनिता ॥ ९ ॥

हे अग्ने योमर्तोमनुष्यः दाश्वध्वरः दत्तयज्ञोभवति सः अद्धा सत्यनामैतत् सत्यफलोभवतु । हे सुभग शोभनधनाग्ने सएव प्रशंस्यः प्रशंसनीयः श्लाघनीयश्च भवतु तथा सधीभिः कर्मभिः स्तोत्रैर्वा सनिता संभजनशीलोस्तु भवतु ॥ ९ ॥

९. शोभन-धन अग्नि, जो मनुष्य यज्ञवाला है, वह सत्य फलवाला हो। वह श्लाघनीय हो और स्तोत्रों के द्वारा सम्भजन-परायण हो।

अथ दशमी—

यस्यत्वमूर्ध्वोअध्वरायतिष्ठसिक्षयद्वीरःससाधते ।
सोअर्वद्भिःसनितासविपन्युभिःसशूरैःसनिताकृतम् ॥ १० ॥२०॥

यस्यं । त्वम् । ऊर्ध्वः । अध्वरायं । तिष्ठंसि । क्षयत्ऽवीरः ।
सः । साधते । सः । अर्वत्ऽभिः । सनिता । सः । विपन्युऽभिः ।
सः । शूरैः । सनिता । कृतम् ॥ १० ॥ ३० ॥

हे अग्ने यस्य यजमानस्य अध्वराय यागनिष्पादनाय त्वमूर्ध्वउद्युक्तः सन् तिष्ठसि अवतिष्ठसे सयजमानः क्षयद्वीरः निवसद्भिरित्वरैर्वा वीरैः पुत्रादिभिरुपेतः सन् साधते सर्वकर्तव्यं साधयति। तदेव विवृणोति सतादृशोजनः अर्वद्भिरश्वैः कृतं निष्पादितं जयादिकं सतादृशोजनः विपन्युभिः मेधाविभिः कृतंच स सनिता भवति शूरैः शौर्योपेतैर्भृत्यैः कृतंच ससनिता संभजनशीलोभवति ॥ १० ॥

१०. अग्नि, जिस यजमान के यज्ञ-निष्पादन के लिए तुम ऊपर हो रहते हो, वह निवास-शील वीरों से (पुत्रादि से) युक्त होकर सारे कार्यों को सिद्ध कर डालता है। वह अश्वों-द्वारा की गई विजय को भोगता है। वह मेधावियों और शूरों के साथ सम्भजन-शील होता है।

॥ इति षष्ठस्य प्रथमे त्रिंशोवर्गः ॥ ३० ॥

अथैकादशी—

यस्याग्निर्वपुर्गृहेस्तोमंचनोदधीतविश्ववार्यः ।
हव्यावावेविषद्विषः ॥ ११ ॥

यस्यं । अग्निः । वपुंः । गृहे । स्तोमंम् । चनंः । दधीत ।
विश्वऽवार्यः । हव्या । वा । वेविषत् । विषंः ॥ ११ ॥

यस्य यजमानस्य गृहे विश्ववार्योविश्वैर्वरणीयः वपुः रूपनामैतत् रूपवान् दीप्तिमानग्निः स्तोमं स्तोत्रं चनोन्नंच हविर्लक्षणं दधीत धारयेत्। यस्यच हव्या वाशब्दः समुच्चये हव्यानि हवींषिच विषः व्याप्तान् देवान् वेविषत् प्रापयेत् विष्लृव्याप्तौ अस्माल्लेटि रूपमेतत्। सयजमानइति पूर्वत्रसंबंधः ॥ ११ ॥

११. संसार के स्वीकरणीय और रूपवान् (दीप्तिमान्) अग्नि जिस यजमान के गृह में स्तोत्र और अन्न को धारण करते हैं, उसके हव्य देवों को प्राप्त करते हैं।

विप्रस्यवास्तुवतःसंहसोयह्वोमक्षूतंमस्यरातिषु ।
अवोदेवमुपरिमर्त्यंकृधिवसोविविदुषोवचः ॥ १२ ॥

विप्रस्य । वा । स्तुवतः । सहसः । यह्वो इतिं । मक्षुऽतंमस्य ।
रातिषुं । अवःऽदेवम् । उपरिंऽमर्त्यम् । कृधि । वसो इतिं ।
विविदुषंः । वचः ॥ १२ ॥

हे सहसोयहो बलस्यपुत्राग्ने विप्रस्य मेधाविनः स्तुवतः स्तोतुर्वा रातिषु हविर्दानेषु मक्षुतमस्य शीघ्रतमस्य यष्टुर्वा विविदुषोज्ञातव्यस्य अभिज्ञस्य वचोवचनं हे वसो वासकाग्ने अवोदेवं देवानामवस्तात्। उपरिमर्त्यं मर्त्यानामुपरिष्टाच्च कृधि कुरु सर्वं नभःप्रदेशं व्यापयेतियावत्॥ १२॥

१२. बल के पुत्र और वासद अग्नि, मेधावी स्तोता के दान में क्षिप्तकर्त्ता अभिज्ञाता के वचन को देवों के नीचे और मनुष्यों के ऊपर करो।

यो॒अ॒ग्निंह॒व्यदा॑तिभि॒र्नमो॑भिर्वासु॒दक्ष॑मा॒विवा॑सति।
गि॒रावा॑जि॒रशो॑चिषम्॥ १३॥

यः। अ॒ग्निम्। ह॒व्यदा॑तिऽभिः। नम॑ःऽभिः। वा॒। सु॒ऽदक्ष॑म्।
आ॒ऽविवा॑सति। गि॒रा। वा॒। अ॒जि॒रऽशो॑चिषम्॥ १३॥

योयजमानः हव्यदातिभिः हविषां दानैर्नमोभिर्नमस्कारैर्वा सुदक्षं शोभनबलमग्निं आविवासति परिचरति गिरावा स्तुत्या वा अजिरशोचिषं क्षिप्रगामितेजस्कं तमग्निं परिचरति सः समृद्धोभवतीतिशेषः॥ १३॥

१३. जो यजमान हव्यदान और नमस्कार-द्वारा शोभन बलवाले अग्नि की परिचर्या करता है अथवा क्षिप्रगामी तेजवाले अग्नि की परिचर्या करता है, वह समृद्ध होता है।

स॒मिधा॒योनिशि॑ती॒दाश॒ददि॑तिं॒धाम॑भिरस्य॒मर्त्यः॑।
विश्वेत्सधी॒भिः॑सु॒भगो॒जनाँ॒अति॑द्यु॒म्नैरु॒द्नइ॑वतारिषत्॥ १४॥

स॒म्ऽइधा॑। यः। निऽशि॑ती। दाश॑त्। अदि॑तिम्। धाम॑ऽभिः।
अ॒स्य॒। मर्त्यः॑। विश्वा॑। इत्। सः। धी॒भिः। सु॒ऽभगः॑।
जनान्। अति॑। द्यु॒म्नैः। उ॒द्नःऽइ॑व। ता॒रि॒षत्॥ १४॥

योमर्त्योमनुष्यः अस्याग्नेर्धामभिः शरीरैः गार्हपत्यादिरूपेण विभज्य वर्तमानैः सार्धं अदितिं अखंडनीयं तमेवाग्निं निशिती निशित्या निशानसाधनया प्रज्वलनहेतुभूतया समिधा दाशत् परिचरेत्। सोग्निः धीभिः कर्मभिर्बुद्धिविशेषैर्वा सुभगः सन् विश्वेत् सर्वानेव जनान् द्युम्नैर्द्योतमानैरन्नैर्यशोभिर्वा उद्नइव उदकानीव अतितारिषत् अतितरेत् अतिक्रामेत्॥ १४॥

१४. जो मनुष्य इन अग्नि के शरीरावयवों (गार्हपत्यादि) से अखण्डनीय अग्नि की, समिधा के द्वारा, परिचर्या करता है, वह कर्मों के द्वारा सौभाग्यवान् होकर द्योतमान यश के द्वारा, जल के समान, सारे मनुष्यों को लाँघ जाता है। अथ पञ्चदशी—

तद॑ग्ने॒द्युम्न॒मा भ॑र॒यत्सा॒सह॒त्सद॑ने॒कंचि॑द॒त्रिण॑म्।
म॒न्युंजन॑स्यदू॒ढ्यः॑॥ १५॥ २१॥

तत् । अग्ने । द्युम्नम् । आ । भर । यत् । ससहत् । सदने । कम् ।
चित् । अत्रिणम् । मन्युम् । जनस्य । दुःऽध्यः ॥ १५ ॥ ३१ ॥

हे अग्ने तत् द्युम्नं आभरास्मभ्यमाहर यत्सदने गृहे वर्तमानं कंचित्कमपि अत्रिणमत्तारं राक्षसादिकं सासहत् अत्यर्थमभिभवेत् । तथा दूढ्यः दुर्धियः पापबुद्धेः शत्रुजनस्य मन्युं क्रोधं यच्च द्युम्नमभिभवेत् तदाहरेत्यन्वयः । ध्यैचेति पृषोदरादिपाठात् दुरोरेफस्य उत्वम् उत्तरपदादेष्टुत्वंच ॥ १५ ॥

१५. अग्नि, जो धनगृह में राक्षस आदि को अभिभूत करता है और पाप-बुद्धि मनुष्य के क्रोध को दबाता है, वही धन ले आओ।

॥ इति षष्ठस्य प्रथमे एकत्रिंशोवर्गः ॥ ३१ ॥

येनचष्टेवरुणोमित्रोअर्यमायेननासत्याभगः ।
वयंतत्तेशवसागातुवित्तमाइन्द्रत्वोताविधेमहि ॥ १६ ॥

येन । चष्टे । वरुणः । मित्रः । अर्यमा । येन । नासत्या ।
भगः । वयम् । तत् । ते । शवसा । गातुवित्ऽतमाः ।
इन्द्रत्वाऽऊताः । विधेमहि ॥ १६ ॥

येनाग्नेयेन तेजसा वरुणोदेवः चष्टे प्रकाशयति येनच मित्रः अर्यमा च चष्टे येनच नासत्याश्विनौच चक्षाते भगोभजनीयएतत्संज्ञोदेवश्च चष्टे । शवसा बलेन गातुवित्तमाः गातोर्गंतव्यस्य स्तोत्रस्य ज्ञातृतमाः । यद्वा गंतव्यस्य प्राप्तव्यस्य लब्धतमाः इन्द्रत्वोताः इन्द्रेण ईश्वरेण त्वया ऊतारक्षिताः संतोवयं हे अग्ने ते त्वदीयं तव तेजः विधेमहि परिचरेमहि ॥ १६ ॥

१६. अग्नि के जिस तेज के द्वारा वरुण, मित्र और अर्यमा ज्योति प्रदान करते हैं तथा अश्विनीकुमार और भग देवता जिसके द्वारा प्रकाश प्रदान करते हैं, हम बल के द्वारा सबसे अधिक स्तोत्रज्ञ होकर और इन्द्र के द्वारा रक्षित होकर, अग्निदेव, तुम्हारे उसी तेज की परिचर्या करते हैं।

अथ सप्तदशी—

तेघेदग्नेस्वाध्योयेत्वाविप्रनिदधिरेनृचक्षसम् ।
विप्रासोदेवसुक्रतुम् ॥ १७ ॥

ते । घ । इत् । अग्ने । सुऽआध्यः । ये । त्वा । विप्र । निऽदधिरे ।
नृऽचक्षसम् । विप्रासः । देव । सुऽक्रतुम् ॥ १७ ॥

हे अग्ने तेघेत् तएवखलु स्वाध्यः शोभनाध्यानाभवन्ति हे विप्र मेधाविन् देवद्योतमानाग्ने ये विप्रासोविप्राः मेधाविनऋत्विजः नृचक्षसं नृणां चेष्टारं सुक्रतुं सुकर्माणं शोभनप्रज्ञं वा त्वा त्वां निदधिरे निदधति यागार्थं गार्हपत्यादिस्थानेषु आधानसंस्कारेण स्थापयन्ति तेघेदित्यन्वयः ॥ १७ ॥

१७. हे मेधावी और द्युतिमान् अग्नि, जो मेधावी ऋत्विक् मनुष्यों के साक्षि-स्वरूप और सुन्दर कर्मवाले तुम्हें धारण करते हैं, वे ही उत्तम ध्यानवाले होते हैं।

तइद्वेदिंसुभगतआहुतिंतेसोतुंचक्रिरेदिवि ।
तइद्वाजेभिर्जिग्युर्महद्धनंयेत्वेकामंन्येरिरे ॥ १८ ॥

ते । इत् । वेदिम् । सुऽभग । ते । आऽहुतिम् । ते । सोतुम् । चक्रिरे । दिवि । ते । इत् । वाजेभिः । जिग्युः । महत् । धनम् । ये । त्वे इति । कामम् । निऽएरिरे ॥ १८ ॥

हे सुभग शोभनधनाग्ने तइत् तएव यजमानाः त्वद्यागाय वेदिं चक्रिरे कुर्वन्ति तदनन्तरं ते यजमानाः आहुतिं चरुपुरोडाशादिसाध्यां दीक्षणीयादिषु कुर्वन्ति । ततः दिवि द्योतमाने सौत्येहनि सोतुं सोममभिषोतुं चक्रिरे उद्योगं कुर्वन्ति । अनुष्ठितयज्ञास्तइत् तएव वाजेभिर्वाजैः बलैः महत्प्रभूतं धनं जिग्युर्जयन्ति शत्रुभ्योलभन्ते कुतइत्यतआह ये यजमानाः हे अग्ने त्वे त्वयि कामं अभिलाषं न्येरिरे नितरांगच्छन्ति त्वामादरातिशयेन स्तुवन्तीत्यर्थः ॥ १८ ॥

१८. शोभन-धन अग्नि, वे ही यजमान तुम्हारे लिए वेदी प्रस्तुत करते हैं, आहुति देते हैं, द्योतमान (सौत्य) दिन में सोमाभिषव करने के लिए उद्योग करते हैं, वे ही बल के द्वारा यथेष्ट धन प्राप्त करते हैं और वे ही तुममें अभिलाषा पाते हैं।

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तृशस्त्रे भद्रोनइतिप्रगाथोवैकल्पकस्तोत्रियः । सूत्र्यतेहि—भद्रोनोअग्निराहुतोयदीघृतेभिराहुतइति ।

तत्राद्या सूक्ते एकोनविंशी—

भद्रोनोअग्निराहुतोभद्रारातिःसुभगभद्रोअध्वरः ।
भद्राउतप्रशस्तयः ॥ १९ ॥

भद्रः । नः । अग्निः । आऽहुतः । भद्रा । रातिः । सुऽभग । भद्रः । अध्वरः । भद्राः । उत । प्रऽशस्तयः ॥ १९ ॥

आहुतोहविर्भिस्तर्पितोग्निः नोस्माकं भद्रः कल्याणोभवतु हे सुभग शोभनधनाग्ने भद्रा कल्याणी रातिः दानं चास्मकं भवतु भद्रः कल्याणोध्वरोयागश्च भवतु उतापिच भद्राः कल्याण्यः प्रशस्तयः प्रशंसाः स्तुतयश्च भवन्तु ॥ १९ ॥

१९. आहूत अग्नि हमारे लिए कल्याणकर हों। शोभन-धन अग्नि, तुम्हारा दान हमारे लिए कल्याणकर हो। यज्ञ कल्याणकारी हो। स्तुतियां कल्याणमयी हों।

भद्रंमनःकृणुष्ववृत्रतूर्येयेनासमत्सुसासहः।
अवस्थिरातनुहिभूरिशर्धतांवनेमातेअभिष्टिभिः ॥ २० ॥ ३२ ॥

भद्रम्। मनः। कृणुष्व। वृत्रऽतूर्ये। येन। समत्ऽसु। ससहः।
अव। स्थिरा। तनुहि। भूरि। शर्धताम्। वनेम। ते।
अभिष्टिऽभिः ॥ २० ॥ ३२ ॥

हे अग्ने वृत्रतूर्ये संग्रामे भद्रं शोभनं मनः कृणुष्वास्माकं कुरु। येन मनसा त्वं समत्सु संग्रामेषु सासहः भृशं शत्रूनभिभवसि अपिच शर्धतामभिभवतां शत्रूणां भूरि भूरीणि बहूनि स्थिरा स्थिराणि दृढान्यपि अवतनुहि अवांचि कुरु पराजितानि कुर्वित्यर्थः। वयं चाभिष्टिभिरभ्येषणसाधनैर्हविर्भिः स्तोत्रैश्च ते त्वां वनेम संभजेमहि। यद्वा ते तव प्रसादात् अभिष्टिभिरभीष्टैः फलैः वनेम संगच्छेमहि ॥ २० ॥

२०. संग्राम में मन कल्याणवाहक बने। इस मन के द्वारा तुम संग्राम में शत्रुओं को परास्त करो। अभिभव करनेवाले शत्रुओं के स्थिर और प्रभूत बल को पराजित करो। अभिगमन-साधक स्तोत्रों के द्वारा हम तुम्हारा भजन करेंगे। ॥ इति षष्ठस्य प्रथमे द्वात्रिंशोवर्गः ॥ ३२ ॥

ईळेगिरामनुर्हितंयंदेवादूतमरतिंन्येरिरे।
यजिष्ठंहव्यवाहनम् ॥ २१ ॥

ईळे। गिरा। मनुःऽहितम्। यम्। देवाः। दूतम्। अरतिम्।
निऽएरिरे। यजिष्ठम्। हव्यऽवाहनम् ॥ २१ ॥

गिरा वाचा स्तुतिरूपया मनुर्हितं मनुना प्रजापतिना यजमानेन आहितं तमग्निं ईळे स्तौमि। कीदृशं यजिष्ठं यष्टृतमं हव्यवाहनं हविषां वोढारं अरतिं अर्थं ईश्वरं वा दूतं देवानां दूत्येवर्तमानं यमग्निं देवान्येरिरे नितरां प्रेरयन्ति ॥ २१ ॥

२१. प्रजापति के द्वारा आहित (स्थापित) अग्नि की मैं पूजा करता हूँ। वह सबसे अधिक यज्ञ करनेवाले, हव्य-वाहक तथा ईश्वर हैं और देवों के द्वारा दूत बनाकर भेजे गये हैं।

अथ द्वाविंशी—

तिग्मजंम्भायतरुंणायराजंतेप्रयोंगायस्यग्नयें।
यःपिंशतेंसूनृताभिःसुवीर्यंमग्निर्घृतेभिराहुंतः ॥ २२ ॥

तिग्मऽजंम्भाय । तरुंणाय । राजंते । प्रयंः । गायसि । अग्नयें ।
यः । पिंशतें । सूनृताभिः । सुऽवीर्यम् । अग्निः । घृतेभिः ।
आऽहुंतः ॥ २२ ॥

तिग्मजंभाय तीक्ष्णज्वालाय तरुणाय नित्ययूने जरामरणरहिताय राजते राजमानायाग्नये प्रयोहविर्लक्षणमन्नं गायसि हे स्तोतः प्रवृद्धिं प्रयच्छेत्यर्थः । योग्निः सूनृताभिः प्रियसत्यात्मिकाभिः वाग्भिः स्तुतोघृतेभिर्घृतैराज्यैराहुतोभिहुतश्चसन् सुवीर्यं शोभनवीर्यं पिंशते आश्लेषयति स्तोतृभिः संयोजयति पिशअवयवे तस्माअग्नयेइत्यन्वयः ॥ २२ ॥

२२. तीक्ष्ण लपटोंवाले, चिर तरुण और शोभित अग्नि को लक्ष्य कर हवीरूप अन्न का गाना गाओ। प्रिय और सत्य वचनों से स्तुत तथा घृत-द्वारा आहूत होकर स्तोता को शोभन वीर्य दान करते हैं।

आभिप्लविकेषूक्थ्येषु प्रशास्तुः शस्त्रे यदाभद्रोनइति प्रगाथःस्तोत्रियः तदानीं यदीघृतेभिरिति प्रगाथोनुरूपः । सूक्तंतु पूर्वमेवोदाहृतम् ।

तत्राद्या सूक्ते त्रयोविंशी—

यदींघृतेभिराहुंतोवाशींमग्निर्भरंतउच्चावंच ।
असुंरइवनिर्णिजंम् ॥ २३ ॥

यदि । घृतेभिः । आऽहुंतः । वाशींम् । अग्निः । भरंते । उत् ।
च । अवं । च । असुंरःऽइव । निःऽनिजंम् ॥ २३ ॥

घृतेभिर्घृतैराहुतोभिहुतोयमग्निः यदि यदा यस्मिन्काले वाशीं वाङ्नामैतत् वाचं शब्दं उच्च ऊर्ध्वं च अवच अवाक्च भरते संपादयति। यद्वा वाशीं वाशनशीलां शब्दकारिणीं ज्वालां उद्धरते उद्धरति उद्गमयत्यूर्ध्वमुखं अवच भरते अवाङ्मुखंच हरत्युपसंहरति। असुरइव रश्मीनां क्षेप्ता सूर्योयथा निर्णिजं आत्मीयं रूपं उपरितनेषु लोकेषु प्रकाशतयोद्गमयति अधस्तनेषुच अवाङ्मुखं गमयति तद्वत् उच्चनीचभावनयाग्निस्तेजउद्गमयति तं स्तुमइति शेषः ॥ २३ ॥

२३. घृत के द्वारा आहूत अग्नि जिस समय ऊपर और नीचे शब्द करते हैं, उस समय असुर (बली) सूर्य के समान अपने रूप को प्रकाशित करते हैं।

अथ चतुर्विंशी–

योहव्यान्यैरयतामनुर्हितोदेवआसासुगन्धिना ।
विवासतेवार्याणिस्वध्वरोहोतादेवोअमर्त्यः ॥ २४ ॥

यः । हव्यानि । ऐरयत । मनुःऽहितः । देवः । आसा । सुऽगन्धिना ।
विवासते । वार्याणि । सुऽअध्वरः । होता । देवः । अमर्त्यः ॥ २४ ॥

योमनुर्हितोमनुना प्रजापतिना आहितोदेवोद्योतमानोग्निः सुगंधिना शोभनगंधयुक्तेन आसा आस्येन हव्यान्यस्मदीयानि हवींषि ऐरयत देवान्प्रति प्रेरयति स्वध्वरः शोभनयज्ञः होता देवानामाह्वाता देवोदीप्यमानः अमर्त्योमरणरहितः सोग्निः वार्याणि वरणीयानि धनानि विवासते परिचरते यजमानाय प्रयच्छतीतिशेषः ॥ २४ ॥

२४. मनु प्रजापति के द्वारा स्थापित और प्रकाशक जो अग्नि सुगंधि मुख के द्वारा देवों के पास हव्य को भेजते हैं, वे ही सुन्दर यज्ञवाले, देवों को बुलानेवाले, दीप्तिमान् और अमर अग्नि धन की परिचर्या करते हैं।

यदग्नेमर्त्यस्त्वंस्यामहंमित्रमहोअमर्त्यः । सहसःसूनवाहुत ॥२५॥ ३३॥

यत् । अग्ने । मर्त्यः । त्वम् । स्याम् । अहम् । मित्रऽमहः ।
अमर्त्यः । सहसः । सूनो इति । आऽहुत ॥ २५ ॥ ३३ ॥

हे सहसः सूनो बलस्यपुत्र आहुत घृतैरभिहुत हे मित्रमहः अनुकूलदीप्तिमन् अग्ने मर्त्योमरणधर्माहं यद्यदि त्वंस्यां त्वदुपासनया त्वद्रूपमापन्नोभवेयं । ये यथा यथोपासते ते तदेव भवन्तीति[1]श्रुतेः । तर्ह्यहं अमर्त्योमरणधर्मरहितोदेवएव भवेयमिति ॥ २५ ॥

२५. बल के पुत्र, घृतहुत और अनुकूल दीप्तिवाले अग्नि, मैं मरण-धर्मा हूँ; तुम्हारी उपासना से मैं तुम्हारे समान अमर हो जाऊँ।

॥ इति षष्ठस्य प्रथमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

अथ षड्विंशी–

नत्वारासीयाभिशस्तयेवसोनपापत्वायसन्त्य ।
नमेस्तोतामतीवानदुर्हितस्यादग्नेनपापया ॥ २६ ॥

---

1 बृहदारण्यके.

न । त्वा । रासीय । अभिऽशस्तये । वसो इति । न । पापऽत्वाय ।
सन्त्य । न । मे । स्तोता । अमतिऽवा । न । दुःऽहितः । स्यात् ।
अग्ने । न । पापया ॥ २६ ॥

हे वसो वासकाग्ने त्वा त्वां अभिशस्तये अभिशंसनाय मिथ्यापवादाय हिंसायैच न रासीय नाक्रोशयेयम्। रासृशब्दे हे सन्त्य संभजनीयाग्ने पापत्वाय पापवत्वाय त्वां न रासीय मे मदीयः स्तोताच अनभिमतवचनेन त्वां नाक्रोशयतु अतएव अमतीवा अमतिरशोभनाबुद्धिस्तद्वान् अपिच दुर्हितः शत्रुः हे अग्ने अस्माकं नस्यात् न भवतु अबध्व पापया अशोभनया बुद्ध्या सनबाधताम् ॥ २६ ॥

२६. वासक अग्नि, मिथ्यापवाद (हिंसा) के लिए तुमको मैं तिरस्कृत नहीं करूँगा। पाप के लिए तुम्हें नहीं तिरस्कृत करूँगा। मेरा स्तोता अयुक्त वचनों के द्वारा तुम्हारी अवहेलना नहीं करेगा। सम्भजनीय अग्नि, मेरा दुर्बुद्धि शत्रु न हो। वह पाप-बुद्धि-द्वारा मुझे बाधा न दे।

पितुर्नपुत्रःसुभृतोदुरोणआदेवाँएतुप्रणोहविः ॥ २७ ॥

पितुः । न । पुत्रः । सुऽभृतः । दुरोणे । आ । देवान् ।
एतु । प्र । नः । हविः ॥ २७ ॥

पितुर्न पुत्रः पितुः पुत्रइव अस्माकं सुभृतः सुष्ठु भर्ता । यद्वा पित्रा पुत्रइव अस्माभिः सम्यग्भृतः हविर्भिः पोषितोयमग्निः पुत्रइव अस्माकं सुभृतः दुरोणे यज्ञगृहे देवान् आ अभिलक्ष्य नोस्माकं हविः प्रैतु प्रगमयतु यद्वा । अग्निरेवागच्छतु अस्मदीयं हविश्च देवान्प्राप्नोतु ॥२७॥

२७. जैसे पुत्र पिता के लिए करता है, वैसे ही पोषण-कर्त्ता अग्नि, यज्ञ-गृह में देवों के लिए हमारा हव्य प्रेरित करते हैं।

तवाहमग्नऊतिभिर्नेदिष्ठाभिःसचेयजोषमावसो । सदादेवस्यमर्त्यः ॥२८॥

तव । अहम् । अग्ने । ऊतिऽभिः । नेदिष्ठाभिः । सचेय । जोषम् ।
आ । वसो इति । सदा । देवस्य । मर्त्यः ॥ २८ ॥

हे वसो वासकाग्ने नेदिष्ठाभिरन्तिकतमाभिः ऋजुगामिनीभिर्वा देवस्य तवोतिभीरक्षाभिः मर्त्योमनुष्योहं स्तोता सदा सर्वदा जोषमासचेय प्रीतिमभिसेवेय ॥ २८॥

२८. वासक इन्द्र, निकट-वर्त्ती रक्षण के द्वारा मैं मनुष्य सदा तुम्हारी प्रसन्नता की सेवा करूँ। अथैकोनत्रिंशी—

तवक्रत्वासनेयंतवरातिभिरग्नेतवप्रशस्तिभिः ।
त्वामिदाहुःप्रमतिंवसोममाग्नेहर्षस्वदातवे ॥ २९ ॥

तवं । क्रत्वा । सनेयम् । तवं । रातिऽभिः । अग्ने । तवं । प्रशंस्तिऽभिः ।
त्वाम् । इत् । आहुः । प्रऽमंतिम् । वसो इति । ममं । अग्ने ।
हर्षस्व । दातवे ॥ २९ ॥

हे अग्ने तव क्रत्वा त्वदीयेन परिचरणरूपेण कर्मणा सनेयं त्वां संभजेयम् एतदेवविशदयति तव रातिभिस्त्वदीयैर्हविर्दानैश्च सनेयं तथा तव प्रशस्तिभिः प्रशंसनैः स्तोत्रैश्च त्वां संभजेयम् अस्यैव संभजने किंकारणं तदाह । हे वसो वासकाग्ने मम स्तोतुः प्रमतिं प्रकृष्टबुद्धिं रक्षकं त्वामित् त्वामेव आहुः ब्रह्मवादिनः कथयन्ति अतः हे अग्ने दातवे दातुं हर्षस्व हृष्टोभव हर्षयुक्तःसन् बहुधनं प्रयच्छेत्यर्थः ॥ २९ ॥

२९. अग्नि, तुम्हारे परिचरण के द्वारा मैं तुम्हारा भजन करूँगा। हव्य-दान के द्वारा और प्रशंसा के द्वारा तुम्हारा भजन करूँगा। वासक अग्नि, तुम प्रकृष्टबुद्धि हो। लोग तुम्हें मेरा रक्षक कहते हैं। अग्नि, दान के लिए प्रसन्न होओ।

पूर्वोक्तेएव प्रशास्तुः शस्त्रे प्रसोअग्नइति प्रगाथोवैकल्पिकोनुरूपः सूत्र्यतेहि—प्रसोअग्नेतवोतिभिरग्निंवोवृधन्तमिति ।

तत्राद्या सूक्ते त्रिंशी—

प्रसोअंग्नेतवोतिभिःसुवीराभिस्तिरतेवाजंभर्मभिः ।
यस्यत्वंसख्यमावरः ॥ ३० ॥ ३४ ॥

प्र । सः । अग्ने । तवं । ऊतिऽभिः । सुऽवीराभिः । तिरते ।
वाजंभर्मऽभिः । यस्यं । त्वम् । सख्यम् । आऽवरः ॥ ३० ॥ ३४ ॥

हे अग्ने तवोतिभीरक्षाभिः सयजमानः प्रतिरते प्रवर्धते । ऊतयोविशेष्यन्ते सुवीराभिः शोभनावीराः पुत्रादयोयासु तास्तथोक्ताः वाजभर्मभिः वाजानामन्नानां बलानां वा भर्म भरणं यासु तादृशीभिः हे अग्ने त्वं यस्य यजमानस्य सख्यं सखित्वं मित्रत्वं आवरः अभिवृणोषि सतिरतइत्यन्वयः ॥ ३० ॥

३०. अग्नि, तुम जिस यजमान की मैत्री करते हो, वह तुम्हारी वीर और अन्नपूर्ण रक्षा के द्वारा बढ़ता है।

॥ इति षष्ठस्य प्रथमे चतुस्त्रिंशोवर्गः ॥ ३४ ॥

अथैकत्रिंशी—

तवंद्रप्सोनीलंवान्वाशऋत्वियइन्धांनःसिष्णवाददे ।
त्वंमहीनामुषसांमसिप्रियःक्षपोवस्तुंषुराजसि ॥ ३१ ॥

तव॑ । द्र॒प्सः । नील॑ऽवान् । वा॒शः । ऋ॒त्वियः॑ । इन्धा॑नः ।
सि॒ष्णो॒ इति॑ । आ । द॒दे॒ । त्वम् । म॒ही॒नाम् । उ॒षसा॑म् । अ॒सि॒ ।
प्रि॒यः । क्ष॒पः । वस्तु॑षु । रा॒ज॒सि॒ ॥ ३१ ॥

हे सिष्णो सिषिः सेचनार्थः सोमेनासिच्यमानाग्ने द्रप्सोद्रवणशीलः नीलवान् शकटनीडेवस्थानात्तद्वान् वाशः कान्तः शब्दायमानोवा ऋत्वियः ऋतौ वसन्तादिकालविशेषे भवः इन्धानः संदीपयन् एवंभूतः तव सोमः आददे तुभ्यं होमायाध्वर्युणा आदीयते। अपिच त्वं महीनां महतीनामुषसां प्रियोमित्रभूतोसि उषसि हि अग्नयोहोमाय प्रज्वाल्यन्ते । तथा क्षपः क्षपायारात्रेः संबंधिषु वस्तुषु राजसि प्रकाशसे । यद्वा रात्रिसंबंधीनि वस्तूनि पदार्थजातानि त्वं प्रकाशयसि ॥ ३१ ॥

३१. सोम से सिञ्चित, द्रवशील, नीड़वान्, शब्दायमान, वसन्तादि ऋतुओं में उत्पन्न और दीप्तिशाली अग्नि, तुम्हारे लिए सोम गृहीत होता है। तुम विशाल उषाओं के मित्र हो। रात्रिकाल में तुम सारी वस्तुओं को प्रकाशित करते हो।

तमाग॑न्म॒सोभ॑रयः॒स॒हस्र॑मुष्कंस्वभि॒ष्टिमव॑से ।
स॒म्राजं॒त्रास॑दस्यवम् ॥ ३२ ॥

तम् । आ । अ॒ग॒न्म॒ । सोभ॑रयः । स॒हस्र॑ऽमुष्कम् । सु॒ऽअ॒भि॒ष्टिम् ।
अव॑से । स॒म्ऽराज॑म् । त्रास॑दस्यवम् ॥ ३२ ॥

सोभरयः ऋषयोवयं अवसे रक्षणाय तमग्निं आगन्म हविर्भिः स्तुतिभिश्च प्राप्ताअभूम । कीदृशं सहस्रमुष्कं मुष्णन्ति तमांस्यपहरन्तीति मुष्कानि तेजांसि बहुतेजस्कं स्वभिष्टिं शोभनाभ्येषणं सम्राजं सम्यग्राजमानं त्रासदस्यवं त्रसदस्युर्नाम राजर्षिः तस्य स्तोतव्यत्वेन संबंधिनम् ॥ ३२ ॥

३२. रक्षण के लिए हम सोभरि लोग अग्नि को प्राप्त हुए हैं। अग्नि, बहु-तेजस्वी, सुन्दर रूप से आनेवाले सम्राट् और त्रसदस्यु-द्वारा स्तुत हैं।

अथ त्रयस्त्रिंशी—

यस्य॒ंतेअ॑ग्नेअ॒न्येअ॒ग्नय॑उप॒क्षितो॑व॒याइ॑व ।
विपो॒नद्यु॒म्नानियु॑वे॒जना॑नां॒तव॑क्ष॒त्राणि॑व॒र्धय॑न् ॥ ३३ ॥

यस्य॑ । ते॒ । अ॒ग्ने॒ । अ॒न्ये । अ॒ग्नयः॑ । उ॒प॒ऽक्षित॑ः । व॒याःऽइ॑व ।
विप॑ः । न । द्यु॒म्ना । नि । यु॒वे॒ । जना॑नाम् । तव॑ । क्ष॒त्राणि॑ ।
व॒र्धय॑न् ॥ ३३ ॥

हे अग्ने यस्य ते तव अन्ये अग्नयः वयाइव वृक्षस्य शाखाइव उपक्षितः समीपे निवसन्तोभवन्ति जनानां जनिमतां मनुष्याणां मध्ये अहं तस्य तव क्षत्राणि बलानि स्तुत्या वर्धयन् विप्रोन स्तोतॄनामेतव् अन्ये स्तोतारइव द्युम्ना द्योतमानानि अन्नानि यशांसि वा नियुवे नितरां प्राप्नोमि त्वत्प्रसादाल्लभेयमित्यर्थः ॥ ३३ ॥

३३. अग्नि, अन्य अग्नि (गार्हपत्यादि) वृक्ष की शाखा के समान तुम्हारे पास रहते हैं। मनुष्यों में मैं, तुम्हारे बल, स्तुति-द्वारा बढ़ाते हुए अन्य स्तोताओं के समान यश को प्राप्त करूंगा।

यमादित्यासोअद्रुहःपारंनयथमर्त्यम्।
मघोनांविश्वेषांसुदानवः ॥ ३४ ॥

यम्। आदित्यासः। अद्रुहः। पारम्। नयथ। मर्त्यम्।
मघोनाम्। विश्वेषाम्। सुऽदानवः ॥ ३४ ॥

हे अद्रुहः अद्रोग्धारः हे सुदानवः हे आदित्यासः अदितेः पुत्रामित्रादयः मघोनां हविष्मतां विश्वेषां सर्वेषां मध्ये यं मर्त्यं मनुष्यं यजमानं पारं नयथ आरब्धस्य कर्मणः समाप्तिं प्रापयथ सतत्फलं लभतइत्यर्थः ॥ ३४ ॥

३४. द्रोह-शून्य और उत्तम दानवाले आदित्यों हविवाले, सभी लोगों के बीच जिसे तुम पार ले जाते हो, वह फल प्राप्त करता है।

यूयंराजानःकंचिच्चर्षणीसहःक्षयन्तंमानुषाँअनु।
वयंतेवोवरुणमित्रार्यमन्त्स्यामेदृतस्यरथ्यः ॥ ३५ ॥

यूयम्। राजानः। कम्। चित्। चर्षणिऽसहः। क्षयन्तम्।
मानुषान्। अनु। वयम्। ते। वः। वरुण। मित्र। अर्यमन्।
स्याम। इत्। ऋतस्य। रथ्यः ॥ ३५ ॥

हे राजानोराजमानाः हे चर्षणीसहः शत्रुभूतानामभिभवितारः आदित्याः यूयं मानुषाँअनु मनुष्यान्यजमानाननुलक्ष्य क्षयन्तं क्षपयन्तं कंचित्कमपि शत्रुं सर्वमपि शत्रुवर्गं अभिभवथेतिशेषः। यद्वा मनुष्येषु यजमानेषु क्षयन्तं स्तुतीनामीश्वरं कंचित्कमपिस्तोतारं मा यूयंगच्छत। हे वरुण हे मित्र हे अर्यमन् ते तादृशावयं वोयुष्माकं संबंधिनः ऋतस्य यज्ञस्य रथ्यः स्याम नेतारोभवेम ॥ ३५ ॥

३५. शोभा-संयुक्त और शत्रुओं के अभिभविता आदित्यो, मनुष्यों में घातक शत्रुओं को पराजित करो। वरुण, मित्र और अर्यमा, ये ही तुम्हारे यज्ञ के नेता होंगे।

अथ षट्त्रिंशी—

अदा॑न्मेपौरुकु॒त्स्यः॑पं॒चा॒शतं॑त्र॒सद॑स्युर्व॒धूना॑म्।
मंहि॑ष्ठोअ॒र्यः॑सत्प॑तिः ॥ ३६ ॥

अदा॑त्। मे॒। पौ॒रु॒ऽकु॒त्स्यः॑। प॒ञ्चा॒शत॑म्। त्र॒सद॑स्युः।
व॒धूना॑म्। मंहि॑ष्ठः। अ॒र्यः॑। सत्ऽप॑तिः ॥ ३६ ॥

इदमादिकेन प्रगाथेन त्रसदस्योर्दानमृषिः प्रशंसति। पौरुकुत्स्यः पुरुकुत्सपुत्रस्त्रसदस्युः मे मह्यं वधूनां पञ्चाशतं अदात् दत्तवान्। कीदृशः मंहिष्ठोदातृतमः अर्यः अभिगंतव्यः स्वामीवा सत्पतिः सतां श्रेष्ठानां स्तोतॄणां पालयिता ॥ ३६ ॥

३६. पुरुकुत्स के पुत्र त्रसदस्यु ने मुझे पचास बन्धु दिये हैं। वे बड़े दानी, आर्य (स्वामी) और स्तोताओं के पालक हैं।

उ॒तमे॑प्र॒यियो॑र्व॒यियोः॑सु॒वास्त्वा॒अधि॒तुग्व॑नि।
ति॒सॄ॒णांस॑प्त॒ती॒नांश्या॒वः॑प्र॒णे॒ताभु॑व॒द्वसु॒र्दिया॑नां॒पतिः॑ ॥ ३७॥ ३५॥

उ॒त। मे॒। प्र॒यियोः॑। व॒यियोः॑। सु॒ऽवास्त्वाः॑। अधि॑।
तुग्व॑नि। ति॒सॄ॒णाम्। स॒प्त॒ती॒नाम्। श्या॒वः। प्र॒ऽने॒ता।
भु॒व॒त्। वसुः॑। दिया॑नाम्। पतिः॑ ॥ ३७ ॥ ३५ ॥

अप्येतत् यदुक्तं अपि यदेतत् वक्ष्यमाणं इत्युतशब्दः एवमुभयंतं संभावयति मेमह्यं प्रयियोः प्रयायते प्रगम्यते येन तत्प्रयियुर्धनमश्वादि तस्य प्रयियोर्धनस्य बह्वदात्। ताभिः कन्याभिः सह वयियोः ऊयते येन तद्वयियु वस्त्रादि तस्यच बह्वदात्। तिसॄणां सप्ततीनां गवां श्यावः श्यामवर्णोवृषः श्यामवर्णानां प्रणेता प्रकर्षेणनेता अग्रतोगामी भुवद्वसुः भावयिता वसूनाम् प्रशस्तः पूजितलक्षणः दियानां दानार्हाणां गवांपतिः ताश्च गाएतत्संख्यायुक्ताः एतद्गुणयुक्ताश्च मत्यमदात् क्वपुनरसावदात् सुवास्त्वाः सुष्ठु निवासायानद्याः अधितुग्वनि तीर्थेधि एतददात् मत्यम्। सुवास्तुर्नामनदी तुग्वतीर्थं भवंतीति निरुक्तं[1]। अस्याऋचोव्याख्यानं निरुक्तटीकाया-उद्धृतम् ॥ ३७ ॥

३७. सुन्दर निवासवाली नदी के तट पर श्यामवर्ण बैलों के नेता और पूज्य धन दान के योग्य २१० गायों के पति त्रसदस्यु ने धन और वस्त्र आदि दिये थे।

॥ इति षष्ठस्य प्रथमे पंचत्रिंशोवर्गः ॥ ३५ ॥

---

१ नि० ६. २२.

आगंतेति षड्विंशर्चमष्टमं सूक्तम् काण्वस्य सोभरेरार्षम् मारुतं प्रथमाद्यायुजः ककुभः द्वितीयादियुजः सतोबृहत्यः अनुक्रम्यतेहि—आगन्तषड्विंशतिर्मारुतमिति । गतोविनियोगः ।

तत्र प्रथमा—

आगन्तामारिषण्यतप्रस्थावानोमापस्थातासमन्यवः ।
स्थिराचिन्नमयिष्णवः ॥ १ ॥

आ । गन्त । मा । रिषण्यत । प्रऽस्थावानः । मा ।
अप । स्थात । सऽमन्यवः । स्थिरा । चित् । नमयिष्णवः ॥ १ ॥

हे प्रस्थावानः प्रस्थातारः प्रगन्तारः मरुतः आगन्त अस्मानागच्छत मारिषण्यत अनागमनेनास्मान्माहिंस्त । हे समन्यवः समानतेजस्काः समानक्रोधावा स्थिराचित् स्थिराणि दृढान्यपि पर्वतादीनि हे नमयिष्णवोनमनशीलाः कंपयितारः मापस्थात अस्मत्तोपेत्यान्यत्र मातिष्ठत अस्मास्वेव तिष्ठतेत्यर्थः ॥ १ ॥

१. प्रस्थानवाले मरुद्गण, आगमन करो। हमें नहीं मारना। समान-तेजस्क होकर दृढ़ पर्वतों को भी कम्पित करते हो। हमें छोड़कर अन्यत्र नहीं रहना।

वीळुपविभिर्मरुतऋभुक्षणआरुद्रासःसुदीतिभिः ।
इषानोअद्यागतापुरुस्पृहोयज्ञमासोभरीयवः ॥ २ ॥

वीळुपविऽभिः । मरुतः । ऋभुक्षणः । आ । रुद्रासः ।
सुदीतिऽभिः । इषा । नः । अद्य । आ । गत ।
पुरुऽस्पृहः । यज्ञम् । आ । सोभरीऽयवः ॥ २ ॥

हे ऋभुक्षणः महान्तः उरुभासमाननिवासावा हे रुद्रासो रुद्राः रुद्रपुत्राः ईदृशाः हे मरुतः सुदीतिभिः शोभनदीप्तिकैः वीळुपविभिः रथनेमयः पवयः वीळु दृढाः पवयोयेषु तादृशैरथैरागत आगच्छत । एतदेव विवृणोति—हे पुरुस्पृहः बहुभिः स्पृहणीयाः ईप्सितव्याः सोभरीयवः सोभरिमृषिं मां कामयमानाःसन्तः अद्य इदानीं यज्ञं अस्मदीयं यागं इषा अस्मभ्यं दातव्येन अन्नेन सह आगत आगच्छत शीघ्रं कालविलंबं माकुरुत ॥ २ ॥

२. प्रकाशमान निवासवाले रुद्रपुत्रो (मरुतो), सुन्दर दीप्तिवाले रथनेमि (चक्र के डंडों) के रथ से आगमन करो। सबके अभिलषणीय मरुतो, सोभरि की (मेरी) अभिलाषा करते हुए, अन्न के साथ, आज हमारे यज्ञ में आओ।

अथ तृतीया—

विद्मा हि रुद्रियाणां शुष्ममुग्रं मरुतां शिमीवताम् ।
विष्णोरेषस्य मीळ्हुषाम् ॥ ३ ॥

विद्म । हि । रुद्रियाणाम् । शुष्मम् । उग्रम् । मरुताम् ।
शिमीऽवताम् । विष्णोः । एषस्य । मीळ्हुषाम् ॥ ३ ॥

रुद्रियाणां रुद्रपुत्राणां शिमीवतां कर्मवतां विष्णोर्व्याप्तस्य एषस्य एषणीयस्य वृष्ट्युदकस्य मीळ्हुषां सेक्तॄणां मरुतां उग्रमुद्गूर्णं शुष्मं बलं विद्महि जानीमः खलु ॥ ३ ॥

३. हम कर्मवान् विष्णु और अभिलषणीय जल के सेचक रुद्रपुत्र मरुतो के उग्र बल को जानते हैं।

विद्वीपानि पापतन्तिष्ठद्दुच्छुनोभे युजन्त रोदसी ।
प्र धन्वान्यैरत शुभ्रखादयो यदेजथ स्वभानवः ॥ ४ ॥

वि । द्वीपानि । पापतन् । तिष्ठत् । दुच्छुना । उभे इति ।
युजन्त । रोदसी इति । प्र । धन्वानि । ऐरत ।
शुभ्रऽखादयः । यत् । एजथ । स्वऽभानवः ॥ ४ ॥

द्वीपानि द्वयोः पार्श्वयोः आपोयेषु तानि उदमध्यस्थलानि द्व्यंतरुपसर्गेभ्योपईदितीत्वम् ऋक्पूरित्यादिनाअकारः समासान्तः । तानिच विपापतम् अत्यर्थं मरुद्वेगेन विपतन्ति । तिष्ठत् स्थावरं चान्यद्वृक्षजातं दुच्छुना दुःखेन युज्यते उभे रोदसी द्यावापृथिव्यावपि युजंत ते मरुतः स्वागमनजनितेन कंपनेन योजयन्ति ।परोर्धर्चः परोक्षकृतः धन्वानि गमनशीलान्युदकानिच प्रैरत प्रगच्छंति हे शुभ्रखादयः शोभनायुधाः शोभनहविष्कावा हे स्वभानवः स्वायत्तदीप्तयः यूयं यद्यदा एजथ कंपयथ तदा एतत्पूर्वोक्तं सर्वं निष्पाद्यते इत्यर्थः ॥ ४ ॥

४. सुन्दर आयुध और दीप्तिवाले मरुतो, तुम लोग जिस समय कम्पन करते हो, उस समय सारे द्वीप पतित हो जाते हैं, स्थावर (वृक्षादि) पदार्थ दुख प्राप्त रकते हैं, द्यावापृथिवी काँप जाते हैं, गमनशील जल बहता है।

अथ पञ्चमी—

अच्युता चिद्वो अज्मन्ना नानदति पर्वतासो वनस्पतिः ।
भूमिर्यामेषु रेजते ॥ ५ ॥ ३६ ॥

अच्युता । चित् । वः । अज्मन् । आ । नानदति ।
पर्वतासः । वनस्पतिः । भूमिः । यामेषु । रेजते ॥ ५ ॥ ३६ ॥

हे मरुतोवोयुष्माकं अज्मन् अज्मनि संग्रामे गमनेसति अच्युताचित् च्यावयितुमशक्याअपि पर्वतासः पर्वतामेघा गिरयोवा वनस्पतिः जातावेकवचनं वनस्पतयोवृक्षाश्च आनानदति अभितोभृशं शब्दायंते। अपिच यामेषु युष्मदीयेषु गमनेषु निमित्तेषु भूमिः पृथिवीच रेजते कंपते ॥ ५ ॥

५. मरुतो, तुम्हारे संग्राम में जाते समय न गिरनेवाले मेघ और वनस्पति आदि बार-बार शब्द करते हैं, पृथिवी काँपती है।

॥ इति षष्ठस्य प्रथमे षट्त्रिंशोवर्गः॥ ३६ ॥

अथ षष्ठी—

अमायवोमरुतोयातवेद्यौर्जिहीतउत्तराबृहत् ।
यत्रानरोदेदिशतेतनूष्वात्वक्षांसिबाह्वोजसः ॥ ६ ॥

अमाय । वः । मरुतः । यातवे । द्यौः । जिहीते ।
उत्ऽतरा । बृहत् । यत्र । नरः । देदिशते । तनूषु ।
आ । त्वक्षांसि । बाहुऽओजसः ॥ ६ ॥

हे मरुतोवोयुष्माकं अमाय बलाय यातवे यातुं द्यौर्द्युलोकः बृहदन्तरिक्षं विसृज्य उत्तरा उद्गततरा जिहीते गच्छति युष्मदागमनाद्भीतासती युष्मदीयमांतरिक्षं स्थानं परित्यज्यऊर्ध्वं पलायतइत्यर्थः। यत्र यस्मिन्नन्तरिक्षे बाह्वोजसः बाह्वोरोजोबलं येषां तादृशानरोनेतारोमरुतः त्वक्षांसि दीप्तान्याभरणानि तनूष्वात्मीयेषु शरीरेषु आदेदिशते आदिष्टानि धृतानि कुर्वन्ति। यद्वा तनूषु विस्तृतासु मेघस्थास्वप्सु त्वक्षांसि तनूकृतानि तीक्ष्णीकृतान्यायुधानि मेघोद्भेदनाय आदेदिशते पुनःपुनरादिशन्ति तद्बृहदंतरिक्षं जिहीतइत्यन्वयः ॥ ६ ॥

६. मरुतो, तुम्हारे बल के गमन के लिए द्युलोक विशाल अन्तरिक्ष को छोड़कर ऊपर भाग गया है। प्रचुर बलवाले और नेता मरुद्गण अपने शरीर में दीप्त आभरण धारण करते हैं।

अथ सप्तमी—

स्वधामनुश्रियंनरोमहित्वेषाअमवन्तोवृषप्सवः ।
वहन्तेअह्रुतप्सवः ॥ ७ ॥

स्वधाम् । अनु । श्रियम् । नरः । महि । त्वेषाः । अमऽवन्तः ।
वृषऽप्सवः । वहन्ते । अह्रुतऽप्सवः ॥ ७ ॥

नरोनेतारोमरुतः स्वधामनु स्वधेत्यन्ननाम हविर्लक्षणमन्नमनुलक्ष्य श्रियं शोभां महि महत्प्रौढं वहन्ते धारयन्ति । कीदृशाः त्वेषाः दीप्ताः अमवन्तोबलवन्तः वृषप्सवोवर्षणरूपाः अह्रुतप्सवः अकुटिलरूपाश्च ॥ ७ ॥

७. प्रदीप्त, बलवान्, वर्षणरूप, अकुटिल और नेता मरुद्गण हवीरूप अन्न के लिए महती शोभा धारण करते हैं।

गोभिर्वाणोअज्यतेसोभरीणांरथेकोशेहिरण्यये ।
गोबन्धवःसुजातासइषेभुजेमहान्तोनःस्परसेनु ॥ ८ ॥

गोभिः । वाणः । अज्यते । सोभरीणाम् । रथे । कोशे ।
हिरण्यये । गोऽबन्धवः । सुऽजातासः । इषे । भुजे ।
महान्तः । नः । स्परसे । नु ॥ ८ ॥

सोभरीणामृषीणां गोभिः शब्दैः स्तुतिलक्षणैर्वाणः मरुद्वीणाअज्यते व्यज्यते प्रकटीक्रियते । कुत्र हिरण्यये रथे कोशे कोशवद्वेष्टिते मध्यदेशे । यद्वा गोभिर्गंतृभिर्गोमातृकैर्वा मरुद्भिः वाणः अज्यते व्यज्यते सोभरीणां ज्ञानाय ईदृशे रथे वाघतइत्यर्थः । अपिच गोबंधवोगोमातृकाः सुजातासः शोभनजन्मानः महांतोमहानुभावास्तेमरुतः नोस्माकं इषेन्नाय भुजे भोगाय स्परसे प्रीत्यैच वलनाय वा नु क्षिप्रं भवंत्विति शेषः ॥ ८ ॥

८. सोभरि आदि ऋषियों के शब्द-द्वारा हिरण्मय रथ के मध्य देश में मरुतों की वीणा प्रकट हो रही है। गोमातृक, शोभन-जन्मा और महानुभाव मरुद्गण हमारे अन्न, भोग और प्रीति के लिए प्रवृत्त हों।

प्रतिवोवृषदञ्जयोवृष्णेशर्धायमारुतायभरध्वम् ।
हव्यावृषप्रयाव्णे ॥ ९ ॥

प्रति । वः । वृषत्ऽअञ्जयः । वृष्णे । शर्धाय ।
मारुताय । भरध्वम् । हव्या । वृषऽप्रयाव्ने ॥ ९ ॥

हे वृषदंजयः वृषता वर्षकेण सोमेन अञ्जन्तः सिञ्चन्तोध्वर्यवः वोयूयं वृष्णे वर्षित्रे मारुताय मरुत्संघरूपाय शर्धाय बलाय हव्या हव्यानि हवींषि प्रति भरध्वम् आहवनीयं प्रति हरत । शर्धं विशेष्यते वृषप्रयाव्णे वृषाणः सेक्तारः प्रयावानः प्रकृष्टं गन्तारोमरुतोयस्मिन् तत्तथोक्तं तस्मै ॥ ९ ॥

९. सोम-वर्षक अध्वर्युओ, वृष्टिदाता मरुतों के बल के लिए हव्य ले आओ। इस बल के द्वारा वे सेचन करनेवाले और उत्तम गमनवाले होते हैं।

अथ दशमी–

वृषणश्वेनमरुतोवृषप्सुनारथेनवृषनाभिना ।
आश्येनासोनपक्षिणोवृथानरोहव्यानोवीतयेगत ॥ १० ॥ ३७ ॥

वृषणश्वेन । मरुतः । वृषऽप्सुना । रथेन । वृषऽनाभिना । आ ।
श्येनासः । न । पक्षिणः । वृथा । नरः । हव्या । नः । वीतये । गत ॥ १० ॥ ३७ ॥

हे नरोनेतारोमरुतः वृषणश्वेन वृषभिः सेचनसमर्थैरश्वैरुपेतेन वृषप्सुना वर्षकरूपयुक्तेन वृषनाभिना नाभिश्चक्रछिद्रं वर्षकनाभियुक्तेन रथेन नोस्माकं हव्या हव्यानि हवींषि आगत आगच्छत । वृथा अनायासेनैव वीतये भक्षणार्थम् । तत्रदृष्टान्तः–श्येनासोन पक्षिणः श्येनाः शंसनीयगतयः पक्षिणोयथा शीघ्रमागच्छंतितद्वदनायासेन शीघ्रमागच्छतेत्यर्थः ॥ १० ॥

१०. नेता मरुद्गण सेचन-समर्थ, अश्व से युक्त, वृष्टिदाता के रूप से संयुक्त और वर्षक नाभि से सम्पन्न रथ पर, हव्य के पास, श्येन पक्षी के समान अनायास आगमन करें।

॥ इति षष्ठस्य प्रथमे सप्तत्रिंशोवर्गः ॥ ३७ ॥

अथैकादशी–

समानमञ्ज्येषांविभ्राजन्तेरुक्मासोअधिबाहुषु ।
दविद्युतत्यृष्टयः ॥ ११ ॥

समानम् । अञ्जि । एषाम् । वि । भ्राजन्ते । रुक्मासः ।
अधि । बाहुषु । दविद्युतति । ऋष्टयः ॥ ११ ॥

एषां मरुतां अञ्जि रूपाभिव्यंजकं आभरणं समानमेकविधमेव एतदेवाह रुक्मासोरुक्मादीप्यमानाः सुवर्णमयाहाराः विभ्राजंते वक्षःस्थलेषुविशेषेण दीप्यंते तथा बाहुष्वधि अंसेषु ऋष्टयः शक्त्यादीन्यायुधानि दविद्युतति अत्यर्थं द्योतंते ॥ ११ ॥

११. मरुतों का अभिव्यञ्जक आभरण एक ही प्रकार का है। प्रदीप्त सुवर्णमय हार उनके हृदय-देश में विराज रहा है। बाहुओं में आयुध अतीव प्रकाशित होते हैं।

अथ द्वादशी–

तउग्रासोवृषणउग्रबाहवोनकिष्टनूषुयेतिरे ।
स्थिराधन्वान्यायुधारथेषुवोनीकेष्वधिश्रियः ॥ १२ ॥

ते । उग्रासः । वृषणः । उग्रऽबाहवः । नकिः । तनूषु । येतिरे । स्थिरा ।
धन्वानि । आयुधा । रथेषु । वः । अनीकेषु । अधि । श्रियः ॥ १२ ॥

उग्रासउद्गूर्णाः सर्वकार्येषूद्यताः वृषणोवर्षितारः उग्रबाहवः उद्गूर्णबाहुकास्ते मरुतः तनूष्वात्मीयेषु शरीरेषु नकिर्येतिरे रक्षणाय नप्रयतन्ते। नहि कश्चित्तेषां शरीराणि बाधितुं शक्नोति येन यत्नः क्रियेत। परोर्धर्चः प्रत्यक्षकृतः हे मरुतः वोयुष्माकं रथेषु धन्वानि धनूंषि आयुधान्यायोधनानि बाणादीनिच स्थिरा स्थिराणि दृढतराणि सन्ति अतएव कारणात् अनीकेष्वधि सेनामुखेषु श्रियः जयसंपदोयुष्माकं भवन्ति ॥ १२ ॥

१२. उग्र, वर्षक और उग्र बाहुओंवाले मरुद्गण अपने शरीर के रक्षण के लिए यत्न नहीं करते (आवश्यकता ही नहीं है)। मरुतो, तुम्हारे रथ पर आयुध और धनुष सुदृढ़ हैं। इसी लिए युद्ध-क्षेत्र में, सेनामुख पर, तुम्हारी ही विजय होती है।

येषामर्णोनसप्रथोनामत्वेषंशश्वतामेकमिद्भुजे।
वयोनपित्र्यंसहः ॥ १३ ॥

येषाम्। अर्णः। न। सऽप्रथः। नाम। त्वेषम्। शश्वताम्।
एकम्। इत्। भुजे। वयः। न। पित्र्यम्। सहः ॥ १३ ॥

अर्णोन उदकमिव सप्रथः सर्वतः पृथु विस्तीर्णं त्वेषं दीप्तं शश्वतां बहूनां एषां मरुतामीदृशं नाम मरुतइतिनामधेयं एकंइत् एकं एवासहायमेव सत् भुजे स्तोतॄणां भोगाय भवति। तत्र दृष्टान्तः—सहः प्रसहनशीलं पित्र्यं पितुरागतं वयोन अन्नमिव यथा तद्विस्रंभेण भोगाय भवति तथेत्यर्थः तानित्युत्तरत्रैकवाक्यता ॥ १३ ॥

१३. जल के समान सर्वत्र विस्तीर्ण और दीप्त बहु-संख्यक मरुतों का नाम एक होकर भी, पैतृक दीर्घ स्थायी अन्न के समान, भोग के लिए, यथेष्ट होता है।

तान्वन्दस्वमरुतस्ताँउपस्तुहितेषांहिधुनीनाम्।
अराणांनचरमस्तदेषांदानामह्नातदेषाम् ॥ १४ ॥

तान्। वन्दस्व। मरुतः। तान्। उप। स्तुहि।
तेषाम्। हि। धुनीनाम्। अराणाम्। न।
चरमः। तत्। एषाम्। दाना। मह्ना। तत्। एषाम् ॥ १४ ॥

हे अन्तरात्मन् तान्पूर्वोक्तगुणान् मरुतः वन्दस्व प्रणतानेवोपेत्य स्तुहि। हि यस्मात् धुनीनां कंपयितॄणां तेषां मरुतां वयं शेषभूताः स्म अराणां न अर्याणां स्वामिनां यथा चरमः हीनः सेवकः शेषभूतः तद्वत्। तत्तस्मादेषां मरुतां दाना दानानि मह्ना महत्त्वेन युक्तानि अस्माकं भवन्ति तदेषामितिद्विरुक्तिरादरार्था पदपूरणार्था वा ॥ १४ ॥

१४. उन मरुतों की वन्दना करो। उनके लिए स्तुति करो। आर्य-स्वामी के हीन सेवक के समान हम कम्पनोत्पादक मरुतों के हीन सेवक हैं। उनका दान महिमा से युक्त है।

सुभगःसवंऊतिष्वासपूर्वासुमरुतोव्युंष्टिषु।
योवांनूनमुतासति ॥ १५ ॥ ३८ ॥

सुऽभगः। सः। वः। ऊतिषु। आस। पूर्वासु। मरुतः।
विऽउष्टिषु। यः। वा। नूनम्। उत। असति ॥ १५ ॥ ३८ ॥

हेमरुतः वोयुष्माकं ऊतिषु रक्षासु सतीषु सस्तोता सुभगआस शोभनधनोभवति अस्तेश्छान्दसोभूभावाभावः। यद्वा सुभगःआस दीप्यते। असगतिदीप्त्यादानेषु। कदेति चेदुच्यते—पूर्वासु व्युष्टिषु पूर्वेषु अतीतेषु विवासितेषु दिवसेषु। यद्वा पूर्वासु आगामिनीषु व्युष्टिषु उषःसु उषःकालोपलक्षितेषु दिवसेषु। उतापिच योमनुष्यः स्तोता यष्टावा नूनमवश्यं असति युष्माकं भवति अस्तेश्छान्दसःशपोलुगभावः ससुभगइत्यन्वयः ॥ १५ ॥

१५. मरुतो, तुम्हारा रक्षण पाकर स्तोता बीते हुए दिनों में सुभग हुआ था। जो स्तोता है, वह अवश्य ही तुम्हारा है।

॥ इति षष्ठस्य प्रथमेष्टत्रिंशोवर्गः ॥ ३८ ॥

अथ षोडशी

यस्यंवायूयंप्रतिवाजिनोनरआहव्यावीतयेंगथ।
अभिषद्युम्नैरुतवाजंसातिभिःसुम्नावोधूतयोनशत् ॥ १६ ॥

यस्य। वा। यूयम्। प्रति। वाजिनः। नरः। आ। हव्या। वीतये।
गथ। अभि। सः। द्युम्नैः। उत। वाजसातिऽभिः।
सुम्ना। वः। धूतयः। नशत् ॥ १६ ॥

हे नरोनेतारोमरुतोयूयं यस्यवा यस्यच वाजिनोहविष्मतोयजमानस्य हव्या हव्यानि हवींषि प्रतिवीतये भक्षणाय आगथ आगच्छथ। सयजमानः हे धूतयः कंपयितारोमरुतः द्युम्नैर्द्योतमानैरन्नैर्यशोभिर्वा उतापिच वाजसातिभिः वाजानां संभजनैश्च वोयुष्माकं संबंधीनि सुम्ना सुम्नानि सुखानि अभिनशत् अभितोव्याप्नोति ॥ १६ ॥

१६. नेता मरुतो, हव्य-भक्षण के लिए जिस हविष्मान् यजमान के हव्य के पास जाते हो, हे कम्पक मरुतो, वह तुम्हारे द्युतिमान् अन्न और अन्न-सम्भोग के द्वारा तुम्हारे सुख को चारों ओर व्याप्त करता है।

यथारुद्रस्यसूनवोदिवोवशन्त्यसुरस्यवेधसः।
युवानस्तथेदसत् ॥ १७ ॥

यथा। रुद्रस्य। सूनवः। दिवः। वशन्ति। असुरस्य।
वेधसः। युवानः। तथा। इत्। असत्॥ १७॥

रुद्रस्य दुःखद्रावयितुरीश्वरस्य सूनवः पुत्राः असुरस्य उदकानां क्षेप्तुर्मेघस्य वेधसोविधातारः यद्वा असवः प्राणाः तान् रातिददातीत्यसुरं वृष्टिजलं तस्य कर्तारः युवानोनित्यतरुणाईदृशामरुतः दिवोन्तरिक्षादागत्य यथा येनप्रकारेण वशन्ति अस्मान्कामयन्ते तथेव तथैव तेन प्रकारेण असत् इदं स्तोत्रं भवतु। वष्टेः छान्दसः शपोलुगभावः॥ १७॥

१७. रुद्र-पुत्र, असुर (वृष्टि जल अथवा बल) के कर्त्ता और नित्य तरुण मरुद्गण जिस प्रकार अन्तरिक्ष से आकर हमारी कामना करें, यह स्तोत्र वैसा ही हो।

येचार्हन्तिमरुतःसुदानवःस्मन्मीळ्हुषश्चरन्तिये।
अतश्चिदानउपवस्यसाहृदायुवानआववृध्वम्॥ १८॥

ये। च। अर्हन्ति। मरुतः। सुऽदानवः। स्मत्। मीळ्हुषः।
चरन्ति। ये। अतः। चित्। आ। नः। उप। वस्यसा।
हृदा। युवानः। आ। ववृध्वम्॥ १८॥

सुदानवः शोभनदानाः येच यजमानाः मरुतोदेवानर्हन्ति पूजयन्ति येच मीळ्हुषः सेक्तॄन् मरुतः स्मत्प्रशस्तं चरंति हविर्भिः प्रचरन्ति यजन्ति। यतएवं अतश्चित् अतोपिकारणात्तानुभयविधान्नोस्मान् आ अभिलक्ष्य वस्यसा वसीयसा वसुमत्तमेन हृदा हृदयेन हे युवानोमरुतः उपाववृध्वम् उपेत्याभिसंभजत॥ १८॥

१८. जो सुन्दर दानवाले यजमान मरुतों की पूजा करते हैं और जो इन सेचन-कर्त्ताओं को हव्य-द्वारा पूजित करते हैं, हम इन दोनों प्रकार के लोगों में समान हैं। हमारे लिए अतीव धनप्रद चित्त से आकर मिलो।

अथैकोनविंशी—

यूनऊषुनविष्ठयावृष्णःपावकाँअभिसोभरेगिरा।
गायगाइवचर्कृषत्॥ १९॥

यूनः। ऊँ इति। सु। नविष्ठया। वृष्णः। पावकान्।
अभि। सोभरे। गिरा। गाय। गाःऽइव। चर्कृषत्॥ १९॥

६

६

हे सोभरे यूनोनित्यतरुणान् वृष्णोवर्षिष्ठान्पावकान् तान्मरुतः नविष्ठया अतिशयेनाभिनवया गिरा वाचा स्तुतिरूपया सु शोभनं अभिगाय अभिष्टुहि। चर्कृषत् पुनःपुनः कृषन् कृषीवलोगाइव सयथा यूनः शक्ताननडुहः स्तौति तद्वत्॥ १९॥

१९. सोभरि, नित्य तरुण, अतीव वृष्टि-दाता और पावक मरुद्गण का अतीव अभिनव वाक्यों-द्वारा, सुन्दर रूप से, उसी प्रकार स्तव करो, जिस प्रकार कृषक अपने बैलों की स्तुति करता है।

साहायेसन्तिमुष्टिहेवहव्योविश्वासुपृत्सुहोतृषु।
वृष्णश्चन्द्रान्नसुश्रवस्तमान्गिरावन्दस्वमरुतोअह॥२०॥३९॥

सहाः। ये। सन्ति। मुष्टिहाऽइव। हव्यः। विश्वासु। पृत्ऽसु।
होतृषु। वृष्णः। चन्द्रान्। न। सुश्रवःऽतमान्। गिरा। वन्दस्व।
मरुतः। अह॥ २०॥ ३९॥

विश्वासु सर्वासु पृत्सु पृतनासु युद्धेषु होतृषु आह्वानशीलेषु योद्धृषु च ये मरुतः सहाः सन्ति अभिभवितारोभवन्ति हव्योह्वातव्योमुष्टिहेव मुष्टिभिः एव हन्तीति मुष्टिहा मल्लः सइव नेतिसम्प्रत्यर्थे न सम्प्रति वृष्णोवर्षितॄन् चन्द्रानाह्लादकान् सुश्रवस्तमान् अतिशयेन शोभनयशस्कान् तान्मरुतःअह मरुतएव गिरा वाचा वन्दस्व स्तुहि॥ २०॥

२०. सारे युद्धों में योद्धा लोगों के आह्वान करने पर मरुद्गण अभिभवकर्त्ता होते हैं। आह्वान के योग्य मल्ल के समान सम्प्रति आह्लादकर, वर्षक तथा अतीव यशस्वी मरुतों की, शोभन वाक्यों के द्वारा स्तुति करो।

॥इति षष्ठस्य प्रथमे एकोनचत्वारिंशोवर्गः॥ ३९॥

गावश्चिद्घासमन्यवःसजात्येनमरुतःसबन्धवः।
रिहतेककुभोमिथः॥ २१॥

गावः। चित्। घ। सऽमन्यवः। सऽजात्येन।
मरुतः। सऽबन्धवः। रिहते। ककुभः। मिथः॥ २१॥

हे समन्यवः समानतेजस्काः समानक्रोधावा हे मरुतः गावश्चित् गावश्च युष्मन्मातृभूताः सजात्येन समानजातित्वेन सबंधवः समानबंधुकाः सत्यः ककुभोदिशः प्राच्यादिदिग्भागान् प्राप्य मिथः परस्परं रिहते लिहन्ति घेतिपूरकः॥ २१॥

२१. समान-तेजस्क मरुतो, एक जाति होने के कारण समान बन्धु होकर गायें चारों ओर आपस में लेहन करती—चाटती—हैं।

अथ द्वाविंशी—

मर्तश्चिद्वोनृतमोरुक्मवक्षसउपभ्रातृत्वमायति ।
अधिनोगातमरुतःसदाहिवआपित्वमस्तिनिध्रुवि ॥ २२ ॥

मर्तः । चित् । वः । नृऽतवः । रुक्मऽवक्षसः । उप । भ्रातृऽत्वम् ।
आ । अयति । अधि । नः । गात । मरुतः ।
सदा । हि । वः । आऽपित्वम् । अस्ति । निऽध्रुवि ॥ २२ ॥

हे नृतवोनृत्यंतः हे रुक्मवक्षसः रोचमानाभरणं रुक्मं वक्षसि येषां ते तथोक्ताः ईदृशा हे मरुतः मर्तश्चित् मनुष्योपि स्तोता वोयुष्माकं भ्रातृत्वं सखित्वं आभिमुख्येन उपायत्युपगच्छति अतोनोस्मान् मनुष्यान्स्तोतॄन् अधिगात अधिब्रूत अस्मत्पक्षपातवचनाभवत । हि यस्मात् वोयुष्माकंआपित्वं बन्धुत्वं निध्रुवि नितरां धारयितव्ये स्तोत्रे यज्ञेवा सदा सर्वदा अस्ति विद्यते तस्मादित्यर्थः ॥ २२ ॥

२२. हे नर्त्तक और वक्षःस्थल में उज्ज्वल आभरण पहननेवाले मरुतो, मनुष्य भी तुम्हारे बन्धुत्व के लिए जाता है; इसलिए हमारे पक्ष से बात करो। सदा धारणीय यज्ञ में तुम्हारा बन्धुत्व सर्वदा ही रहता है।

मरुतोमारुतस्यनआभेषजस्यवहतासुदानवः ।
यूयंसखायःसप्तयः ॥ २३ ॥

मरुतः । मारुतस्य । नः । आ । भेषजस्य । वहत ।
सुऽदानवः । यूयम् । सखायः । सप्तयः ॥ २३ ॥

हे सुदानवः शोभनदानाः हे सखायः समानख्यानाः हे सप्तयः सर्पणशीलामरुतः वोस्माकं मारुतस्यभेषजस्य मरुत्संबंधि भेषजं औषधं यूयं आवहत आनयत ॥ २३ ॥

२३. सुन्दर दानवाले, गमनशील और सखा मरुतो, मरुत्सम्बन्धी (अर्थात् अपना) औषध ले आओ।

अथ चतुर्विंशी—

याभिःसिन्धुमवथयाभिस्तूर्वथयाभिर्दशस्यथाक्रिविम् ।
मयोनोभूतोतिभिर्मयोभुवःशिवाभिरसचद्विषः ॥ २४ ॥

याभिः । सिन्धुम् । अवथ । याभिः । तूर्वथ । याभिः ।
दशस्यथ । क्रिविम् । मयः । नः । भूत । ऊतिऽभिः ।
मयःऽभुवः । शिवाभिः । असचऽद्विषः ॥ २४ ॥

हे मरुतः याभिरूतिभिः सिन्धुं समुद्रमवथ रक्षथ याभिश्च तूर्वथ स्तोतॄणां शत्रून् हिंस्थ तुर्वी हिंसार्थः याभिश्च क्रिविं कूपं तृष्णजे गोतमाय दशस्यथ प्रयच्छथ हे मयोभुवः मयसःसुखस्य भावयितारः असचद्विषः अशक्तशत्रवः शत्रुरहिताः शिवाभिःकल्याणीभिः स्तोत्राभिः सर्वाभिरूतिभीरक्षाभिः नोस्माकं मयः सुखं भूत भावयत उत्पादयत । यद्वा भू प्राप्तौ प्रापयत ॥ २४ ॥

२४. मरुतो, जिससे तुम समुद्र की रक्षा करते हो, जिससे यजमान के शत्रु की हिंसा करते हो और जिससे तृष्णज (गोतम) को कूप प्रदान किया था, हे सुखोत्पादक और शत्रु-शून्य मरुतो, उसी सब प्रकार का कल्याण करनेवाली रक्षा के द्वारा हमारे लिए सुख उत्पन्न करो।

यत्सिन्धौयदसिक्न्यांयत्समुद्रेषुमरुतःसुबर्हिषः ।
यत्पर्वतेषुभेषजम् ॥ २५ ॥

यत् । सिन्धौ । यत् । असिक्न्याम् । यत् । समुद्रेषु ।
मरुतः । सुऽबर्हिषः । यत् । पर्वतेषु । भेषजम् ॥ २५ ॥

हे सुबर्हिषः शोभनयज्ञामरुतः सिंधौ एतत्संज्ञे स्पंदनशीले नदे यद्भेषजं अस्ति यच्चासिक्न्यां यच्च समुद्रेषु जलधिषु यच्च पर्वतेषु भेषजं विद्यते तत्सर्वं भेषजं पश्यन्तइति उत्तरयैकवाक्यता ॥ २५ ॥

२५. सुन्दर यज्ञवाले मरुतो, सिन्धु नद, चिनाव, समुद्र और पर्वत में जो औषध है—

अथ षड्विंशी—

विश्वंपश्यन्तोबिभृथातनूष्वातेनानोअधिवोचत ।
क्षमारपोमरुतआतुरस्यनइष्कर्ताविह्रुतंपुनः ॥ २६ ॥ ४० ॥

विश्वम् । पश्यन्तः । बिभृथ । तनूषु । आ । तेन ।
नः । अधि । वोचत । क्षमा । रपः । मरुतः ।
आतुरस्य । नः । इष्कर्त । विऽह्रुतम् । पुनरिति ॥ २६ ॥ ४० ॥

विश्वं सर्वं पूर्वोक्तं भेषजं पश्यंतोजानन्तोयूयं तनूषु अस्मदीयेषु विषयेषु आविभृथ आहरथ आहृतेनच नोस्मानधिवोचत अधिब्रूत चिकित्सतेत्यर्थः ।अपिच हे मरुतः नोस्माकं मध्ये आतुरस्य रोगिणः रपः पापनामैतत् रपसः पापफलस्य रोगस्य क्षमा क्षान्तिर्यथा भवति तथा विह्रुतं विबाधितं अंगं पुनरिष्कर्त निःशेषेण संपूर्णं कुरुत । निसोनलोपश्छान्दसः । करोतेर्लोटि छान्दसोविकरणस्यलुक् तप्तनप्तनथनाश्चेति तशब्दस्य तबादेशः अतएव उपसर्ग-समुदायोनावगृह्यते ॥ २६॥

२६. तुम वह सब औषध पहचानकर हमारी शरीर की चिकित्सा के लिए ले आओ। मरुतो, हममें से जिस प्रकार रोगी के रोग की शान्ति हो, उसी प्रकार बाधित अंग को जोड़ो (पूरा करो)।

॥ इति षष्ठस्य प्रथमे चत्वारिंशोवर्गः ॥ ४०॥

॥ इत्यष्टमे मंडले तृतीयोनुवाकः ॥ ३ ॥

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सा-यणाचार्येणविरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके प्रथमोध्यायः समाप्तः॥१॥

# ॥श्रीगणेशायनमः॥

यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥

चतुर्थेनुवाके दशसूक्तानि तत्र वयमुत्वेत्यष्टादशर्चं प्रथमं सूक्तं। अत्रानुक्रमणिका—वयमुद्व्यूनान्त्येद्वृचे चित्रस्यदानस्तुतिरिति। ऋषिश्चान्यस्मादिति परिभाषया काण्वः सौभरिर्ऋषिः। काकुभं प्रागाथं हेत्युक्तत्वादस्यापि सूक्तस्यायुजः ककुभो युजः सतोबृहत्यः। अन्त्ये द्वृचे चित्रस्य दानं देवता शिष्टाऐन्द्र्यः। सूक्तविनियोगोलैङ्गिकः। उक्थ्ये ब्राह्मणाच्छंसिशस्त्रे वयमुत्वेति प्रगाथः स्तोत्रियः। सूत्रितञ्च—वयमुत्वामपूर्व्ययोनइदमिदंपुरेति प्रगाथाविति। आभिप्लविकेषूक्थ्येष्वपि तृतीयसवने ब्राह्मणाच्छंसिनोवैकल्पिकोयं स्तोत्रियः प्रगाथः। सूत्रमुक्तम्—अस्मिन्नेव शस्त्रे त्वंनइन्द्राभरेति प्रगाथो यदा स्तोत्रियः तदा वयमुत्वेत्यनुरूपतृचस्याद्या। सूत्रितञ्च—वयमुत्वामपूर्व्ययोनइदमिदंपुरायाहीमइन्दवइति समाहार्योनुरूपइति।

तस्मिन्सूक्ते प्रथमा—

वयमुत्वामपूर्व्यस्थूरंनकच्चिद्भरन्तोवस्यवः।
वाजेचित्रंहवामहे॥ १॥

वयम्। ऊँइति। त्वाम्। अपूर्व्य। स्थूरम्। न। कत्। चित्। भरन्तः। अवस्यवः। वाजे। चित्रम्। हवामहे॥ १॥

हे अपूर्व्य त्रिषु सवनेषु प्रादुर्भूतत्वात् अभिनवेन्द्र भरन्तः सोमलक्षणैरन्नैस्त्वां पोषयन्तो वयं वाजे वाजन्ति गच्छन्ति योद्धारोत्रेति वाजयन्त्यायुधान्यत्रेति वा वाजः संग्रामः तस्मिन् चित्रं चायनीयं विविधरूपं त्वामु त्वामेव अवस्य गोरक्षणमात्मनइच्छन्तः सन्तः हवामहे त्वामाह्वयामः। तत्रदृष्टान्तः—स्थूरंन यथा भरन्तः व्रीह्यादिभिः गृहं पूरयन्तोजनाः वाजे अन्नविषये स्थूरं स्थूलं गुणाधिकं कच्चित् कंचित् मानवं यथाह्वयन्ति तद्वत्॥ १॥

१. अपूर्व इन्द्र, हम तुम्हें गुणी मनुष्य के समान सोम से पोषण करके रक्षा-प्राप्ति की कामना से संग्राम में विविध-रूप-धारी तुम्हें बुलाते हैं।

अथ द्वितीया—

उपत्वाकर्मन्नूतयेसनोयुवोग्रश्चक्रामयोधृषत्।
त्वामिद्ध्यवितारंववृमहेसखायइन्द्रसानसिम्॥ २॥

उप॑ । त्वा॒ । कर्म॑न् । ऊ॒तये॑ । सः । नः॒ । युवा॑ ।
उ॒ग्रः । च॒क्रा॒म॒ । यः । धृ॒षत् । त्वाम् । इत् । हि । अ॒वि॒तार॑म् ।
व॒वृ॒महे॑ । सखा॑यः । इ॒न्द्र॒ । सा॒न॒सिम् ॥ २ ॥

प्रथमपादः प्रत्यक्षकृतः । हे इन्द्र कर्मन् अग्निष्टोमादि कर्माणि ऊतये रक्षणाय त्वा त्वां उपगच्छामः । द्वितीयपादः परोक्षकृतः । यइन्द्रः धृषत् धृष्णोति शत्रूनभिभवति ञिधृषाप्रागल्भ्ये बहुलंछन्दसीति शप्प्रत्ययः । युवा तरुणः उग्रउद्गूर्णः सइन्द्रः नोस्मान् प्रतिचक्राम आगच्छतु । यद्वा चक्राम अस्मानुत्साहयुक्तान् करोतु क्रमतेः सर्गार्थे व्यत्ययेन परस्मैपदम् । परोर्धर्चः प्रत्यक्षकृतः । सखायः समानख्यानाः बंधुभूतावा वयं सानसिं वनषण संभक्तौ संभजनीयं अवितारं सर्वस्य रक्षितारं त्वामित् त्वामेव ववृमहे वृणीमहे संभजामहे । हिः प्रसिद्धौ हियोगादनिघातः ॥ २ ॥

२. इन्द्र, अग्निष्टोम आदि यज्ञों की रक्षा के लिए हम तुम्हारे पास जाते हैं। इन्द्र शत्रुओं के अभिभवकर्त्ता, तरुण और उग्र हैं। वह हमारे अभिमुख आवें। हम तुम्हारे सखा हैं। इन्द्र, तुम भजनीय और रक्षक हो। हम तुम्हें वरण करते हैं।

आयां॑हीमइन्द॒वोश्वं॑पते॒गोपं॑त॒उर्व॑रापते ।
सोमं॑सोमपतेपिब ॥ ३ ॥

आ । या॒हि॒ । इ॒मे । इन्द॑वः । अश्व॑ऽपते । गोऽप॑ते ।
उर्व॑राऽपते । सोम॑म् । सो॒म॒ऽप॒ते॒ । पि॒ब॒ ॥ ३ ॥

अश्वपते अश्वानां स्वामिन् गोपते गवां पालयितः उर्वरापते सर्वसस्याढ्याभूमिरुर्वरा तस्याः पते हे इन्द्र इन्दवः सोमाः इमे भवदीयाः त्वदर्थमभिषुताइत्यर्थः तस्मादायाहि आगच्छ आगत्य सोमपते हे इंद्र सोमं पिब ॥ ३ ॥

३. अश्वपति, गोपालक, उर्वर-भूमि-स्वामी और सोमपति इन्द्र, आओ और सोमपान करो।    अथ चतुर्थी—

व॒यंहि॒त्वा॒बन्धु॑मन्तमब॒न्धवो॒विप्रा॑सइन्द्रयेमि॒म ।
याते॒धामा॑निवृषभ॒तेभि॒राग॑हि॒विश्वे॑भिः॒सोम॑पीतये ॥ ४ ॥

व॒यम् । हि । त्वा॒ । बन्धु॑ऽमन्तम् । अ॒ब॒न्धवः॑ ।
विप्रा॑सः । इ॒न्द्र॒ । ये॒मि॒म । या । ते॒ । धामा॑नि ।
वृ॒ष॒भ॒ । तेभिः॑ । आ । ग॒हि॒ । विश्वे॑भिः । सोम॑ऽपीतये ॥ ४ ॥

हे इन्द्र अबंधवः बन्धुरहिताः विप्रासः मेधाविनोवयं बन्धुमन्तं बन्धुभिर्देवैरंगिरोभिर्वा तद्वंतं त्वा त्वां हिरवधारणे त्वामेव येमिम बन्धुत्वेन नियच्छाम यच्छतेर्लिटिरूपम् । तथा सति हे वृषभ कामानां वर्षितरिन्द्र ते तव या यानि धामानि शरीराणि तेजांसि वा विद्यन्ते तेभिस्तै-र्विश्वेभिः सर्वैर्धामभिः सह सोमपीतये सोमपानार्थमागहि आगच्छ ॥ ४ ॥

४. हम विप्र बन्धु-हीन हैं। तुम बन्धुवाले हो। हम तुमसे बन्धुता करेंगे। काम-वर्षक इन्द्र, तुम्हारे जो शारीरिक तेज हैं, उनके साथ सोम-पान के लिए आओ।

सीदन्तस्तेवयोयथागोश्रीतेमधौमदिरेविवक्षणे ।
अभित्वामिन्द्रनोनुमः ॥ ५ ॥ १ ॥

सीदन्तः । ते । वयः । यथा । गोऽश्रीते । मधौ ।
मदिरे । विवक्षणे । अभि । त्वाम् । इन्द्र । नोनुमः ॥ ५ ॥ १ ॥

हे इन्द्र गोश्रीते श्रीङ् पाके गोविकारे दधिपयसी गोशब्देनोच्येते दध्ना पयसाच श्रीतेन श्रयणद्रव्येण मिश्रिते मदिरे मदकरे विवक्षणे स्वर्गप्रापणशीले ते त्वदीये मधौ सोमे सीदन्तो-निवसन्तः । सदने दृष्टान्तः—वयोयथा पक्षिणोयथैकत्रसंघीभूय तिष्ठन्ति तद्वत् सीदंतोवयं त्वामभि आभिमुख्येन नोनुमः पुनःपुनर्भृशंवा स्तुमः ॥ ५ ॥

५. इन्द्र, दुग्धादि मिश्रित, मदकर और स्वर्ग लाभ के कारण तुम्हारे सोम में हम पक्षियों के सदृश रहकर तुम्हारी ही स्तुति करते हैं।

॥ इति षष्ठस्य द्वितीये प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

अच्छाचत्वैनानमसावदामसिकिंमुहुश्चिद्विदीधयः ।
सन्तिकामासोहरिवोदुदिष्ट्वंस्मोवयंसन्तिनोधियः ॥ ६ ॥

अच्छ । च । त्वा । एना । नमसा । वदामसि । किम् ।
मुहुः । चित् । वि । दीधयः । सन्ति । कामासः । हरिऽवः ।
ददिः । त्वम् । स्मः । वयम् । सन्ति । नः । धियः ॥ ६ ॥

हे इन्द्रअच्छाचअपिच आभिमुख्येनवा एना एनेन नमसा स्तोत्रेण हविर्लक्षणेनान्नेनवा स-ह त्वा त्वां वदामसि अभिवदामः चवायोगे प्रथमेति ननिघातः । त्वंतु मुहुश्चित् मुहुर्मुहुः किं कस्माद्धेतोर्विदीधयः विपूर्वोदीधितिश्चिंतने विचिंतयसि दीधीङ् दीप्तिदेवनयोः व्यत्ययेन परस्मै-पदम् लुगभावश्च । किमर्थं यूयं वदथेतिचेत् हरिवः हरिताश्ववन् हे इन्द्र अस्माकं कामासः

पुत्रपश्वादिविषयाः कामाः सन्ति कामाः सन्तु । अहं नप्रयच्छामीतिचेत् त्वंतु ददिः धनादिदाता खलु तस्माद्वयं त्वत्सन्निधौ स्मोभवामः । किञ्च नोस्माकं धियः कर्माणिच तवसमीपे सन्ति तिष्ठन्ति । ततोधनादिलाभार्थं त्वां वदामइत्यर्थः ॥ ६॥

६. इन्द्र, इस स्तोत्र के साथ तुम्हारे सामने तुम्हारी ही स्तुति करेंगे। तुम बार-बार क्यों चिन्ता करते हो ? हरि अश्वोंवाले इन्द्र, हमें पुत्र-पशु आदि की अभिलाषा है। तुम धनादि के दाता हो। हमारे कर्म तुम्हारे ही पास हैं।

नूत्नाइदिन्द्रतेवयमूतीअभूमनहिनूतेअद्रिवः ।
विद्मापुरापरीणसः ॥ ७ ॥

नूत्नाः । इत् । इन्द्र । ते । वयम् । ऊती । अभूम ।
नहि । नु । ते । अद्रिऽवः । विद्म । पुरा । परीणसः ॥ ७ ॥

हे इन्द्र ते तव उती उत्यै रक्षणे वयं नूत्नाइत् नूतनाएव अभूम भवामः । अद्रिवः वज्रिन् हे इन्द्र पुरा पूर्वं त्वां परीणसः सुब्व्यत्ययः परीणसं परितोव्याप्तं महांतं वेति नहिविद्म नजानीमः । नु सम्प्रति ते त्वां महान्तमिति जानन्तोवयं भवता रक्ष्याइति ॥ ७ ॥

७. इन्द्र, तुम्हारे रक्षण में हम नये ही रहेंगे। वज्रधर इन्द्र, पहले हम तुम्हें सर्वत्र व्याप्त नहीं जानते थे। इस समय तुम्हें जानते हैं।

विद्मासखित्वमुतशूरभोज्य१मातेतावज्रिन्नीमहे ।
उतोसमस्मिन्नाशिशीहिनोवसोवाजेसुशिप्रगोमति ॥ ८॥

विद्म । सखिऽत्वम् । उत । शूर । भोज्यम् । आ । ते । ता ।
वज्रिन् । ईमहे । उतो इति । समस्मिन् । आ । शिशीहि ।
नः । वसो इति । वाजे । सुऽशिप्र । गोऽमति ॥ ८ ॥

शूर शत्रूणां शातयितर्बलवन् हे इन्द्र सखित्वं तव सखिभावं वयं विद्म जानीमः । उतापिच भोज्यमभ्यवहारार्थं धनंच विद्म । वज्रिन् हे इन्द्र ते त्वदीये ता ते सख्यधने आ आभिमुख्येन ईमहे वयं याचामहे । उतो अपिच हे वसो सर्वस्यवासयितः सुशिप्र शोभनहनो यद्वा शोभनशिरस्त्राण हे इन्द्र गोमति गवादियुक्तेसमस्मिन् सर्वस्मिन् वाजे अन्ने नोस्मानाशिशीहि तीक्ष्णीकुरु । उपलक्षणं प्रदानेनास्मान्प्रसिद्धान्कुर्वित्यर्थः । शिञ् निशाने इत्यस्यछान्दसः श्लुः ॥ ८ ॥

८. बली इन्द्र, हम तुम्हारी मैत्री जानते हैं। तुम्हारा भोज्य भी जानते हैं। वज्री इन्द्र, हम तुमसे मैत्री और भोज्य (धन) मांगते हैं। सबको निवास देनेवाले और सुन्दर शिरस्त्राणवाले इन्द्र, गौ आदि से युक्त सारे धनों में हमें तीक्ष्ण करो।

उक्थ्ये ब्राह्मणाच्छंसिशस्त्रे योनइदमिदमित्ययं प्रगाथोनुरूपः । योनइदमिदंपुरेति प्रगाथौ सर्वाः ककुभः इतिसूत्रितम् । आभिप्लविकेषूक्थ्येष्वपि ब्राह्मणाच्छंसिशस्त्रेऽयं वैकल्पिकोनुरूपः आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे त्वंनइन्द्राभरेतिप्रगाथे स्तोत्रियेसति अनुरूपतृचः समाहार्यः तत्रेयं योनइदमिदमितिद्वितीया । सूत्रितंच—योनइदमिदंपुरायाहीमइन्द्रवइति समाहार्योनुरूपइति ।

तस्मिन्प्रगाथे प्रथमा सूक्ते नवमी—

योनइदमिदंपुराप्रवस्यंआनिनायतमुंवस्तुषे ।
सखांयइन्द्रमूतयें ॥ ९ ॥

यः । नः । इदम्ऽइदम् । पुरा । प्र । वस्यः । आऽनिनायं ।
तम् । ऊँ इतिं । वः । स्तुषे । सखांयः । इन्द्रम् । ऊतयें ॥ ९ ॥

सखायः समानख्याना हे ऋत्विग्यजमानाः यइन्द्रः पुरा पूर्वमिदमिदं दर्शनीयतया विद्यमानं वस्यः वसीयः वसोरीयसुनीकारलोपश्छान्दसः प्रशस्तं वसु नोस्मान् प्राणिनाय प्रकर्षेणानीतवान् । तमु तमेव धनानामानेतारमिन्द्रं वोयुष्माकं धनलाभार्थं ऊतये रक्षणायच स्तुषे सोभरिरहं स्तौमि ॥ ९॥

९. मित्र ऋत्विको और यजमानो, जो इन्द्र, पूर्व समय में, यह सारा धन हमारे लिए ले आये थे, उन्हीं इन्द्र की, तुम्हारी रक्षा के लिए, मैं स्तुति करता हूँ ।

अथ दशमी—

हर्यश्वंसत्पतिंचर्षणीसहंसहिष्मायोअमन्दत ।
आतुनःसवंयतिगव्यमश्व्यंस्तोतृभ्योमघवाशतम् ॥ १० ॥२॥

हरिंऽअश्वम् । सत्ऽपतिम् । चर्षणिऽसहम् । सः । हि ।
स्म । यः । अमन्दत । आ । तु । नः । सः । वयति ।
गव्यम् । अश्व्यम् । स्तोतृऽभ्यः । मघऽवा । शतम् ॥ १० ॥ ॥ २ ॥

हर्यश्वं हरितवर्णाश्वोपेतं सत्पतिं स्वप्रकाशाधिक्येन सतां नक्षत्राणां पतिं सतां श्रेष्ठानां पतिंवा चर्षणीसहं चर्षणीनां शत्रुभूतानां मनुष्याणामभिभवितारं सहिष्म सखलु जनः स्तौति । योजनः अमन्दत ततोलब्धधनःसन् तृप्तोभवति सएनं तुष्टूषति । एवंसति मघवा धनवान् सइन्द्रः

शतं गव्यमश्व्यमनेकं गवाश्वसंघं स्तोतृभ्योनोस्मभ्यं तु क्षिप्रमावपति आप्रापयतु। वीगत्यादिषु अस्माल्लेटयडागमः ततोलब्धगवादिकावयं चैनं स्तुमइति ॥ १० ॥

१०. हरितवर्ण अश्ववाले, सज्जनों के पति, शत्रुओं को दबानेवाले इन्द्र की स्तुति वही मनुष्य करता है, जो तृप्त होता है। वे धनी इन्द्र सौ गायें और सौ अश्व हम स्तोताओं के लिए लाये थे।

॥ इति षष्ठस्य द्वितीये द्वितीयोवर्गः ॥ २ ॥

त्वयाहस्विद्युजावयंप्रतिश्वसन्तंवृषभब्रुवीमहि।
संस्थेजनस्यगोमतः ॥ ११ ॥

त्वया। ह। स्वित्। युजा। वयम्। प्रति। श्वसन्तम्।
वृषभ। ब्रुवीमहि। सम्ऽस्थे। जनस्य। गोऽमतः ॥ ११ ॥

वृषभ वर्षितः हे इन्द्र गोमतोगवादियुक्तस्य जनस्य संस्थे स्थाने युद्धे श्वसन्तं अस्मान् प्रति क्रोधातिशयेन श्वासकारिणं शत्रुं युजा सहायेन त्वया ह स्वित् त्वयैव खलु वयं प्रतिब्रुवीमहि प्रतिवचनं कुर्मः निराकरिष्यामइत्यर्थः ॥ ११ ॥

११. अभीप्सित फलदाता इन्द्र, तुम्हें सहायक पाकर गोयुक्त मनुष्यों के साथ संग्राम में अतीव क्रुद्ध शत्रु को हम निवारित करेंगे।

जयेमकारेपुरुहूतकारिणोभितिष्ठेमदूढ्यः।
नृभिर्वृत्रंहन्यामशूशुयामचावेरिन्द्रप्रणोधियः ॥ १२ ॥

जयेम। कारे। पुरुऽहूत। कारिणः। अभि।
तिष्ठेम। दुःऽध्यः। नृऽभिः। वृत्रम्। हन्याम।
शूशुयाम। च। अवेः। इन्द्र। प्र। नः। धियः ॥ १२ ॥

पुरुहूत पुरुभिर्बहुभिराह्वातव्य हे इन्द्र अस्माकं विविधाः शत्रवः उपद्रवकारिणः बाधां मनसा स्मरंतश्चेति। तत्र कारिणः हिंसां कुर्वन्तः शत्रून् कारे कीर्यंते आयुधान्यत्रेति कारोयुद्धं तस्मिन् तान्वयं जयेम। दूढ्यः दुर्धियः पापबुद्धीनपि अभि तिष्ठेम अभितः स्थास्यामः। किंच वृत्रं गवामारवकं शत्रुं नृभिः आयुधनेतृभिर्मरुद्भिः सह हन्याम हिंस्याम हत्वा शूशुयामच शत्रुराहित्येन पुत्रपौत्रैरग्निष्टोमादिकर्मभिश्च वर्धयेमहि। यद्वा श्वयतिरत्रान्तर्णीतण्यर्थः शत्रुभ्योबाधाभावात् सोमलक्षणैरन्नैस्त्वां वर्धयेम ततस्त्वंनोस्माकं धियः कर्माणि प्रावः प्रकर्षेण रक्ष ॥ १२ ॥

१२. बहुतों के द्वारा बुलाने योग्य इन्द्र, हम संग्राम में हिंसकों को जीतेंगे। हम पाप-बुद्धियों को हरावेंगे। मरुतों की सहायता से हम वृत्र का वध करेंगे। हम अपने कर्म बढ़ावेंगे। इन्द्र, हमारे सारे कर्मों की रक्षा करो।

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे अभ्रातृव्यइत्यादिकौ द्वौ प्रगाथौ वैकल्पिकौ स्तोत्रियानुरूपौ सूत्रितश्च—अभ्रातृव्योअनात्वंमातेअमाजुरोयथेति ।

तयोः प्रगाथयोः प्रथमा सूक्ते त्रयोदशी—

अभ्रातृव्योअनात्वमनापिरिन्द्रजनुषासनादसि ।
युधेदापित्वमिच्छसे ॥ १३ ॥

अभ्रातृव्यः । अना । त्वम् । अनापिः । इन्द्र । जनुषा ।
सनात् । असि । युधा । इत् । आपिऽत्वम् । इच्छसे ॥ १३ ॥

हे इन्द्र त्वं जनुषा जन्मनैव अभ्रातृव्यः । व्यन्त्सपत्नइति व्यन्प्रत्ययः । सपत्नरहितः अना अनेतृकः ऋतश्छन्दसीतिकपः प्रतिषेधः अनियन्तृकइत्यर्थः अनापिः बन्धुवर्जितश्च सनादसि चिरादेव भ्रातृव्यादिवर्जितोसि यच्च त्वं आपित्वं बान्धवमिच्छसे इच्छसि तत्र युधेत् युद्धेनैव युद्धं कुर्वन्नेव स्तोतॄणां सखाभवसीति ॥ १३ ॥

१३. इन्द्र, जन्म-काल से ही तुम शत्रु-शून्य हो और चिर काल से बन्धु-हीन हो। जो मैत्री तुम चाहते हो, उसे केवल युद्ध-द्वारा प्राप्त करते हो।

नकीरेवन्तंसख्यायविन्दसेपीयन्तितेसुराश्वः ।
यदाकृणोषिनदनुंसमूहस्यादित्पितेवहूयसे ॥ १४ ॥

नकिः । रेवन्तम् । सख्याय । विन्दसे । पीयन्ति ।
ते । सुराश्वः । यदा । कृणोषि । नदनुम् । सम् । ऊहसि ।
आत् । इत् । पिताऽइव । हूयसे ॥ १४ ॥

हे इन्द्र रेवन्तं धनवन्तं केवलधनवन्तं दानादिरहितमयष्टारमाढ्यं मानवं सख्याय सखिभावाय नकिर्विंदसे नभजसे नाश्रयसीत्यर्थः ।अयष्टारोजनाः किं सन्तीत्यतआह—सुराश्वः टुओश्विगतिवृद्ध्योः सुरया वृद्धाः तद्वत् प्रमत्ताः नास्तिकाः ते त्वां पीयंति पीयतिर्हिंसाकर्मा हिंसन्ति तान्नाश्रयसीत्यर्थः । यदा त्वं नदनुं नदअव्यक्ते शब्दे यं स्तोतारं कृणोषि मदीयोयमिति यदा भावयसि तदानीं समूहयसि धनादिकं तस्मै वहसि । आदित् अनन्तरमेव तेन लब्धधनेन स्तोत्रा पितेव पालयिता जनकइव हूयसे स्तुतिभिराहूयसे स्तूयसइत्यर्थः ॥ १४ ॥

१४. इन्द्र, बन्धुता के लिए केवल धनी (अयाज्ञिक) मनुष्य को क्यों नहीं आश्रित करते ? इसलिए कि अयाज्ञिक मनुष्य सुरा (मद्य) पान करके प्रमत्त होते और तुम्हारी हिंसा करते हैं। जिस समय तुम स्तोता को अपना समझकर धन आदि देते हो, उस समय वह तुम्हें पिता समझकर बुलाता है।

अथ पंचदशी—

मातेंअमाजुरोंयथामूरासंइन्द्रसख्येत्वावंतः ।
निषंदामसचांसुते ॥ १५ ॥ ३ ॥

मा । ते । अमाऽजुरंः । यथा । मूरासंः । इन्द्र ।
सख्ये । त्वाऽवंतः । नि । सदाम । सचां । सुते ॥ १५ ॥ ३ ॥

हे इन्द्र ते तव स्वभूतावयं तथा माभूम माभवाम । यथा त्वावतः त्वत्सदृशस्य देवस्य सख्ये मूरासोमूराः सोमप्रदानादिन्द्रेणसह सख्यं कुर्मइत्येतदजानन्तोमूढाजनाः अमाजुरः सोमाभिषवमकुर्वन्तस्ते गृहैः पुत्रैः पौत्रैर्धनादिभिश्च सह जीर्णाभवन्ति । तथा वयममाजुरोनभवाम कथं सचा ऋत्विग्भिः सह सुतेभिषुते सोमे वयंतु निषदाम निवसाम तस्मात्सोमदानेन त्वया सह सखिभावंकुर्मइत्यर्थः ॥ १५ ॥

१५. इन्द्र, तुम्हारे समान देवता के बन्धुत्व से वञ्चित होकर हम सोमाभिषव-शून्य न होने पावें । सोमाभिषव होने पर हम एकत्र उपवेशन करेंगे ।

॥ इति षष्ठस्य द्वितीये तृतीयोवर्गः ॥ ३ ॥

मातेंगोदत्रनिरंरामराधंसइन्द्रमातेंगृहामहि ।
दृह्ळाचिंदर्यःप्रमृंशाभ्याभंरनतेंदामानंआदभें ॥ १६ ॥

मा । ते । गोऽदत्र । निः । अराम । राधंसः । इन्द्रं ।
मा । ते । गृहामहि । दृह्ळा । चित् । अर्यः । प्र ।
मृश । अभि । आ । भर । न । ते । दामानंः । आऽदभें ॥ १६ ॥

हे गोदत्र स्तोतृणां गवादिदानशील हे इन्द्र ते तव स्वभूतावयं राधसोधनात् मानिरराम मानिर्गमाम अर्तेर्लुङि सर्तिशास्त्यर्तिभ्यश्चेत्यङादेशः ऋदृशोङीतिगुणः सर्वदा त्वत्तोधनाढ्याभवाम । किञ्च ते तव स्वभूतावयं धनं प्रयच्छाम कस्माच्चित् मागृहामहि तस्मादन्यंन गृह्णीमः । अपितु त्वत्तएव धनंगृह्णीमइत्यर्थः । ग्रहेर्लुङि बहुलंछन्दसीतिशः ङित्वात्सम्प्रसारणं । अर्यःस्वामी त्वं दृढाचित् दृढान्यपि अविनश्वराणि धनानि प्रमृश प्रकर्षेणास्मासु स्थापय । किञ्च अभ्याभिमुख्येन आभर धनादिभिः समन्तादस्मान् पोषय ते तव दामानः तानिदानानि नादभे नकैश्चिदप्यादंभितुं शक्यन्ते तस्माद्दानादियुक्तानस्मान् कुर्वित्यर्थः ॥ १६ ॥

१६. गोदाता इन्द्र, हम तुम्हारे हैं । हम धन-शून्य न होने पावें । हम दूसरे के पास से धन न ग्रहण करें । तुम स्वामी हो । हमारे पास तुम दृढ़ धन दो । तुम्हारे दान की कोई हिंसा नहीं कर सकता ।

अथ सप्तदशी—

इन्द्रो॑ वा घे॒दिय॑न्म॒घं सर॑स्वती वा सु॒भगा॑ द॒दिर्वसु॑ ।
त्वं वा॑ चित्र दा॒शुषे॑ ॥ १७ ॥

इन्द्रः॑ । वा॒ । घ॒ । इत् । इय॑त् । म॒घम् । सर॑स्वती ।
वा॒ । सु॒ऽभगा॑ । द॒दिः । वसु॑ । त्वम् । वा॒ । चि॒त्र । दा॒शुषे॑ ॥ १७ ॥

अत्र चित्रस्य दानं स्तौति चित्रोनामराजा सरस्वतीतीरे इन्द्रार्थं यागमकृत तत्र मन्त्रद्रष्टाऋषिः बहुधनलाभान्मत्यमेतावद्धनं कोवाप्रायच्छदिति विकल्पयते । दाशुषे इन्द्राय हवींषि दत्तवते मत्यं इन्द्रोवाघेत् इन्द्रएव किंखल्वेतावन्मघं मंहनीयं धनं ददिः प्रायच्छत् यद्वा सुभगा शोभनधना सरस्वती नदी वसु धनं ददिः किं प्रायच्छत् । अथवा चित्रएतन्नामक हे राजन् त्वं वा एतावद्धनं मत्यं प्रादाइति ॥ १७॥

१७. मैं हव्यदाता हूँ । क्या इन्द्र ने मुझे (सोभरि को) यह दान दिया है ? अथवा शोभन-धना सरस्वती ने दिया है ? अथवा हे चित्र (चित्र राजा नामक यजमान), तुमने ही दिया है ?

चि॒त्र इद्राजा॑ राज॒का इद॑न्य॒के य॒के सर॑स्वती॒मनु॑ ।
प॒र्जन्य॑ इव त॒तन॒द्धि वृ॒ष्ट्या स॒हस्र॑म॒युता॒ दद॑त् ॥ १८ ॥ ४ ॥

चित्रः॑ । इत् । राजा॑ । रा॒ज॒काः । इत् । अ॒न्य॒के । य॒के ।
सर॑स्वतीम् । अनु॑ । प॒र्जन्यः॑ऽइव । त॒तन॑त् । हि ।
वृ॒ष्ट्या । स॒हस्र॑म् । अ॒युता॑ । दद॑त् ॥ १८ ॥ ४ ॥

अनया चित्रएवप्रादादिति निश्चयमकार्षीत् । सहस्रं सहस्रसंख्याकधनं अयुता अयुतानि च धनानिच ददत् प्रयच्छन् चित्रइत् चित्रनामैव राजाअन्यके यके अल्पइत्यर्थेकः अल्पायेन्येराजकाइत् राजानएव सरस्वतीमनु सरस्वत्यास्तीरे वर्तन्ते तान् सर्वान् याचमानानयमेव चित्रोराजा ततनत् धनैस्तनोति तनोतेर्लुङिचङिरूपम् चङ्यन्यतरस्यामितिस्वरः । तत्रदृष्टान्तः—पर्जन्यइव यथापर्जन्यः पृथिवीं वृष्ट्यातनोति प्रीणयति तथायं चित्रः सर्वान्धनैः प्रीणयतीत्यर्थः ॥ १८ ॥

१८. जैसे मेघ वृष्टि-द्वारा पृथिवी को प्रसन्न करता है, वैसे ही सरस्वती नदी के तीर पर रहनेवाले अन्य राजाओं को सहस्र और अयुत (दश-सहस्र) धन देकर चित्र राजा उन्हें प्रसन्न करते हैं ।

॥ इति षष्ठस्य द्वितीये चतुर्थो वर्गः ॥ ४ ॥

ओत्यमह्वइत्यष्टादशर्चं द्वितीयं सूक्तं काण्वस्य सोभरेरार्षं आद्यातृतीयापञ्चम्योबृहत्यः

द्वितीयान्तुर्थीषष्ठचः सतोबृहत्यःसप्तमीबृहती अष्टम्यनुष्टुप् नवमीदशमी द्वे ज्योतिषी काकुभंप्रगाथं हेत्युकस्यानुवृत्तेः शिष्टाश्चत्वारः काकुभाःप्रगाथाः अश्विनौ देवता। तथाचानुक्रान्तम्—ओत्यमाश्विनं त्रिप्रगाथादि बृहत्यनुष्टुबेकादशयाद्येककुम्मध्ये ज्योतिषीइति । प्रातरनुवाके आश्विने क्रतौ बार्हतेछन्दस्याश्विनशस्त्रे चाद्याः सप्तर्चः सूत्रितंच—ओत्यमह्वआरथमितिसप्तेति ।

तत्र प्रथमा—

ओत्यमंह्वआरथंमद्यादंसिष्ठमूतयें ।
यमंश्विनासुहवारुद्रवर्तनीआसूर्यायैंतस्थथुः ॥ १ ॥

ओ इति । त्यम् । अह्वे । आ । रथंम् । अद्य । दंसिष्ठम् ।
ऊतयें । यम् । अश्विना । सुऽहवा ।
रुद्रवर्तनी इति रुद्रऽवर्तनी । आ । सूर्यायैं । तस्थथुः ॥ १ ॥

हे अश्विनौ दंसिष्ठमत्यंतदर्शनीयं यद्वा अतिशयेन शत्रूणामुपक्षपयितारं त्यं तं युवयोरथं ऊतये रक्षणाय अद्यास्मिन्यागदिने अह्वे सोभरिरहमाह्वयामि सुहवा सुहवौ स्तोत्रशस्त्रादिभिः शोभनाह्वानौ रुद्रवर्तनी संग्रामे रोदनशीलमार्गौ यद्वा स्तूयमानमार्गौ हे अश्विनौ सूर्यायै सूर्यां स्वयंवरे वरयितुं यं रथं युवां आतस्थथुः आश्रयथः तं रथमाह्वयामीति ॥ १ ॥

१. अश्विद्वय, तुम सुन्दर आह्वानवाले और स्तूयमान मार्गवाले हो। सूर्या को वरण करने के लिए तुम लोग जिस रथ पर चढ़े थे, आज, रक्षा के लिए, उसी दर्शनीय रथ को बुलाता हूँ।

पूर्वापुषंसुहवंपुरुस्पृहंभुज्युंवाजेषुपूर्व्यम् ।
सचनावन्तंसुमतिभिःसोभरेविद्वेषसमनेहसम् ॥ २ ॥

पूर्वऽआपुषम् । सुऽहवम् । पुरुऽस्पृहम् । भुज्युम् ।
वाजेषु । पूर्व्यम् । सचनाऽवन्तम् । सुमतिऽभिः ।
सोभरे । विऽद्वेषसम् । अनेहसम् ॥ २ ॥

हे सोभरे सुमतिभिः कल्याणीभिः स्तुतिभिः अश्विनोरथं स्तुहि । किं विशिष्टं पूर्वापुषं पूर्वेषां स्तोतृणां धनादिदानेन पोषकं सुहवं युद्धेषु शोभनाह्वानं पुरुस्पृहं बहुभिः स्पृहणीयं भुज्युं भुजपालने सर्वस्यरक्षकं वाजेषु पूर्व्यं संग्रामेष्वग्रतोगंतारं सचनावन्तं सर्वैर्भजनवन्तं विद्वेषसं शत्रूणां विशेषेणद्वेष्टारं अनेहसं कैश्चिदप्यनुपद्रवं पापरहितं वा रथं स्तुहीत्यन्वयः ॥ २ ॥

२. सोभरि, कल्याणवाहिनी स्तुतियों के द्वारा इस रथ की स्तुति करो। यह रथ प्राचीन स्तोताओं का पोषक, युद्ध में शोभन आह्वानवाला, बहुतों के द्वारा अभिलषणीय, सबका रक्षक, संग्राम में अग्रगामी, सबका भजनीय, शत्रुओं का विद्वेषी और पाप-रहित है।

अथ तृतीया–

इहत्यापुरुभूतमादेवानमोभिरश्विना ।
अर्वाचीनास्ववसेकरामहेगन्तारादाशुषोगृहम् ॥ ३ ॥

इह । त्या । पुरुऽभूतमा । देवा । नमःऽभिः ।
अश्विना । अर्वाचीना । सु । अवसे ।
करामहे । गन्तारा । दाशुषः । गृहम् ॥ ३ ॥

पुरुभूतमा अतिशयेन बहूनां शत्रूणां भावयितारौ देवा देवौ द्योतनशीलौ स्तोतव्यौ वा दाशुषः हविर्दत्तवतोयजमानस्य गृहं प्रति गंतारा गमनशीलौ त्या तौ अश्विना अश्विनौ युवां इहास्मिन्कर्मणि अवसे रक्षणाय नमोभिर्हविर्भिःस्तोत्रैर्वा अर्वाचीना अर्वाचीनौ अभिमुखमागच्छन्तौ सुकरामहे वयं सुष्ठु कुर्मः ॥ ३ ॥

३. शत्रुओं के विजेता, प्रकाशमान और हव्यदाता यजमान के गृहपति अश्विद्वय, इस कर्म में रक्षा के लिए नमस्कार-द्वारा हम तुम्हें अपने अभिमुख करेंगे ।

युवोरथस्यपरिचक्रमीयतईर्मान्यद्वामिषण्यति ।
अस्माँअच्छासुमतिर्वांशुभस्पतीआधेनुरिवधावतु ॥ ४॥

युवोः । रथस्य । परि । चक्रम् । ईयते । ईर्मा ।
अन्यत् । वाम् । इषण्यति । अस्मान् । अच्छ । सुऽमतिः ।
वाम् । शुभः । पती इति । आ । धेनुःऽइव । धावतु ॥ ४ ॥

हे अश्विनौ युवोः युवयोरथस्यैकंचक्रं परितोद्यां ईयते गच्छति अन्यदवस्थितं रथस्य चक्रमीर्मा ईर्मौ सर्वस्यान्तर्यामितया प्रेरकौ यद्वा उदकस्य प्रेरयितारौ वां युवामिषण्यति गच्छति । उक्तार्थेमन्त्रांतरं–न्य१घ्न्यस्वमूर्धनीति[1] । हे शुभस्पती उदकस्य पालयितारौ हे अश्विनौ वां युवयोः सुमतिः कल्याणीमतिरच्छाभिमुख्येन अस्मानाधावतु आगच्छतु । तत्रदृष्टान्तः– धेनुरिव यथानवप्रसूतागौर्वत्सं प्रति पयोदानार्थमागच्छति तद्वद्युवयोः सुमतिरस्मान्प्रति धनादिप्रदानार्थमागच्छतु ॥ ४ ॥

४. अश्विद्वय, तुम्हारे रथ का एक चक्र स्वर्गलोक तक जाता है और दूसरा तुम्हारे साथ जाता है । सारे कार्यों के प्रेरक और जलपति अश्विनीकुमारो, तुम्हारी मंगलमयी बुद्धि, धेनु के समान, हमारे पास आवे ।

---

१ ऋ० सं० १. २. ३१ ।

अथ पञ्चमी—

रथोयोवांत्रिवन्धुरोहिरण्याभीशुरश्विना।
परिद्यावांपृथिवीभूषतिश्रुतस्तेनंनासत्यागतम् ॥ ५ ॥ ५॥

रथः। यः। वाम्। त्रिऽवन्धुरः। हिरण्यऽअभीशुः।
अश्विना। परि। द्यावांपृथिवी इति।
भूषति। श्रुतः। तेन। नासत्या। आ। गतम् ॥ ५॥ ५॥

हे अश्विना अश्विनौ त्रिवंधुरः वंधुरं सारथिस्थानं त्रिप्रकारवंधुरोपेतः यद्वा द्वे ईषे तन्मध्ये रज्जुसज्जनार्थंकोदंडः एतेत्रयोवंधुरशब्देनोच्यन्ते त्रिवंधुरयुक्तः हिरण्याभीशुः हिरण्मयाश्वादिरज्जुः वां युवयोर्योरथः श्रुतः सर्वत्रप्रसिद्धः सन् द्यावापृथिवी द्यावापृथिव्यौ परिभूषति स्वबलेन परिभवति भवतेर्लेटि सिप्यडागमः। यद्वा परितः स्वप्रकाशेनालंकरोति हे नासत्या नासत्यौ तेन पूर्वोक्तेन रथेनागतम् आगच्छतम् ॥ ५ ॥

५. अश्विद्वय, तीन प्रकार के सारथि-स्थानोंवाला और सोने का लगामवाला तुम्हारा प्रसिद्ध रथ द्यावापृथिवी को अपने प्रकाश से अलंकृत करता है। नासत्यद्वय तुम लोग पूर्वोक्त रथ से आओ।

॥ इति षष्ठस्य द्वितीये पञ्चमोवर्गः ॥ ५ ॥

दशस्यन्तामनवेपूर्व्यंदिवियवंवृकेणकर्षथः।
तावांमद्यसुमतिभिःशुभस्पतीअश्विनाप्रस्तुवीमहि ॥ ६॥

दशस्यन्ता। मनवे। पूर्व्यम्। दिवि। यवम्।
वृकेण। कर्षथः। ता। वाम्। अद्य। सुमतिऽभिः।
शुभः। पती इति। अश्विना। प्र। स्तुवीमहि ॥ ६ ॥

हे अश्विनौपूर्व्यं पुरातनं दिवि द्युलोके स्थितमुदकं मनवे एतन्नामकायराज्ञे दशस्यन्तादशस्यन्तौ प्रयच्छन्तौ युवां वृकेण लांगलेन। वृकोलांगलंभवति विकर्तनादितियास्कः[1]। तेन लांगलेन यवं यवनामकंधान्यं कर्षथः पुनश्च तस्मै विलेखनं कुरुथः। शुभस्पती उदकस्य पालयितारौ हे अश्विना अश्विनौ ता पूर्वोक्तलक्षणयुक्तौ वां युवां अद्यास्मिन्यज्ञदिने सुमतिभिः शोभनाभिः स्तुतिभिः प्रकर्षेण स्तुवीमहि वयं स्तुमः ॥ ६ ॥

६. अश्विद्वय, द्युलोक (स्वर्ग) में स्थित प्राचीन जल को मनु के लिए देकर तुमने लाङ्गल (हल) से यव (जौ) की खेती की थी या मनुष्यों को कृषि-कार्य की शिक्षा दी थी। जल-पालक अश्विद्वय, आज सुन्दर स्तुति द्वारा हम तुम्हारी स्तुति करते हैं।

---

1 नि० ६. २६.।

अथ सप्तमी—

उप॑नोवाजिनीवसूयातमृ॒तस्य॑प॒थिभि॑ः ।
येभि॑स्तृ॒क्षिं॑वृषणात्रासदस्यवं॑म॒हेक्ष॒त्राय॒जिन्व॑थः ॥ ७ ॥

उप॑ । नः॒ । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । या॒तम् ।
ऋ॒तस्य॑ । प॒थिऽभि॑ः । येभि॑ः । तृ॒क्षिम् । वृ॒ष॒णा॒ ।
त्रा॒स॒द॒स्य॒वम् । म॒हे । क्ष॒त्राय॑ । जिन्व॑थः ॥ ७ ॥

हे वाजिनीवसू अन्नधनवन्तौ अन्नमेवधनं ययोस्तौ अश्विनौ ऋतस्य सत्यभूतस्य यज्ञ-स्य पथिभिर्मार्गैर्नोस्मानुपयातं आगच्छतं वृषणा वृषणौ धनानां सेक्तारौ हे अश्विनौ त्रासद-स्यवं त्रसदस्योः पुत्रं तृक्षिमेतन्नामकं येभिर्यैर्यज्ञमार्गैर्महे महते क्षत्राय धनाय जिन्वथः प्रीणयथः एवं तैर्मार्गैरस्मान् धनादिभिः प्रीणयितुमागतमित्यर्थः ॥ ७ ॥

७. अन्न और धनवाले अश्विद्वय, यज्ञ-मार्ग से हमारे पास आओ। धन को सेचन अथवा दान करनेवाले अश्विद्वय, इसी मार्ग से तुमने त्रसदस्यु के पुत्र तृक्षि को प्रचुर धन देकर तृप्त किया था।

अ॒यंवा॒मद्रि॑भिःसु॒तःसोमो॑नरावृषण्वसू ।
आया॑तं॒सोम॑पीतये॒पिब॑तंदा॒शुषो॑गृ॒हे ॥ ८ ॥

अ॒यम् । वा॒म् । अद्रि॑ऽभिः । सु॒तः । सोम॑ः । न॒रा॒ ।
वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । आ । या॒त॒म् । सोम॑ऽपीतये ।
पिब॑तम् । दा॒शुष॑ः । गृ॒हे ॥ ८ ॥

नरा सर्वस्यनेतारौ यद्वा स्तोतॄणां धनस्य नेतारौ वृषण्वसू वर्षणशीलधनवन्तौ हे अश्वि-नौ वां युष्मदर्थं अद्रिभिर्ग्रावभिरयं सोमः सुतोभिषुतः तस्मात् सोमपीतये सोमपानार्थं युवामा-यातं आगत्यच दाशुषोहविर्दत्तवतोयजमानस्य गृहे यज्ञस्थाने सोमं युवां पिबतम् ॥ ८ ॥

८. नेता और वर्षणशील धनवाले अश्विद्वय, तुम्हारे लिए पत्थरों से यह सोम अभिषुत हुआ है। सोम-पान के लिए आओ और हव्य-प्रदाता के घर में सोम पियो।

अथ नवमी—

आहि॑रु॒हत॑मश्विना॒रथे॒कोशे॑हिर॒ण्यये॑वृषण्वसू ।
यु॒ञ्जाथा॒ंपीव॑री॒रिष॑ः ॥ ९ ॥

आ । हि । रुहतम् । अश्विना । रथे । कोशे । हिरण्यये ।
वृषण्वसू इति वृषणुऽवसू । युञ्जाथाम् । पीवरीः । इषः ॥ ९ ॥

वृषण्वसू वर्षणशीलधनौ हे अश्विना अश्विनौ हिरण्यये हिरण्मयरज्ज्वादियुक्ते कोशे आयुधादीनां कोशस्थाने रमणशीले रथे हिरवधारणे युवामेव आरुहतं आरोहणं कुरुतं ततः पीवरीः पावयितॄणि स्थूलानि वा इषोन्नानि युंजाथां अस्मासु योजयतम् ॥ ९ ॥

९. वर्षणशील धनवाले अश्विद्वय, सोने के लगाम आदि से सम्पन्न, आयुधों के कोश और रमणशील रथ पर चढ़ो।

याभिः पुक्थमवथो याभिरध्रिगुं याभिर्बभ्रुं विजोषसम् ।
ताभिर्नो मक्षू तूयमश्विना गतं भिषज्यतं यदातुरम् ॥ १० ॥ ६ ॥

याभिः । पुक्थम् । अवथः । याभिः । अध्रिऽगुम् ।
याभिः । बभ्रुम् । विऽजोषसम् । ताभिः । नः । मक्षु । तूयम् ।
अश्विना । आ । गतम् । भिषज्यतम् । यत् । आतुरम् ॥ १० ॥६॥

हे अश्विनौ याभिरूतिभिः पक्थं एतन्नामकं राजानं अवथः रक्षथः याभिरूतिभिश्च अध्रिगुं अधृतगमनं राजानं अवथः याभिरूतिभिश्च बभ्रुं राजानंच विजोषसं विशेषेण सोमैः प्रीणयंतं एतान् सर्वान् यैः पालनैरवथः ताभिस्तैरक्षणैः मक्षु क्षिप्रं तूयं तूर्णं नोस्मानागतं रक्षणार्थमागच्छतं । किंच यत् यत् आतुरं रोगादिसहितं अस्माकं पुत्रादिकं प्रति भिषज्यतंभैषज्यं कुरुतम् भिषक्कंड्वादिः ॥ १० ॥

१०. जिन रक्षणों से तुमने पक्थ राजा की रक्षा की थी, जिनसे अध्रिगु राजा की रक्षा की थी और जिनसे बभ्रु राजा को सोमपान-द्वारा प्रसन्न किया था, उन्हीं रक्षणों के साथ बहुत ही शीघ्र हमारे पास आओ और रोगी की चिकित्सा करो।

॥ इति षष्ठस्य द्वितीये षष्ठोवर्गः ॥ ६॥

अथैकादशी—

यदध्रिगावो अध्रिगू इदा चिदह्नो अश्विना हवामहे ।
वयं गीर्भिर्विपन्यवः ॥ ११ ॥

यत् । अध्रिऽगावः । अध्रिगू इत्यध्रिऽगू । इदा । चित् ।
अह्नः । अश्विना । हवामहे । वयम् । गीःऽभिः । विपन्यवः ॥ ११ ॥

अध्रिगावः अधृतधनाः कर्मसु त्वरमाणा विपन्यवोमेधाविनोवयं अध्रिगू अधृतगमनौ संग्रामे शत्रुवधार्थं त्वरयागच्छन्तौ अश्विना अश्विनौ युवां अह्नोदिवसस्य इदाचिदिदानीमेव प्रातःकाले गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः यद्यदा हवामहे युवामाह्वयामः तदा ताभिरूतिभिः अस्मानागच्छतमित्युत्तरत्रसंबन्धः ॥ ११ ॥

११. हम स्वकर्म में शीघ्रताकारी और मेधावी हैं। अश्विद्वय, तुम लोग युद्ध में शत्रु-वध के लिए शीघ्रकर्त्ता हो। दिन के इस प्रातःकाल में स्तुति द्वारा हम तुम्हें बुलाते हैं।

ताभिरायातंवृषणोपमेहवंविश्वप्सुंविश्ववार्यम् ।
इषामंहिष्ठापुरुभूतमानरायाभिःक्रिविंवावृधुस्ताभिरागतम् ॥ १२ ॥

ताभिः । आ । यातम् । वृषणा । उप । मे । हवम् । विश्वऽप्सुम् । विश्वऽवार्यम् । इषा । मंहिष्ठा । पुरुऽभूतमा । नरा । याभिः । क्रिविम् । ववृधुः । ताभिः । आ । गतम् ॥ १२ ॥

वृषणा वृषणौ वर्षणशीलौ हे अश्विनौ विश्वप्सुं प्सइति रूपनाम स्तोत्रशस्त्रात्मकत्वेन नानारूपं विश्ववार्यं सर्वैर्देवैर्वरणीयं मे मदीयं हवं युष्मद्विषयमाह्वानमा अभिमुखीकृत्य ताभिरूतिभिरुपयातं युवामागच्छतं। याभिः नरा नरौ सर्वस्य नेतारौ अश्विनौ इषा इष इच्छायां हवींषीच्छन्तौ मंहिष्ठा मंहिष्ठौ अतिशयेन धनानां दातारौ पुरुभूतमा पुरुहूतमौ युद्धेषु अत्यंतं पुरुधा भवन्तौ यद्वा अतिशयेन बहूनां शत्रूणामभिभवितारौ भवन्तौ क्रिविं कूपं प्रतियाभिरूतिभिरुदकानि वावृधुः अवर्धयतः द्वयोर्बहुवचनं पूजार्थं कूपपतितोवंदनमालाभिः कूपं पूरयित्वा युवाभ्यामुत्थापितः खलु । तथामन्त्रः—उद्वन्दनमैरयतंस्वर्दृशइति । ताभिस्तैः पालनैरागतं अस्मद्रक्षणार्थमागच्छतम् ॥ १२ ॥

१२. वर्षणशील अश्विद्वय, विविध-रूप, समस्त देवों के द्वारा वरणीय मेरे इस आह्वान के अभिमुख, उन सारी रक्षाओं के साथ आओ। तुम लोग हवि के अभिलाषी, अतीव धनद और युद्ध में अनेक शत्रुओं के अभिभविता हो। जिन रक्षणों से तुमने कूप को वर्द्धित किया है, उनके साथ पधारो। अथ त्रयोदशी—

ताविदाचिदहानांतावश्विनावन्दमानउपब्रुवे ।
ताऊनमोभिरीमहे ॥ १३ ॥

तौ । इदा । चित् । अहानाम् । तौ । अश्विना । वन्दमानः । उप । ब्रुवे । तौ । ऊँ इति । नमःऽभिः । ईमहे ॥ १३ ॥

१ तै०सं० १. ७. ३३।

तौ संग्रामे आयुधानि स्तोतृभ्योधनानिवा विस्तारयन्तौ तौ पूर्वोक्तावश्विनाश्विनौ अ-ह्नानामह्नामिदाचित् इदानोमेव प्रातःकाले वन्दमानः अभिवादनं कुर्वन् सन् उपब्रुवे तयोः स-मीपे स्तौमि ततः ता ऊ तावेव नमोभिर्हविर्भिः स्तोत्रैर्वा ईमहे वयं धनादिकं याचामहे ॥ १३॥

१३. उन अश्विद्वय को इस प्रातःकाल में अभिवादन करता हुआ मैं उनकी स्तुति करता हूँ। उन्हीं दोनों के पास स्तोत्र-द्वारा धनादि की याचना करता हूँ।

ताविद्दोषातताउषसिंशुभस्पतीतायामन्रुद्रवंर्तनी।
मानोमर्तायरिपवेवाजिनीवसूपरोरुद्रावतिरूयतम् ॥१४॥

तौ। इत्। दोषा। तौ। उषसि। शुभः। पती इति। ता। यामन्। रुद्रवर्तनी इति रुद्रऽवर्तनी। मा। नः। मर्ताय। रिपवे। वाजिनीवसू इति वाजिनीऽवसू। परः। रुद्रौ। अति। रूयतम्॥ १४॥

शुभस्पती उदकस्यपालयितारौ रुद्रवर्तनी युद्धे रोदनशीलमार्गौ स्तूयमानमार्गौवा ता-वित् तावेवाश्विनौ दोषा दोषायां रात्रौ तावेव उषस्युषःकाले ता तावश्विनौ यामन् यामन्यह-निच सर्वेषु कालेषु वयमश्विनावाह्वयामः एवंसति वाजिनीवसू अन्नधनौ रुद्रौ हे अश्विनौ मर्ताय मनुष्याय रिपवे शत्रवे नोस्मत्परः परस्तान्मातिरूयतं माब्रूतम् शत्रवेस्मान्माकुरुतमित्यर्थः॥१४॥

१४. वे जल-पालक और युद्ध में स्तूयमान मार्ग हैं। रात्रि, उषःकाल और दिन में सदा हम अश्विद्वय को बुलाते हैं। अन्न और धन अश्विद्वय, शत्रु के हाथ में हमें नहीं देना।

आसुग्म्यायसुग्म्यंप्रातारथेनाश्विनावासक्षणी।
हुवेपितेवसोभरी ॥ १५॥ ७॥

आ। सुग्म्याय। सुग्म्यम्। प्रातरिति। रथेन। अश्विना। वा। सक्षणी इति। हुवे। पिताऽइव। सोभरी॥ १५॥ ७॥

वा अपिच सक्षणी सेचनीयशीलौ अश्विना अश्विनौ युवां सुग्म्याय सुखार्हाय मर्त्यं सुग्म्यं सुखं प्रातः काले रथेनावहतम्। ततः सोभरिरहं हुवे युवामाह्वयामि। तत्रदृष्टान्तः—पि-तेव यथा मम पिता जुहाव तद्वदहमाह्वयामि॥ १५॥

१५. अश्विद्वय, तुम सेचन-शील हो। मैं सुख के योग्य हूँ। प्रातः-काल में मेरे लिए रथ ले सुख ले आओ। मैं सोभरि हूँ। अपने पिता के समान ही तुम्हें बुलाता हूँ।

॥ इति षष्ठस्य द्वितीये सप्तमोवर्गः॥ ७॥

अथ षोडशी—

मनो॑जवसा वृषणा मदच्युता मक्षुंग॒माभि॑रू॒तिभि॑ः ।
आ॒रात्ता॑च्चिद्भू॒तम॒स्मे अव॑से पू॒र्वीभि॑ः पुरुभोजसा ॥ १६ ॥

मन॑ःऽजवसा । वृ॒ष॒णा॒ । म॒द॒ऽच्यु॒ता॒ । म॒क्षु॒म्ऽग॒माभि॑ः ।
ऊ॒तिऽभि॑ः । आ॒रात्ता॑त् । चि॒त् । भू॒त॒म् । अ॒स्मे इति॑ ।
अव॑से । पू॒र्वीभि॑ः । पु॒रु॒ऽभो॒ज॒सा॒ ॥ १६ ॥

हे मनोजवसा मनोवद् शीघ्रं गच्छन्तौ वृषणा वृषणौ धनानां वर्षितारौ मदच्युता माद्यं-तीति मदाः शत्रवः तेषांच्यावयितारौ पुरुभोजसा बहूनां भोक्तारौ रक्षकौ यद्वा बहून् स्तोतॄ-न् धनादिभिः भोजयन्तौ हे अश्विनौ मक्षुंगमाभिः शीघ्रं गच्छद्भिः ऊतिभीरक्षाभिः पूर्वीभि-र्बहुभिः अस्मे अस्माकमवसे रक्षणाय आरात्तावचिद् अन्तिकएव भूतं भवतम् ॥ १६ ॥

१६. मन के समान शीघ्रगामी, धन-वर्षक, शत्रु-नाशक और अनेकों के रक्षक अश्विद्वय, शीघ्र-गामिनी और विविधा रक्षाओं के साथ, हमारी रक्षा के लिए, पास में आओ।

आ नो॒ अश्वा॑वदश्विना व॒र्तिर्या॑सिष्टं मधुपातमा नरा ।
गोम॑द्दस्रा॒ हिर॑ण्यवत् ॥ १७ ॥

आ । नः॒ । अश्व॑ऽवत् । अ॒श्वि॒ना॒ । व॒र्तिः । या॒सि॒ष्ट॒म् ।
म॒धु॒ऽपा॒त॒मा॒ । न॒रा॒ । गोऽम॑त् । द॒स्रा॒ । हिर॑ण्यऽवत् ॥ १७ ॥

मधुपातमा अतिशयेन मधोः सोमस्य पातारौ नरा नेतारौ दस्रा सर्वैर्दर्शनीयौ हे अ-श्विना अश्विनौ नोस्माकं वर्तिः वर्तते अत्रेति वर्तिर्गृहं तत् अश्ववदश्वयुक्तं गोमत् गवादियुक्तं हिरण्यवत्सुवर्णकनकादियुक्तं कृत्वा यासिष्टं आगच्छतं यद्वास्मान्प्रति वर्तिर्यज्ञमार्गमश्वा-दियुक्तं कृत्वा आगच्छतं यातेर्लुङ्रूपम् ॥ १७ ॥

१७. अश्विद्वय, तुम अतीव सोमपाता, नेता और दर्शनीय हो। हमारे यज्ञ-मार्ग को अश्व, गौ और सुवर्ण से युक्त करके, आओ।

अथाष्टादशी—

सु॒प्रा॒व॒र्गं सु॒वीर्यं॑ सु॒ष्ठु वार्य॒मना॑धृष्टं रक्ष॒स्विना॑ ।
अ॒स्मिन्ना वा॑मा॒याने॑ वाजिनीवसू॒ विश्वा॑ वा॒मानि॑ धीमहि ॥१८॥८॥

सुऽप्रावर्गम् । सुऽवीर्यम् । सुष्ठु । वार्यम् । अनाधृष्टम् । रक्षस्विना ।
अस्मिन् । आ । वाम् । आऽयाने । वाजिनीवसू इति वाजिनीऽवसू ।
विश्वा । वामानि । धीमहि ॥ १८ ॥ ८ ॥

सुप्रावर्गं शोभनप्रवर्जनं यस्य तत् स्तोतृभ्यः स्वयमेव प्रयच्छतीत्यर्थः तथाविधं सुवीर्यं शोभनवीर्यं सुष्ठु शोभनं यथा भवति तथा वार्यं सर्वैर्वरणीयं रक्षस्विना बलवतापि अनाधृष्टमनभिभवनीयं धनमाधीमहि त्वत्तोवयं धारयामः । तदेवाह—वाजिनीवसू बलयुक्तधनौ अन्नधनौवा अश्विनौ वां युवयोरस्मिन्नायाने अस्मद्गृहंप्रति आगमने विश्वा विश्वानि दिव्यभौमादीनि वामानि धनानि आधीमहि वयं लभामहे धीङ्आधारइत्यस्यलिङि छान्दसोविकरणस्य लुक् ॥ १८ ॥

१८. जिसका दान सुन्दर है, जिसका वीर्य सुन्दर है, जिसका सुन्दर रूप सबके लिए वरणीय है और जिसे बली पुरुष भी अभिभूत नहीं कर सकता, ऐसा ही धन हम धारण करते हैं। अन्न और धन (बलयुक्त धनी) अश्विद्वय, तुम्हारा आगमन होने पर हम सारा धन प्राप्त करेंगे।

॥ इति षष्ठस्य द्वितीयेष्टमोवर्गः ॥ ८ ॥

ईळिष्वेति त्रिंशदृचं तृतीयं सूक्तं व्यश्वपुत्रोविश्वमनाः ऋषिः उष्णिक्छन्दः अग्निर्देवता तथाचानुक्रान्तम्— ईळिष्वत्रिंशद्विश्वमनावय्याश्वआग्नेयमौष्णिहंहेति । प्रातरनुवाके आग्नेयेक्रतौ औष्णिहेछन्दसि आश्विनशस्त्रे चेदंसूक्तं । सूत्रितंच—ईळिष्वाहीत्यौष्णिहमिति ।

तस्मिन् सूक्ते प्रथमा—

ईळिष्वाहिप्रतीव्यंयजस्वजातवेदसम् ।
चरिष्णुधूममगृभीतशोचिषम् ॥ १ ॥

ईळिष्व । हि । प्रतीव्यम् । यजस्व । जातऽवेदसम् ।
चरिष्णुऽधूमम् । अगृभीतऽशोचिषम् ॥ १ ॥

प्रतीव्यं शत्रुषु प्रतिगमनशीलमग्निं हिरवधारणे अग्निमेव ईळिष्व स्तुतिभिः स्तोत्रं कुरु । किंच चरिष्णुधूमं सर्वतश्चरणशीलधूमजालं अगृभीतशोचिषं रक्षोभिरगृह्यमाणदीप्तिं जातवेदसं जातप्रज्ञं यद्वा जातानि भूतानि वेत्तीति जातवेदाः तमग्निं यजस्व हविर्भिः पूजय ॥१॥

१. शत्रुओं के विरुद्ध गमन करनेवाले अग्नि हैं। उन्हीं की स्तुति करो। जिनका धूम-जाल चारों ओर फैलता है, जिनकी दीप्ति को कोई पकड़ नहीं सकता और जो जात-प्रज्ञ हैं, उन अग्नि की पूजा करो।

दामानंविश्वचर्षणेग्निंविश्वमनोगिरा ।
उतस्तुषेविष्पर्धसोरथानाम् ॥ २ ॥

दामानम् । विश्वऽचर्षणे । अग्निम् । विश्वऽमनः ।
गिरा । उत । स्तुषे । विऽस्पर्धसः । रथानाम् ॥ २ ॥

उतापिच हे विश्वचर्षणे विश्वस्य सर्वस्यार्थस्य ज्ञानेन द्रष्टः विश्वमनः सर्वेषु स्थावरजंगमात्मकेष्वेकंमनोयस्य सः एतन्नामक हे ऋषे विस्पर्धसोविगतमात्सर्यस्य यजमानस्य रथानां रथादीनां दामानं दातारमेवंविधमग्निं गिरा स्तुतिलक्षणया वाचा स्तुषे स्तोत्रं कुरु ॥२॥

२. सर्वार्थ-दर्शक "विश्वमना" ऋषि, मात्सर्य-शून्य यजमान के लिए रथादि के दाता अग्नि की, वाक्य-द्वारा, स्तुति करो।

येषामाबाधऋग्मियइषःपृक्षश्चनिग्रभे ।
उपविदावह्निर्विन्दतेवसु ॥ ३ ॥

येषाम् । आऽबाधः । ऋग्मियः । इषः । पृक्षः ।
च । निऽग्रभे । उपऽविदा । वह्निः । विन्दते । वसु ॥ ३ ॥

आबाधः शत्रूणामाभिमुख्येन बाधकः ऋग्मियऋग्भिरर्चनीयः अग्निर्येषामयजमानानां इषोन्नानि पृक्षः अन्नादिरसांश्च निग्रभे निगृह्णीते ग्रहेर्लेटि छान्दसोविकरणस्यलुक् लोपस्त-आत्मनेपदेष्वितितलोपः हृग्रहोर्भश्छंदसीतिभकारः। निगृह्यच वह्निर्हविषां वोढा सएवाग्निः उपविदा उपवेदनेन एते हवींषि देवार्थं नप्रयच्छन्तीत्येतवज्ञानेन तेषामेव वसु धनं विंदते लभते॥३॥

३. शत्रुओं के बाधक और ऋचाओं-द्वारा अर्चनीय अग्नि जिनके अन्न और सोमरस को ग्रहण करते हैं, वे धन प्राप्त करते हैं।

अथ चतुर्थी—

उदस्यशोचिरस्थाद्दीदियुषोव्य१जरम् ।
तपुर्जम्भस्यसुद्युतोगणश्रियः ॥ ४ ॥

उत् । अस्य । शोचिः । अस्थात् । दीदियुषः । वि ।
अजरम् । तपुःऽजम्भस्य । सुऽद्युतः । गणऽश्रियः ॥ ४ ॥

दीदियुषः दीदितिर्दीप्तिकर्मा संदीप्यमानस्य तपुर्जंभस्य तापयितृदंष्ट्रस्य सुद्युतः शोभनदीप्तेर्गणश्रियः हविरादानार्थं यजमानगणं श्रयति तस्य अस्य एतादृशस्याग्नेरजरं जरारहितं

पुनःपुनर्मंथ्यमानत्वान्नूतनं हविर्भिर्वर्धमानत्वादभिनवं वा शोचिस्तेजः व्युदस्थात् विशेषेण उद्गतमभूत् ॥ ४ ॥

४. अतीव दीप्तिमान्, ताप-दाता, दण्ड-सम्पन्न, शोभन दीप्तिवाले और यजमानों के आश्रित अग्नि का दाज-शून्य तथा अभिनव तेज उठ रहा है।

उदुंतिष्ठस्वध्वरस्तवानोदेव्याकृपा ।
अभिख्याभासाबृहताशुशुक्वनिः ॥ ५ ॥ ९ ॥

उत् । ऊँ इति । तिष्ठ । सुऽअध्वर । स्तवानः । देव्या ।
कृपा । अभिऽख्या । भासा । बृहता । शुशुक्वनिः ॥ ५ ॥ ९ ॥

स्वध्वर शोभनयज्ञ हे अग्ने अभिख्या अभिमुखं गच्छत्याभितः प्रसिद्धयावा बृहता बृहत्या भासा दीप्त्या शुशुक्वनिः शुचदीप्तौ दीपनशीलस्त्वं स्तवानः स्तोतृभिः स्तूयमानः सन् देव्या द्योतमानया कृपा ज्वालया उत्तिष्ठ तमःपरिहारार्थमुद्गच्छ । उ प्रसिद्धौ ॥ ५ ॥

५. शोभनयज्ञ अग्नि, सामने विशाल दीप्ति से दीपनशील और स्तूयमान तुम द्योतमाना ज्वाला के साथ उठो।

॥ इति षष्ठस्य द्वितीये नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

अग्नेयाहिसुशस्तिभिर्हव्याजुह्वानआनुषक् ।
यथांदूतोबभूथहव्यवाहनः ॥ ६॥

अग्ने । याहि । सुशस्तिऽभिः । हव्या । जुह्वानः ।
आनुषक् । यथा । दूतः । बभूथ । हव्यऽवाहनः ॥ ६ ॥

हे अग्ने आनुषक् अनुषक्तं यथाभवति तथा हव्या हव्यानि हवनयोग्यान्यन्नानि जुह्वानः जुह्वन् देवेभ्यः प्रयच्छन् त्वं सुशस्तिभिः शोभनैः स्तोत्रैः सह याहि देवानां हविःप्रदानार्थं गच्छ । अस्य हविःप्रदातृत्वं कथमित्याशंक्याह—यथा त्वं हव्यवाहनः हविषां वोढा देवानां दूतोबभूथ भवसि तथा जुह्वानइत्यन्वयः ॥ ६ ॥

६. अग्नि, तुम हव्य-वाहक दूत हो; इसलिए देवों को हव्य देते हुए सुन्दर स्तोत्र के साथ जाओ।

अथ सप्तमी—

अग्निंवःपूर्व्यंहुवेहोतारंचर्षणीनाम्।
तमयावाचागृणेतमुंवस्तुषे ॥ ७ ॥

अग्निम्। वः। पूर्व्यम्। हुवे। होतारम्। चर्षणीनाम्।
तम्। अया। वाचा। गृणे। तम्। ऊँ इति। वः। स्तुषे ॥ ७ ॥

चर्षणीनां मनुष्याणां होतारं होमनिष्पादकं पूर्व्यं पुरातनं वः यष्टृत्वेन युष्मत्संबंधिनमग्निं हुवे आह्वयामि। आहूयच तमग्निं अया अनया सूक्तरूपया वाचा गिरा गृणे शंसामि। किञ्च वोयुष्मदर्थं तमु तमेवाग्निं स्तुषे स्तौमि ॥ ७ ॥

७. मनुष्यों के होम-सम्पादक और पुरातन अग्नि को मैं बुलाता हूँ। इस सूक्त-रूप वचन-द्वारा उन अग्नि की मैं प्रशंसा करता हूँ। तुम्हारे ही लिए उन अग्नि की मैं स्तुति करता हूँ।

अथाष्टमी—

यज्ञेभिरद्भुतक्रतुंयंकृपासूदयन्तइत्।
मित्रंनजनेसुधितमृतावनि ॥ ८ ॥

यज्ञेभिः। अद्भुतऽक्रतुम्। यम्। कृपा। सूदयन्ते। इत्। मित्रम्।
न। जने। सुऽधितम्। ऋतऽवनि ॥ ८ ॥

अद्भुतक्रतुं बहुविधमज्ञं यद्वा चित्रकर्माणं मित्रंन यजमानानां मित्रमिव स्थितं सुधितं हविर्भिः संतर्पितं यमग्निं ऋतवनि यज्ञवति जने यजमाने कृपा स्वसामर्थ्येन यज्ञेभिर्यज्ञैः सूदयन्ते इत् सूदिः क्षरणकर्मा अध्वर्य्वादयः कामान् क्षारयन्त्येव यजमानस्य कामान्प्रापयन्तीत्यर्थः। तमग्निमुपासेवध्वमित्युत्तरत्रसंबंधः ॥ ८ ॥

८. बहुविध प्रज्ञावाले, मित्र और तृप्त अग्नि की कृपा से यज्ञ और सामर्थ्य से यज्ञवाले यजमान की मनःकामना पूर्ण होती है।

अथ नवमी—

ऋतावानमृतायवोयज्ञस्यसाधनंगिरा।
उपोएनंजुजुषुर्नमसस्पदे ॥ ९ ॥

ऋतऽवानम्। ऋतऽयवः। यज्ञस्य। साधनम्।
गिरा। उपो इति। एनम्। जुजुषुः। नमसः। पदे ॥ ९ ॥

ऋतायवः यज्ञकामाः हे यजमानाः ऋतावानं यज्ञवन्तं यज्ञस्यसाधनं साधनभूतमेनमग्निं नमसोहविषः पदे स्थाने यज्ञांगेवा गिरा स्तुतिलक्षणया वाचा उपोजुजुषुः उपासेवध्वं। तिङां-तिङोभवन्तीति मध्यमपुरुषस्य प्रथमपुरुषादेशः ॥ ९ ॥

९. यज्ञाभिलाषियो, यज्ञ के साधन और यज्ञवाले अग्नि की, हव्यवाले यज्ञ में, स्तुति-वाक्य-द्वारा, सेवा करो।

अच्छानोअङ्गिरस्तमंयज्ञासोयन्तुसंयतः।
होतायोअस्तिविक्ष्वायशस्तमः ॥ १० ॥ १० ॥

अच्छं। नः। अङ्गिरःऽतमम्। यज्ञासः। यन्तु। सम्ऽयतः।
होता। यः। अस्ति। विक्षु। आ। यशःऽतमः ॥ १० ॥ १० ॥

संयतः स्रुगादिभिः नियताः नोस्माकं यज्ञासोयज्ञाः अंगिरस्तमं अंगिरसां विशिष्टं अग्निमच्छाभिमुख्येन च यन्तु गच्छंतु। योग्निः विक्षु मनुष्येषु होता होमनिष्पादकःसन् आ सर्वतः यशस्तमः लुप्तमत्वर्थीयः यशस्वितमोस्ति भवति तमग्निं यन्त्वित्यन्वयः ॥ १० ॥

१०. हमारे नियत यज्ञ अङ्गिरावाले अग्नि के अभिमुख जायें। ये मनुष्यों में होम-निष्पादक और अतीव यशस्वी हैं।

॥ इति षष्ठस्य द्वितीये दशमोवर्गः ॥ १० ॥

अथैकादशी–

अग्नेतवत्येअजरेन्धानासोबृहद्भाः।
अश्वाइववृषणस्तविषीयवः ॥ ११ ॥

अग्ने। तव। त्ये। अजर। इन्धानासः। बृहत्।
भाः। अश्वाःऽइव। वृषणः। तविषीऽयवः ॥ ११ ॥

अजर जरारहित हे अग्ने इन्धानासइन्धाना दीप्यमानाबृहत् बृहन्तोमहान्तः त्ये ते सर्वगतास्तव त्वदीयाभाः भासोरश्मयोवृषणः कामानांवर्षितारः सन्तः तविषीयवः बलमाचरन्तोभवन्ति। तत्रदृष्टान्तः–अश्वाइव यथा वृषणः रेतसःसेक्तारोश्वा बलमाचरन्तोभवन्ति तद्वत् ॥ ११ ॥

११. अजर अग्नि, तुम्हारी दीप्यमान और महान् रश्मियाँ काम-वर्षक होकर अश्व के समान बल प्रकट करती हैं।

अथ द्वादशी–

सत्वंनऊर्जांपतेरयिंरास्वसुवीर्यम्।
प्रावनस्तोकेतनयेसमत्स्वा ॥ १२ ॥

सः । त्वम् । नः । ऊर्जाम् । पते । रयिम् । रास्व ।
सुऽवीर्यम् । प्र । अव । नः । तोके । तनये । समत्ऽसु । आ ॥ १२ ॥

ऊर्जामन्नानां पते स्वामिन् हे अग्ने सतथाविधस्त्वं नोस्मभ्यं सुवीर्यं शोभनवीर्योपेतं रयिं धनं रास्व देहि । नोस्माकं तोके पुत्रे तनये तनोति विस्तारयति पुत्रमिति तनयः पौत्रः तस्मिन्वर्तमानं धनं समत्सु संग्रामेषुच यत् रक्षितव्यं धनं तच्च प्राव प्रकर्षेण रक्ष । अनेन पुत्र-पौत्रप्रार्थनं करोति ॥ १२ ॥

१२. अन्न-पति अग्नि, हमारे लिए तुम शोभन वीर्यवाला धन दो। हमारे पुत्र और पौत्र के पास जो धन है, उसे युद्ध-काल में बचाओ।

यद्वाउविश्पतिःशितःसुप्रीतोमनुषोविशि ।
विश्वेदग्निःप्रतिरक्षांसिसेधति ॥ १३ ॥

यत् । वै । ऊँ इति । विश्पतिः । शितः । सुऽप्रीतः ।
मनुषः । विशि । विश्वा । इत् । अग्निः । प्रति । रक्षांसि । सेधति ॥ १३ ॥

विश्पतिः विशां पालयिता शितः हविर्भिस्तीक्ष्णीकृतः सोग्निः सुप्रीतः सुष्ठु प्रीतःसन् मनुषोमनुष्यस्य विशि निवेशने गृहे यद्वै यदा खलु वर्तते तदानीमग्निः विश्वेत् विश्वान्येव तस्यबाधकानि रक्षांसि प्रतिषेधति हिनस्ति । षिधुगत्यां भौवादिकः उ प्रसिद्धौ ॥ १३ ॥

१३. मनुष्य-रक्षक और तीक्ष्ण अग्नि प्रसन्न होकर जभी मनुष्य के गृह में अवस्थित होते हैं; तभी वह सारे राक्षसों को विनष्ट करते हैं। अथ चतुर्दशी—

श्रुष्ट्यंग्नेनवस्यमेस्तोमस्यवीरविश्पते ।
निमायिनस्तपुषारक्षसोदह ॥ १४ ॥

श्रुष्टी । अग्ने । नवस्य । मे । स्तोमस्य । वीर ।
विश्पते । नि । मायिनः । तपुषा । रक्षसः । दह ॥ १४ ॥

हे वीर शत्रूणां विनाशयितः वीर्यवन् विश्पते विशां पालयितः हे अग्ने नवस्य इदानीं क्रियमाणत्वान्नूतनं मे मदीयं स्तोमस्य स्तोत्रशस्त्रादिकं श्रुष्टी श्रुत्वा मायिनोमायाविनोरक्षसः कर्मविघ्नकारिणोराक्षसान् तपुषा तापकेन तेजसा निदह नितरां भस्मीकुरु । श्रुष्टी स्नात्व्यादयश्चेति निपातितः वकारलोपश्छान्दसः ॥ १४ ॥

१४. हे वीर और मनुष्य-पालक अग्नि, हमारे नये स्तोत्र को सुनकर मायावी राक्षसों को तापक तेज के द्वारा जलाओ।

अथ पञ्चदशी—

नतस्यमाययाचनरिपुरीशीतमर्त्यः ।
योअग्नयेददाशहव्यदातिभिः ॥ १५ ॥ ११ ॥

न । तस्य । मायया । चन । रिपुः । ईशीत । मर्त्यः । यः ।
अग्नये । ददाश । हव्यदातिऽभिः ॥ १५ ॥ ११ ॥

मर्त्योमनुष्योरिपुः शत्रुः चनेति निपातसमुदायोप्यर्थे माययाचन माययापि तस्य जनस्य नेशीत ईश्वरोनभवति । योजनः हव्यदातिभिः हविषां दातृभिः ऋत्विग्भिरग्नये ददाश हवींषि प्रयच्छति । तस्य रिपुर्नास्तीत्यर्थः ॥ १५ ॥

१५. जो मनुष्य हव्यदाता ऋत्विकों के द्वारा अग्नि को हव्य प्रदान करता है, उसको मनुष्य-शत्रु माया-द्वारा भी वश में नहीं कर सकता।

॥ इति षष्ठस्य द्वितीये एकादशोवर्गः ॥ ११ ॥

अथ षोडशी—

व्यश्वस्त्वावसुविदमुक्षण्युरप्रीणादृषिः ।
महोरायेतमुत्वासमिधीमहि ॥ १६ ॥

विऽअश्वः । त्वा । वसुऽविदम् । उक्षण्युः । अप्रीणात् ।
ऋषिः । महः । राये । तम् । ऊँ इति । त्वा । सम् । इधीमहि ॥ १६ ॥

उक्षण्युः धनानांसेक्तारमात्मनइच्छन् यद्वा वृष्टिसेक्तारमिच्छन् व्यश्वऋषिः एतन्नामकोममपिता वसुविदं वसूनां धनानां लंभकं त्वा त्वामप्रीणात् धनादिप्राप्त्यर्थं हविर्भिः अतोषयत् । तथा वयमपि महोमहते राये धनाय तमु तथाविधमेव त्वा त्वां समिधीमहि सम्यगाज्यादिहविर्भिर्दीपयेम ॥ १६ ॥

१६. अपने को धन का वर्षक बनाने की इच्छा से व्यश्व नामक ऋषि ने तुम्हें प्रसन्न किया था; क्योंकि तुम धनद हो। हम भी महान् धन के लिए उन अग्नि को जलाते हैं।

अथ सप्तदशी—

उशनाकाव्यस्त्वानिहोतारमसादयत् ।
आयजिंत्वामनवेजातवेदसम् ॥ १७ ॥

उशना । काव्यः । त्वा । नि । होतारम् । असादयत् ।
आऽयजिम् । त्वा । मनवे । जातऽवेदसम् ॥ १७ ॥

हे अग्ने काव्यः कविपुत्रउशना एतन्नामकऋषिः मनवे राज्ञे तस्य गृहइत्यर्थः आयजिं आभिमुख्येन यष्टारं जातवेदसं जातप्रज्ञं त्वा त्वां पुनस्त्वाशब्दआदरार्थः त्वामेव होतारं होमनिष्पादकं न्यसादयत् नितरामुपावेशयत् ॥ १७ ॥

१७. यज्ञशील और जातप्रज्ञ काव्य (कविपुत्र = उशना ऋषि) ने मनु के घर में तुम्हें होता के रूप से बैठाया था।

विश्वेहित्वासजोषसोदेवासोदूतमक्रत ।
श्रुष्टीदेवप्रथमोयज्ञियोभुवः ॥ १८ ॥

विश्वे । हि । त्वा । सऽजोषसः । देवासः । दूतम् ।
अक्रत । श्रुष्टी । देव । प्रथमः । यज्ञियः । भुवः ॥ १८ ॥

हे अग्ने विश्वे सर्वे देवासोदेवाः सजोषसः संगताःसंतः अस्माकं हवींष्यानयतीति विचार्य हिरवधारणे त्वामेव दूतं हविषां वोढारं दूतमक्रताकार्षुः। ततः देव द्योतमान हे अग्ने प्रथमः देवानांमुख्यभूतस्त्वं श्रुष्टी श्रुष्टीति क्षिप्रनाम क्षिप्रं यज्ञियोदेवानां हविर्दातृत्वेन यज्ञार्होभुवोभूयाः ॥ १८ ॥

१८. अग्नि, समस्त देवों ने मिलकर तुम्हें ही दूत नियुक्त किया था। देव अग्नि, तुम देवों में मुख्य हो। तुम उसी समय यज्ञ-योग्य हो गये थे।

अथैकोनविंशी—

इमंघावीरोअमृतंदूतंकृण्वीतमर्त्यः ।
पावकंकृष्णवर्तनिंविहायसम् ॥ १९ ॥

इमम् । घ । वीरः । अमृतम् । दूतम् । कृण्वीत ।
मर्त्यः । पावकम् । कृष्णऽवर्तनिम् । विऽहायसम् ॥ १९ ॥

अनया यजमानश्चाग्निं देवानां दूतमकार्षीदित्याह वीरः कर्मणिसमर्थः मर्त्योमनुष्योयजमानः अमृतं मरणधर्मरहितं पावकं पापानांशोधकं कृष्णवर्तनिं वर्तनिमार्गः कृष्णमार्गं विहायसं विहायाइति महन्नाम गुणैस्तेजोधिकत्वेनवा महान्तमिमं घ इममेवाग्निं दूतं देवानां वोढृत्वेन दूतं कृण्वीत अकार्षीत् ॥ १९॥

१९. अमर, पवित्र, धूम्र-मार्ग और तेजस्वी इन अग्नि को वीर वा समर्थ मनुष्य ने दूत बनाया था।

अथ विंशी—

तंहुवेमयतस्रुचःसुभासंशुक्रशोचिषम् ।
विशामग्निमजरंप्रत्नमीड्यम् ॥ २० ॥ १२ ॥

तम् । हुवेम । यतऽस्रुचः । सुऽभासम् । शुक्रऽशोचिषम् ।
विशाम् । अग्निम् । अजरम् । प्रत्नम् । ईड्यम् ॥ २० ॥ १२ ॥

यतस्रुचः गृहीतस्रुचः यद्वा तत्तत्स्थानेषु नियमितस्रुचोवयं सुभासं शोभनदीप्तिं शुक्रशोचिषं दीपनशीलतेजस्कं विशां स्वामिनं यद्वा विशामीड्यमित्यन्वयः मनुष्याणां स्तोतव्यं अजरं जरारहितं प्रत्नं पुरातनं तं तथाविधमग्निं हुवेम स्तोत्रशस्त्रादिभिराह्वयामः ॥ २० ॥

२०. स्रुक् ग्रहण करके हम सुन्दर दीप्तिवाले, शुभ्रवर्ण, तेजस्वी, मनुष्यों के लिए स्तवनीय और अजर अग्नि को हम बुलाते हैं।

॥ इति षष्ठस्य द्वितीये द्वादशोवर्गः ॥ १२ ॥

अथैकविंशी—

योअस्मैहव्यदातिभिराहुतिंमर्तोविधत् ।
भूरिपोषंसधत्तेवीरवद्यशः ॥ २१ ॥

यः । अस्मै । हव्यदातिऽभिः । आऽहुतिम् । मर्तः ।
अविधत् । भूरि । पोषम् । सः । धत्ते । वीरऽवत् । यशः ॥ २१ ॥

योमर्तोमनुष्यः हव्यदातिभिर्हविर्दातृभिर्ऋत्विग्भिरस्मै अग्नये आहुतिमविधत् विदधाति समनुष्यः भूरि बहु पोषं धनादिभिः पोषणं वीरवत् पुत्रपौत्रादियुक्तं यशः कीर्तिंच धत्ते धारयति तस्मै धनादीनि प्रयच्छतीत्यर्थः ॥ २१ ॥

२१. जो मनुष्य हव्य-दाता ऋत्विकों के द्वारा अग्नि को आहुति देता है, वह प्रचुर पोषक और वीर पुत्र, पौत्र आदि से युक्त अन्न प्राप्त करता है।

अथ द्वाविंशी—

प्रथमंजातवेदसमग्निंयज्ञेषुपूर्व्यम् ।
प्रतिस्रुगेतिनमसाहविष्मती ॥ २२ ॥

प्रथमम् । जातऽवेदसम् । अग्निम् । यज्ञेषु । पूर्व्यम् ।
प्रति । स्रुक् । एति । नमसा । हविष्मती ॥ २२ ॥

प्रथमं देवानां प्रधानभूतं जातवेदसं जातप्रज्ञं पूर्व्यं पुरातनं एतादृशमग्निं यज्ञेषु अग्निष्टोमादियज्ञेषु हविष्मती सोमादिहविर्युक्तास्रुक् नमसा स्तोत्रेण नमस्कारेणवा सह प्रत्येति अग्निं प्रतिगच्छति ॥ २२ ॥

२२. देवों में मुख्य, जात-प्रज्ञ और प्राचीन अग्नि के पास हव्य-युक्त स्रुक् नमस्कार के साथ अग्नि के पास आता है।

अथ त्रयोविंशी—

आभिर्विधेमाग्नये ज्येष्ठाभिर्व्यश्ववत्।
मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे ॥ २३ ॥

आभिः। विधेम। अग्नये। ज्येष्ठाभिः। व्यश्वऽवत्।
मंहिष्ठाभिः। मतिऽभिः। शुक्रऽशोचिषे ॥ २३ ॥

विश्वमनोनामकावयं ज्येष्ठाभिः प्रशस्यतमाभिः मंहिष्ठाभिः पूज्यतमाभिः आभिः मतिभिः सूक्तरूपाभिः स्तुतिभिः शुक्रशोचिषे ज्वालातेजसेऽग्नये विधेम परिचरेम वयमिह व्यश्ववत् यथाव्यश्वोस्माकं पिताग्निं स्तुतिभिः पर्यचरत् तद्वद्वयमपि परिचरेम ॥ २३ ॥

२३. व्यश्व के समान स्तुति-द्वारा प्रशस्यतम, पूज्यतम और शुभ्र दीप्ति से युक्त अग्नि की, हम, परिचर्या करते हैं।

नूनमर्च विहायसे स्तोमेभिः स्थूरयूपवत्।
ऋषे वैयश्व दम्यायाग्नये ॥ २४ ॥

नूनम्। अर्च। विऽहायसे। स्तोमेभिः। स्थूरयूपऽवत्।
ऋषे। वैयश्व। दम्याय। अग्नये ॥ २४ ॥

वैयश्व व्यश्वस्यपुत्र हे विश्वमनोनामकऋषे विहायसे महते दम्याय दमे गृहे अरणीभिर्मथ्यमानत्वेन भवाय यद्वा यजमानगृहाणां बाधपरिहारेण हितायाग्नये नूनं संप्रति स्तोमेभिः त्रिवृत्पञ्चदशादिलक्षणैः स्तोमैः अर्च स्तुहि। तत्रदृष्टान्तः—स्थूरयूपवत् यथा स्थूरयूपोनामर्षिरेनमग्निमानर्च तद्वदर्चेत्यर्थः ॥ २४ ॥

२४. व्यश्व-पुत्र "विश्वमना" ऋषि, "स्थूलयूप" नामक ऋषि के समान तुम यजमान के गृह में उत्पन्न और विशाल अग्नि की, स्तोत्र द्वारा, पूजा करो।

अथ पंचविंशी—

अतिथिं मानुषाणां सूनुं वनस्पतीनाम्।
विप्रा अग्निमवसे प्रत्नमीळते ॥ २५ ॥ १३ ॥

अतिथिम् । मानुषाणाम् । सूनुम् । वनस्पतीनाम् ।
विप्राः । अग्निम् । अवसे । प्रत्नम् । ईळते ॥ २५ ॥ १३ ॥

विप्रामेधाविनोयजमानाः मानुषाणां मनुष्याणां अतिथिं अतिथिवत्पूज्यं वनस्पतीनां सूनुं वनस्पतिरूपाभिर्वारणीभिः जायमानत्वेन तेषां सूनुं प्रत्नं पुरातनमेवंविधमग्निं अवसे कर्मरक्षणाय ईळते स्तुतिभिः स्तुवन्ति ॥ २५॥

२५. मेधावी (विप्र) यजमान मनुष्यों के अतिथि और वनस्पति के पुत्र तथा प्राचीन अग्नि की, रक्षण के लिए, स्तुति करते हैं।

॥ इति षष्ठस्य द्वितीये त्रयोदशोवर्गः ॥१३॥

अथ षड्विंशी—

महोविश्वाँअभिषतो३ऽभिहव्यानिमानुषा ।
अग्नेनिषत्सिनमसाधिबर्हिषि ॥ २६ ॥

महः । विश्वान् । अभि । सतः । अभि । हव्यानि । मानुषा ।
अग्ने । नि । सत्सि । नमसा । अधि । बर्हिषि ॥ २६ ॥

हे अग्ने महः कर्मकर्तृत्वेन महतः विश्वान् सर्वान् सतः स्तोत्रकरणार्थं वर्तमानान् स्तोतॄनभि अभितः त्वं नमसा स्तुत्यतया बर्हिष्यधि निषत्सि निषीद ।तथा मानुषा मानुषाणां मनुष्यसंबंधीनि हव्यानि हवींष्यभि अभितः तानि स्वीकर्तुं निषीद ॥ २६ ॥

२६. अग्नि, समस्त प्रधान स्तोताओं के सामने तुम कुश के ऊपर बैठो. तुम स्तुति के योग्य हो। मनुष्य-प्रदत्त हव्य को स्वीकार करो।

वंस्वानोवार्यापुरुवंस्वरायःपुरुस्पृहः ।
सुवीर्यस्यप्रजावतोयशस्वतः ॥ २७ ॥

वंस्व । नः । वार्या । पुरु । वंस्व । रायः । पुरुऽस्पृहः ।
सुऽवीर्यस्य । प्रजाऽवतः । यशस्वतः ॥ २७ ॥

हे अग्ने वार्याणि वरणीयानि पुरु पुरूणि बहूनि गवादीनि नोस्मभ्यं वंस्व प्रयच्छ । तथा पुरुस्पृहः पुरुभिर्बहुभिः स्पृहणीयं रायोधनं किं विशिष्टं सुवीर्यस्य शोभनवीर्योपेतं प्रजावतः पुत्रपौत्रादिसहितं यशस्वतः कीर्तिमच्च धनं नोस्मभ्यं वंस्व प्रयच्छ ॥ २७॥

२७. अग्नि, वरणीय प्रचुर धन हमें दो। बहुतों-द्वारा अभिलषणीय तथा सुन्दर वीर्यवाले पुत्र, पौत्र आदि के साथ, कीर्त्ति से युक्त, धन हमें दो।

अथाष्टाविंशी—

त्वंवरोसुषाम्णेग्नेजनायचोदय।
सदावसोरातिंयविष्ठशश्वते ॥ २८ ॥

त्वम्। वरो इति। सुऽसाम्ने। अग्ने। जनाय। चोदय।
सदा। वसो इति। रातिम्। यविष्ठ। शश्वते ॥ २८ ॥

वरो सर्वैर्वरणीय वसो शत्रूणां वासयितः यविष्ठ पुनःपुनर्जायमानत्वेन युवतम हे अग्ने त्वं सुषाम्णे सुसाम्ने सुषामादित्वात् षत्वं त्वत्प्रसादात् शोभनसामवते शश्वते बहवे जनाय प्रादुर्भूताय स्तोतॄणां सदा सर्वदा रातिं धनादिकं चोदय प्रेरय ॥ २८ ॥

२८. तुम वरणीय, वासदाता और युवक हो। जो सुन्दर साम-गान करते हैं, उनको लक्ष्य करके सदा धन आदि भेजो।

त्वंहिसुप्रतूरसित्वंनोगोमतीरिषः।
महोरायःसातिमग्नेअपावृधि ॥ २९ ॥

त्वम्। हि। सुऽप्रतूः। असि। त्वम्। नः। गोऽमतीः।
इषः। महः। रायः। सातिम्। अग्ने। अप। वृधि ॥ २९ ॥

हे अग्ने त्वं हिरवधारणे त्वमेव सुप्रतूः स्तोतॄणां धनादिकं सुष्ठु प्रदातासि प्रयच्छसीत्यर्थः। अतएव गोमतीः पश्वादियुक्तानि इषोन्नानि महोमहतोरायोधनस्य मध्ये सातिं देयं धनं च नः स्तोतॄणामस्माकं अपावृधि अपावृणु प्रयच्छेत्यर्थः ॥ २९ ॥

२९. अग्नि तुम अतिशय दाता हो। पशु से युक्त अन्न और महाधन के बीच देने योग्य धन हमें प्रदान करो।

अथ त्रिंशी—

अग्नेत्वंयशाअस्यामित्रावरुणावह।
ऋतावानासम्राजापूतदक्षसा ॥ ३० ॥ १४ ॥

अग्ने। त्वम्। यशाः। असि। आ। मित्रावरुणा।
वह। ऋतऽवाना। सम्ऽराजा। पूतऽदक्षसा ॥ ३० ॥ १४ ॥

हे अग्ने त्वं यशाः लुप्तमत्वर्थीयः देवानां मध्ये यशस्वी असि भवसि अतएव त्वं ऋतावाना ऋतावानौ सत्यवन्तौ यज्ञवन्तौवा सम्राजा सम्राजौ सम्यग्राजमानौ पूतदक्षसा पूतद-

क्षसौ दक्षइतिबलनाम शुद्धबलौ मित्रावरुणौ अस्मिन्कर्मण्यावह आह्वय। प्रायेण कर्मण्यग्ने-र्मित्रावरुणसहितत्वमस्तीति सूचयति ॥ ३०॥

३०. अग्नि, तुम देवो में यशस्वी हो; इसलिए तुम सत्यवान्, भली भाँति विराजमान और पवित्र बल से युक्त मित्र और वरुण को इस कर्म में ले आओ।

॥ इति षष्ठस्य द्वितीये चतुर्दशोवर्गः ॥ १४ ॥

सखायआशिषामहीति त्रिंशदृचं चतुर्थं सूक्तं अत्रेयमनुक्रमणिका—सखायस्तृचोन्त्यः सौषाम्णस्य वरोर्दानस्तुतिः अन्त्यानुष्टुविति। व्यश्वपुत्रोवैयश्वनामऋषिःऔष्णिहं हेत्युक्तत्वादेतदादीनि त्रीणिसूक्तानि उष्णिक्छंदस्कानि अनुक्तत्वादिन्द्रोदेवता अन्त्यासु तिसृषु सुषामाख्यस्य राज्ञः पुत्रस्य वरुनाम्नोराज्ञो दानं स्तूयते अतस्तास्तद्देवताकाः। महाव्रते निष्केवल्येऔष्णिहतृचाशीतावेतत्सूक्तम् तथैव पञ्चमारण्यके शौनकेनस्तूयते—सखायआशिषामहियएकइद्विदयतइति। दशमेहनि मरुत्वतीयशस्त्रे सखायइतितिस्रऋचः सूत्र्यतेच—सखायआशिषामहीति तिस्रउष्णिहइति।

तस्मिन्सूक्ते प्रथमा—

सखा॑य॒आ शि॑षामहि॒ब्रह्मेन्द्रा॑यव॒ज्रिणे॑।
स्तु॒षऊ॒षुवो॒नृत॑मायधृ॒ष्णवे॑॥ १ ॥

सखा॑यः। आ। शि॒षा॒म॒हि॒। ब्रह्म॑। इन्द्रा॑य। व॒ज्रिणे॑।
स्तु॒षे। ऊँ इति॑। सु। वः॒। नृऽत॑माय। धृ॒ष्णवे॑॥ १ ॥

सखायः मित्रभूता हे ऋत्विजः वज्रिणे वज्रहस्तायेन्द्राय ब्रह्म कर्तव्यमेतत्सूक्तरूपं स्तोत्रमाशिषामहि वयमाशास्मः शासु अनुशिष्टौ लुङि च्लेरङादेशःइत्वषत्वे व्यत्ययेनात्मनेपदम्। तत्र वः सर्वेषामेव युष्माकं अर्थाय नृतमाय सर्वेषां नेतृतमाय यद्वा संग्रामेषु आयुधादीनां नेतृतमाय धृष्णवे शत्रूणां धर्षणशीलाय तस्माइन्द्राय अहमेव सु सुष्ठु स्तुषे स्तौमि ॥ १ ॥

१. मित्र ऋत्विको, वज्रधर इन्द्र के लिए हम इस स्तोत्र को करेंगे। तुम लोगों के लिए संग्रामों में आयुधों के नेता और शत्रुओं के धर्षक इन्द्र के लिए मैं स्तुति करूँगा।

अथ द्वितीया—

शव॑सा॒ह्यसि॑श्रु॒तोवृ॑त्र॒हत्ये॑नवृत्र॒हा।
म॒घैर्म॒घोनो॒अति॑शूर॒दाशसि॥ २ ॥

शवसा । हि । असि । श्रुतः । वृत्रऽहत्येन । वृत्रऽहा । मघैः ।
मघोनः । अति । शूर । दाशसि ॥ २ ॥

हे इन्द्र त्वं शवसा बलेन श्रुतः प्रसिद्धोसि भवसि हिप्रसिद्धौ । तदेवाह वृत्रहत्येन वृत्रासुरहननेन वृत्रहा वृत्रहन्तेति प्रसिद्धोभवसि । शूर शौर्यवन् हे इन्द्र मघोनोमघवतोधनवतःपुरुषान्मघैः त्वदीयैर्धनैरति अतिक्रम्य दाशसि स्तोतृभ्योस्मभ्यं प्रयच्छसि ॥ २ ॥

२. इन्द्र, तुम बल के द्वारा विख्यात हो। वृत्रासुर का वध करने के कारण तुम वृत्र-हन्ता हुए हो। तुम शूर हो। धन-द्वारा धनवान् व्यक्ति को अधिक धन देते हो।

सनःस्तवानआभररयिंचित्रश्रवस्तमम् ।
निरेकेचिद्योहरिवोवसुर्ददिः ॥ ३ ॥

सः । नः । स्तवानः । आ । भर । रयिम् । चित्रश्रवःऽतमम् । निरेके ।
चित् । यः । हरिऽवः । वसुः । ददिः ॥ ३ ॥

हे इन्द्र सतथाविधस्त्वं स्तवानः अस्माभिः स्तूयमानः सन् चित्रश्रवस्तमं अतिशयेन नानाविधान्नोपेतं रयिं पुत्रं धनं वा नोस्मभ्यमाभर आसंपादय देहीत्यर्थः । हरिवः हरी अश्वौ तद्वन् हे इन्द्र यस्त्वं निरेकेचित् निर्गमनएव वसुः शत्रूणां वासयिताभवसि तवायुधनिर्गमनादेव शत्रवः पलायन्ते खलु । किञ्च त्वं ददिर्धनानां दाता भवसि ॥ ३ ॥

३. इन्द्र, तुम हमारे द्वारा स्तुत किये जाने पर नानाविध अन्नों से युक्त धन हमें प्रदान करो। अश्ववाले इन्द्र, तुम निर्गमन-समय में ही शत्रुओं के वासदाता और दाता होते हो।

आनिरेकमुतप्रियमिन्द्रदर्षिजनानाम् ।
धृषताधृष्णोस्तवमानआभर ॥ ४ ॥

आ । निरेकम् । उत । प्रियम् । इन्द्र । दर्षि । जनानाम् ।
धृषता । धृष्णो इति । स्तवमानः । आ । भर ॥ ४ ॥

हे इन्द्र उतापिच प्रियं प्रीणनात् प्रियतमं निरेकं धनं भवति विरेचनान्निर्गमनाद्वेति तद्धनं जनानां स्तोतॄणामस्माकं आदर्षि आविदारय विवृतं कुरु । दृ विदारणे छांदसोविकरणस्य लुक् । विवृत्यच धृष्णो शत्रूणां धर्षणशील हे इन्द्र स्तवानः स्तोतृभिरस्माभिः स्तूयमानः सन् धृषता धृष्टेन मनसा सह आभर तद्धनमस्मभ्यं देहि ॥ ४ ॥

४. इन्द्र, हमारे लिए तुम धन प्रकाशित करो। शत्रु-नाशक, स्तूयमान होकर तुम धृष्ट मन के साथ वही धन हमें दो।

अथ पंचमी—

नतेसव्यंनदक्षिणंहस्तंवरन्तआमुरः ।
नपरिबाधोहरिवोगविष्टिषु ॥ ५ ॥ १५ ॥

न । ते । सव्यम् । न । दक्षिणम् । हस्तम् । वरन्ते । आऽमुरः ।
न । परिऽबाधः । हरिऽवः । गोऽइष्टिषु ॥ ५ ॥ १५ ॥

हे हरिवोश्ववन्निन्द्र आमुरः संग्रामेआभिमुख्येन कर्तारः प्रतियोद्धारो गविष्टिषु पणिभिरपहृतानामंगिरसांगवामन्वेषणेषु ते तव सव्यं हस्तं नवरंते न निवारयन्ति तेषामायुधादिभिर्न निवार्यंतइत्यर्थः । तथा दक्षिणंहस्तंच न निवारयन्ति । किंच परिबाधः परितोबाधमानाः वृत्रादयोसुराश्च तव सव्यदक्षिणहस्तौ ननिवारयन्ति संग्रामेषु त्वया सर्वे शत्रवः छिन्नहस्ताः सर्वतोगच्छन्तु त्वंतु तैरबाधितोवर्तसइत्यर्थः ॥ ५ ॥

५. अश्ववाले इन्द्र, गौओं के खोजने के समय तुम्हारे प्रति योद्धा लोग तुम्हारा बाँया और दाहिना हाथ नहीं हटा सकते। प्रतिरोधक वृत्र आदि भी तुम्हारे हाथों को नहीं हटा सकते—तुम अबाधित हो।

॥ इति षष्ठस्य द्वितीये पञ्चदशोवर्गः ॥ १५ ॥

अथ षष्ठी—

आत्वागोभिरिवव्रजंगीर्भिर्ऋणोम्यद्रिवः ।
आस्माकामंजरितुरामनःपृण ॥ ६ ॥

आ । त्वा । गोभिःऽइव । व्रजम् । गीःऽभिः । ऋणोमि ।
अद्रिऽवः । आ । स्म । कामम् । जरितुः । आ । मनः । पृण ॥ ६ ॥

हे अद्रिवः वज्रवन्निन्द्र गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः त्वा त्वां आऋणोमि प्राप्नोमि । ऋणु गतौ तनादिः । तत्रदृष्टान्तः—गोभिरिव यथागोपालोगोभिर्व्रजं गोष्ठं गच्छति तद्वत्त्वां स्तुतिभिः प्राप्नोमीत्यर्थः । ततस्त्वं जरितुः स्तोतुर्मम कामं धनादिविषयं आपृण आपूरय तथा मदीयं मनोमानसं धनादिभिः प्रदानेनापूरय ॥ ६ ॥

६. वज्रधर इन्द्र, स्तुति-वचनों के द्वारा तुम्हें मैं प्राप्त होता हूँ। इसी प्रकार से लोग गौओं के साथ गोष्ठ को प्राप्त होते हैं।

अथ सप्तमी—

विश्वानिविश्वमनसोधियानोवृत्रहंतम ।
उग्रप्रणेतरधिषूवसोगहि ॥ ७ ॥

विश्वा॑नि । वि॒श्वऽम॑नसः । धि॒या । नः॒ । वृ॒त्र॒ह॒न्ऽत॒म॒ । उग्र॑ ।
प्र॒ने॒त॒रिति॑ प्रऽनेतः । अधि॑ । सु । व॒सो॒ इति॑ । ग॒हि॒ ॥ ७ ॥

हे वृत्रहन्तम अतिशयेन वृत्रासुरस्योपद्रवाणांवा हन्तः। नाद्घस्येति तमपोनुडागमः।कीदृश-उग्र उद्गूर्णबल प्रणेतः स्तोतॄणां प्रकर्षेण धनादेर्नेतः।आमंत्रितइति उग्रेत्यस्याविद्यमानवद्भावप्र-तिषेधः। तथाविध वसो शत्रूणां वासयितरिन्द्र नः पूजायां बहुवचनं विश्वमनसएतन्नाम्नोमम विश्वानि सर्वाणि स्तोत्राणि कर्माणि वा धिया मनसा सु सुष्ठु अधिगहि अधिगच्छ स्तुत्यतया यष्टव्यतया वा मनोवेगेन गच्छेत्यर्थः। गमेर्लोटि छान्दसः शपोलुक् हेर्ङिद्वद्भावादनुदात्तोपदेशे-त्यनुनासिकलोपः ॥ ७ ॥

७. इन्द्र, तुम वृत्रादि के सर्व-श्रेष्ठ विनाशक हो। हे उग्र, वासदाता और नेता इन्द्र, विश्वमना नामक ऋषि के सारे स्तोत्रों में उपस्थित होना।

अथाष्टमी–

व॒यंते॑अ॒स्यवृ॑त्रहन्वि॒द्याम॑शूर॒नव्य॑सः ।
वसोः॒स्पा॒र्हस्य॑पुरुहूत॒राध॑सः ॥ ८ ॥

व॒यम् । ते॒ । अ॒स्य । वृ॒त्र॒ऽह॒न् । वि॒द्याम॑ । शू॒र॒ । नव्य॑सः ।
वसोः॑ । स्पा॒र्हस्य॑ । पु॒रु॒ऽहू॒त॒ । राध॑सः ॥ ८ ॥

हे वृत्रहन् वृत्रस्यहन्तः शूर बलवन्पुरुहूत पुरुभिर्बहुभिराह्वातव्येन्द्र नव्यसः नवीयसःईय-सुनईकारलोपश्छांदसः नवतरं स्पार्हस्य स्पृहणीयं राधसः राधसाध संसिद्धौ शर्मादेःसंसाधकं ते तव त्वदीयं अस्य वसोः क्रियाग्रहणं कर्तव्यमिति वसोः सम्प्रदानसंज्ञा चतुर्थ्यर्थे बहुलंछंदसी-ति वसोः षष्ठी त्वदीयमिदं परिदृश्यमानं धनं वयं विद्याम लभेमहि। विद्लृलाभे आदादिकः छां-दसोविकरणस्यलुक् ॥ ८ ॥

८. वृत्रघ्न, शूर और अनेकों के द्वारा बुलाये जाने योग्य इन्द्र, नवीन, स्पृहणीय और सुखादि का साधक धन हम प्राप्त करेंगे।

अथ नवमी–

इन्द्र॒यथा॒ह्यस्ति॒तेऽप॑रीतंनृतो॒शवः॑ ।
अमृ॑क्ताराति॒ःपु॑रुहूतदा॒शुषे॑ ॥ ९ ॥

इन्द्र॑ । यथा॑ । हि । अस्ति॑ । ते॒ । अप॑रिऽइतम् । नृ॒तो॒ इति॑ ।
शवः॑ । अमृ॑क्ता । रा॒तिः । पु॒रु॒ऽहू॒त॒ । दा॒शुषे॑ ॥ ९ ॥

हे नृतो सर्वस्यांतर्यामितया नर्तयितरिन्द्र ते त्वदीयं शवोबलं यथा अपरीतमस्ति शत्रुभिरपरिगतमव्याप्तंभवति हिप्रसिद्धौ । तथा हे पुरुहूत पुरुभिर्बहुभिराहूतेन्द्र दाशुषे हविर्दत्तवते यजमानाय रातिः धनादिदानमपृक्ता शत्रुभिरहिंसितं भवति त्वत्तोलब्धं यजमानस्यधनं शत्रवोनहिंसन्ति । यथा त्वदीयबलस्य रक्षकः एवं तस्य धनस्यापि रक्षकइत्यर्थः ॥ ९ ॥

९. सबको नचानेवाले इन्द्र, तुम्हारे बल को शत्रु लोग नहीं दबा सकते। बहुतों के द्वारा बुलाये गये इन्द्र, हव्यदाता को जो तुम दान करते हो, उसे कोई नष्ट नहीं कर सकता।

आ वृ॑षस्व महामह म॒हे नृ॑तम॒ राध॑से ।
दृ॒ळ्हश्चि॑द्दृह्य मघवन्म॒घत्त॑ये ॥ १० ॥ १६ ॥

आ । वृ॒ष॒स्व॒ । म॒हा॒ऽम॒ह॒ । म॒हे । नृ॒ऽत॒म॒ । राध॑से ।
दृ॒ळ्हः । चि॒त् । दृ॒ह्य॒ । म॒घ॒ऽव॒न् । म॒घत्त॑ये ॥ १० ॥ १६ ॥

हे महामह अतिशयेन सर्वैः पूजनीय नृतम नेतृतमेन्द्र महे महते राधसे शत्रुधनानां संसाधकाय बलार्थं आवृषस्व स्वोदरमासिञ्च सोमं पिबेत्यर्थः । हे मघवन् धनवन्निन्द्र सोमपानेन मत्तःसन् दृह्लश्चिद् दृढानि परैः अबाधितान्यपि शत्रुपुराणि मघत्तये मघानां धनानां लाभाय दृह्य जिघांस विदारयेत्यर्थः ॥ १० ॥

१०. अत्यन्त पूजनीय और नेताओं में श्रेष्ठ इन्द्र, महान् धन के लाभ के लिए अपने उदर को सोम-द्वारा सींचो। धनी इन्द्र, धन-प्राप्ति के लिए तुम सुदृढ़ शत्रु-पुरियों को विनष्ट करो।

॥ इति षष्ठस्य द्वितीये षोडशोवर्गः ॥ १६ ॥

नू अ॒न्यत्रा॑ चिदद्रिव॒स्त्वन्नो॑ जग्मुरा॒शसः॑ ।
मघ॑वञ्छ॒ग्धि तव॒ तन्न॑ ऊ॒तिभिः॑ ॥ ११ ॥

नु॒ । अ॒न्यत्र॑ । चि॒त् । अ॒द्रि॒ऽवः॒ । त्वत् । नः॒ । ज॒ग्मुः॒ । आ॒ऽशसः॑ ।
मघ॑ऽवन् । श॒ग्धि । तव॑ । तत् । नः॒ । ऊ॒तिऽभिः॑ ॥ ११ ॥

हे अद्रिवः वज्रवन्निन्द्र त्वं धनवान् दाताचेत्यपरिज्ञाय नोस्मदीयानि आशसः आशंसनान्यभिलाषाः त्वत् त्वत्तोन्यत्र देवादौ नूचित् पुरा जग्मुः अगच्छन् तत्र फलं नालभन्त । इदानीं त्वं धनवान् त्वं दानशीलइत्यस्माभिर्ज्ञातं अतएव हे मघवन् धनवन् इन्द्र तव त्वदीयं तच्छत्रुपुरविदारणलब्धं धनं ऊतिभिः तद्रक्षणैः नोस्मभ्यं शग्धि देहि शग्धीति दानकर्मा शकोतेर्लोटि छान्दसोविकरणस्यलुक् ॥ ११ ॥

११. वज्री और धनी इन्द्र, हम लोगों ने तुमसे पहले अन्य देवों के निकट आशायें की थीं; (परन्तु निष्फल)। इस समय तुम हमें धन और रक्षण दो।

अथ द्वादशी–

नह्य१ङ्गनृतोत्वदन्यंविन्दामिराधसे ।
रायेद्युम्नायशवसेचगिर्वणः ॥ १२ ॥

नहि । अङ्ग । नृतो इति । त्वत् । अन्यम् । विन्दामि ।
राधसे । राये । द्युम्नाय । शवसे । च । गिर्वणः ॥ १२ ॥

हे नृतो नर्तयितः गिर्वणः गीर्भिः स्तुतिभिः वननीय संभजनीयेन्द्र राधसे बलसंसाधकायान्नाय राये धनाय द्युम्नाय द्योतमानाय यशसे शवसे वर्धकाय बलायच त्वत्त्वत्तोन्यं नहि विन्दामि न लभे । अंग प्रसिद्धौ ॥ १२ ॥

१२. नचानेवाले और स्तोत्र-पात्र इन्द्र, अन्न-प्रकाशक यश और बल के लिए तुम्हारे सिवा अन्य किसी को नहीं जानता हूँ ।

एन्दुमिन्द्रायसिञ्चतपिबातिसोम्यंमधु ।
प्रराधसाचोदयातेमहित्वना ॥ १३ ॥

आ । इन्दुम् । इन्द्राय । सिंचत । पिबाति । सोम्यम् । मधु ।
प्र । राधसा । चोदयाते । महिऽत्वना ॥ १३ ॥

हे ऋत्विजः इन्दुं स्यंदनशीलं सोमं इंद्राय इन्द्रार्थमासिञ्चत आश्रयणद्रव्येण सेचनं कुरुत अभिषुतेत्यर्थः। ततः सोम्यं सोममयं मधु मधुकरं सोमरसं पिबाति पिबतु पीत्वाच सइन्द्रः महित्वना स्वमहत्त्वेनैव राधसा अन्नेन सह धनादिकं स्तोतृभ्यः प्रचोदयाते प्रकर्षेण चोदयति । यद्वा यजमानः महित्वना इन्द्राय प्रदीयमानत्वादस्य महत्वं महत्वयुक्तेन राधसान्नेन सह स्तोतृन्प्रचोदयति इन्द्राय हविर्दत्तेति स्तोतॄन् प्रेरयतीत्यर्थः ॥ १३ ॥

१३. इन्द्र के लिए ही तुम सोम-सिंचन करो (सोम चुआओ) । इन्द्र सोममय मधु (रस) पियें। वह अपने महत्त्व और अन्न के साथ धनादि भेजते हैं।

अथ चतुर्दशी–

उपोहरींणांपतिंदक्षंपृञ्चन्तमब्रवम् ।
नूनंश्रुधिस्तुवतोअश्व्यस्य ॥ १४ ॥

उपो इति । हरीणाम् । पतिम् । दक्षम् । पृञ्चन्तम् । अब्रवम् ।
नूनम् । श्रुधि । स्तुवतः । अश्व्यस्य ॥ १४ ॥

हरीणां हरितवर्णानामश्वानां पतिं पालयितारं दक्षं वर्धकं स्वबलं पृंचन्तं पृचीसंपर्के मरुत्सु योजयन्तम् यद्वा शत्रुषु स्वबलमायुधादिभिः संपर्चयन्तमेतादृशमिन्द्रं त्वामुपो अब्रवं विश्वमना अहं स्तोत्रं करवाणि । अश्व्यस्य व्यश्वोनामर्षिः अश्वशब्देनोच्यते तस्य पुत्रस्य स्तुवतः स्तोत्रं कुर्वतोमम संबन्धिनीं त्वद्विषयां स्तुतिं नूनं सम्प्रति श्रुधि शृणु ॥ १४ ॥

१४. अश्वों के अधिपति इन्द्र की मैं स्तुति करूँ। वे अपना वर्द्धक बल दूसरे को देते हैं। स्तोता व्यश्व ऋषि के पुत्र की (मेरी) स्तुति सुनो।

नह्यं१ङ्गपुराचनजज्ञेवीरतरस्त्वत् ।
नकीरायानैवथानभन्दना ॥ १५ ॥ १७

नहि । अङ्ग । पुरा । चन । जज्ञे । वीरऽतरः । त्वत् ।
नकिः । राया । न । एवऽथा । न । भन्दना ॥ १५ ॥ १७॥

हे इन्द्र त्वत् त्वत्तः पुरा पूर्वं वीरतरः सामर्थ्यवान्कश्चिन्नहि जज्ञे न जातः खलु । अंग प्रसिद्धौ । त्वमेव सामर्थ्यवान् जातइत्यर्थः । किञ्च त्वत्तोपि राया धनेन समर्थोनकिर्नकश्चिदस्ति । तथा एवथा शत्रुपुराणि संग्रामं वा प्रतिगमनेन त्वत्तोधिकोनजातः । यद्वा एवथा अवरक्षणादिषु अकारस्य एकारश्छान्दसः औणादिकोथप्रत्ययः शरणागतानां स्तोतॄणां चावनेन त्वत्तोधिकोनास्ति । किंच भन्दना भंदतिः स्तुतिकर्मा स्तुत्याच त्वदधिकोनजातः धनवान्रक्षकः स्तुत्यश्च त्वत्तोन्योनजज्ञइति ॥ १५ ॥

१५. इन्द्र, प्राचीन समय में तुमसे अधिक धनी, समर्थ, आश्रयदाता और स्तुति-युक्त कोई नहीं उत्पन्न हुआ।

॥ इति षष्ठस्य द्वितीये सप्तदशोवर्गः ॥१७॥

एदुमध्वइति तृचः पूर्वोक्तेब्राह्मणाच्छंसिशस्त्रे वैकल्पिकोनुरूपः सूत्रितंच—एदुमध्वोमदिन्तरमेतोन्विन्द्रंस्तवामसखायइति ।

सूक्ते षोडशी—

एदुमध्वोमदिन्तरंसिञ्चवाध्वर्योअन्धसः ।
एवाहिवीरःस्तवंतेसदावृधः ॥ १६ ॥

आ । इत् । ऊँ इति । मध्वः । मदिन्ऽतरम् । सिञ्च । वा ।
अध्वर्यो इति । अंधसः । एव । हि । वीरः । स्तवंते । सदाऽवृधः ॥१६॥

हे अध्वर्यो अध्वरस्यनेत ऋत्विक् मध्वोमदकरस्यान्धसः सोमलक्षणस्यान्नस्य मदिन्तरं अत्यर्थं मादयितृतमं सोमरसमेव आसिञ्च इन्द्रार्थं । अयमेवेन्द्रः स्तवतेहि स्तोत्रशस्त्रादिभिः स्तूयते खलु । कीदृशः वीरः विक्रान्तः सदावृधः सर्वदावर्धमानः स्तुतायेन्द्राय सोमोदातव्यः तस्मादासिञ्चेति समन्वयः ॥ १६ ॥

१६. ऋत्विक्, तुम मदकर सोम-रूप अन्न के अतीव मदकर अंश (सोमरस) का, इन्द्र के लिए, सेचन करो। इन वीर और सदा वर्द्धनशील इन्द्र की ही लोग स्तुति करते हैं।

इन्द्र॑स्थातर्हरीणा॒न्नकि॑ष्टेपू॒र्व्य॑स्तु॑तिम् ।
उदा॑नंशशव॑सा॒नभ॒न्द॒ना ॥ १७ ॥

इन्द्र॑ । स्था॒तः॒ । ह॒री॒णा॒म् । नकिः॑ । ते॒ । पू॒र्व्यऽस्तु॑तिम् ।
उत् । आ॒नं॒श॒ । शव॑सा । न । भ॒न्द॒ना ॥ १७ ॥

हे हरीणां स्थातः अश्वानामधिष्ठातरिन्द्र ते त्वदीयां पूर्व्यस्तुतिं पूर्वैर्ऋषिभिः कृतां स्तुतिमुपलक्षणं इदानींतनैःक्रियमाणामपिस्तुतिं नकिर्नकश्चित् शवसा बलेन उदानंश व्याप्नोति । अशूव्याप्तौ लिटि अश्नोतेश्चेतिनुट् छान्दसआगमः कश्चिन्नातिक्रामतीत्यर्थः । किंच भन्दना सर्वैः प्रार्थनीयत्वात् पूजनीयेन धनेन स्तुत्यावा त्वदीयां स्तुतिं नकश्चिदतिक्रामति त्वत्तोबलवान्धनी स्तुत्योवान्योनास्तीत्यर्थः ॥ १७ ॥

१७. हरि नामक अश्वों के स्वामी इन्द्र, तुम्हारी पहले की की गई स्तुतियों को कोई बल अथवा धन के कारण नहीं लाँघ सकता।

तंवो॒वाजा॑नां॒पति॒मह्॑महिश्रव॒स्यव॑ः ।
अप्रा॑युभिर्य॒ज्ञेभि॑र्वावृ॒धेन्य॑म् ॥ १८ ॥

तम् । वः॒ । वाजा॑नाम् । पति॑म् । अहू॑महि । श्र॒व॒स्यव॑ः ।
अप्रा॑युऽभिः । य॒ज्ञेभि॑ः । वा॒वृ॒धेन्य॑म् ॥ १८ ॥

अप्रायुभिः कर्मसु अप्रमाद्यन्मनुष्ययुक्तैः अथवा अप्रमत्ताएकत्रस्थित्वैवकर्मकुर्वन्ति कर्मारभ्यनान्यंदेशं गच्छन्तीत्यर्थः एवं विधमनुष्ययुक्तैर्यज्ञेभिर्यज्ञैः एतादृशमनुष्यैर्यज्ञैर्वा वावृधेन्यं वर्धनीयं वाजानामन्नानां पतिं स्वामिनं वः यष्टृयष्टव्यसंबन्धेन युष्मदीयंतं तादृशमिन्द्रं श्रवस्यवः वयमन्नकामाः सन्तः अहूमहि आह्वयामः । ह्वयतेर्लुङि बहुलंछन्दसीति संप्रसारणम् ॥१८॥

१८. अन्नाभिलाषी होकर हम, जिन यज्ञों में ऋत्विक्गण प्रमत्त नहीं होते, उन्हीं यज्ञों के द्वारा, वर्द्धनीय अन्नपति इन्द्र को बुलाते हैं।

पूर्वोक्तएव शस्त्रे एतोन्विन्द्रमित्येतौतृचौ वैकल्पिकौस्तोत्रियानुरूपौ सूत्रितश्च—एतोन्विन्द्रंस्तवामसखायःस्तुहीन्द्रंव्यश्ववदिति।

तयोः प्रथमा सूक्ते एकोनविंशी—

एतोन्विन्द्रंस्तवामसखायःस्तोम्यंनरम्।
कृष्टीर्योविश्वाअभ्यस्त्येकइत्॥ १९॥

एतो इति। नु। इन्द्रम्। स्तवाम। सखायः। स्तोम्यम्।
नरम्। कृष्टीः। यः। विश्वाः। अभि। अस्ति। एकः। इत्॥ १९॥

हे सखायः समानख्याना मित्रभूतावा हे ऋत्विजः नु क्षिप्रं एतो आगच्छतैव। किमर्थं तदाह स्तोम्यं स्तोमार्हं नरं सर्वस्यनेतारं तमिन्द्रं स्तवाम स्तोत्रं करवाम। यइन्द्रः एकइत् एकोसहायएवसन् विश्वाः सर्वाः कृष्टीः शत्रुसेनाः अभ्यस्ति अभिभवति तं स्तवामेतिशेषः॥१९॥

१९. मित्रभूत ऋत्विको, तुम शीघ्र आओ। हम स्तुति-योग्य नेता इन्द्र की स्तुति करेंगे। यह इन्द्र अकेले ही सारी शत्रु-सेना को अभिभूत करते हैं।

अथ विंशी—

अगोरुधायगविषेद्युक्षायदस्म्यंवचः।
घृतात्स्वादीयोमधुनश्चवोचत॥ २०॥ १८॥

अगोऽरुधाय। गोऽइषे। द्युक्षाय। दस्म्यम्। वचः। घृतात्।
स्वादीयः। मधुनः। च। वोचत॥ २०॥ १८॥

हे ऋत्विजःअगोरुधाय गाःस्तुतीरुणद्धीति गोरुधः नगोरुध अगोरुधः तान् अविनाशयति आदरेण शृणोतीत्यर्थः तादृशाय अतएव गविषे स्तोत्राणीच्छते द्युक्षाय दीप्यमानायेन्द्राय दस्म्यं दर्शनीयं घृतात्स्वादुतराद्वाज्यान्मधुनश्च स्वादीयः अतिशयेन स्वादुभूतं वचः स्तोत्ररूपं वाक्यं वोचत ब्रूत ऋत्विग्भ्यः कृतंकर्म यजमानोपि कृतवान् भवतीति यदिदमिन्द्रविषयंवचः घृतान्मधुनश्च स्वादुतरं भवत्वित्याशास्ते। तदाहभगवानाश्वलायनः—वचएवमइदं घृताच्चमधुनश्चस्वादीयोस्तिमीतिःस्वादीयोस्त्वित्येवतदाहेति[1]॥ २०॥

२०. ऋत्विको, जो इन्द्र स्तुति को नहीं रोकते, स्तुति की अभिलाषा करते हैं, उन्हीं दीप्तिशाली इन्द्र के लिए घृत और मधु से भी स्वादु और अत्यन्त मीठा वचन कहो।

॥ इति षष्ठस्य द्वितीयेष्टादशोवर्गः॥ १८॥

---

1 गृ०सू० १. १.।

अथैकविंशी—

यस्यामितानिवीर्या३ नराधःपर्येतवे।
ज्योतिर्नविश्वमभ्यस्तिदक्षिणा ॥ २१ ॥

यस्य। अमितानि। वीर्या। न। राधः। परिऽएतवे।
ज्योतिः। न। विश्वम्। अभि। अस्ति। दक्षिणा ॥ २१ ॥

यस्येन्द्रस्य वीर्या वीर्याणि वृत्रहननादिलक्षणानि सामर्थ्यानि अमितानि अस्य इयन्ति सामर्थ्यानि नान्यानीति परिमितानि नभवन्ति। यद्वा मीञ् हिंसायां छान्दसोह्रस्वः शत्रुभिरहिंसितानि भवन्ति। तथा यस्येन्द्रस्य राधोधनं न पर्येतवे शत्रुभिः परिगंतुं प्राप्तुं शक्यं न भवति। अतएवास्यदक्षिणा धनं दानमभ्यस्ति विश्वं सर्वं स्तोतृजनं अभिभवति। तत्रदृष्टान्तः—ज्योतिर्न ज्योतिषामयनत्वात्ज्योतिरन्तरिक्षं यथान्तरिक्षं सर्वलोकं पिधाय तिष्ठति तद्वत् स्तोतृजनं धनदानेन पिधत्तइत्यर्थः। यद्वा येन दत्तं धनं सर्वं शत्रुजनमभिभवति येनदत्तं धनमादायासतः शत्रूनभिभवतीत्यर्थः ॥ २१ ॥

२१. जिन इन्द्र के वीर-कर्म असीम हैं, जिनके धन को शत्रु नहीं पा सकते और जिनका दान, ज्योति (अन्तरिक्ष) के समान, सारे स्तोताओं को व्याप्त करता है—

स्तुहीन्द्रंव्यश्ववदनूर्मिवाजिनंयमम्।
अर्योगयंमंहमानंविदाशुषे ॥ २२ ॥

स्तुहि। इन्द्रम्। व्यश्वऽवत्। अनूर्मिम्। वाजिनम्। यमम्।
अर्यः। गयम्। मंहमानम्। वि। दाशुषे ॥ २२ ॥

हे विश्वमनः अनूर्मिं ऊर्मिर्हिंसाकर्मा कैश्चिदप्यहिंस्यं अथवा शत्रुभिरगंतव्यं अतएव वाजिनं बलवन्तं यमं स्तोतृभिः सुनियतमेतादृशमिन्द्रं स्तुहि। स्तोत्रेदृष्टान्तः—व्यश्ववत् यथा व्यश्वोविश्वमनसः पिता इन्द्रमस्तौत् तद्वत् स्तुहीत्यर्थः। स्तुतश्चेत् अर्यः स्वामीन्द्रः दाशुषे हविर्दत्तवते यजमानाय मंहमानं पूज्यमानं गयं धनं यद्वा देवानां पूजायै गयं गृहं। गृहमस्तिचेत् देवाहविर्भिः पूज्यन्ते तादृशं गृहं वितरति तस्मात् त्वं धनगृहलाभाय स्तुहीत्यर्थः ॥ २२ ॥

२२. उन्हीं न मारने योग्य, बली और स्तोताओं के द्वारा नियन्त्रित इन्द्र की, व्यश्व ऋषि के समान, स्तुति करो। स्वामी इन्द्र हव्यदाता को प्रशस्त गृह देते हैं।

अथ त्रयोविंशी—

एवानूनमुपस्तुहिवैयश्वदशमंनवम् ।
सुविद्वांसंचर्कृत्यंचरणीनाम् ॥ २३ ॥

एव । नूनम् । उप । स्तुहि । वैयश्व । दशमम् । नवम् ।
सुऽविद्वांसम् । चर्कृत्यम् । चरणीनाम् ॥ २३ ॥

हे वैयश्व व्यश्वस्यपुत्र विश्वमनः चर्षणीनां मनुष्याणां देहेस्थितानां नवानां प्राणानां दशमं दशसंख्यापूरकं । तत्रमन्त्रः—नववै पुरुषेप्राणामनुष्येषुर्वतमानाइन्द्रस्तेषां दशधाभवतींद-स्यात्मानं दशधाचरन्तमितिं । एतादृशं अतएव नवं स्तुत्यं सुविद्वांसं अंतर्यामित्वात् सुष्ठु सर्वं जानन्तं चर्कृत्यं भूयोभूयः कार्येषु सर्वैर्नमस्कर्तव्यमेवंविधमिन्द्रं एव नूनमिदानी मुपस्तुहि समीपेस्तुहि ॥२३॥ २३. व्यश्व के पुत्र विश्वमना, मनुष्य के दसवें प्राण इन्द्र हैं; इसलिए अभिनव, विद्वान् तथा सदा नमस्कार के योग्य इन्द्र की स्तुति करो।

अथ चतुर्विंशी—

वेत्थाहिनिर्ऋतीनांवज्रहस्तपरिवृजम् ।
अहरहःशुन्ध्युःपरिपदामिव ॥ २४ ॥

वेत्थ । हि । निःऽऋतीनाम् । वज्रऽहस्त । परिऽवृजम् ।
अहःऽअहः । शुन्ध्युः । परिपदाम्ऽइव ॥ २४ ॥

इदानीमृषिरिन्द्रं संबोध्यआह हे वज्रहस्त वज्रयुक्तहस्तेन्द्र निर्ऋतीनामुपद्रवकारिणां रक्षसां परिवृजं परिवर्जनं हिरवधारणे त्वमेववेत्थ जानीषे । तत्रदृष्टान्तः—अहरहः शुंध्युः अस्मिन्नुदितेसति ब्राह्मणा आत्मीयं कर्म कृत्वा शुद्धाभवन्तीति शोभाहेतुत्वात् शुन्ध्युरादित्यः परिपदामिव परितः यजमानानां इव यद्वा परिपदां समानाधिकरणः परितः पततां पक्षिणां वर्जनं स्वस्थानत्यागं अहरहः प्रतिदिवसं यथा वेत्ति उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतोगच्छन्ति खलु । एवं त्वयीन्द्रे स्वबलेन प्रकाशमानेसति शत्रवः स्वपुरादि त्यक्त्वा पलायन्त इत्यर्थः ॥ २४ ॥

२४. जैसे आदित्य प्रतिदिन पक्षियों का उड़ना जानते हैं, वैसे ही, हे वज्रहस्त इन्द्र, तुम निर्ऋतियों (राक्षसों) का गमन समझते हो।

---

१ तै० ब्रा० १. ३. ७. ।

अथ पञ्चविंशी—

तदिन्द्रावआभरयेनादंसिष्ठकृत्वने ।
द्विताकुत्सायशिश्नथोनिचोदय ॥ २५ ॥ १९ ॥

तत् । इन्द्र । अवः । आ । भर । येन । दंसिष्ठ । कृत्वने ।
द्विता । कुत्साय । शिश्नथः । नि । चोदय ॥ २५ ॥ १९ ॥

हे इन्द्र तदवस्तद्रक्षणमस्मभ्यमाभर हे दंसिष्ठ अत्यन्तं दर्शनीय यद्वा शत्रूणामुपक्षपयितरिन्द्र कृत्वने कर्मकुर्वते यजमानाय तदर्थं येन पालनमकुथाः तद्रक्षणमाभरेति समन्वयः। किञ्च कुत्साय कुत्सनामकाय राजर्षये द्विता द्विधा प्रकारेण शिश्नथः त्वं शत्रूनवधीः तस्मै द्वैधं पालनमकार्षीरित्यर्थः तद्रक्षणमप्यस्मभ्यं निचोदय नितरामत्यर्थं प्रेरय । यद्वा कृत्वनइति सामान्येनोक्त्वा निःशेषेण तदेवाह कुत्सायेत्यादि । शेषं पूर्ववत् ॥ २५ ॥

२५. अतीव दर्शनीय इन्द्र, कर्मनिष्ठ यजमान के लिए हमें अपना आश्रय दो। कुत्स नामक राजर्षि के लिए तुमने दो प्रकार से शत्रुओं का वध किया है। हमें वही रक्षा दो।

॥ इति षष्ठस्य द्वितीये एकोनविंशोवर्गः ॥ १९ ॥

अथ षड्विंशी—

तमुत्वानूनमीमहेनव्यंदंसिष्ठसंन्यसे ।
सत्वंनोविश्वाअभिमातीःसक्षणिः ॥ २६ ॥

तम् । ऊँ इति । त्वा । नूनम् । ईमहे । नव्यम् । दंसिष्ठ ।
संन्यसे । सः । त्वम् । नः । विश्वाः । अभिऽमातीः । सक्षणिः ॥ २६॥

हे दंसिष्ठ अतिशयेन दर्शनीयेन्द्र नव्यं स्तोतृभिः स्तोतव्यं तमु तादृशमेव त्वा त्वां नूनमिदानीमीमहे वयं याचामहे । किमर्थं संन्यसे असुक्षेपणे भावेक्विप् संन्यासार्थं याचामहइति शेषः। सतादृशस्त्वं नोस्माकं विश्वाः सर्वाअभिमातीः शत्रुसेनाः सक्षणिः सहेः सनिः प्रत्ययः सहनशीलोभिभवनशीलोभवसि ॥ २६ ॥

२६. अतीव दर्शनीय इन्द्र, तुम स्तुति-योग्य हो। देने के लिए तुमसे हम धन की याचना करते हैं। तुम हमारी सारी शत्रु-सेना के अभिभव-कर्त्ता हो।

अथ सप्तविंशी—

यक्कक्षादंहसोमुचद्योवार्यात्सप्तसिन्धुषु ।
वर्धदासस्यतुविनृम्णनीनमः ॥ २७ ॥

यः । ऋक्षात् । अंहसः । मुचत् । यः । वा । आर्यात् । सप्त ।
सिन्धुषु । वधः । दासस्य । तुविऽनृम्ण । नीनमः ॥ २७ ॥

पूर्वोर्धर्चः परोक्षकृतः यइन्द्रऋक्षात् ऋन्मनुष्यान् क्षणोति क्षणोतेरौणादिकोडप्रत्ययः तस्माद्रक्षसोजातादंहसः पापरूपादुपद्रवान्मुचत् मुञ्चति राक्षसएनं नबाधते किंपुनस्तंहन्तीत्यर्थः । अपिच यइन्द्रः सप्तसिंधुषु गंगाद्यासु नदीषु यद्वा सप्त सर्पणशीलासु सिंधुषु तत्कूलेष्वित्यर्थः गंगायांघोषइतिवत् । तेषु वर्तमानानां स्तोतॄणां आर्यात् धनादिकं प्रेरयेत् ऋगतिप्रापणयोः आशीर्लिङि गुणोर्तिसंयोगाद्योरिति गुणः बहुलंछन्दसीति लिङ्यप्याडागमः । अथप्रत्यक्षः हे तुविनृम्ण बहुधनेन्द्र दासस्योपक्षपयितुरसुरस्य वधः हननसाधनमायुधं नीनमः नमय ॥२७॥

२७. जो इन्द्र राक्षस-विहित पाप से मुक्त करते हैं और जो सिन्धु आदि सातों नदियों के तट पर वर्त्तमान यजमानों के पास धन भेजते हैं, वही तुम, हे बहु-धनी इन्द्र, असुर शत्रु के वध के लिए अस्त्र नीचे करो।

यथावरोसुषाम्णेसनिभ्यआवहोरयिम् ।
व्यश्वेभ्यःसुभगेवाजिनीवति ॥ २८ ॥

यथा । वरो इति । सुऽसाम्ने । सनिऽभ्यः । आ । अवहः ।
रयिम् । विऽअश्वेभ्यः । सुऽभगे । वाजिनीऽवति ॥ २८ ॥

अनेनतृचेन वरोर्दानंस्तूयते—हे वरो वरुनामकराजन् सुषाम्णे सुसाम्ने सुषामाख्यं राजानं स्वपितरमुद्दिश्य तस्योत्तमलोकप्राप्त्यर्थं सनिभ्यो भिक्षमाणेभ्यो आ कोशात् आहृत्य रयिं धनं यथा पुरा अवहः प्रापितवानसि अतएवमिदानीं व्यश्वेभ्यः व्यश्वपुत्रेभ्योस्मभ्यं धनमावह । वाजिनीवतीतिपदलिंगादियमुषस्या अयंतृचोप्युषस्यइति शौनकेनोक्तम्—यथा वरोसुषाम्णइत्युत्तमस्त्वौषसस्तृचइति । हे सुभगे शोभनधनयुक्ते वाजिनीवति अन्नवति मतुबनुवादार्थः । यद्वा वाजोवाजनं गमनमस्यास्तीति वाजिनी अन्नं तद्वति हे उषः त्वं चास्मभ्यं धनं प्रयच्छ वरोर्बहुधनदानात्तस्य दानस्तुतिः । यद्वा विश्वमनाऋषिः वरुं संबोध्याह हे सुभगे शोभनधने वाजिनीवति अन्नवति हे उषः यथा त्वं सुषाम्णे सुषामनाम्ने मम पित्रे धनं दत्वा तेनैव सुषाम्णा सनिभ्योयाचमानेभ्यः धनं यथा प्रापितवत्यसि तेन यथा दानमकारयः एवं मह्यमपि धनं दत्वा व्यश्वेभ्यः पूजायां बहुवचनं व्यश्वपुत्राय विश्वमनसे धनं प्रापयेति मयापि दानंकरोषि । हेवरो उषसमेवंवदेत्यृषिराह ॥ २८ ॥

२८. वरु राजा, अपने "पितर" सुषामा राजा के लिए प्राचीन समय में जैसे तुमने याचकों को धन दिया था, वैसे ही इस समय व्यश्वों (हम लोगों) को दो। शोभन धनवाली और अन्नवाली उषा, तुम भी धन दो।

अथैकोनत्रिंशी–

आनार्यस्यदक्षिणाव्यश्वाँएतुसोमिनः।
स्थूरंचराधःशतवत्सहस्रवत् ॥ २९ ॥

आ। नार्यस्य। दक्षिणा। विऽअश्वान्। एतु। सोमिनः।
स्थूरम्। च। राधः। शतऽवत्। सहस्रऽवत् ॥ २९ ॥

अनया धनं ऋषिरादत्तवानित्याह नार्यस्य नरहितोनर्यः तस्यापत्यंनार्यः तस्मात् संबन्धमात्रे तस्येदमित्यण् तस्य सोमिनः सोमवतोयजमानस्य यद्वा व्यश्वानां विशेषणं तादृशस्य वरोर्दक्षिणादानं सोमवतोव्यश्वान् व्यश्वपुत्रानस्मानैतु आगच्छतु। किंच स्थूरं स्थूलं शतवत्सहस्रवत् शतसहस्रधनयुक्तं राधोन्नं चास्मानागच्छतु ॥ २९ ॥

२९. मनुष्यों के हितैषी और सोमवाले यजमान (वरु) की दक्षिणा सोम से युक्त व्यश्व-पुत्रों (हम लोगों) के पास आवे। सौ और हजार स्थूल धन हमारे पास आवें।

यत्त्वांपृच्छादीजानःकुहयाकुहयाकृते।
एषोअपश्रितोवलोगोमतीमवतिष्ठति ॥ ३० ॥ २० ॥

यत्। त्वा। पृच्छात्। ईजानः। कुहया। कुहयाऽकृते। एषः।
अपऽश्रितः। वलः। गोऽमतीम्। अव। तिष्ठति ॥ ३० २० ॥

इदानीमुषसं संबोध्याभिधीयते हे कुहयाकृते सवरुः कुह कुत्रतिष्ठतीत्येतदिच्छयाभिलक्षणप्रवृत्तैर्जिज्ञासुभिः पुरस्कृते कुहशब्दात् क्यच् एतादृशे हे उषः त्वा त्वां यद्यदां कश्चित् पृच्छात् पृच्छति ईजानः इष्टवान् वरुः कुहया क्वतिष्ठतीति यदा पृच्छति तदानीमपश्रितः सर्वैराश्रितः यद्वा विवृतद्वारः। यदा याचमानाआगच्छन्ति तदा दौवारिका न प्रतिबध्नन्तीत्यर्थः तादृशः वलोवरः स्वबलेनावरकः शत्रूणां यद्वा भिक्षूणां धनादिप्रदानेनावरिता एषोएषवरुः गोमतीं एतन्नामिकां नदीं कालाध्वनोरितिद्वितीया तस्यास्तीरे अवतिष्ठतीति तदानीं त्वं कथयसि ॥३०॥

३०. उषादेवी, जो तुमसे पूछते हैं कि "वरु कहाँ रहते हैं", वे अप्र-जिज्ञासु हैं। यदि तुमसे कोई पूछे कि "कहाँ", तो सबके आश्रय-स्थल और शत्रु-निवारक यह वरु राजा गोमती के तट पर रहते हैं—ऐसा कहना। ॥ इति षष्ठस्य द्वितीये विंशोवर्गः ॥ २० ॥

तावामिति चतुर्विंशत्यृचं पञ्चमं सूक्तम् अत्रेयमनुक्रमणिका—तावांचतुर्विंशतिर्मैत्रावरुणं दशम्याद्यास्तिस्रोवैश्वदेव्यउपान्त्योष्णिग्गर्भेति। व्यश्वपुत्रोवैयश्वनामा ऋषिः पूर्ववदुष्णि-

कृछन्दः त्रयोविंशीउष्णिग्गर्भा । षट्सप्तैकादशाउष्णिग्गर्भेति तल्लक्षणोपेतत्वात् । दशम्येकादशीद्वादश्योवैश्वदेव्यः अवशिष्टानां मित्रावरुणौ देवता सूक्तविनियोगोलैंगिकः ।

तस्मिन्सूक्ते प्रथमा—

तावांविश्वस्यगोपादेवादेवेषुयज्ञिया ।
ऋतावानायजसेपूतदक्षसा ॥ १ ॥

ता । वाम् । विश्वस्य । गोपा । देवा । देवेषु । यज्ञिया ।
ऋतऽवाना । यजसे । पूतऽदक्षसा ॥ १ ॥

हे मित्रावरुणौ विश्वस्य सर्वस्य लोकस्य गोपा गोपायितारौ देवा देवौ द्योतनशीलौ देवेषु मध्ये यज्ञिया यज्ञार्हौ ता तौ तादृशौ वां युवां हविःप्रदानार्थं यजमानंभजथः अतएव हे विश्वमनाः ऋतावाना ऋतावानौ सत्यवन्तौ यज्ञवन्तौवा पूतदक्षसा पूतदक्षसौ शुद्धबलौ । आवां बलवन्ताविति वचनमात्रेण बलवन्तौ न भवतः । किन्तु यथार्थत्वेन सामर्थ्यवंतौ मित्रावरुणौ यजसे हविर्भिः पूजयसि ॥ १ ॥

१. समस्त संसार के रक्षक मित्र और वरुण, देवों में तुम भजनीय हो। हविः-प्रदान के लिए तुम यजमान का आश्रय करो। व्यश्व, यज्ञवान् और विशुद्ध बलवाले मित्र और वरुण का यज्ञ करो।

मित्रातनानरथ्यावरुणोयश्चसुक्रतुः ।
सनात्सुजातातनयाधृतव्रता ॥ २ ॥

मित्रा । तना । न । रथ्या । वरुणः । यः । च । सुऽक्रतुः ।
सनात् । सुऽजाता । तनया । धृतऽव्रता ॥ २ ॥

सुक्रतुः शोभनकर्मा योवरुणः सुकर्मा मित्रश्च मित्रावरुणौ कीदृशौ तना तन्वन्वि मुकुटकटकादिनेति तनानि धनानि नश्चार्थे धनानिच रथ्या रथ्यौ नेतारौ । यद्वा धनानि कर्मणः कर्तृपक्षत्वात् प्रयच्छन्ताविति संबध्यते । तादृशौ रथ्यौ रथवन्तौ सनाच्चिरादेव सुजाता सुजातौ शोभनजन्मानौ तदेवाह तनया तनयौ अदितेः पुत्रौ धृतव्रता धृतव्रतौ धृतकर्माणौ तौ यजसइति पूर्वेणसमन्वयः ॥ २ ॥

२. शोभन-कर्मा जो मित्र और वरुण धन और रथवाले हैं, वे बहुत समय से सुन्दर-जन्मा और अदिति के पुत्र तथा धृत-व्रत हैं।

अथ तृतीया—

तामातविश्ववेदसासुर्यायप्रमहसा।
महीजजानादितिर्ऋतावरी ॥ ३ ॥

ता। माता। विश्वऽवेदसा। असुर्याय। प्रऽमहसा।
मही। जजान। अदितिः। ऋतऽवरी ॥ ३ ॥

अदितेस्तनयत्वमेव स्फुटयति—विश्ववेदसा विश्ववेदसौ सर्वधनौ यद्वा विश्वानि स्थावर-जंगमात्मकानि सर्वाणि विदतुर्जानीतइति विश्ववेदसौ प्रमहसा प्रमहसौ प्रकृष्टतेजस्कौ ता तौ तादृशौ मित्रावरुणौ मही महती ऋतावरी सत्यवती माता देवमाता अदितिः जजान जनयामास। किमर्थं असुर्याय असुराणां हन्त्रे बलाय असुरान्हंतुमुत्पादितवतीत्यर्थः ॥ ३ ॥

३. महती और सत्यवती अदिति ने सर्वधनशाली और तेजस्वी उन्हीं मित्र तथा वरुण को असुर-हनन-बल के लिए उत्पन्न किया है।

अथ चतुर्थी—

महान्तामित्रावरुणासम्राजादेवावसुरा।
ऋतावानावृतमाघोषतोबृहत् ॥ ४ ॥

महान्ता। मित्रावरुणा। सम्ऽराजा। देवौ। असुरा।
ऋतऽवानौ। ऋतम्। आ। घोषतः। बृहत् ॥ ४ ॥

महान्ता गुणाधिक्येन महान्तौ सम्राजा सम्राजौ सम्यग्दीप्यमानौ असुरा असुरौ बलवन्तौ यद्वा सर्वान्तर्यामितया प्रेरकौ ऋतावानौ सत्यवन्तौ मित्रावरुणौ देवौ बृहत् स्तोत्रशस्त्रादिना महान्तं ऋतं यज्ञमाघोषतः स्वदीप्त्या प्रकाशयतः घुषेर्लेटिरूपम् ॥ ४ ॥

४. महान्, सम्राट्, बली (असुर) और सत्यवान् मित्र और वरुण महान् यज्ञ का प्रकाशन करते हैं।

अथ पञ्चमी—

नपाताशवसोमहःसूनूदक्षस्यसुक्रतू।
सृप्रदानूइषोवास्त्वधिक्षितः ॥ ५ ॥ २१ ॥

नपाता। शवसः। महः। सूनू इति। दक्षस्य। सुक्रतू इति सुऽक्रतू।
सृप्रदानू इति सृप्रऽदानू। इषः। वास्तु। अधि। क्षितः ॥ ५ ॥ २१ ॥

महोमहतः शवसोबलस्यनपाता नपातौ पौत्रौ बलेनोत्पादिताविति बलस्य पौत्रौ तादृशा दक्षस्य। दक्षवृद्धौ शीघ्रार्थेचेति दक्षोवेगः। तस्य सूनू पुत्रौ। बलाद्वेगइति तयोःपुत्रत्वं। तौ सुक्रतू शोभनकर्माणौ सुप्रदानू प्रसृतधनादिदानौ मित्रावरुणौ इषोन्नस्य वास्तु निवासस्थाने अधिक्षितः अधिवसतः। अधिशीङिति वास्तुनः कर्मसंज्ञा क्षयतेर्लटि छान्दसोविकरणस्यलुक् ॥ ५॥

५. महान् बल के पौत्र, वेग के पुत्र, सुकर्मा और प्रचुर धन देनेवाले मित्र और वरुण अन्न के निवास-स्थान में रहते हैं।

॥ इति षष्ठस्य द्वितीये एकविंशोवर्गः ॥ २१ ॥

अथ षष्ठी—

संयादानूनियेमथुर्दिव्याःपार्थिवीरिषः।
नभस्वतीरावांचरन्तुवृष्टयः॥ ६ ॥

सम्। या। दानूनि। येमथुः। दिव्याः। पार्थिवीः।
इषः। नभस्वतीः। आ। वाम्। चरन्तु। वृष्टयः॥ ६ ॥

हे मित्रावरुणौ या यौ युवां दानूनि देयानि धनानि संयेमथुः अस्मासु संयच्छतं तथा दिव्यानि दिविभवानि पार्थिवीः पृथिव्यामुत्पन्नानि इषोन्नानि संयच्छतं वृष्टयभावे कथमन्नलभ्यतइतिचेत् तदुच्यते—नभस्वतीः उदकवत्योवृष्टयःतादृशौ वां युवां आचरन्तूपतिष्ठन्तु ॥६॥

६. मित्र और वरुण, तुम लोग धन तथा दिव्य और पृथिवी पर उत्पन्न अन्न देते हो। जलवती वृष्टि तुम्हारे पास रहे।

अधियाबृहतोदिवोऽभियूथेवपश्यतः।
ऋतावानासम्राजानमसेहिता॥ ७ ॥

अधि। या। बृहतः। दिवः। अभि। यूथाऽइव। पश्यतः।
ऋतऽवाना। सम्ऽराजा। नमसे। हिता॥ ७ ॥

या यौ मित्रावरुणौ बृहता दिवोद्योतमानान् देवानधिपश्यतः। तत्रदृष्टान्तः—यूथेव यथा वृषभः गोयूथानिरन्तुमभि अभिमुखं पश्यति तद्वदेतौ स्ववीर्येणासुरान् हत्वा देवान्मोदयितुं पश्यतइत्यर्थः। कीदृशौ ऋतावाना सत्यवन्तौ सम्राजा सम्राजौ सम्यग्दीप्यमानौ नमसे हविषे हिता हितौ प्रियौ पश्यतइति ॥ ७॥

७. मित्र और वरुण, तुम सत्यवान्, सम्राट् और हव्य-प्रिय हो। तुम लोग प्रसन्न करने के लिए देवों को उसी प्रकार देखते हो, जिस प्रकार गो-यूथ को वृषभ देखता है।

अथाष्टमी–

ऋतावानानिषेदतुःसाम्राज्यायसुक्रतू।
धृतव्रताक्षत्रियाक्षत्रमाशतुः ॥ ८ ॥

ऋतऽवाना। नि। सेदतुः। साम्ऽराज्याय। सुक्रतू इति सुऽक्रतू।
धृतऽव्रता। क्षत्रिया। क्षत्रम्। आशतुः ॥ ८ ॥

ऋतावाना ऋतावानौ सत्यवन्तौ सुक्रतू शोभनकर्माणौ सुप्रज्ञौवा मित्रावरुणौ साम्राज्याय साम्राज्यार्थं निषीदतुः न्यसीदताम्। तथामन्त्रः–निषसादधृतव्रतोवरुणःपस्त्यास्वा। साम्राज्यायसुक्रतुरिति[1]। धृतव्रता धृतव्रतौ धृतकर्माणौ क्षत्रिया क्षत्रियौ बलवन्तौ क्षत्रं बलमाशतुः आनशाते व्याप्नुतइत्यर्थः ॥ ८ ॥

८. सत्यवान् और सुन्दर-कर्मा मित्र और वरुण साम्राज्य के लिए बैठें। धृत-व्रत और बली (क्षत्रिय) मित्र और वरुण बल (क्षत्र) को व्याप्त करें।

अथ नवमी–

अक्ष्णश्चिद्गातुवित्तरानुल्बणेनचक्षसा।
निचिन्मिषन्तानिचिरानिचिक्यतुः ॥ ९ ॥

अक्ष्णः। चित्। गातुवित्ऽतरा। अनुल्बणेन। चक्षसा।
नि। चित्। मिषन्ता। निऽचिरा। नि। चिक्यतुः ॥ ९ ॥

अक्ष्णश्चिद् चक्षुषोपि पूर्वं गातुवित्तरा गातुवित्तरौ अतिशयेन मार्गवेत्तारौ यद्वा गातुवित्तरौ गातु गमनशीलं प्राणिजातं चक्षुषोपि पूर्वं वेत्तारौ मित्रावरुणौ कीदृशौ निमिषन्ता निमिषन्तौ सर्वमुन्मेषयन्तौ स्वस्वकर्मणि निचिरा नितरां चिरंतनौ तौ अनुल्बणेन उल्बणमिति दुःसहमग्नेस्तेजः तद्वद् दुःसहेन चक्षसाहोरात्रयोर्व्याप्तेन तेजसैव निचिक्यतुः पूजितौ बभूवतुः। चिदवधारणे ॥ ९ ॥

९. नेत्र होने के प्रथम ही प्राणियों को जाननेवाले, सबके प्रेरक और चिरन्तन मित्र तथा वरुण दुःसह तेजोबल से शोभित हुए।

अथ दशमी–

उतनोदेव्यदितिरुरुष्यतांनासत्या।
उरुष्यन्तुमरुतोवृद्धशवसः ॥ १० ॥ २२ ॥

---

1 ऋ० सं० १. २. १७।

उत । नः । देवी । अदितिः । उरुष्यताम् । नासत्या ।
उरुष्यन्तु । मरुतः । वृद्धऽशवसः ॥ १० ॥ २२ ॥

उतापिच देवी द्योतनशीला अदितिर्मित्रावरुणयोर्माता नोस्मान्रक्षतु नासत्या नासत्यौ असत्यमनयोर्नास्तीति नासत्यौ अश्विनौच उरुष्यतां रक्षतां । उरुष्यतिः कंड्वादिः वृद्धश्रवसः वृद्धवेगा अतिशयेन वेगवन्तइत्यर्थः यद्वा वर्धनशीलहविर्लक्षणान्नोपेताः मरुतः उरुष्यन्तु अस्मान्पालयन्तु ॥ १० ॥

१०. अदिति देवी हमारी रक्षा करें। अश्विद्वय रक्षा करें। अत्यन्त वेगशाली मरुद्गण रक्षा करें।

॥ इति षष्ठस्य द्वितीये द्वाविंशोवर्गः ॥ २२ ॥

अथैकादशी—

तेनोनावमुरुष्यतदिवानक्तंसुदानवः ।
अरिष्यन्तोनिपायुभिःसचेमहि ॥ ११ ॥

ते । नः । नावम् । उरुष्यत । दिवा । नक्तम् । सुऽदानवः ।
अरिष्यन्तः । नि । पायुऽभिः । सचेमहि ॥ ११ ॥

हे सुदानवः शोभनदानामरुतः अरिष्यन्तः केनाप्यहिंसिताः ते तादृशायूयं नोस्मदीयां नावं यज्ञियां नावं दिवानक्तंच उरुष्यत पालयत । ततोवयं पायुभिर्युष्मदीयैः पालनैः निसचेमहि नितरां समवेताभवेम ॥ ११ ॥

११. शोभन दानवाले मरुतो, तुम लोग अहिंसित हो। तुम लोग दिन-रात हमारी नौका की रक्षा करो। हम तुम्हारे पालन से इकट्ठे होंगे।

अथ द्वादशी—

अघ्नतेविष्णवेवयमरिष्यन्तःसुदानवे ।
श्रुधिस्वयावन्त्सिन्धोपूर्वचित्तये ॥ १२ ॥

अघ्नते । विष्णवे । वयम् । अरिष्यन्तः । सुऽदानवे । श्रुधि ।
स्वऽयावन् । सिन्धो इति । पूर्वऽचित्तये ॥ १२ ॥

पूर्वोर्धर्चः परोक्षकृतः अरिष्यन्तःपालनवत्वात् केनाप्यबाधितावयं अघ्नते स्तोतॄणां यष्टॄणा चाहिंसकाय सुदानवे शोभनदानाय विष्णवे स्वमहत्त्वेन सर्वव्यापकाय एतन्नामकाय देवाय स्तुतिं कुर्मः । अथ प्रत्यक्षः हे स्वयावन् स्वयमेवासहायः सन् दिवि संग्रामेवा यातीति स्वयावन्

सिन्धो स्तोतॄन् प्रति धनानां स्यन्दनशील विष्णो पूर्वचित्तये चित्तिः कर्म मन्त्रान्तरेपि तथाश्रवणात्। साचित्तिभिर्निहिचकारमर्त्यमिति। पूर्वं प्रारब्धकर्मणे यजमानाय तदर्थं श्रुधि अस्माभिः क्रियमाणां स्तुतिं त्वं शृणु॥ १२॥

१२. हम अहिंसित होकर हिंसा-शून्य सुदाता विष्णु की स्तुति करेंगे। अकेले ही युद्ध-कर्त्ता विष्णु, तुम स्तोताओं को धन देनेवाले हो। जिसने यज्ञ प्रारम्भ किया है, उसकी स्तुति सुनो।

तद्वार्यंवृणीमहेवरिष्ठंगोपयत्यम्।
मित्रोयत्पान्तिवरुणोयदर्यमा॥ १३॥

तत्। वार्यम्। वृणीमहे। वरिष्ठम्। गोपयत्यम्। मित्रः। यत्। पान्ति। वरुणः। यत्। अर्यमा॥ १३॥

वरिष्ठं उरुतरं गोपयत्यं सर्वेषां रक्षकं सर्वैः पालनीयं वा वार्यं सर्वैर्वननीयं तद्धनं वृणीमहे वयं संभजामहे। यद्धनं मित्रः सर्वेषां मित्रभूतः वरुणः शत्रूणां वारयिता अर्यमा सर्वदागच्छन् एतन्नामकास्त्रयोदेवाः पांति पालयन्ति तद्धनं वृणीमहे अस्मदीयस्य धनस्य रक्षकाभवन्तीत्यर्थः॥ १३॥

१३. हम श्रेष्ठ, सबके रक्षक और वरणीय धन आश्रित करते हैं। मित्र, वरुण और अर्यमा इस धन की रक्षा करते हैं।

उतनःसिन्धुरपांतन्मरुतस्तदश्विना।
इन्द्रोविष्णुर्मीढ्वांसःसजोषसः १४॥

उत। नः। सिन्धुः। अपाम्। तत्। मरुतः। तत्। अश्विना। इन्द्रः। विष्णुः। मीढ्वांसः। सऽजोषसः॥ १४॥

पुनरपि धनरक्षणमेवाशास्ते उतापिच अपामुदकानां सिन्धुः स्यन्दनशीलः पर्जन्यः नोस्मदीयं तद्धनं रक्षतु तदेव मरुतश्च पालयन्तु अश्विना अश्विनौ देवौ तद्धनं पालयताम्। तथा इन्द्रोविष्णुश्च मीढ्वांसः कामानां सेक्तारएते सर्वेदेवाः सजोषसः संगताः संतः अस्मदीयं धनं रक्षन्तु एतेदेवा अस्मभ्यं धनं दत्वा पालयन्त्वित्यर्थः॥ १४॥

१४. हमारे धन की रक्षा पर्जन्य (मेघ) करें; मरुद्गण और अश्विद्वय भी रक्षा करें; इन्द्र, विष्णु और समस्त अभीष्टवर्षक देवता मिलकर रक्षा करें।

---

१ ऋ० सं० २. ३. १९.।

अथ पञ्चदशी—

तेहिष्मावनुषोनरोभिमातिंकयस्यचित्।
तिग्मंनक्षोदःप्रतिघ्नन्तिभूर्णयः ॥ १५ ॥ २३ ॥

ते । हि । स्म । वनुषः । नरः । अभिऽमातिम् । कयस्य ।
चित् । तिग्मम् । न । क्षोदः । प्रतिऽघ्नन्ति । भूर्णयः ॥१५॥२३॥

वनुषः वननीयाः संभजनीयाः नरो नेतारस्तेहिष्म तेखलु देवाः भूर्णयः क्षिप्रगमनाः स-न्तः कयस्यचित्कस्यचिच्छत्रोरभिमातिमभिमानं प्रतिघ्नन्ति प्रतिकूलं यथाभवति तथा हिंसन्ति। तत्रदृष्टान्तः—तिग्मंन यथा तिग्मं तीक्ष्णं जवेन गच्छत् क्षोदः उदकं अग्रतः स्थितं वृक्षमुन्मूल-यति तद्वत् तस्याभिमानं घ्नन्तीत्यर्थः ॥ १५ ॥

१५. वे देव पूज्य और नेता हैं। जैसे वेगशाली जल वृक्ष को उखाड़ फेंकता है, वैसे ही वे देव शीघ्रगामी होकर जिस किसी भी शत्रु के प्रति-कूल होकर उसका विनाश कर डालते हैं।

॥ इति षष्ठस्य द्वितीये त्रयोविंशोवर्गः ॥ २३ ॥

अथ षोडशी—

अयमेकइत्थापुरूरुचष्टेविविश्पतिः।
तस्यव्रतान्यनुवश्चरामसि ॥ १६ ॥

अयम् । एकः । इत्था । पुरु । उरु । चष्टे । वि । विश्पतिः ।
तस्य । व्रतानि । अनु । वः । चरामसि ॥ १६ ॥

मित्रस्य कर्माण्याह विश्पतिः विशां पालयिता अनयोर्मित्रावरुणयोरेकः अयं मित्रः पु-रु-पुरूणि बहूनिच उरु उरूणिच द्रव्याणि इत्था इत्थं विचष्टे स्वतेजसा पश्यति तस्य मि-त्रस्य व्रतानि कर्माणि वोयुष्मदर्थं अनुचरामसि अनुचरामः कुर्मइत्यर्थः ॥ १६ ॥

१६. लोकपति मित्र बहु-संख्यक प्रधान द्रव्यों को, अपने तेज से, इसी प्रकार देखते हैं। मित्र और वरुण में से हम तुम्हारे लिए मित्र के व्रत को करते हैं।

अथ सप्तदशी—

अनुपूर्वाण्योक्याःसाम्राज्यस्यसश्चिम।
मित्रस्यव्रतावरुणस्यदीर्घश्रुत् ॥ १७ ॥

अनु । पूर्वाणि । ओक्या । साम्ऽराज्यस्य । सश्चिम ।
मित्रस्य । व्रता । वरुणस्य । दीर्घऽश्रुत् ॥ १७ ॥

साम्राज्यस्य सम्राजोभावः साम्राज्यं साम्राज्यमस्यास्तीति साम्राज्यः अर्शआदिभ्यइत्यच् प्रत्ययः साम्राज्यवतोवरुणस्य पूर्वाणि पुरातनानि ओक्या ओकोगृहं तस्मै हितानि कर्माणि वयं सश्चिम । सश्चतिर्गतिकर्मा लिटिरूपं द्विर्वचनस्य छन्दसिविकल्पितत्वादत्रद्विर्वचनाभावः । तदेवाह मित्रस्य व्रता व्रतानि कर्माणिच दीर्घश्रुव् सुपांसुलुगिति षष्ठ्यालुक् दीर्घश्रुतः अतिशयेन प्रसिद्धस्य वर्षणस्य व्रतानिवा सश्चिमेति ॥ १७ ॥

१७. हम साम्राज्य-सम्पन्न वरुण के गृह को प्राप्त करेंगे। अतीव प्रसिद्ध मित्र के व्रत को भी प्राप्त करेंगे।

परियोरश्मिनादिवोन्तान्ममेपृथिव्याः ।
उभेआपप्रौरोदसीमहित्वा ॥ १८ ॥

परि । यः । रश्मिना । दिवः । अन्तान् । ममे । पृथिव्याः ।
उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ॥ १८ ॥

योमित्रः दिवः पृथिव्याः द्यावापृथिव्योरन्तान् अन्तरान् रश्मिना स्वतेजसा परिममे परिमिनोति तयोः पर्यन्तान् स्वरश्मिना भासयतीत्यर्थः । सएव उभेरोदसी द्यावापृथिव्यौ महित्वा स्वमहिम्ना आपप्रौ आसमन्तात्पूरयति ॥ १८ ॥

१८. जो मित्र स्वर्ग और संसार के अन्त को, अपनी रश्मि से, प्रकाशित करते हैं, अपनी महिमा से इन दोनों को पूर्ण भी करते हैं।

उदुष्यशरणेदिवोज्योतिरयंस्तसूर्यः ।
अग्निर्नशुक्रःसमिधानआहुतः ॥ १९ ॥

उत् । ऊँ इति । स्यः । शरणे । दिवः । ज्योतिः । अयंस्त ।
सूर्यः । अग्निः । न । शुक्रः । सम्ऽइधानः । आऽहुतः ॥ १९ ॥

सूर्यः सुवीर्यः सुष्ठु सर्वस्यप्रेरकः स्यः समित्रोवरुणश्च दिवोद्योतमानस्यादित्यस्य शरणे स्थाने नभसि ज्योतिरात्मीयं तेजः उदयंस्त उद्यच्छति ऊर्ध्वं गमयति सर्वत्र विस्तारयतीत्यर्थः । यमेर्लुङिरूपं । ततः सः अग्निर्न शुक्रः अग्निरिव दीप्यमानः समिधानः हविर्भिः समिध्यमानः आहुतः सर्वैराहूतस्तिष्ठति ॥ १९ ॥

१९. सुन्दर वीर्यवाले मित्र और वरुण प्रकाशक आदित्य के स्थान (आकाश) में अपनी ज्योति को विस्तृत करते हैं। पश्चात् अग्नि के समान शुभ्रवण और सबके द्वारा आहूत होकर अवस्थान करते हैं।

अथ विंशी—

वचोंदीर्घप्रसद्मनीशेवाजंस्यगोमंतः ।
ईशेहिपित्वोंविषस्यंदावनें ॥ २० ॥ २४ ॥

वचंः । दीर्घऽप्रंसद्मनि । ईशें । वाजंस्य । गोऽमंतः ।
ईशें । हि । पित्वः । अविषस्यं । दावनें ॥ २० ॥ २४ ॥

हे स्तोतः दीर्घप्रसद्मनि दीर्घं प्रततं विस्तृतं सद्म सदनं यस्मिन्यज्ञे वचः मित्रं वरुणं च स्तुहि वक्तेर्लेट्यडागमः । सवरुणः गोमतः पशुमतः वाजस्यान्नस्य ईशे ईष्टे स्वामीभवति । केवलं स्वामी न भवति किन्तु अविषस्य महतः प्रीतिकारिणः पित्वोन्नस्य दावने दानायच ईशे समर्थोभवति ये स्तोत्रंकुर्वन्ति तेभ्योन्नंददातीत्यर्थः ॥ २० ॥

२०. स्तोता, विस्तृत गृहवाले यज्ञ में मित्रावरुण की स्तुति करो। वरुण पशु-युक्त अन्न के ईश्वर हैं और महाप्रसन्नताकारक अन्न देने में भी समर्थ हैं। ॥ इति षष्ठस्य द्वितीये चतुर्विंशोवर्गः ॥२४॥

अथैकविंशी—

तत्सूर्यंरोदंसीउभेदोषावस्तोरुपंब्रुवे ।
भोजेष्वस्माँअभ्युच्चंरासदां ॥ २१ ॥

तत् । सूर्यंम् । रोदंसी इतिं । उभे इतिं । दोषा । वस्तोंः ।
उपं । ब्रुवे । भोजेषु । अस्मान् । अभि । उत् । चर । सदां ॥ २१ ॥

सूर्यं सुवीर्यं तव वारुणं मैत्रञ्च तेजः उभे रोदसी द्यावापृथिव्यौ च । दोषा सुपांसुलुगिति द्वितीयायालुक् कालाध्वनोरितिद्वितीया । रात्रौ वस्तोः अहनि चाहमुपब्रुवे उपस्तौमि त्वं स्तूयमानोवरुणः भोजेषु दातृष्वस्मान् सदाभ्युच्चर सर्वदाभिमुखंप्रेरय दातृष्वेतेषां दानेष्वस्मान् पुरोभाविनः कुर्वित्यर्थः ॥ २१ ॥

२१. मैं मित्र और वरुण के उस तेज और द्यावापृथिवी की दिन-रात स्तुति करता हूँ। वरुण, सदा हमें दाता (दान) के अभिमुख करो।

अथ द्वाविंशी—

ऋज्रमुंक्षण्यायंनेरजतंहरंयाणे ।
रथंयुक्तमंसनामसुषामंणि ॥ २२ ॥

ऋज्रम् । उक्षण्यायने । रजतम् । हरयाणे ।
रथम् । युक्तम् । असनाम । सुऽसामनि ॥ २२ ॥

सुषाम्णः पुत्रोवरुर्नामराजा सयद्दानं मादाद्विश्वमनसे तदसौ विश्वमनाऋषिरनया-चष्टे उक्षण्यायने उक्षनामाकश्चिद्वरोः पूर्वजः तस्य गोत्रापत्ये । उक्षणशब्दात् ण्यः तदन्ता-त् फक् प्रत्ययः एतौ छान्दसौ वृद्ध्यभावोपि संज्ञापूर्वकोविधिरनित्यइतिनभवति । तस्य गो-त्रापत्ये हरयाणे शत्रुजीवितैश्वर्यादि हरणशीले याने एतादृशे सुषामणि बहुवत्पितृशब्दे-न पुत्रोभिधीयते सुषाम्णः पुत्रे वरौ राजनि ददति सति किमभूत् ऋज्रं ऋजुगामिनं रज-तं रजतमयं रजतसदृशं वा युक्तं अश्वाभ्यांयुक्तं रथमसनाम एतेषां मित्रादीनां प्रसादा-द्वयं संभक्तवन्तोलब्धवन्तोभूम ॥ २२ ॥

२२. उक्ष-गोत्र में उत्पन्न और सुषामा के पुत्र वरु राजा के दान में प्रवृत्त होने पर सरलगामी, रजत के समान और अश्वों से युक्त रथ हमको मिला था। सुषामा के पुत्र का रथ शत्रुओं के जीवन और ऐश्वर्य आदि का हरण करता है।

तामेअश्व्यानांहरीणांनितोशना ।
उतोनुकृत्व्यानांनृवाहसा ॥ २३ ॥

ता । मे । अश्व्यानाम् । हरीणाम् । निऽतोशना ।
उतो इति । नु । कृत्व्यानाम् । नृऽवाहसा ॥ २३ ॥

ऋषिः प्रतिगृहीतावश्वावाह हरीणां हरितवर्णानामश्व्यानामश्वसंघानां मध्ये नितो-शना नितोशनौ तोशतिर्हिंसाकर्मा शत्रूणामत्यन्तं बाधकौ उतो अपिच कृत्व्यानां युद्ध-कर्मणि कुशलानांच कुशलमिति बाधकौ नृवाहसा नृवाहसौ आयुधनेतॄणां मनुष्याणां वोढारौ ता तावश्वौ मे मह्यं नु क्षिप्रं सौषाम्णेन वरुणा दत्तौ भवेतम् ॥ २३ ॥

२३. हरित-वर्ण अश्वों के संघ में शत्रुओं के लिए अतीव बाधक तथा कुशल व्यक्तियों में मनुष्यों के वाहक दो अश्व, वरु राजा-द्वारा, हमारे लिए शीघ्र प्रदत्त हों। अथ चतुर्विंशी—

स्मदभीशूकशावन्ताविप्रानविष्ठयामती ।
महोवाजिनावर्वन्तासचासनम् ॥ २४ ॥ २५ ॥

स्मदभीशू इति स्मत्ऽअभीशू । कशाऽवन्ता । विप्रा । नविष्ठया ।
मती । महः । वाजिनौ । अर्वन्ता । सचा । असनम् ॥ २४ ॥ २५ ॥

ऋषिरिदानीं तावश्वावग्रहीषमित्याह स्मदभीशू स्मव् सुमव् उकारलोपश्छान्दसः शोभनरज्जुयुक्तौ यद्वा शोभनस्वशरीरकान्ती कशावन्ता कशावन्तौ कशायुक्तौ विप्रा विप्रौ मेधाविनामुचितौ मेधावी स्तोता यथा स्तुत्यं देवं स्तुतिभिः प्रीणयति तद्वद् सन्तोषकौ महोमहत्तः सौषाम्णस्य वरोः संबन्धिनौ वाजिनौ शीघ्रगमनवन्तौ अर्वन्ता अर्वन्तौ द्वावश्वौ सचासह युगपदेव नविष्ठया नवतरया मती मत्या स्तुत्या मित्रादीन् स्तुवन् असनं विश्वमना अहं समभजं प्रत्यग्रहीषमित्यर्थः ॥ २४ ॥

२४. अभिनव स्तुति-द्वारा स्तव करते हुए शोभन रज्जुवाले, कशा (चाबुक) वाले, सन्तोषक और शीघ्र-गमन दो (सुषामा के पुत्र वरु के) अश्वों को मैं प्राप्त करूँ।

॥ इति षष्ठस्य द्वितीये पञ्चविंशोवर्गः ॥ २५ ॥

युवोरुष्विति पंचविंशत्यृचं षष्ठं सूक्तं। अत्रानुक्रमणिका—युवोःपश्चाधिका व्यश्वोवांगिरसआश्विनं विंश्याद्यावायव्यास्ततपूर्वाश्वतस्रोगायत्र्योन्त्येकविंश्यौच विंश्यनुष्टुबिति। आंगिरसौ व्यश्व्यौ वैयश्वो विश्वमनावाऋषिः षोडश्याद्याश्वतस्रोगायत्र्यः विंश्यनुष्टुप् एकविंशीपञ्चविंशीच गायत्र्यौ शिष्टाः पूर्ववदुष्णिहः अश्विनौ देवता विंश्याद्याः पञ्चर्चोवायुदेवताकाः प्रातरनुवाकेआश्विनेक्रतावुष्णिहेछन्दस्याश्विनशस्त्रेचादितः पञ्चदशर्चः सूत्रितञ्च—युवोरुषूरथंहुवइति पञ्चदशेत्यौष्णिहमिति।

युवोरुषूरथंहुवेसधस्तुत्यायसूरिषु।
अतूर्तदक्षाट्टषणाट्टषण्वसू॥ १॥

युवोः। ऊँ इति। सु। रथम्। हुवे। सधऽस्तुत्याय। सूरिषु।
अतूर्तऽदक्षा। वृषणा। वृषण्वसू इति वृषण्ऽवसू॥ १॥

हे अतूर्तदक्षा तृप्लवनतरणयोरित्यस्यनिष्ठायां नसत्तेतिसूत्रेणनिपातितः परैरहिंसितबलौ वृषणा वृषणौ कामानां सेक्तारौ अतएव वृषणवसू वर्षणशीलधनवन्तौ अश्विनौ युवोर्युवयोरथं सुहुवे सुष्ठु स्तोत्रादिभिराह्वयामि। किमर्थं सूरिषु प्राज्ञेषु स्तोतृषु मध्ये सधस्तुत्याय स्तौतेर्भावेक्यप् सहभवन्तौ स्तोतुं तस्माद्युवयोः शीघ्रगत्यै युष्मद्गमनसाधनरथमेवाह्वयामि॥ १॥

१. अहिंसित-बल, वर्षक और धनशाली अश्विद्वय, तुम्हारे बल की कोई हिंसा नहीं कर सकता। स्तोताओं के बीच तुम्हारे एकत्र और शीघ्र-गमन के लिए रथ को बुलाता हूँ।

अथ द्वितीया—

युवंवरोसुषाम्णेमहेतनेनासत्या।
अवोभिर्याथोट्टषणाट्टषण्वसू॥ २॥

युवम् । वरो इति । सुऽसाम्ने । महे । तने । नासत्या ।
अवःऽभिः । याथः । वृषणा । वृषण्वसू इति वृषणऽवसू ॥ २ ॥

ऋषिर्वरुराजानं संबोध्य आह हे नासत्या नासत्यौ न विद्यते असत्यमनयोरिति नासत्यौ वृषणा कामानां वर्षितारौ वृषणवसू वर्षणशीलवसुमन्तौ अश्विनौ युवं युवां सुषाम्णे सुषामाख्यराज्ञे मम पित्रे अस्मै महे महते तने तनोतीतितनं धनं धनाय । क्रियार्थोपपदस्येति चतुर्थी तस्मै धनं दातुं पुरा यथा आगच्छतम् तद्वन्मत्यमपि धनं दातुं अवोभिः पालनैः सह याथः युवामायातमिति । हे वरो वरुनामकराजन्नेवं ब्रूहीतिऋषिर्वदति ॥ २ ॥

२. सत्य-स्वरूप, अभिलाष-प्रद और धनशाली अश्विद्वय, सुषामा राजा के लिए महाधन देने के निमित्त तुम लोग जैसे आते थे, वैसे ही रक्षा के साथ आगमन करो। वरु, तुम इस बात को कहो।

तावामद्यहवामहेहव्येभिर्वाजिनीवसू ।
पूर्वीरिषइषयन्तावतिक्षपः ॥ ३ ॥

ता । वाम् । अद्य । हवामहे । हव्येभिः । वाजिनीवसू इति
वाजिनीऽवसू । पूर्वीः । इषः । इषयन्तौ । अति । क्षपः ॥ ३ ॥

हे वाजिनीवसू अन्नयुक्तधनवन्तावश्विनौ पूर्वीः बहूनि इषोन्नानि इषयन्तौ इष इच्छायां इच्छन्तौ ता तौ प्रसिद्धौ वां युवां अद्यास्मिन्यागदिने अतिक्षपः क्षपायाअतिक्रमे उषःकाले इत्यर्थः तस्मिन्नुषःकाले हव्येभिर्हविर्लक्षणैरन्नैः सह वयं हवामहे आह्वयामः आश्विनशस्त्रस्य तत्र शस्यमानत्वादुषःकालएवाह यागइत्यर्थः ॥ ३ ॥

३. अन्न, धन और बहुत अन्नवाले अश्विद्वय, आज प्रातःकाल होने पर तुम्हें हम हव्य-द्वारा बुलावेंगे।

अथ चतुर्थी—

आवांवाहिष्ठोअश्विनारथोयातुश्रुतोनरा ।
उपस्तोमान्तुरस्यदर्शथःश्रिये ॥ ४ ॥

आ । वाम् । वाहिष्ठः । अश्विना । रथः । यातु । श्रुतः ।
नरा । उप । स्तोमान् । तुरस्य । दर्शथः । श्रिये ॥ ४ ॥

हे नरा सर्वस्य नेतारौ अश्विना अश्विनौ वां युवयोः वाहिष्ठोवोढृतमः श्रुतोविश्रुतः सर्वत्रप्रसिद्धोरथः आयातु अस्मदीयं यज्ञं प्रत्यागच्छतु तेन रथेन युवामागत्य तुरस्य क्षिप्रं स्तोत्रं कुर्वतस्तस्य स्तोमान् त्रिवृत्पञ्चदशादि स्तोमान् श्रियै तस्यैश्वर्यप्रदानायउपदर्शथः पश्यतिर्ज्ञानकर्मा जानीतं । दृशेर्लेङि व्यत्ययेनानादेशः ॥ ४ ॥

४. नेता अश्विद्वय, सबसे अधिक ढोनेवाला और तुम्हारा प्रसिद्ध रथ आगमन करे। क्षिप्र-स्तोता को ऐश्वर्य प्रदान करने के लिए उसके सारे स्तोत्रों को जानो।

जुहुराणाचिदश्विनामन्येथांवृषणवसू ।
युवंहिरुद्रापर्षथोअतिद्विषः ॥ ५ ॥ २६ ॥

जुहुराणा । चित् । अश्विना । आ । मन्येथाम् । वृषणवसू इति वृषण्ऽवसू । युवम् । हि । रुद्रा । पर्षथः । अति । द्विषः ॥ ५॥२६ ॥

हे वृषणवसू वर्षणशीलधनवन्तौ अश्विना अश्विनौ जुहुराणा चित् हूर्छांकौटिल्ये हुर्छः सनोलुक् छलोपश्चेत्यानच्प्रत्ययः कुटिलान्कर्मविघ्नकारिणः मायाविनः शत्रूना आभिमुख्येन मन्येथाम् जानीतम् । ततः हे रुद्राः संग्रामे रोदनशीलौ रुदन्तौवा अश्विनौ युवं हिरवधारणे युवामेव द्विषोद्वेषकारिणः तान् शत्रून् अतिपर्षथः अतीत्य संक्लेशयतं हतमित्यर्थः । पृषु हिंसासंक्लेशनयोरिति भौवादिकः ॥ ५ ॥

५. अभिलाषा-दाता और धनी अश्विद्वय, कुटिल कार्य-कर्त्ता शत्रुओं को सामने उपस्थित जानो। तुम लोग रुद्र हो। द्वेषी शत्रुओं को क्लेश प्रदान करो।

॥ इति षष्ठस्य द्वितीये षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी—

दस्राहिविश्वमानुषङ्मक्षूभिःपरिदीयथः ।
धियंजिन्वामधुवर्णाशुभस्पती ॥ ६ ॥

दस्रा । हि । विश्वम् । आनुषक् । मक्षुऽभिः । परिऽदीयथः । धियम्ऽजिन्वा । मधुऽवर्णा । शुभः । पती इति । ६ ॥

दस्रा दस्रौ सर्वैर्दर्शनीयौ यद्वा दसुउपक्षये शत्रूणामुपक्षपयितारौ अश्विनौ कीदृशौ धियंजिन्वा धियं जिन्वौ जिविः प्रीणनार्थः कर्माणिप्रीणयन्तौ मधुवर्णा मधुवर्णौ सर्वेषां मादनशीलशरीरकान्ती ये युवयोः रूपं पश्यन्ति ते तत्रैव हृष्टाभवन्तीत्यर्थः तादृशौ शुभस्पती उदकस्यपालयिता-

रौ तादृशौ युवां मक्षुभिः शीघ्रगमनैरश्वैः आनुषक्-अनुषक्तं यथाभवति तथा विश्वं ऋत्विग्भिर्हविर्भिश्च व्याप्तं हिरवधारणे अस्मदीयं यज्ञमेव प्रति परिदीयथः दीयतिर्गतिकर्मा परितआगच्छतम् ॥ ६ ॥

६. सबके दर्शनीय, कर्म-प्रीतिकर, मदकर कान्तिवाले और जल-पोषक अश्विद्वय, तुम लोग शीघ्रगामी अश्वों के द्वारा समस्त यज्ञ के प्रति आगमन करो। अथसप्तमी—

उप॑नो॒याति॒मश्वि॒ना॒रा॒या॒वि॑श्व॒पुषा॑स॒ह ।
म॒घवा॑नासु॒वीरा॒वन॑पच्युता ॥ ७ ॥

उप॑ । न॒: । या॒त॒म् । अ॒श्वि॒ना॒ । रा॒या । वि॒श्व॒ऽपुषा॑ ।
स॒ह । म॒घऽवा॑ना । सु॒ऽवीरौ॑ । अन॑पऽच्युता ॥ ७ ॥

हे अश्विना अश्विनौ विश्वपुषा विश्वस्य सर्वस्य पोषकेण राया धनेनसह नोस्मदीयं यज्ञमुपयातं उपागच्छतम् यज्ञमागत्य धनमस्मभ्यंप्रयच्छतमितिभावः। किमनयोर्धनमस्तीत्यत्राह—मघवाना मघवानौ मंहनीयधनवन्तौ सुवीरौ शोभनसामर्थ्योपेतौ। यद्वा वीराः समर्थाः शत्रवः तद्वन्तौ। तथापि अनपच्युता तैरपच्यावनीयौ न भवतः। तौ यज्ञं प्रत्यागच्छतम् ॥७॥

७. अश्विद्वय, विश्व-पालक धन के साथ हमारे यज्ञ में आओ। तुम लोग धनी, शूर और अजेय हो।

आमे॑अ॒स्यप्र॒ती॒व्य१॒॑मिन्द्र॑नासत्या॒गत॑म् ।
दे॒वादे॒वेभि॑र॒द्यस॒चन॑स्तमा ॥ ८ ॥

आ । मे॒ । अ॒स्य । प्र॒ती॒व्य॑म् । इन्द्र॑नासत्या । ग॒त॒म् ।
दे॒वा । दे॒वेभि॑: । अ॒द्य । स॒चन॑:ऽतमा ॥ ८ ॥

हे इन्द्रनासत्या इन्द्राश्विनौ देवा देवौ सचनस्तमा षचसमवाये कृत्यल्युटइति कर्मणि ल्युट् अतिशयेन सर्वैः समवेतव्यौ सेव्यमानौ युवां प्रतीव्यं वीगत्यादिषु अधिकरणे औणादिकःक्विप् प्रतिशब्दस्य वीप्सार्थोस्ति पुनःपुनर्वियन्ति भक्षयन्ति हवींषि देवाअत्रेति प्रतीव्योयज्ञः तं अस्य पुरोवर्तिनं मे ममसंबन्धिनं यज्ञं अद्यास्मिन्दिने देवेभिर्देवैः साधमागतमागच्छतम्। यद्वा मे ममास्यक्रियमाणस्य स्तोत्रस्य प्रतीव्यं प्रतिगतं यथाभवति तथा आभिमुख्येनायातम् ॥ ८ ॥

८. इन्द्र और नासत्यद्वय (अश्विद्वय), तुम लोग अतीव सेव्यमान होकर मेरे यज्ञ में आज, देवों के साथ, आओ।

अथ नवमी—

वयंहिवांहवामहउक्षण्यन्तोव्यश्ववत् ।
सुमतिभिरुपविप्राविहागतम् ॥ ९ ॥

वयम् । हि । वाम् । हवामहे । उक्षण्यन्तः । व्यश्वऽवत् ।
सुमतिऽभिः । उप । विप्रौ । इह । आ । गतम् ॥ ९ ॥

उक्षण्यन्तः धनादिसेक्तारावात्मनइच्छन्तोवयं वांहि धनादीनां प्रत्तारौ युवामेव हवामहे तल्लाभार्थमाह्वयामः । तत्रदृष्टान्तः—व्यश्ववद् यथास्माकं पिता युवामेव स्तुत्वा धनमलभत तद्वव। हे विप्रा मेधाविनौ अश्विनौ सुमतिभिः अस्माभिः क्रियमाणैः कल्याणैः स्तोत्रैः सह । यद्वा सुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः सह इहास्मिन्यागदिने उपागतम् उपागच्छतम् ॥ ९ ॥

९. अपने लिए धन-दान की प्राप्ति की इच्छा से हम व्यश्व के समान तुम्हें बुलाते हैं। मेधावियो, कृपा करके यहाँ पधारो।

अथ दशमी—

अश्विनास्वृषेस्तुहिकुवित्तेश्रवतोहवम् ।
नेदीयसःकूळयातःपणीँरुत ॥ १० ॥ २७ ॥

अश्विना । सु । ऋषे । स्तुहि । कुवित् । ते । श्रवतः । हवम् ।
नेदीयसः । कूळयातः । पणीन् । उत ॥ १० ॥ २७ ॥

हे ऋषे विश्वमनः अश्विना अश्विनौ देवौ सुष्टुहि शोभनं स्तुहि ततस्तावश्विनौ ते स्तोतुस्तव हवमाह्वानं कुविद कुविदिति बहुनाम बहुवारं श्रवतः शृणुतम् श्रुश्रवणे लेटचडागमः। एवं त्वयास्तुतावश्विनौ नेदीयसः अन्तिकतमान् शत्रून्कूलयातः हिंस्ताम् । उतापिच पणीनेतन्नामकान् अंगिरोगवामपनेतॄनसुरानपिहिंस्तां । कुडिदाहे ण्यन्तस्य लेटचडागमः ॥ १० ॥

१०. ऋषि, अश्विद्वय की स्तुति करो। अनेक बार तुम्हारा आह्वान सुनते हुए अश्विद्वय समीपवर्ती शत्रुओं और पणियों को मारें।

॥ इति षष्ठस्य द्वितीये सप्तविंशोवर्गः ॥ २७ ॥

अथैकादशी—

वैयश्वस्यश्रुतंनरोतोमेअस्यवेदथः ।
सजोषसावरुणोमित्रोअर्यमा ॥ ११ ॥

वैयश्वस्य । श्रुतम् । नरा । उतो इति । मे । अस्य । वेदथः ।
सऽजोषसा । वरुणः । मित्रः । अर्यमा ॥ ११ ॥

हे नरा नेतारावश्विनौ वैयश्वस्य व्यश्वपुत्रस्य विश्वमनसोममाह्वानंश्रुतं शृणुतम् । उतो अपिच मे मदीयमस्य तदाह्वानं वेदथः आत्मीयतया जानीथः । अथ वरुणो मित्रः मित्रावरुणौच सजोषसा संगतौ सन्तौ अर्यमा एतन्नामकोदेवश्च मदीयमाह्वानं श्रुत्वा मह्यं धनादिकं प्रयच्छन्तु ॥ ११ ॥

११. नेताओ, वैयश्व का आह्वान सुनो। मेरे आह्वान को समझो। वरुण, मित्र और अर्यमा सदा मिले हुए हैं।

अथ द्वादशी—

युवादत्तस्यधिष्ण्यायुवानीतस्यसूरिभिः ।
अहरहर्वृषणामह्यंशिक्षतम् ॥ १२ ॥

युवाऽदत्तस्य । धिष्ण्या । युवाऽनीतस्य । सूरिऽभिः ।
अहःऽअहः । वृषणा । मह्यम् । शिक्षतम् ॥ १२ ॥

हे धिष्ण्या धिष्ण्यौ धिषणार्हौ स्तुत्यौ वृषणा वृषणौ कामानां सेक्तारौ अश्विनौ सूरिभिः सुपांसुपोभवन्तीति चतुर्थ्यास्तृतीया सूरिभ्यः स्तोतृभ्यो युवादत्तस्य युवाभ्यां यत् स्तोतृभ्यो-दीयते तत् । तथा युवानीतस्य युवाभ्यां यत् स्तोतृभ्योनीयते तच्च धनादिकं अहरहः अहन्यहनि मह्यं विश्वमनसे स्तोत्रं कुर्वाणाय युवां शिक्षतं प्रयच्छतम् ॥ १२ ॥

१२. स्तवनीय और अभिलाषप्रद अश्विद्वय, तुम लोग स्तोताओं को जो देते हो और उनके लिए जो ले आते हो, वह प्रतिदिन मुझे दो।

अथ त्रयोदशी—

योवांयज्ञेभिरावृतोधिवस्त्रावधूरिव ।
सपर्यन्ताशुभेचक्रातेअश्विना ॥ १३ ॥

यः । वाम् । यज्ञेभिः । आऽवृतः । अधिऽवस्त्रा । वधूःऽइव ।
सपर्यन्ता । शुभे । चक्राते इति । अश्विना ॥ १३ ॥

अथ पूर्वोर्धर्चः परोक्षकृतः योमनुष्यः वां युवयोर्यज्ञेभिर्यजनैः पूजनैः यद्वा युष्मद्विषयैर्यागः आवृतः परिवृतोभवति । तत्रदृष्टान्तः—अधिवस्त्रा उपरिनिहितवस्त्रावधूः अन्येनवस्त्रेण यथा-

छादिता भवति तथा वृतोयद्राभवति तदा सपर्यन्ता अभीष्टप्रदानेन तं परिचरन्तौ अश्विना अश्विनौ भवन्तौ तं मनुष्यं शुभे चक्राते मंगले धने कृतवन्तौ तं धनादियुक्तमकार्ष्टामित्यर्थः। योयुवाभ्यां हवींषि प्रयच्छति तं धनादियुक्तं कुरुतमित्यर्थः ॥ १३ ॥

१३. जैसे वधू वस्त्र से ढकी रहती है, वैसे ही जो मनुष्य यज्ञ से आवृत (परिवृत) रहता है, उसकी परिचर्या (देख-रेख) करते हुए अश्विद्वय उसका मङ्गल करते हैं।

योवा॑मुरु॒व्यच॑स्तमं॒चिके॑ततिनृ॒पाय्य॑म् ।
व॒र्तिर॑श्विना॒परि॑यातमस्म॒यू ॥ १४ ॥

यः । वा॒म् । उ॒रु॒व्यच॑ःऽतमम् । चिके॑तति । नृ॒ऽपाय्य॑म् ।
व॒र्तिः । अ॒श्वि॒ना॒ । परि॑ । या॒त॒म् । अ॒स्म॒यू इत्य॑स्म॒ऽयू ॥ १४ ॥

हे अश्विनौ उरुव्यचस्तमं अतिशयेन ग्रहेषुभूतं व्याप्तं नृपाय्यं नेतृभ्यां युवाभ्यां पातव्यं सोमं योमनुष्यः वां युवाभ्यां तं सोमं दातुं चिकेतति भृशं जानाति तस्य वर्तिः वर्ततेनेति वर्तिगृहं अस्मयू अस्मान् पूजार्थं बहुवचनं विश्वमनसं मां कामयमानौ युवां परियातं सोमपानार्थं तस्य गृहं प्रत्यायातं। चिकेतति कितज्ञाने इत्यस्य यङ्लुगन्तस्य लेट्यडागमः ॥ १४ ॥

१४. अश्विद्वय, अतीव व्यापक और नेताओं के पान-योग्य सोम का दान करना जो मनुष्य जानता है, वैसे (ज्ञाता) मुझे पाने की इच्छा करके तुम मेरे गृह में पधारो।

अ॒स्मभ्यं॑सु॒वृ॑षण्वसूया॒तंव॒र्तिर्नृ॒पाय्य॑म् ।
वि॒षु॒द्रुहे॑वय॒ज्ञमू॑हथु॒र्गिरा ॥ १५ ॥ २८ ॥

अ॒स्मभ्य॑म् । सु । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । या॒त॒म् । व॒र्तिः ।
नृ॒ऽपाय्य॑म् । वि॒षु॒द्रुहा॑ऽइव । य॒ज्ञम् । ऊ॒ह॒थुः॒ । गि॒रा ॥ १५ ॥ २८ ॥

हे वृषणवसू वर्षणशीलधनवन्तौ अश्विनौ अस्मभ्यमस्मदर्थं नृपाय्यं नेतृभ्यां पातव्यं सोमंप्रति वर्तिरस्मदीयं गृहंप्रति सुयातं युवां सुष्ठु आयातम्। गिरा स्तुतिलक्षणया वाचा युवां यज्ञमूहथुः मनुष्येषु यज्ञसमाप्तिं प्रापयथः। तत्रदृष्टान्तः—विषुद्रुहेव द्रुहजिघांसायां विश्वतः हिनस्तिशत्रूनिति विषुद्रुहः शरः तेन यथा व्याधोमृगमभिलषितं देशं प्रापयति तद्वत् स्तुत्या यज्ञमवैकल्येन समाप्तिं प्रापयथइत्यर्थः ॥ १५ ॥

१५. अभिलाष-प्रद और धनी अश्विद्वय, नेताओं के पीने के योग्य सोम के लिए हमारे घर पधारो। शत्रु-द्रोही शर के समान (व्याध शर से मृगवाले ईप्सित प्रदेश को प्राप्त करता है) स्तुति-वाक्य-द्वारा यज्ञ-समाप्ति कर दो।

॥ इति षष्ठस्य द्वितीयेऽष्टाविंशोवर्गः ॥ २८ ॥

प्रातरनुवाके आश्विनेक्रतौ गायत्रेछन्दसि वाहिष्ठोवांहवानामिति चतस्रः ।सूत्रितञ्च—वाहिष्ठोवांहवानामिति चतस्रउदीराथामामेहवमिति गायत्रमिति ।

तत्र प्रथमा सूक्ते षोडशी—

वाहिष्ठोवांहवानांस्तोमोदूतोहुवन्नरा ।
युवाभ्यांभूत्वश्विना ॥ १६ ॥

वाहिष्ठः । वाम् । हवानाम् । स्तोमः । दूतः । हुवत् । नरा ।
युवाभ्याम् । भूतु । अश्विना ॥ १६ ॥

हे नरा नरौ सर्वस्य नेतारौ अश्विनौ हवानां स्तोतॄणां स्तोत्राणां मध्ये स्तोमोवाहिष्ठः युवामतिशयेन व्यामुवन् मदीयः स्तोमः दूतः दूतभूतः सन् हुवत् आह्वयतु सोयं मदीयः स्तोमः युवाभ्यां प्रियकरोभूतु भवतु ॥ १६ ॥

१६. सबके नेता अश्विद्वय, स्तोत्रों में से स्तोम (स्तुति-विशेष) तुम्हारे पास जाकर तुम्हें बुलावे और प्रसन्न करे।

अथ सप्तदशी—

यद्दोदिवोअर्णवइषोवामदथोगृहे । श्रुतमिन्मेअमर्त्या ॥१७॥

यत् । अदः । दिवः । अर्णवे । इषः । वा । मदथः ।
गृहे । श्रुतम् । इत् । मे । अमर्त्या ॥ १७ ॥

हे अश्विनौ दिवोद्युलोकस्य अदः सुपांसुलुगिति सप्तम्याः सुः अमुष्मिन्नर्णवे अपां स्थाने यद्यदि मदथः माद्यथः । वा अपिच इषः अन्नमिच्छतो यजमानस्य गृहे यदि माद्यथः एवं चेत् हे अमर्त्या मरणधर्मरहितौ अमनुष्यौ वा अश्विनौ मे मदीयं स्तोत्रं श्रुतमित् युवां शृणुतमेव ममैव स्तोत्रं श्रुत्वा युवां माद्यतमित्यर्थः ।यद्वा अदः स्तोत्रमिति संबध्यते ॥ १७ ॥

१७. अश्विद्वय, द्युलोक के (नीचे) इस समुद्र में यदि तुम प्रमत्त होओ अथवा अन्न चाहनेवाले यजमान के गृह में यदि मत्त होओ, तो, अमरद्वय, हमारा यह स्तोत्र सुनो।

अथाष्टादशी—

उतस्याश्वेतयावरीवाहिष्ठावांनदीनाम् ।
सिन्धुर्हिरण्यवर्तनिः ॥ १८ ॥

उत । स्या । श्वेतऽयावरी । वाहिष्ठा । वाम् ।
नदीनाम् । सिन्धुः । हिरण्यऽवर्तनिः ॥ १८ ॥

विश्वमनाऋषिः श्वेतयावरीनाम्न्योनद्यास्तीरे अश्विनावस्तौत् अनया नद्यपि स्तुतवतीत्याह-उतापिच श्वेतयावरी श्वेतजला यातीति श्वेतयावरी कीदृशी सिन्धुः स्यन्दमाना हिरण्यवर्तनिः हिरण्मयस्वीयमार्गा हिरण्मयोभयकूला स्या एषा श्वेतयावरी नामिका नदीनामन्यासां नदीनां मध्ये वां युवां वाहिष्ठा स्तुत्या अतिशयेनागन्त्रीभवति एषापि युवां स्तौतीत्यर्थः। यद्वा एषानदी युवयोरथस्य वाहिष्ठा वोढ्तमा सती प्रियकरीभवति यस्मादहमस्यास्तीरेयुवामस्तुवमिति ॥ १८ ॥

१८. नदियों में से स्पन्दन-शील और हिरण्य-मार्गा श्वेतयावरी (श्वेत-जला होकर बहनेवाली) नाम की नदी स्तुति-द्वारा तुम्हारे पास जाती है अथवा तुम्हारे रथ को ढोती है।

अथैकोनविंशी—

स्मदेतयासुकीर्त्याश्विनाश्वेतयाधिया ।
वहेथेशुभ्रयावाना ॥ १९ ॥

स्मत् । एतया । सुऽकीर्त्या । अश्विना । श्वेतया ।
धिया । वहेथे इति । शुभ्रऽयावाना ॥ १९ ॥

हे शुभ्रयावाना शोभनशीलगमनवन्तौ हे अश्विना अश्विनौ सुकीर्त्या शोभनस्तुत्या श्वेतया श्वेतजलया धिया धारयित्र्या हिरण्मयकूलवत्या उभयकूलस्थितानां प्राणिनां धनदानेन पोषयित्र्या एतया नद्या स्मत् सुमत् शोभनं वहेथे युवां स्तुतिं प्राप्नुथः एषा युवामस्तौदित्यर्थः ॥ १९ ॥

१९. सुन्दर गमनवाले अश्विद्वय, सुन्दर कीर्त्तिवाली, श्वेतवर्णा और पुष्टि-कारिणी श्वेतयावरी नदी को प्रवाहित करो।

अथ विंशी—

युक्ष्वाहित्वंरथासहायुवस्वपोष्यावसो ।
आन्नोवायोमधुपिबास्माकंसवनागहि ॥ २० ॥ २९ ॥

युक्ष्व । हि । त्वम् । रथऽसहा । युवस्व । पोष्या ।
वसो इति । आत् । नः । वायो इति । मधु ।
पिब । अस्माकम् । सवना । आ । गहि ॥ २० ॥ २९ ॥

एतदाद्यावायव्यः हे वायो रथसहा रथसहौ रथवहनसमर्थांवश्वौ हिरवधारणे त्वमेव युक्ष्व संयोजय। हे वसो वासयितः शत्रूणां पोष्या पोष्यौ कंठेषु करतलास्फालनैराश्वास्य पेषणीयौ तावश्वौ युवस्व संग्रामेषु शत्रुवधार्थं मिश्रय। यद्वा अस्मद्यज्ञेषु संमिश्रय ताभ्यां युक्तः सन् यज्ञं प्रत्यागच्छेत्यर्थः। हे वायो आदनन्तरं नोस्मदीयं मधु मदकरं सोमं त्वं पिब अतएव अस्माकं यज्ञेषु सवना त्रिषु सवनेषु आगहि सोमपानार्थमागच्छ ॥ २० ॥

२०. वायु, रथ ढोनेवाले दोनों अश्वों को योजित करो। वासदाता वायु, पोषण के योग्य अश्विद्वय को संग्राम में मिलाओ। वायु, अनन्तर हमारे मदकर सोम का पान करो और तीनों सवनों में आओ।

॥ इति षष्ठस्य द्वितीये एकोनत्रिंशोवर्गः ॥ २९ ॥

वायव्येपशौ वपायास्तववायोइत्येषावानुवाक्या सूत्रितश्च—प्रवायुमच्छाबृहतीमनीषा तववायवृतस्पतइति।

तववायवृतस्पतेत्वष्टुर्जामातरद्भुत।
अवांस्यावृणीमहे ॥ २१ ॥

तव। वायो इति। ऋतऽपते। त्वष्टुः। जामातः।
अद्भुत। अवांसि। आ। वृणीमहे ॥ २१ ॥

हे ऋतःपते ऋतपते यज्ञानांपते सर्वप्रातिपदिकेभ्योलालसायां सुगिति सुगागमः त्वष्टुर्जामातः ब्रह्मणोजामातः। एषा कथा इतिहासादिभिरवगन्तव्या। तादृश अद्भुत महन् विचित्रकर्मन् हे वायो तव त्वदीयानि अवांसि पालनानि आवृणीमहे वयमस्मिन्पशुयागे संभजामहे ॥२१॥

२१. यज्ञपति, त्वष्टा (ब्रह्मा) के जामाता और विचित्र-कर्मा वायु, तुम्हारा पालन हम प्राप्त कर सकें।

त्वष्टुर्जामातरंवयमीशानंरायईमहे।
सुतावन्तोवायुंद्युम्नाजनासः ॥ २२ ॥

त्वष्टुः। जामातरम्। वयम्। ईशानम्। रायः। ईमहे।
सुतऽवन्तः। वायुम्। द्युम्ना। जनासः ॥ २२ ॥

इमे जनासोजनावयं त्वष्टुर्ब्रह्मणोजामातरं ईशानं सर्वस्येश्वरमेतादृशं वायुं सुतवंतोभिषुतसोमाः रायः धनं ईमहे याचामहे तेनदत्तेन वयं द्युम्ना धनवन्तः स्याम इतिशेषः ॥ २२ ॥

२२. हम त्वष्टा के जामाता और समर्थ वायु के समीप, सोम अभिषव करके, धन माँगते हैं। धन दान से हम धनी होंगे।

वायव्यतृचे वायोयाहिशिवादिवइत्यादिके द्वे ऋचौ द्वितीयातृतीये सूत्रितश्च—वायोयाहिशिवादिवइतिद्वेइति ।

सैषा सूक्ते त्रयोविंशी—

वायो॒या॒हि॒शि॒वा॒दि॒वोव॑ह॒स्वा॒सु॒स्व॑श्व्य॑म् ।
वह॑स्व॒म॒हः॒पृ॒थु॒प॒क्ष॑सा॒र॒थे ॥ २३ ॥

वायो॒ इति॑ । या॒हि । शि॒व । आ । दि॒वः । वह॑स्व ।
सु । सु॒ऽअश्व्य॑म् । वह॑स्व । म॒हः । पृ॒थु॒ऽप॒क्ष॑सा । रथे॑ ॥ २३ ॥

हे वायो दिवोद्युलोकस्य शिव सुपां सुलुगिति द्वितीयायालुक् शिवं कल्याणमायाहि आगमय सर्वज्योतिषां त्वदाधारत्वात् तेषामाधारोभूत्वा द्युलोके तानि स्थापयेति प्रार्थयते । ततस्त्वं स्वश्व्यं अश्वानां संघोश्व्यः शोभनाश्वसंघं रथं सु सुष्ठु वहस्व सर्वतोदिक्षु प्रापय । इदानीं तेभ्योपि समर्थावश्वावावह महोमहान् त्वं पृथुपक्षसा पृथुपार्श्वद्वययुक्तावश्वौ रथे स्वकीये वहस्व शत्रुहननार्थं संयोजय ॥ २३ ॥

२३. वायु, द्युलोक में कल्याण ले जाओ। अश्व से युक्त रथ चलाओ। तुम महान् हो। मोटे पार्श्वोंवाले अश्वों को अपने रथ में जोतो।

वायव्ये पशौ पुरोडाशहविषोस्त्वांहिसुप्सरस्तमं इति द्वे अनुवाक्ये सूत्रितश्च—त्वांहिसुप्सरस्तममितिद्वे कुविदंगनमसायेवृधासइति ।

तयोः प्रथमा सूक्ते चतुर्विंशी—

त्वांहि॒सु॒प्सर॑स्तमं॒नृ॒षद॑नेषु॒हू॒महे॑ ।
ग्रावा॑णं॒नाश्व॑पृष्ठं॒मं॒हना॑ ॥ २४ ॥

त्वाम् । हि । सु॒प्सरः॑ऽतमम् । नृ॒ऽसद॑नेषु । हू॒महे॑ ।
ग्रावा॑णम् । न । अश्व॑ऽपृष्ठम् । मं॒हना॑ ॥ २४ ॥

हे वायो सुप्सरस्तमं सुप्सइति रूपनाम रोमत्वर्थीयः अतिशयेन शोभनरूपवन्तं मंहना स्वकीयेन महत्त्वेन अश्वपृष्ठं सर्वतोव्याप्तपृष्ठं पृष्ठशब्दः सर्वांगं लक्षयति व्याप्तकृत्स्नांगमित्यर्थः त्वां हिरवधारणे त्वामेव नृषदनेषु नृसदनेषु नरः अध्वरस्यनेतारः ऋत्विजोऽत्रसीदन्तीति नृषदनायज्ञाः तेषु हूमहे वयमाह्वयामः । कथमिव ग्रावाणं न यथा सोमाभिषवार्थं ग्रावाणं स्तुतिभिराह्वयन्ति तद्वत्त्वां स्तुतिभिराह्वयामः ॥ २४ ॥

२४. वायु, तुम अतीव सुन्दर रूपवाले हो। तुम्हारे सारे अङ्ग महिमा से व्याप्त हैं। सोमाभिषव के लिए पत्थर के समान यज्ञों में हम तुम्हें बुलाते हैं।

शुनासीरीये सत्वंनोदेवेत्येषा वायोरनुवाक्या सूत्रितश्च—सत्वंनोदेवमनसेशानायप्रहु-तिंयस्तआनडिति ।

सैषा सूक्ते पञ्चविंशी—

सत्वंनोदेवमनसावायोमन्दानोअग्रियः ।
कृधिवाजाँअपोधियः ॥ २५ ॥ ३० ॥

सः । त्वम् । नः । देव । मनसा । वायो इति । मन्दानः ।
अग्रियः । कृधि । वाजान् । अपः । धियः ॥ २५ ॥ ३० ॥

हे देव द्योतमान यद्वा स्तोतव्यवायो अग्रियः देवानां मध्ये मुख्यः अग्रतोगन्तासि स-तादृशस्त्वं मनसा मन्दानोमन्दमानः स्वयमेव मोदमानःसन् नोस्माकं वाजान् अन्नानि अ-पोमेघभेदनेनोदकानिच उभयस्मिन् त्वया प्रदत्तेसति धियः अग्निहोत्रादिकर्माणिच कृधि कु-रु कारयेत्यर्थः ॥ २५ ॥

**२५. वायुदेव, देवों में तुम मुख्य हो। अन्तःकरण से प्रसन्न होकर हमें अन्न, जल और कर्म प्रदान करो।**

॥ इति षष्ठस्य द्वितीये त्रिंशोवर्गः ॥ ३० ॥

अग्निरुक्थइति द्वाविंशर्चं सप्तमं सूक्तम् । अत्रानुक्रमणिका—अग्निरुक्थेद्व्यधिका मनुर्वैव-स्वतो वैश्वदेवंह प्रगाथमिति । विवस्वतःपुत्रोमनुर्ऋषिः प्रथमातृतीयाद्ययुजोबृहत्यः द्वितीयाचतु-र्थ्यादियुजः सतोबृहत्यः । इदमादीनां चतुर्णां सूक्तानां विश्वेदेवादेवता सूक्तविनियोगोलैंगिकः ।

तस्मिन्सूक्ते प्रथमा—

अग्निरुक्थेपुरोहितोग्रावाणोबर्हिरध्वरे ।
ऋचायामिमरुतोब्रह्मणस्पतिंदेवाँअवोवरेण्यम् ॥ १ ॥

अग्निः । उक्थे । पुरःऽहितः । ग्रावाणः । बर्हिः । अध्वरे । ऋचा ।
यामि । मरुतः । ब्रह्मणः । पतिम् । देवान् । अवः । वरेण्यम् ॥ १ ॥

मनुः प्रार्थयते उक्थे स्तोत्रशस्त्रात्मके अध्वरे हिंसारहितेस्मिन् यज्ञे अग्निः पुरोहितः य-ज्ञार्थं पुरतउत्तरवेद्यां ऋत्विग्भिः निहितोभूत् तथा ग्रावाणश्च सोमाभिषवार्थं पुरतोनिहिताः बर्हि-श्च पुरतोनिहितमासादितं एवं सामग्र्यां सत्यां मरुतः एकोनपञ्चाशन्मरुद्गणान् ब्रह्मणस्पतिः स्तो-

त्रस्य पालयितारमेतन्नामकं देवं देवानिन्द्रादींश्च एतान् सर्वान् देवान् वरेण्यं वरणीयं भजनीयं अवोरक्षणं ऋचासूक्तरूपया स्तुत्या यामि मनुरहं याचामि । याचतेर्लेटिरूपम् वर्णलोपश्छान्दसः ॥ १ ॥

१. इस स्तोत्रात्मक यज्ञ में अग्नि, सोमाभिषव के लिए प्रस्तर और कुश अग्रभाग में स्थापित हुए हैं। मरुद्‌गण, ब्रह्मणस्पति और अन्य देवों से, स्तुति-द्वारा, रक्षण की प्राप्ति के लिए, मैं याचना करता हूँ ।

आपशुंगासिपृथिवींवनस्पतींनुषासानक्तमोषधीः ।
विश्वेचनोवसवोविश्ववेदसोधीनांभूतप्रावितारः ॥ २ ॥

आ । पशुम् । गासि । पृथिवीम् । वनस्पतीन् ।
उषसा । नक्तम् । ओषधीः । विश्वे । च । नः । वसवः ।
विश्वऽवेदसः । धीनाम् । भूत । प्रऽअवितारः ॥ २ ॥

पूर्वार्धर्चेग्निः संबोध्यते पश्वादिशब्दसद्भावात् । हे अग्ने नोस्मदीये यज्ञे पशुमग्नीषोमीयं पशुंप्रति आगासि आगच्छसि । गाङ् गतौ व्यत्ययेनपरस्मैपदम् । तथा पृथिवीमिदं देवसदनंप्रति । किञ्च वनस्पतीन् मथनसाधनानरणिरूपान्वनस्पतीन्प्रति । तथा उषसा होतव्यत्वेनोषःकालं तथा नक्तं यष्टव्यतया रात्रिंच प्रति । किञ्च ओषधीः उषदाहे अत्र मादनकर्मा ओषन्ति माद्यन्ति अनेनेति ओषः सोमः । सधीयते निधीयते येष्विति ओषधयोग्रावाणः तान् प्रति आगच्छसि । यद्वा ओषध्यः फलपाकान्तालताः ताःप्रति आयाहि । अथवा हे स्तोतः पश्वादीनागासि समंतात्स्तुहि । कैगै शब्देइतिधातुः । ततः हे वसवः वासयितारोविश्ववेदसः सर्वधनाः सर्वज्ञानावा हे विश्वे सर्वेपि देवानोस्मदीयानां कर्मणां प्रावितारोभूत अनेनाग्निनासह यूयं प्रकर्षेण रक्षकाभवत ॥ २ ॥

२. अग्नि, हमारे यज्ञ में पशु के निकट आते हो, इस पृथिवी (यज्ञशाला) और वनस्पति के समीप आते हो और प्रातःकाल तथा रात्रि में सोमाभिषव के लिए प्रस्तर के निकट आते हो। सर्वज्ञाता विश्व-देवगण हमारे कर्मों के रक्षक होओ।

अथ तृतीया—

प्रसूनएत्वध्वरोऽग्नादेवेषुपूर्व्यः ।
आदित्येषुप्रवरुणेधृतव्रतेमरुत्सुविश्वभानुषु ॥ ३ ॥

प्र । सु । नः । एतु । अध्वरः । अग्ना । देवेषु । पूर्व्यः । आदित्येषु ।
प्र । वरुणे । धृतऽव्रते । मरुत्ऽसु । विश्वऽभानुषु ॥ ३ ॥

पूर्व्यः पुरातनः पूर्व्यान् पुरातनानिन्द्रादीन्देवान्प्रति क्रियमाणत्वाद्यज्ञोपि पूर्व्यइत्युच्यते तादृशोमुख्योनोस्मदीयोध्वरोयज्ञः अग्ना सुपांसुलुगिति सप्तम्याडादेशः अग्नौ अग्निर्देवानां मुख्यत्वात् प्रथममभिहितः तस्मिन्नग्नौ सर्वेष्वन्येषु देवेषु च सु सुष्ठु प्रैतु प्रकर्षेण गच्छतु । देवान् विशिनष्टि आदित्येषु अदितेः पुत्रेषु इन्द्रादिषु धृतव्रते धृतकर्मणि वरुणेच विश्वभानुषु सर्वतोव्याप्ततेजस्केषु मरुत्सुच प्रैतु ॥ ३ ॥

३. प्राचीन यज्ञ अग्नि और अन्य देवों के पास, उत्तमता के साथ, गमन करे एवम् आदित्यों, धृत-व्रत वरुण और तेजस्वी मरुतों के निकट भी गमन करे।

अथ चतुर्थी—

विश्वे॒हिष्मा॒मन॑वेवि॒श्ववे॑दसो॒भुव॑न्वृ॒धेरि॒शाद॑सः ।
अरि॑ष्टेभिःपा॒युभि॑र्विश्ववेदसो॒यन्ता॑नोवृ॒कंछ॒र्दिः ॥ ४ ॥

विश्वे॑ । हि । स्म॒ । मन॑वे । वि॒श्वऽवे॑दसः । भुव॑न् । वृ॒धे । रि॒शाद॑सः ।
अरि॑ष्टेभिः । पा॒युऽभिः॑ । वि॒श्व॒ऽवे॒द॒सः॒ । यन्त॑ । नः॒ । अ॒वृ॒कम् । छ॒र्दिः ॥४॥

विश्ववेदसः सर्वतोव्याप्तधना बहुधनाइत्यर्थः तादृशा रिशादसः रिशतां हिंसतां शत्रूणामसितारः उपक्षपयितारोवा विश्वेहिष्म सर्वेखलु देवा मनवे षष्ठ्यर्थेचतुर्थी मनोः वृधे वर्धनाय भुवन् भवन्तु स्तोत्रे मनुष्याय धनं दत्वा तं वर्धयन्त्वित्याशास्ते । ततः हे विश्ववेदसः सर्वधनाः सर्वज्ञावादेवाः अरिष्टेभिः परैरहिंसितैः पायुभिः पालनैः सह अवृकं वृकःस्तेनस्तद्रहितं बाधारहितमित्यर्थः । तादृशं छर्दिर्गृहं नोस्मभ्यं यन्त प्रयच्छत शत्रून्हत्वा गृहेष्वस्माभिः कर्माणि कारयतेत्यर्थः । यन्तेति यमेर्लोटि छान्दसोविकरणस्यलुक् तस्य तबादेशः तेनानुनासिकलोपाभावः ॥ ४ ॥

४. बहुधनशाली और शत्रु-नाशक विश्वदेवगण मनु के वर्द्धन के लिए हों। सर्वज्ञाता देवो, अहिंसित पालन के साथ हमें बाधा-रहित गृह प्रदान करो।

अथ पञ्चमी—

आनो॑अ॒द्यसम॑नसो॒गन्ता॒विश्वे॑स॒जोष॑सः ।
ऋ॒चागि॒राम॑रुतो॒देव्यदि॑ते॒सद॑ने॒पस्त्ये॑महि ॥ ५ ॥ २१ ॥

आ । नः॒ । अ॒द्य । सऽम॑नसः । गन्त॑ । विश्वे॑ । स॒ऽजोष॑सः ।
ऋ॒चा । गि॒रा । मरु॑तः । देवि॑ । अदि॑ते । सद॑ने । पस्त्ये॑ । म॒हि॒ ॥ ५॥२१॥

समनसः सर्वेषुस्तोत्रेषु समानमनस्काः विश्वे सर्वेदेवाः यूयं सजोषसः परस्परं संगताः सन्तः गिरा शुश्रूषुतया प्राप्तव्ययेत्यर्थः तया ऋचासह अद्यास्मिन्यागदिने नोयष्ट्रूनस्मानागन्त

आगच्छत। अनन्तरं हे मरुतः देवि द्योतमाने महि महति देवानां मातृत्वात् महत्वयुक्ते हे अदिते अदीने एतन्नामिके देवि सदने स्थाने पस्त्येस्मदीयेगृहे स्तोतव्यतया उपविशत। मरुतइत्यादेर्वाक्यभेदादनिघातः उत्तरत्र पूर्वस्यामन्त्रितस्याविद्यमानवत्वेन वाक्यादित्वादनिघातः॥५॥

५. विश्वदेवो, स्तोत्रों में समान-मना और परस्पर सङ्गत होकर, वचन और ऋचा के साथ, आज के यज्ञ-दिन में हमारे निकट आओ। मरुतो और महत्त्वपूर्ण अदिति देवी, हमारे उस गृह में विराजो।

॥ इति षष्ठस्य द्वितीये एकत्रिंशोवर्गः॥ ३१ ॥

अभिप्रियामरुतोयावोअश्व्याहव्यामित्रप्रयाथन।
आबर्हिरिन्द्रोवरुणस्तुरानरआदित्यासःसदन्तुनः॥ ६ ॥

अभि। प्रिया। मरुतः। या। वः। अश्व्या। हव्या। मित्र।
प्रऽयाथन। आ। बर्हिः। इन्द्रः। वरुणः। तुराः। नरः। आदित्यासः।
सदन्तु। नः॥ ६ ॥

हे मरुतः प्रिया प्रियाणि या यानि वोयुष्माकमश्व्या अश्व्यानि प्रियान् अश्वसंघान् अभिप्रयाथन अस्मद्यज्ञंप्रति प्रापयत यूयमश्वैर्युक्ताः सन्तआगच्छतेत्यर्थः। अथ हे मित्र मित्रशब्देनान्येवरुणादयोप्युच्यन्ते हे मित्रादयोदेवाः हव्या हव्यानि हवनयोग्यानि हवींषि स्वीकर्तुमागच्छतेत्यर्थः। स्तूयमाना आगच्छत। प्रपूर्वाद्यातेर्लोटि तप्तनप्तनथनाश्चेतिथनादेशः। आगत्यच इन्द्रोवरुणः इन्द्रावरुणौ तुराः संग्रामे शत्रुवधार्थं त्वरमाणाः नरोनेतारआदित्यासः अदितेः पुत्रामरुदादयोदेवाश्च नोस्मदीये यज्ञे बर्हिः बर्हिषि आसादिते आसदन्तु आसीदन्तु प्रविशन्तु। सदेः सीदादेशाभावश्छान्दसः॥ ६ ॥

६. मरुतो, अपने प्रिय अश्वों को इस यज्ञ में भेजो अथवा अश्वों से युक्त होकर आओ। मित्र, हव्य के लिए पधारो। इन्द्र, वरुण और युद्ध में शत्रु-वध के लिए क्षिप्रकर्त्ता तथा नेता आदित्यगण हमारे कुशों पर बैठें।

अथ सप्तमी—

वयंवोवृक्तबर्हिषोहितप्रयसआनुषक्।
सुतसोमासोवरुणहवामहेमनुष्वदिद्धाग्नयः॥ ७ ॥

वयम्। वः। वृक्तऽबर्हिषः। हितऽप्रयसः। आनुषक्।
सुतऽसोमासः। वरुण। हवामहे। मनुष्वत्। इद्धऽअग्नयः॥ ७ ॥

हे वरुण वरुणादयोदेवाः वृक्तबर्हिषऋत्विजोवयं आनुषक् स्रुगादिषु अनुषक्तं यथा भवति तथा हितप्रयसः प्रीणातीति प्रयोन्नं तेषु निहितहविष्काःसन्तः वोयुष्मान् हवामहे एतानि हवींष्यादातुमाह्वयामः। कीदृशाः सुतसोमासः अभिषुतसोमाः इद्धाग्नयः आहुतिभिः समिद्धाग्नयो वयमाह्वयामः। तत्रदृष्टान्तः—मनुष्वत् मनुर्यथा यज्ञे युष्मानाजुहाव तद्वत् ॥ ७ ॥

७. वरुण, मनु के समान हम (मनुवंशीय) सोमाभिषव करके और अग्नि को समिद्ध करके, हवि को स्थापित और कुश का छेदन करते हुए, तुम्हें बुलाते हैं।

आप्रयातमरुतोविष्णोअश्विनापूषन्माकीनयाधिया।
इन्द्रआयातुप्रथमःसनिष्युभिर्वृषायोवृत्रहागृणे ॥ ८ ॥

आ। प्र। यात। मरुतः। विष्णो इति। अश्विना। पूषन्।
माकीनया। धिया। इन्द्रः। आ। यातु। प्रथमः।
सनिष्युऽभिः। वृषा। यः। वृत्रऽहा। गृणे ॥ ८ ॥

हे विश्वेदेवाः प्रयात प्रकर्षेणास्मदीयकर्मण्यागच्छत। हे मरुतः हे विष्णो स्वबलेन सर्वतोव्याप्त एतन्नामकदेव हे अश्विना अश्विनौ पूषन् स्तोतॄन् धनादिना पोषयतीतिपूषा एतन्नामकदेव मरुदादयो हे देवाः। माकीनया अस्मच्छब्दात् युष्मदस्मदोरिति खञ्शैषिकः एकवचने तवकममकाविति ममकादेशः वर्णलोपश्छान्दसः। मया क्रियमाणया धिया स्तुत्या सहास्मद्यज्ञं प्रत्यागच्छत। मरुदादेरामन्त्रितस्य वाक्यभेदादनिघातः। किञ्च प्रथमोदेवानां मुख्यः सइन्द्रश्चायातु वृषा कामानां सेक्ता यइन्द्रः सनिष्युभिः सनिः संभजनं तदात्मनइच्छद्भिः स्तोतृभिः वृत्रहा अपामावरकस्य वृत्रासुरस्य हन्तेति गृणे गृणते स्तूयते। गृशब्देइत्यस्य कर्मणि लिटि छांदसोविकरणः ॥ ८॥

८. मरुद्गण, विष्णु, अश्विद्वय और पूषा, मेरी स्तुति के साथ यज्ञ में पधारो। देवों के बीच प्रथन इन्द्र भी आवें। इन्द्राभिलाषी स्तोता लोग इन्द्र को वृत्रहा कहते हैं।

अथ नवमी—

विनोदेवासोअद्रुहोच्छिद्रंशर्मयच्छत।
नयद्दूराद्वसवोनूचिदन्तितोवरूथमादधर्षति ॥ ९ ॥

वि। नः। देवासः। अद्रुहः। अच्छिद्रम्। शर्म। यच्छत। न। यत्।
दूरात्। वसवः। नु। चित्। अन्तितः। वरूथम्। आऽदधर्षति ॥ ९ ॥

हे अद्रुहः स्तोतॄणामद्रोग्धारः यद्वा द्रुहेरौणादिकः कर्मणिक्विप् शत्रुभिरहिंस्याः हे देवासो मरुदादयोदेवाः अच्छिद्रं बाधकरहितं साधीयोवा शर्म शृणाति दुःखादिकमिति शर्म-गृहं तव नोस्मभ्यं वियच्छत । हे वसवः शत्रूणां वासयितारोमरुदादयः दूराद्दूरदेशात् अन्तितः अन्तिकदेशाद्वा कश्चिदागत्यं नूचित्कदाचिदपि वरूथं वरणीयं संभजनीयं यद्गृहं नादधर्षति आधर्षणं हिंसनं नकरोति तद्गृहं प्रयच्छतेति समन्वयः । धृषप्रसहनेइत्यस्य विभाषितणिचूत्वात् यदा णिचूनास्ति तदा रूपम् ॥ ९॥

९. द्रोह-शून्य देवो, हमें बाधा-शून्य गृह प्रदान करो। वासदाता देवो, दूर अथवा समीप के देश से आकर कोई कभी वरणीय गृह की हिंसा नहीं करता।　　　अथ दशमी—

अस्तिहिवःसजात्यंरिशादसोदेवासोअस्त्याप्यम् ।
प्रणःपूर्वस्मैसुवितायवोचतमक्षूसुम्नायनव्यसे॥१०॥३२॥

अस्ति । हि । वः । सऽजात्यम् । रिशादसः । देवासः । अस्ति ।
आप्यम् । प्र । नः । पूर्वस्मै । सुविताय । वोचत । मक्षु ।
सुम्नाय । नव्यसे ॥ १० ॥ ३२ ॥

हे रिशादसो रिशतां हिंसतामसितारो देवासोदेवा द्योतमानाः मरुदादयः वो युष्माकं सजात्यमस्ति परस्परं समानजातिभावोस्तिखलु । किञ्च आप्यं आपिर्बन्धुः तस्यभावआप्यं स्तोतृषु स्तुत्यलक्षणसंबन्धात् वैवस्वतेन मनुना मया स्तोत्रा सह युष्माकं बन्धुभावोस्ति खलु । ततः पूर्वस्मै प्रथमभाविने सुविताय सुष्ठु ईयते सर्वैरागम्यतइति सुवितोभ्युदयः तस्मै नव्यसे नवीयसे नवतराय सुम्नायच उभयं मक्षु शीघ्रं नोस्माकं प्रवोचत प्रकर्षेण ब्रूत अभ्युदयधनानि प्रयच्छतेत्यर्थः ॥ १० ॥

१०. शत्रु-भक्षक देवो, तुममें स्वजातिभाव और बन्धुभाव हैं । प्रथम अभ्युदय और नवीन धन के लिए शीघ्र और उत्तमता से हमें कहो।

॥ इति षष्ठस्य द्वितीये द्वात्रिंशोवर्गः ॥ ३२ ॥

अथैकादशी—

इदाहिवउपस्तुतिमिदावामस्यभक्तये ।
उपवोविश्ववेदसोनमस्युराँअसृक्ष्यन्यामिव ॥ ११ ॥

इदा । हि । वः । उपऽस्तुतिम् । इदा । वामस्य । भक्तये । उप । वः ।
विश्वऽवेदसः । नमस्युः । आ । असृक्षि । अन्याम्ऽइव ॥ ११ ॥

हे विश्ववेदसः सर्वधनाः हे देवा नमस्युरन्नमिच्छन् मनुरहं वोयुष्मद्विषयामुपस्तुतिमन्यामिव अदृष्टपूर्वामिवस्थितां कैश्चिदप्यकृतामित्यर्थः तादृशीमुपस्तुतिमिदाहि हिरवधारणे इदानीमेवोपासृक्षि उपासृजामि करोमीत्यर्थः। किमर्थं वोयुष्मत्संबन्धिनो वामस्य वननीयस्य इदा इदानीमेव भक्तये संभजनाय लाभायेत्यर्थः। असृक्षीति सृजेर्लुङिरूपम् पादादित्वादनिघातः॥ ११॥

११. सर्वधनवान् देवो, मैं अन्न की कामना करता हूँ। इसी समय किसी से न की गई स्तुति को मैं, अभी तुम्हारे रमणीय धन की प्राप्ति के लिए, करता हूँ। अथ द्वादशी—

उदुष्यवंःसवितासुप्रणीतयोस्थांदूर्ध्वोवरेण्यः।
निद्विपादश्चतुष्पादोअर्थिनोविश्रन्पतयिष्णवंः॥ १२॥

उत्। ऊँ इति। स्यः। वः। सविता। सुऽप्रनीतयः। अस्थात्।
ऊर्ध्वः। वरेण्यः। नि। द्विऽपादः। चतुःऽपादः। अर्थिनः।
अविश्रन्। पतयिष्णवंः॥ १२॥

हे सुप्रणीतयः शोभनप्रणीतिः स्तुतिः शोभनप्रणयनाः शोभनस्तुतयोमरुतः वोयुष्माकं मध्ये ऊर्ध्वः ऊर्ध्वंगन्ता वरेण्यः सर्वैर्वरणीयः संभजनीयः स्यः ससविता सर्वस्य स्वकर्मणि प्रेरकः एतन्नामकः सदेवः यदा उदस्थात् स्वतेजसा उद्गतोभूत् तदा अर्थिनः द्विपादः पादद्वययुक्ताः पुरुषाः चतुष्पादः पादचतुष्टययुक्ताअश्वादयः पतयिष्णवः पतनशीलाः पक्षिणश्च न्यविश्रन् स्वस्वकार्येषु निविशन्ते। सूर्येउदिते केचनपुरुषा अग्निहोत्रादिकंकुर्वन्ति केचनं देवताविषयं स्तोत्रं कुर्वन्ति पश्वादयस्तृणादिभक्षणार्थं सर्वत्रसञ्चरन्ति। न्यविश्रन् निपूर्वाद्विशतेर्लङि व्यत्ययेन परस्मैपदं बहुलंछन्दसीतिरुडागमः॥१२॥

१२. सुन्दर स्तुतिवाले मरुतो, तुम लोगों में ऊर्ध्वगामी और सबके सेवनीय सविता (सबको कार्य में लगानेवाले) जब उगते हैं, उस समय मनुष्य, पशु और पक्षी अपने-अपने कार्यों में लग जाते हैं।

पञ्चमेहनि प्रउगशस्त्रे देवं देवमिति वैश्वदेवस्तृचः सूत्रितञ्च—देवंदेवंवोवसे देवंदेवं बृहदुगायिषेवचइति।

तत्र प्रथमा सूक्ते त्रयोदशी—

देवंदेवंवोवसेदेवंदेवमभिष्टये।
देवंदेवंहुवेमवाजसातयेगृणन्तोदेव्याधिया॥ १३॥

देवम्ऽदेवम् । वः । अवसे । देवम्ऽदेवम् । अभिष्टये । देवम्ऽदेवम् ।
हुवेम । वाजऽसातये । गृणन्तः । देव्या । धिया ॥ १३ ॥

वयं देव्या द्योतमानया धिया स्तुत्या गृणन्तः स्तुवन्तः सन्तोवोयुष्माकंमध्ये देवंदेवं दीप्यमानं देवं अवसे कर्मरक्षणायाह्वयाम । अनुक्रमेणाह अभिष्टये अभिलषितप्राप्त्यर्थंच देवंदेवं वयमाह्वयाम ततोवाजसातये अन्नलाभाय हुवेम आह्वयाम ॥ १३ ॥

१३. हम प्रकाशक स्तुति के द्वारा स्तव करते हुए तुम लोगों में से दिव्य देवता को, कर्म-रक्षण के लिए, बुलाते हैं। अभीप्सित की प्राप्ति के लिए दीप्तिमान् देवता को बुलाते हैं। अन्न-लाभ के लिए दिव्य देवता को बुलाते हैं।

देवासोहिष्मामनवेसमन्यवोविश्वेसाकंसरातयः ।
तेनोअद्यतेअपरंतुचेतुनोभवन्तुवरिवोविदः ॥ १४ ॥

देवासः । हि । स्म । मनवे । सऽमन्यवः । विश्वे । साकम् ।
सऽरातयः । ते । नः । अद्य । ते । अपरम् । तुचे ।
तु । नः । भवन्तु । वरिवःऽविदः ॥ १४ ॥

समन्यवः समानमनसः यद्वा संग्रामेषु शत्रुहननार्थं समानक्रोधयुक्ताः विश्वे सर्वेएव देवासोहिष्म मरुदादयोदेवाः खलु मनवे एतन्नामकाय ऋषये मर्त्यं साकं सह युगपदेव सरातयः धनादिदानेन सहिताभवन्तु । पुनरपि प्रार्थयते तेदेवाः नोस्माकं अद्यास्मिन्दिने अपरश्च किंबहुना सर्वेषु दिवसेषु धनदातारोभवन्तु । नकेवलमस्माकमेव किंतु तुचे तुगित्यपत्यनाम तुजिपिजिहिंसादाननिकेतनेषु तोजयति हिनस्ति पितुर्दुःखादिकमिति तुक् पुत्रः तस्मै नोस्माकं पुत्राय तु क्षिप्रं वरिवोविदः वरणीयस्य धनस्य लंभयितारोभवन्तु ॥ १४ ॥

१४. समान-क्रोधी विश्वदेवगण मनु के (मेरे) लिए धनादि दान के निमित्त एक साथ प्रवृत्त हों। आज और दूसरे दिन—सब दिनों में मेरे लिए और मेरे पुत्र के लिए वरणीय (सम्भजनीय) धन के दाता हों।

अथ पञ्चदशी—

प्रवःशंसाम्यद्रुहःसंस्थउपस्तुतीनाम् ।
नतंधूर्तिर्वरुणमित्रमर्त्यंयोवोधामभ्योविधत् ॥ १५ ॥

प्र । वः । शंसामि । अद्रुहः । सम्ऽस्थे । उपऽस्तुतीनाम् । न । तम् ।
धूर्तिः । वरुण । मित्र । मर्त्यम् । यः । वः । धामऽभ्यः । अविधत् ॥ १५ ॥

हे अद्रुहः अद्रोग्धारः अहिंस्यावा मरुदादयः उपस्तुतीनामुपस्तोत्राणां संस्थे तासां यज्ञे क्रियमाणत्वादस्मत्संस्थानभूतेस्मिन्यज्ञे वो युष्मान्प्रशंसामि प्रकर्षेण स्तौमि। हे वरुण मित्र मित्रावरुणौ तं मर्त्यं मनुष्यं धूर्तिः धुर्वीहिंसार्थः शत्रुभ्योहिंसा तन्नबाधते योमनुष्यः वोयुष्माकं धामभ्यस्तेजोभ्यः धीयतेस्मिन्निति धाम शरीरंवा तेभ्योविधत् विधविधाने हवींषि विदधाति प्रयच्छति एतेन तेजसामपि हविर्भक्षणमस्तीति ज्ञायते ॥ १५ ॥

१५. अहिंसनीय देवो, स्तोत्र के आधार यज्ञ में तुम्हारी खूब स्तुति करता हूँ। वरुण और मित्र, तुम्हारे शरीर के लिए जो हवि धारण करता है, उसे शत्रुओं की हिंसा बाधा नहीं देती।

अथ षोडशी—

प्रसक्षयंतिरतेविमहीरिषोयोवोवरायदाशति।
प्रप्रजाभिर्जायतेधर्मणस्पर्यरिष्टःसर्वएधते ॥ १६ ॥ ३२ ॥

प्र। सः। क्षयम्। तिरते। वि। महीः। इषः। यः। वः।
वराय। दाशति। प्र। प्रऽजाभिः। जायते। धर्मणः।
परि। अरिष्टः। सर्वः। एधते ॥ १६ ॥ ३२ ॥

हे मरुदादयः समनुष्यः क्षयं क्षियंति निवसन्त्यत्रेतिक्षयोगृहं तत् समनुष्यः प्रतिरते प्रकर्षेण वर्धयति। तिरतिर्वृद्धिकर्मा सएव महीर्महान्तिइषोन्नानिच विवर्धयति। योमनुष्यः वराय वरणीयाय धनाय तदर्थं वोयुष्मभ्यं दाशति हवींषि प्रयच्छति धनादिभिर्वर्धयतीत्यन्वयः। किञ्च धर्मणः ध्रियते ऋत्विग्भिरिति धर्म कर्म युष्मद्विषयात्कर्मणः सकाशात् समनुष्यः प्रजाभिः पुत्रपौत्रादिभिः परि परितः सर्वतः प्रजायते प्रकर्षेणाविर्भवति। आत्मावैपुत्रनामासीतिश्रुतेः। ततः अरिष्ट अन्यैरहिंसितः सर्वोयुष्माकं हविःप्रदानात्सकलोजनः एधते धनादिभिर्वर्धते ॥१६॥

१६. देवो, जो मनुष्य वरणीय धन के लिए तुम्हें हव्य देता है, वह अपना गृह बढ़ाता, अन्न बढ़ाता, यज्ञ के द्वारा प्रजा (पुत्रादि) से सम्पन्न होता है और सबके द्वारा अहिंसित होकर समृद्ध होता है।

॥ इति षष्ठस्य द्वितीये त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

ऋतेसविन्दतेयुधःसुगेभिर्यात्यध्वनः।
अर्यमामित्रोवरुणःसरातयोयंत्रायन्तेसजोषसः ॥ १७ ॥

ऋते। सः। विन्दते। युधः। सुऽगेभिः। याति। अध्वनः।
अर्यमा। मित्रः। वरुणः। सऽरातयः। यम्।
त्रायन्ते। सऽजोषसः ॥ १७ ॥

सः अर्यमादीनां हविर्दाता मनुष्यः युधः युधसंप्रहारे भावेक्विप् युद्धादृते विनापि विन्दते धनानिलभते। किञ्च सुगेभिः शोभनगमनैः सुष्ठुगन्तृभिर्वा अश्वैः सह अध्वनोमार्गान् गन्तव्यान् देशानित्यर्थः तान् याति गच्छति यं जनम् अर्यमा सततं गच्छन् मित्रः स्तोतृणां यष्टॄणां च धनप्रदानेन मित्रभूतोवरुणः निवारयिता शत्रूणां यद्वा वरणीयः संभजनीयः एतन्नामकाः सरातयः समानदानास्त्रयोदेवाः सजोषसः परस्परं संगताः सन्तः यं हव्यप्रदातारं त्रायन्ते स्वरक्षणैः पालयन्ति सधनादीनि विन्दतीत्यन्वयः॥ १७॥

१७. वह युद्ध के बिना भी धन प्राप्त करता है, सुन्दर गमनवाले अश्वों से मार्ग को अतिक्रम करता है तथा मित्र, वरुण और अर्यमा मिलित और समान दान से युक्त होकर उसकी रक्षा करते हैं।

अथाष्टादशी–

अज्रेचिदस्मैकृणुथान्यञ्चनंदुर्गेचिदासुसरणम्।
एषाचिदस्मादशनिःपरोनुसास्रेधन्तीविनंश्यतु॥ १८॥

अज्रे। चित्। अस्मै। कृणुथ। निऽअञ्चनम्।
दुःऽगे। चित्। आ। सुऽसरणम्। एषा। चित्। अस्मात्।
अशनिः। परः। नु। सा। अस्रेधन्ती। वि। नश्यतु॥ १८॥

हे देवाः अज्रेचित् ज्रिअभिभवे परैरनभिभवनीयेपि परपुरे न्यञ्चनं नितरां गमनमस्मै मनवे कृणुथ यूयं कुरुत। यद्वा ज्रे ऋजुगमने प्रस्थे गमनं कुरुत तथा दुर्गेचित् अगन्तव्येपि स्थले सुसरणं सुगतौ शोभनगमनमासमन्तात्कुरुत एवंसति सैषाशनिः शत्रूणां तदेतदायुधं अस्मात्सर्वतोगन्तुर्मनोर्नुक्षिप्रं परः परस्ताद्भवेत् पश्चात्साशनिः अस्रेधन्ती कांश्चिदप्यहिंसती विनश्यतु विनष्टाभवेत्॥ १८॥

१८. देवो, अगम्य और दुर्गम्य पथ को सुगम करो। यह अशनि (आयुध) किसी की हिंसा न करके विनिष्ट हो जाय।

अथैकोनविंशी–

यदद्यसूर्यउद्यतिप्रियक्षत्राऋतंदध।
यन्निम्रुचिप्रबुधिविश्ववेदसोयद्वामध्यन्दिनेदिवः॥ १९॥

यत्। अद्य। सूर्ये। उत्ऽयति। प्रियऽक्षत्राः।
ऋतम्। दध। यत्। निऽम्रुचि। प्रऽबुधि। विश्वऽवेदसः।
यत्। वा। मध्यन्दिने। दिवः॥ १९॥

हे प्रियक्षत्राः प्रीणयितृबलाः देवाः सूर्ये सर्वस्य स्वस्वकर्मणि प्रेरके सवितरि उद्यति उद्गच्छतिसति अद्यास्मिन्दिने यद्यदा ऋतं कल्याणभूतं गृहं दध धारयत दधातेर्लिटि मध्यमबहुवचनेरूपम् । यद्यदा हे विश्ववेदसः सर्वधनादेवाः निम्रुचि निम्रुचिर्गत्यर्थः सूर्यस्य निम्रोचने नितरां गमने सायमित्यर्थः तस्मिन् धारयथ । यद्वा प्रबुधितस्य प्रबोधने प्रातःकाले । यद्वा दिवः सूर्यतेजसा दीप्यमानस्याह्नो मध्यन्दिने मध्ये धनं मनवे धत्तेत्युत्तरत्रसंबंधः ॥ १९ ॥

१९. बल-प्रिय देवो, सूर्य के उदित होने पर आज तुम कल्याणवाहक गृह को धारण करो। सारे धनों से युक्त देवो, सायंकाल धारण करो, प्रातः-काल धारण करो और मध्याह्न काल में मनु के लिए धन धारण करो।

यद्वाभिपित्वेअसुराऋतंयतेछर्दिर्येमविदाशुषे ।
वयंतद्वोवसवोविश्ववेदसउपस्थेयाममध्यआ ॥ २० ॥

यत् । वा । अभिऽपित्वे । असुरा । ऋतम् । यते ।
छर्दिः । येम । वि । दाशुषे । वयम् । तत् । वः । वसवः ।
विश्वऽवेदसः । उप । स्थेयाम । मध्ये । आ ॥ २० ॥

हे असुराः प्राज्ञाः संग्रामे आप्तानां क्षेप्तारोवा देवाः यद्वाभिपित्वे अस्मद्यज्ञं प्रति युष्माकं अभिप्राप्तौ ऋतं सत्यभूतं यज्ञं यते इणः शतरि रूपम् । गच्छते दाशुषे हवींषिदत्तवते यजमानाय यच्छर्दिः उ छृदिर्दीप्तिदेवनयोः दीप्यतेनेनेति छर्दिस्तेजः यद्वा छर्दति दीव्यन्तेनेति छर्दिर्गृहं तत् गृहं तेजोवा वियेम प्रयच्छथ यद्येवं यूयं कुरुथ तर्हि वयं हे वसवः स्तोतॄणां धनादिभिराच्छादयितारः यद्वा शत्रूणां विवासयितारो विश्ववेदसः सर्वधनाः सर्वज्ञानावा हे देवाः वोयुष्मत्संबन्धि तत्कल्याणं गृहं षष्ठ्यर्थे द्वितीया भवद्भिः प्रत्तस्य गृहस्य मध्ये उपस्थेयाम उपतिष्ठेम युष्मान् हविर्भिः पूजयेम तिष्ठतेराशीर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः ॥ २० ॥

२०. प्राज्ञ (असुर) देवो, यज्ञ के प्रति तुम्हारे लाभ के लिए हवि देनेवाले और यज्ञगामी यजमान को यदि तुम लोग गृह प्रदान करते हो, तो हे वासदाता और सर्व-धन-संयुक्त देवो, हम तुम्हारे उसी मंगलकर गृह में तुम्हारी पूजा करेंगे।

अथैकविंशी—

यदद्यसूरउदितेयन्मध्यन्दिनआतुचि ।
वामंधत्थमनवेविश्ववेदसोजुह्वानायप्रचेतसे ॥ २१ ॥

यत् । अद्य । सूरे । उत्ऽइते । यत् । मध्यन्दिने ।
आऽतुचि । वामम् । धत्थ । मनवे । विश्वऽवेदसः ।
जुह्वानाय । प्रऽचेतसे ॥ २१ ॥

हे विश्ववेदसः सर्वतोव्याप्तधनाः हे देवाः यद्यदा अद्येदानीं सूरे सूर्ये उदिते सति यद्यदा मध्यन्दिने दिवसस्य मध्ये यद्वा आतुचि आतुचिर्गमनार्थः सूर्यस्य आनिम्रोचने सायमित्यर्थः जुह्वानाय अग्नौ हवींषि जुह्वते अतएव प्रचेतसे प्रकृष्टज्ञानाय मनवे एतन्नामकाय ऋषये मह्यं वामं वननीयं धनं धत्थ धत्त तद्वृणीमहइत्युत्तरत्रसंबन्धः ॥ २१ ॥

२१. सर्व-धन-सम्पन्न देवो, आज सूर्योदय होने पर, मध्याह्न में और सायंकाल में हव्यदाता और प्रकृष्ट ज्ञानी मनु ऋषि के (मेरे) लिए जो रमणीय धन तुम लोग धारण करते हो—

वयंतद्वःसम्राजआवृणीमहेपुत्रोनबहुपाय्यम् ।
अश्यामतदादित्याजुह्वतोहविर्येनवस्योनशामहै ॥ २२ ॥ ३४ ॥

वयम् । तत् । वः । सम्ऽराजः । आ । वृणीमहे । पुत्रः ।
न । बहुऽपाय्यम् । अश्याम । तत् । आदित्याः । जुह्वतः ।
हविः । येन । वस्यः । अनशामहै ॥ २२ ॥ ३४ ॥

हे सम्राजः सम्यग्दीप्यमानाः देवाः पुत्रोन एकवचनं छान्दसं युष्माकंपुत्राइव स्थिताः पुत्रा यथा पितृभिः पोष्याः तद्वत् युष्माभिःपोष्या वयं ।बहुपाय्यं बहुभिर्भोज्यं वोयुष्मत्सम्बन्धि तद्धनं आवृणीमहे संभजामः ।तथा हविः जुह्वतः यागं कुर्वतोवयं हे आदित्याः तद्धनं अश्याम प्राप्नुयाम । येन धनेन वस्यः वसीयः अतिशयेन वसुमत्वमनशामहै अश्नवामहै प्राप्नुमः।अश्नोतेर्लोटि व्यत्ययेन श्नम् प्रत्ययः ॥ २२ ॥

२२. दीप्तिमान् देवो, तुम्हारे पुत्रों के समान हम बहुत लोगों के भोग के योग्य उसी धन को प्राप्त करेंगे। आदित्यो, यज्ञ करते हुए हम इस धन के द्वारा अतीव धनाढ्यता प्राप्त करेंगे।

॥ इति षष्ठस्य द्वितीये चतुस्त्रिंशोवर्गः ॥ ३४ ॥

येत्रिंशतीति पञ्चर्चमष्टमं सूक्तम् अत्रानुक्रान्तम्—येत्रिंशतिपञ्चोपान्त्या पुरउष्णिगिति । मनुर्ऋषिः प्राग्वत्समीयपरिभाषया गायत्रीछन्दः उपान्त्यापुरउष्णिक् पूर्ववद्विश्वेदेवादेवता । तृतीयेछन्दोमे वैश्वदेवशस्त्रे येत्रिंशतीत्येतत्सूक्तं वैश्वदेवनिविद्धानम् सूत्रितंच—येत्रिंशतीतिवैश्वदेवमिति ।

तत्र प्रथमा—

येत्रिंशतित्रयस्परोदेवासोबर्हिरासदन् ।
विदन्नहद्वितासनन् ॥ १ ॥

ये । त्रिंशति । त्रयः । परः । देवासः । बर्हिः । आ ।
असदन् । विदन् । अह । द्विता । असनन् ॥ १ ॥

मनुराह त्रिंशति त्रिंशत्संख्यायाःपरः परस्तात्त्रयः त्रयस्त्रिंशद्देवताइत्यर्थः ये देवासोदेवाः बर्हिः अस्मदीययज्ञसंबंधिनि बर्हिषि हविःस्वीकरणार्थमासदन् आसीदन्तु । अह अथानन्तरं विदन् ते देवा अस्मान् हविषांप्रदातॄनिति जानंतु । ततः द्विता द्विधा द्विप्रकारमसनन् अस्मभ्यं धनं पश्वादिकञ्च प्रयच्छन्तु । यद्वा द्विता द्वैधं अनेन पौनःपुन्यं लक्ष्यते पुनःपुनरस्मभ्यं धनादिकं ददत्वित्यर्थः ॥ १ ॥

१. जो तेंतीस देवता कुशों पर बैठे थे, वे हमें समझें और बार-बार हमें धन दें।

अथ द्वितीया—

वरुणोमित्रोअर्यमास्मद्रातिषाचोअग्नयः ।
पत्नीवन्तोवषट्कृताः ॥ २ ॥

वरुणः । मित्रः । अर्यमा । स्मद्रातिऽसाचः ।
अग्नयः । पत्नीऽवन्तः । वषट्ऽकृताः ॥ २ ॥

वरुणोवरणीयः संभजनीयः मित्रः स्तोतॄणां यष्टॄणांच धनादिदानेन मित्रभूतः अर्यमास्तोत्रकारिणोधनं प्रापयन् यद्वा सततं गच्छन् एतन्नामकास्त्रयोदेवाः स्मद्रातिषाचः स्मत् सुमत् शोभना रातिर्हविःप्रदानं येषामस्तीति स्मद्रातयोयजमानाः तान् सचन्ते धनादिप्रदानेन सेवन्ते इति तथोक्ताः। यद्वा कल्याणं यथा भवति तथा हविषां दातॄन् सचन्तइति । ते तादृशाःपत्नीवन्तोदेवपत्नीसहिता अग्नयः अंगनशीलाः नानाविधाअग्नयः वषट्कृताः मया सोमस्याग्नेयी हीवौषडित्यादिना स्वाहाकृताः सुहुताइत्यर्थः॥ २ ॥

२. वरुण, मित्र और अर्यमा सुन्दर हव्य देनेवाले यजमानों के साथ मिलकर और देवपत्नियों के सहित, नानाविध वषट्कारों (हि, वौषट् आदि शब्दों) के द्वारा बुलाये गये हैं।

अथ तृतीया—

तेनोगोपाअपाच्यास्तउदक्तइत्थान्यक् ।
पुरस्तात्सर्वयाविशा ॥ ३ ॥

ते । नः । गोपाः । अपाच्याः । ते । उदक् । ते । इत्था ।
न्यक् । पुरस्तात् । सर्वया । विशा ॥ ३ ॥

ते वरुणादयोदेवाः सर्वया सर्वेण विशा अनुचरवर्गेण सह अपाच्याः अपाची प्रतीची ततोनोस्माकं गोपाः गोपायितारोभवन्तु तएव उदक् उदीच्याः अञ्चेर्लुगिति पञ्चम्यर्थे विहितस्यास्तातेर्लुक् ततोप्यस्माकं रक्षकाभवन्तु । इत्थेति शब्देन ऊर्ध्वां दिशं दक्षिणां च निर्दिशति इत्थमनेन पूर्वोक्तेन प्रकारेण ऊर्ध्वाया दक्षिणस्याश्च दिशः तेदेवाः अस्माकं पालयितारोभवन्तु तथा न्यक् नीच्यादिशः अत्रापि पूर्ववदस्तातेर्लुक् अधःस्थादेवाअपि अस्माकं त्रातारोभवन्तु । किंच पुरस्तात्प्राच्यादिशश्च तेदेवाअस्माकं गोपायितारोभवन्तु ॥ ३ ॥

३. वे वरुणादि देव, अपने सारे अनुचरों के साथ, सम्मुख, पीछे, ऊपर और नीचे हमारे रक्षक हों।

अथ चतुर्थी—

यथा॒वशं॑न्ति॒दे॒वास्तथेदं॑स॒त्तदे॑षां॒नकि॒रामि॑नत्।अरा॑वाच॒नमर्त्यः॑॥४॥

यथा॑। वशं॑न्ति। दे॒वाः तथा॑। इत्। अ॒स॒त्। तत्। ए॒षा॒म्।
नकिः॑। आ। मि॒न॒त्। अरा॑वा। च॒न। मर्त्यः॑॥ ४ ॥

देवाद्योतमानाः सर्वेदेवाः यथा वशन्ति यथा कामयन्ते वशकान्तौ सम्प्रसारणाच्चेति पूर्वरूपस्य छन्दसिविकल्पितत्वाद्यणादेशः। तथैव यथा उशन्ति तथैव असत् तद्भवत्येव। तदेवाह एषां देवानां तत्कामनं नकिर्नकश्चिदपि मिनत् हिनस्ति मीङ् हिंसायां लेटिरूपम् मीनातेर्निगमइतिह्रस्वत्वम्। कथं देवानामभिलषितं तथाभवतीतिचेत् तदाह—अरावा यदि देवाः कस्यचिदप्यदातारं मनुष्यं कामयेरन् तदा अरावा अदाता चनेत्यप्यर्थे अदातापि मर्त्योमनुष्यः उशद्भ्योदेवेभ्योहवींषि प्रयच्छति तस्मात्तेषां यत्कामनं तत्तथा भवत्येवेत्यर्थः॥ ४ ॥

४. देवता लोग जैसी इच्छा करते हैं, वैसा ही होता है। देवों की कामना को कोई विनष्ट नहीं कर सकता। अदाता मनुष्य (यदि वह हवि देने लगे) की भी कोई हिंसा नहीं कर सकता।

अथ पञ्चमी—

स॒मा॒नां॑स॒प्तऋ॒ष्टयः॑स॒प्तद्यु॒म्नान्ये॑षाम्।
स॒प्तोअधि॒श्रियो॑धिरे॥ ५ ॥ २५ ॥

स॒मा॒नाम्। स॒प्त। ऋ॒ष्टयः॑। स॒प्त। द्यु॒म्नानि॑। ए॒षा॒म्।
स॒प्तो इति॑। अधि॑। श्रियः॑। धि॒रे॒॥ ५ ॥ २५ ॥

अत्र पुरातनीकथा इन्द्रसमानं पुत्रमिच्छन्त्याः दितेर्गर्भस्य केनचित्कारणेन इन्द्रेण सप्तधा-भिन्नत्वात् सगर्भः सप्तगणात्मकोभवत् ततोमरुतः संपन्नाः। सप्तगणावैमरुतइतिश्रुतेः। एषा कथा इदंपित्रेमरुतामुच्यतेवचइत्यस्मिन्वर्गे। समपञ्चेनाभ्यधायि। तथाचास्याऋचोयमर्थः—सप्तानां मरुतां गणानां सप्त सप्तसंख्याका ऋष्टय आयुधविशेषाविभिन्नाःसन्ति तथा सप्तसंख्याकानि द्युम्नानि द्योतमानानि कुंडलादीन्याभरणानि द्युम्नान्यन्नानिवा एषां गणानां विभिन्नानि सन्ति ततः सप्तमरुतांगणाः सप्तो सप्तैव सप्तविधाःश्रियः सकलादीप्तीः अधिधिरे परस्परमधिकंदधिरे ॥५॥

५. (इन्द्र के अंश-रूप) सात मरुतों के सात प्रकार के आयुध हैं, सात प्रकार के आभरण हैं और सात प्रकार की दीप्तियाँ हैं।

॥ इति षष्ठस्य द्वितीये पञ्चत्रिंशोवर्गः ॥ ३५ ॥

बभ्रुरेकइति दशर्चं नवमं सूक्तं मरीचिपुत्रः कश्यपो वैवस्वतोमनुर्वा ऋषिः। तथाचानुक्रम्यते—बभ्रुर्दशकश्यपोवा मारीचो द्वैपदमिति। दशापिद्विपदा विंशत्यक्षराविराजः पूर्ववद्विश्वेदेवादेवता। तृतीयेछन्दोमे वैश्वदेवशस्त्रे वैश्वदेवसूक्तात्पूर्वमेव द्वैपदंसूक्तं शंसनीयम्। सूत्र्यतेहि—बभ्रुरेकइतिद्विपदासूक्तानिपुरस्ताद्वैश्वदेवसूक्तानामिति।

तत्र प्रथमा—

बभ्रुरेकोविषुणःसूनरोयुवाञ्ज्यङ्क्तेहिरण्ययम् ॥ १ ॥

बभ्रुः। एकः। विषुणः। सूनरः। युवा। अञ्जि।
अङ्क्ते। हिरण्ययम् ॥ १ ॥

अत्र दशानामृचां किंचित्पदलिंगात् पृथक्देवताः अत्र प्रथमायां बभ्रुः इत्यनेन सोमोभिधीयते। सोम्यंबभ्रुमालभेतेत्यादिषुदृष्टत्वात्। बभ्रुर्बभ्रुवर्णः सर्वलतादिषु परिपक्वः। यद्वा डुभृञ् धारणपोषणयोः कुर्भ्रश्चेति कुप्रत्ययः सर्वस्य सुधामयैः किरणैः तावदुद्गते चन्द्रमसि दुःखोपशमनानि पुष्टानिखलु। तादृशः विषुणः विष्वगञ्चनः सूनरः सुष्ठु रात्रीणां नेता रात्रयश्चन्द्रनेतृकाः खलु। एतादृशोयुवा प्रतिदिवसमाविर्भूतत्वात्तरुणः एकोदेवः सोमः हिरण्ययं हिरणमयं अञ्जि अभिव्यज्यते प्रकाश्यतेनेनेति अञ्जि आभरणं अभिव्यक्तिसाधनं कुंडलमुकुटादिकं स्वशरीरमंक्ते अभिव्यञ्जयति ॥ १ ॥

१. बभ्रुवर्ण (पीले रंग के), सवर्ग, रात्रियों के नेता, युवक और एकाकी सोमदेव हिरण्मय आभरण को प्रकाशित करते हैं।

---

१ तै०सं० २. २. ५.। २ ऋ० सं० १. ८. ५.। ३ तै०सं० २. १. ३.।

अथ द्वितीया—

योनिमेकआससादद्योतनोन्तर्देवेषुमेधिरः ॥ २ ॥

योनिम् । एकः । आ । ससाद । द्योतनः ।
अन्तः । देवेषु । मेधिरः ॥ २ ॥

अत्र योनिमिति लिंगादग्निरुच्यते । अग्नयेगृहपतयेइत्यादिषु दृष्टत्वात् । देवेषु देवानामन्तर्मध्ये द्योतनः स्वतेजसा दीप्यमानो मेधिरोमेधावी अथवा मेधाकांक्षिणां स्तोतॄणां मेधा दातृत्वेन मेधायुक्तः एवंविधएकोग्निः एवं स्थानभूतमाहवनीयादिकं आससाद हविःस्वीकरणार्थमासीदति ॥ २ ॥

२. देवों में दीप्यमान, मेधावी और अकेले अग्नि अपना स्थान प्राप्त करते हैं।

अथ तृतीया—

वाशीमेकोबिभर्तिहस्तआयसीमन्तर्देवेषुनिध्रुविः ॥३॥

वाशीम् । एकः । बिभर्ति । हस्ते । आयसीम् ।
अन्तः । देवेषु । निःध्रुविः ॥ ३ ॥

देवेष्वन्तर्देवानांमध्ये द्योतमानः निध्रुविः निश्चले स्थाने वर्तमानः यद्वा नितरां गमनमस्यास्तीति निध्रुविः सर्वदागच्छन् अथवा संग्रामेषु शत्रूणां पुरतोतिशयेन स्थैर्यवान् एतादृशः एकस्त्वष्टृनामकोदेवः आयसीं अयोमयधारां वाशीं वाश्रृशब्दे शब्दयत्याक्रन्दयति शत्रूननयेति वाशी तक्षणसाधनं कुठारः तं स्वकीयहस्ते बिभर्ति धारयति ॥ ३ ॥

३. देवों के बीच निश्चल स्थान में वर्त्तमान त्वष्टा हाथों में लौहमय कुठार को धारण करते हैं।

अथ चतुर्थी—

वज्रमेकोबिभर्तिहस्तआहितंतेनवृत्राणिजिघ्नते ॥ ४ ॥

वज्रम् । एकः । बिभर्ति । हस्ते । आऽहितम् ।
तेन । वृत्राणि । जिघ्नते ॥ ४ ॥

अत्र वज्रलिंगादिन्द्रोदेवता एकइन्द्रः आहितं स्वकीयहस्ते निहितं वज्रमेतन्नामकमायुधं बिभर्ति धत्ते सएवेन्द्रस्तेन निहितेन वज्रेण वृत्राणि अपामावरकाणि रक्षांसि पापानि वा जिघ्नते भृशं हन्ति ॥ ४ ॥

४. इन्द्र अकेले हस्त-निहित वज्र धारण करते और वृत्रादि का नाश करते हैं।

अथ पञ्चमी—

तिग्ममेकोबिभर्तिहस्तआयुधंशुचिरुग्रोजलाषभेषजः ॥५॥

तिग्मम् । एकः । बिभर्ति । हस्ते । आयुधम् ।
शुचिः । उग्रः । जलाषऽभेषजः ॥ ५ ॥

अत्र जलाषभेषजइत्यनेन रुद्रोभिधीयते शुचिः शुच दीप्तौ सर्वतः स्वतेजसा दीप्यमानः यद्वा शुच शोके शत्रूणां शोचयिता दुःखयिता अतएव उग्रः उद्गूर्णबलः जलाषभेषजः रोगापनयनेन सुखकरभैषज्यवान् यद्वा स्तोतॄणां दुःखरूपसंसारोच्छेदेन सुखकारिभिषग्रूपः। प्रथमोदैव्योभिषगित्यादिश्रुतिभिरस्यभिषक्त्वंश्रूयते। तादृशएकोरुद्रः तिग्मं तीक्ष्णधारं आयुधं आयुध्यति सम्प्रहरति शत्रूननेनेति आयुधं पिनाकः तं स्वकीये हस्ते बिभर्ति ॥ ५ ॥

५. सुखावह भिषक्, पवित्र और उग्र रुद्र हाथों में तीखा आयुध रखते हैं।

अथ षष्ठी—

पथएकःपीपायतस्करोयथाँएषवेदनिधीनाम् ॥ ६ ॥

पथः । एकः । पीपाय । तस्करः । यथा ।
एषः । वेद । निऽधीनाम् ॥ ६ ॥

पथइतिलिंगेन पूषा निगद्यते। संपूषन्नध्वनस्तिरेत्यादिषुदृष्टत्वात्। एकः पूषनामकोदेवः पथः मार्गान् पीपाय प्यायतिर्वर्धनकर्मापि अत्र रक्षणार्थः ये अग्निहोत्रादिकर्मकुर्वन्ति तेषां स्वर्गमार्गं। ये दुष्कृतं कर्म कुर्वन्ति तेषां यातनामार्गं च रक्षति। उभयेषां मार्गविपर्ययोयथा नभवति तथा पालयतीत्यर्थः। एषसोयंपूषा निधीनां पृथिव्यां निहितानि धनानि वेद वेत्ति। ज्ञात्वा स्तोतॄणां तानि ददातीत्यर्थः। तत्रदृष्टान्तः—तस्करो यथा चोरः पथिगच्छतां पुरुषाणां धनहरणार्थं मार्गं रक्षति तथाच सचोरः गृहे निहितानि ज्ञात्वा तदाहृत्य तस्य सहायेभ्योयथा तानि ददाति तद्वत् ॥ ६ ॥

६. एक (पूषा) मार्ग की रक्षा करते हैं। वे चोर के समान सारे धनों को जानते हैं।

अथ सप्तमी—

त्रीण्येकउरुगायोविचक्रमेयत्रदेवासोमदन्ति ॥ ७ ॥

---

१ तै० सं० ४.५.१.। २ ऋ० सं० १.३.२४.।

त्रीणि । एकः । उरुऽगायः । वि । चक्रमे । यत्र । देवासः । मदन्ति ॥७॥

उरुगायोविचक्रमइति पदलिंगाद्विष्णुरुच्यते उरुगायः उरुभिर्बहुभिर्गातव्यः यद्वा बहुषु देशेषु गंता बहुकीर्तिर्वा सर्वान् शत्रून् स्वसामर्थ्येन शब्दयत्याक्रन्दयतीतिवा उरुगायः एतादृश-एकोसहायो विष्णुः त्रीणि पदानि भुवनानि विचक्रमे साधु पादेन विक्रान्तवान् वेःपादविहरणे इति क्रमतेः आत्मनेपदम्। यत्र येषु लोकेषु देवासः इन्द्रादयोदेवाः मदन्ति यजमानदत्तैर्हविर्भिर्माद्यन्ति तानि विचक्रमइत्यन्वयः ॥ ७ ॥

७. एक (विष्णु) बहुतों की स्तुति के योग्य हैं। उन्होंने तीन पैरों से तीनों लोकों का प्रक्रमण किया। इससे देवता लोग प्रसन्न हुए।

अथाष्टमी—

विभिर्द्वाचरतएकयासहप्रप्रवासेववसतः ॥ ८ ॥

विऽभिः । द्वा । चरतः । एकया । सह । प्र । प्रवासाऽइव । वसतः ॥ ८ ॥

एकयासहेति लिंगात् अश्विनावभिधीयेते द्वा द्वौ द्वित्वसंख्योपेतावश्विनौ विभिः वीगत्यादिषु क्विप् छान्दसोह्रस्वः गमनसाधनैः अश्वैः चरतः सञ्चरेते किञ्च इमावश्विनौ एकया सूर्याख्यया ताभ्यां स्वयं वृतया स्त्रिया सह प्रवसतः प्रवासं सर्वत्रगमनं कुरुतः। प्रवासे दृष्टान्तः— प्रवासेव यथा प्रवासिनौ द्वौ पुरुषौ एकया स्त्रिया सह प्रवसतः तद्वत् ॥ ८ ॥

८. दो (अश्विद्वय) एक स्त्री (सूर्या) के साथ, दो प्रवासी पुरुषों के समान, रहते और अश्व-द्वारा संचरण करते हैं।

सदोद्वाचक्रातेउपमादिविसम्राजासर्पिरासुती ॥ ९ ॥

सदः । द्वा । चक्राते इति । उपऽमा । दिवि । सम्ऽराजा ।
सर्पिरासुती इति सर्पिःऽआसुती ॥ ९ ॥

सम्राजाविति लिंगेन मित्रावरुणावभिधीयेते उपमा उपमौ परस्परं स्वकांत्योपमानभूतौ यद्वा उपमीयते आभ्यां सर्वमिति उपमौसर्वस्य एतावेव सम्राजा सम्राजौ सम्यग्दीप्यमानौ सर्पिरासुती सर्पिर्घृतमाभ्यामासूयतेइति सर्पिरासुती घृतहविष्कौ द्वा द्वौ मित्रावरुणौ दिवि द्युलोके सदः सीदन्त्यत्रेति सदः स्थानं तच्चक्राते अकार्ष्टाम् ॥ ९ ॥

अर्चन्तएकेमहिसाममन्वततेनसूर्यमरोचयन् ॥१०॥२६॥

अर्चन्तः । एके । महि । साम । मन्वत ।
तेन । सूर्यम् । अरोचयन् ॥ १० ॥ २६ ॥

अर्चन्तः देवान्पूजयन्तः एके केचनात्रयः महि महत् साम मन्वत उच्चारयन्तीत्यर्थः। तादृशा अत्रयः तेनोक्तेन साम्ना सूर्यं अरोचयन्नदीपयन् तएवात्र देवता ॥ १० ॥

९—१०. अपनी कान्ति के परस्पर उपमेय दो (मित्र और वरुण) अतीव दीप्तिशाली और घृतरूप हविवाले हैं। वे द्युलोक के स्थान का निर्माण करते हैं। स्तोता लोग महान् साम-मन्त्र का उच्चारण करके सूर्य को दीप्त करते हैं।

॥ इति षष्ठस्य द्वितीये षट्त्रिंशोवर्गः ॥ ३६ ॥

नहिवइति चतुर्ऋचं दशमं सूक्तं आद्यागायत्री द्वितीयापुरउष्णिक् तृतीयाबृहती चतुर्थ्यनुष्टुप् मनुर्वैवस्वतऋषिः पूर्ववद्विश्वेदेवादेवता। तथाचानुक्रान्तम्—नहिवश्चतुष्कंपुरउष्णिग्बृहत्यनुष्टुबन्तमिति। विनियोगस्तु लिंगादवगन्तव्यः।

तत्र प्रथमा

नहिवोअस्त्यर्भकोदेवासोनकुमारकः। विश्वेसतोमहान्तइत्॥१॥

नहि। वः। अस्ति। अर्भकः। देवासः। न। कुमारकः।
विश्वे सतः।महान्तः। इत् ॥ १ ॥

हे देवासोदेवाः वोयुष्माकंमध्ये अर्भकोनह्यस्ति शिशुर्नास्ति तथा न कुमारकः युष्माकं मध्ये कुमारोपिनास्ति। किन्तु सर्वे यूयं सवयसोनित्यतरुणाभवथ। एतदेव प्रतिपादयति विश्वे सर्वे देवाः यूयं सतोमहान्तइव सर्वस्माद्विद्यमानात् पृथिव्यामपिये महान्तः ते सतोमहान्तइत्युच्यन्ते तस्मायुष्माकमर्भको कुमारोपि नास्तीत्यर्थः ॥ १ ॥

१. देवो, तुम लोगों में कोई बालक नहीं है, कोई कुमार नहीं है। तुम सब महान् हो।

अथ द्वितीया—

इतिस्तुतासोअसथारिशादसोयेस्थत्रयश्चत्रिंशच्च।
मनोर्देवायज्ञियासः॥ २ ॥

इति। स्तुतासः। असथ। रिशादसः। ये। स्थ। त्रयः।
च। त्रिंशत्। च। मनोः। देवाः। यज्ञियासः॥ २॥

हे रिशादसः रिशतां हिंसतामसितारो हे मनोर्यज्ञियासः मनुनामकस्य मम यज्ञार्हा हेदेवाः ये यूयं त्रयः त्रिसंख्याकाः त्रिंशच्च त्रिंशत्संख्याकाः त्रयस्त्रिंशद्देवताःस्थ भवथ अभू-

त। ते यूयमिति इत्थमनेन प्रकारेण स्तुतासः असथ मया मनुना स्तुताभवथ अस्तेर्लेटि छान्दसोलुगभावः। यद्वा असथेतिकान्त्यर्थः इत्थं स्तुतायूयं हवींषि कामयध्वम् ॥ २ ॥

२. शत्रु-भक्षक और मनु के (मेरे) यज्ञार्ह देवो, तुम लोग तेंतीस हो। इसी प्रकार तुम लोग स्तुत हुए हो।

तेनस्त्राध्वंतेवततउंनोअधिवोचत।
मानःपथःपित्र्यान्मानवादधिदूरंनैष्टपरावतः ॥ ३ ॥

ते। नः। त्राध्वम्। ते। अवत। ते। ऊँ इति। नः। अधि। वोचत। मा। नः। पथः। पित्र्यात्। मानवात्। अधि। दूरम्। नैष्ट। पराऽवतः ॥ ३॥

हे देवाः ते यूयं नोस्मान् त्राध्वं बाधकेभ्यो रक्षोभ्यस्त्रायध्वं ते यूयं अवत धनादिप्रदानैरस्मान्रक्षत तेएवदेवा नोस्मानधिवोचत अधिकंभवन्तः कर्मकारिणो धनादिमन्तश्च भवन्त्विति यूयं ब्रूत। किंच हे देवाः मानवात् पित्र्यात् मनुः सर्वेषां पिता ततआगतात् परावतः पिता मनुर्दूरंमार्गं चक्रे तस्मात्पथोमार्गान्नोस्मान्मानैष्ट मा नयत अपनयनं माकुरुतेत्यर्थः सर्वदा ब्रह्मचर्याग्निहोत्रादिकर्माणि येन मार्गेण भवन्ति तमेवास्मान्नयत। किन्तु दूरं यएतद्व्यतिरिक्तोविप्रकृष्टमार्गोस्ति तस्मादधि अधिकमित्यर्थः अस्मानपनयत ॥ ३ ॥

३. तुम लोग हमें राक्षसों से बचाओ और धनादि देकर हमारी रक्षा करो। हमसे तुम लोग भली भाँति बोलो। देवो, पिता मनु से आये हुए मार्ग से हमें भ्रष्ट नहीं करना; दूरस्थित मार्ग से भी भ्रष्ट नहीं करना।

अथ चतुर्थी—

येदेवासइहस्थनविश्वेवैश्वानराउत।
अस्मभ्यंशर्मसप्रथोगवेश्वायायच्छत ॥ ४ ॥ ३७ ॥

ये। देवासः। इह। स्थन। विश्वे। वैश्वानराः। उत। अस्मभ्यम्। शर्म। सऽप्रथः। गवे। अश्वाय। यच्छत ॥ ४ ॥ ३७ ॥

हे देवासोदेवाः उतापिच वैश्वानराः विश्वे सर्वे नरः कर्मनेतारोध्वर्य्वादयोयस्य सविश्वानरो यज्ञः तस्मिन्सोमादिहवींषि स्वीकर्तुंभवाः प्रादुर्भूताः भवार्थे अण्प्रत्ययः यद्वा वैश्वानरोग्निः देवानां तन्मुखत्वात् तस्य संबंधिनोविश्वेसर्वेयेदेवायूयं इहास्मिन्नस्मदीये यज्ञे स्थन हवींष्यादातुं भवथ। ततः सप्रथः प्रथप्रख्याने सर्वतः प्रसिद्धं सर्वत्रपृथुतमंवा शर्म शृणाति हिन-

स्ति दुःखमिति शर्म सुखं तदस्मभ्यं प्रयच्छतं तथा गवे अस्मदीयेभ्यो यज्ञसाधनभूतेभ्यो गो-भ्यः अश्वाय शर्म सुखं प्रदत्त ॥ ४ ॥

४. देवो और यज्ञोत्पन्न अग्नि, तुम सब लोग हो। तुम सब यहाँ ठहरो। अनन्तर सर्वत्र प्रख्यात सुख, गौ और अश्व हमें दान करो।

॥ इति षष्ठस्य द्वितीये सप्तत्रिंशोवर्गः ॥ ३७ ॥

॥ इति अष्टमे मण्डले चतुर्थोनुवाकः ॥ ४ ॥

पञ्चमेनुवाके द्वादशसूक्तानि तत्र योयजातीत्यष्टादशर्चं प्रथमं सूक्तं वैवस्वतमनुर्ऋषिः नवमीचतुर्दश्यावनुष्टुभौ पञ्चदश्याद्याश्चतस्रः पंक्तयः दशमीपादनिचृत् त्रयः सप्तकाः पादनिचृदिति तल्लक्षणात् शिष्टाएकादशप्राग्वत्सप्तपरिभाषया गायत्र्यः आद्यासु चतसृषु यज्ञः ततोयजमानप्रशंसाच स्तूयते अतस्तद्देवताकाः यादंपती इत्याद्यासु पञ्चम्यादिषु दंपतीप्रशस्येते अतस्तद्देवताकाः अवशिष्टासु नवसु दंपत्योराशिषः प्रतिपाद्यन्ते अतस्ताएवदेवताः। तथाचानुक्रम्यते—योयजातिद्यूनात्रेज्यास्तवोयजमानप्रशंसाच येत्यादिपञ्चदम्पत्योः शिष्टास्तदाशिषोनुष्टुप् चतुष्पङ्क्त्यन्तं नवम्यनुष्टुप् दशमीपादनिचृदिति।

तत्र प्रथमा—

योयजा॑तियजा॑तइत्सुनवं॑च्चपचा॑तिच।
ब्रह्मेदिन्द्र॑स्यचाकनत् ॥ १ ॥

यः। यजा॑ति। यजा॑ते। इत्। सुनव॑त्। च। पचा॑ति।
च। ब्रह्म॑। इत्। इन्द्र॑स्य। चाकनत् ॥ १ ॥

योयजमानः सकृद्यजाति यागंकरोति हविर्भिर्देवान्पूजयति सदेवेभ्योलब्धधनादिकःसन् यजातइत् पुनरभीष्टप्राप्तये देवेभ्योहवींषिप्रयच्छत्येव। तथा सएव यजमानः सुनवच्च सोमाभिषवंकरोतिच सएव पचातिच पशुपुरोडाशादिकं पचतिच सर्वत्र यजादिषु लेट्यडागमःसयजमानः इन्द्रस्य ब्रह्म ब्रह्माणि इदवधारणे इन्द्रसम्बन्धीनिस्तोत्राण्येव चाकनत् पुनःपुनः कामयते कनतेःकान्त्यर्थाद्यङ्लुकि अभ्यासत्वं छान्दसम् ततोलेट्यडागमः। अत्रयागे यजमानोधनादिलभतइति यज्ञप्रशंसा सएवदृष्टफलः सन् सोमाभिषवादीन्करोतीति यजमानप्रशंसा ॥ १ ॥

१. जो यजमान यज्ञ करता है, जो पुनः यज्ञ करता है, वह सोम का अभिषव और पुरोडाशादि का पाक करता है और इन्द्र के स्तोत्र की बार-बार कामना करता है।

अथ द्वितीया—

पुरोळाशं॒यो॒अस्मै॒सोमं॒ररं॑तआ॒शिर॑म्।
पादित्तंश॒क्रोअंह॑सः ॥ २ ॥

पुरोळाशम् । यः । अस्मै । सोमम् । ररते । आऽशिरम् ।
पात् । इत् । तम् । शक्रः । अंहसः ॥ २ ॥

योयजमानः अस्मै इन्द्राय पशुपुरोळाशं तथा आशिरं तृतीयसवने गोक्षीरेणामिश्रितं सोममस्मै ररते प्रयच्छति रातेर्लेटि शपः श्लुः अडागमः । शक्रः-समर्थः सइन्द्रः तं यष्टारं अंहसः पापात् तद्रूपाद्रक्षसोवा पात् इदवधारणे अपादेव रक्षत्येव पातेर्लुङिरूपम् ॥ २ ॥

२. जो यजमान इन्द्र को पुरोडाश और दूध-मिला सोम प्रदान करता है, निश्चय ही पाप से उसे इन्द्र बचाते हैं।

अथ तृतीया—

तस्यद्युमाँअसद्रथोदेवजूतःसशूशुवत् । विश्वावन्वन्नमित्रिया ॥ ३ ॥

तस्य । द्युऽमान् । असत् । रथः । देवऽजूतः ।
सः । शूशुवत् । विश्वा । वन्वन् । अमित्रिया ॥ ३ ॥

तस्य देवान्पूजयतोयजमानस्य देवजूतः देवैरिन्द्रादिभिः प्रेरितोद्युमान् दीप्तिमान् रथः स्यन्दनः देवानां हविःप्रदानरूपेण यज्ञेन असत् भवत्यागच्छति । ततस्तेन रथेनामित्रिया अमित्रियान् शत्रुभिःकृतान्विश्वा सर्वान्बाधान् वन्वन् वनोतिर्हिंसाकर्मेतियास्कः हिंसन् सएवशूशुवत् पुत्रादिभिर्धनैश्चवर्धते अत्र येन मे रथः बाधाभावश्चाभूदिति यागप्रशंसा । येन सम्यगिष्टदेवाः रथं दत्तवन्तइति यजमानप्रशंसा ॥ ३ ॥

३. देव-प्रेरित और प्रकाशमान रथ उसी यजमान का हो जाता है और वह उसके द्वारा शत्रु की बाधाओं को नष्ट करके समृद्ध होता है।

अस्यप्रजावतीगृहेसश्चन्तीदिवेदिवे । इळाधेनुमतीदुहे ॥ ४ ॥

अस्य । प्रजाऽवती । गृहे । असश्चन्ती । दिवेऽदिवे ।
इळा । धेनुऽमती । दुहे ॥ ४ ॥

प्रजावती पुत्रादियुक्तं असश्चन्ती सश्चतिर्गतिकर्मा अगमनशीलं तादृशं धेनुमती धेनुः पयसा सर्वान् धिनोति प्रीणयतीतिधेनुर्गौः तत्सहितं इळान्नं अस्य यष्टुर्गृहे दिवेदिवे अहरहः दुहे देवैर्दुत्यते । यद्वा इळेति गवां देवता सा स्थिरा धेनुमती गवांपतित्वाद्धेनुभिर्धेनुमती इळा गोदेवता देवैः प्रेरितासती अस्य यजमानस्य गृहे दोग्धा पुत्रादिकमस्मै ददातीत्यर्थः दुहेर्लटिलोपस्तआत्मनेपदेष्विति तलोपः अत्रेज्यास्तवः ॥ ४ ॥

४. पुत्रादि-युक्त, विनाश-शून्य और धेनु-सहित अन्न प्रतिदिन इस यजमान के गृह में प्राप्त किया जा सकता है।

अथ पंचमी–

यादम्पंतीसमंनसासुनुतआचधावंतः ।
देवांसोनित्यंयाशिरां ॥ ५ ॥ ३८ ॥

या । दम्पंती इति दम्ऽपंती । सऽमंनसा । सुनुतः । आ ।
च । धावंतः । देवांसः । नित्यंया । आऽशिरां ॥ ५ ॥ ३८ ॥

अत्र यजने दंपत्योः स्तुतिः हे देवासोदेवाः समनसा समनसौ कर्मणि समानमनस्कौ या यौ दम्पती यज्ञकारिणौ जायापती सुनुतः सोमाभिषवं कुरुतः यौ दम्पती ततस्तमभिषुतं सोमं आधावतश्च दशापवित्रेण शोधयतः धावुगतिशुद्ध्योः तथा नित्यया यत्रतृतीयसवने सोमोस्ति तत्र आश्रयणद्रव्यं गोक्षीरमस्त्येव तस्मान्नित्यसंबंधेन आशिरा आश्रयणेन गोक्षीरेण संयुतं सोमं यौ प्रयच्छतः तावन्नादीन् प्राप्नुतइति उत्तरत्रसम्बन्धः ॥ ५ ॥

५. देवो, जो दम्पती एक मन से अभिषव करते हैं, दशापवित्र-द्वारा सोम का शोधन करते हैं और मिश्रण द्रव्य (क्षीरादि) के द्वारा सोम को मिलाते हैं—॥ इति षष्ठस्य द्वितीयेष्टत्रिंशोवर्गः ॥ ३८ ॥

अथ षष्ठी–

प्रतिंप्राशव्यांँइतःसम्यञ्चांबर्हिरांशाते । नतावाजेषुवायतः ॥ ६ ॥

प्रतिं । प्राशव्यांन् । इतः । सम्यञ्चां । बर्हिः ।
आशाते इतिं । न । ता । वाजेषु । वायतः ॥ ६ ॥

ता तौ देवेभ्यो हविषां दातारौ दंपती प्राशव्यान् अशभोजने प्रपूर्वस्यास्य औणादिकोभावे उण्प्रत्ययः प्राशुर्भक्षणं तस्मै साधून् हितान्वा अन्नादीन्प्रतीतः प्रतिगच्छतः यद्वा प्राशितव्यान् अन्नवर्णलोपः तावेव सम्यंचा सम्यंचौ समीचीनौ संगतौ बर्हिर्यज्ञं आशाते आनशाते । तत्र द्रव्यैर्व्याप्नुतः तस्मात्तौ यष्टारौ भार्यापती वाजेषु देवैर्दत्तेषु अन्नेषु न वायतः वयतिर्गत्यर्थः न गच्छतः सर्वदा अन्नसहितौ तिष्ठतामित्यर्थः ॥ ६ ॥

६. वे भोजन के योग्य अन्न आदि प्राप्त करते हैं और मिलकर यज्ञ में आते हैं। वे अन्न के लिए कहीं नहीं जाते।

अथ सप्तमी–

नदेवानामपिंह्नुतःसुमतिंनजुगुक्षतः । श्रवोबृहद्विवासतः ॥ ७ ॥

न । देवानाम् । अपि । ह्नुतः । सुऽमतिम् । न ।
जुघुक्षतः । श्रवः । बृहत् । विवासतः ॥ ७ ॥

एतौ दम्पती देवानां इन्द्रादीनां न अपिह्नुतः अपलापं न कुरुतः अपह्नवोपलापः देवेभ्योहविः प्रदास्यामइति प्रतिज्ञाय पुनरदानमपलापनं ह्नुङ् अपनये । कथं नापलपन्तीत्य-वसीयते तदाह सुमतिं युष्मदीयां शोभनां मतिं न जुगुक्षतः जुघुक्षतः न संवरीतु-मिच्छतः संवारणमाच्छादनं न छादयतइत्यर्थः किन्तु स्तुतिं कुरुतः । गुहूसंवरणे सनि-ग्रहगुहोश्चेतीट्प्रतिषेधः ढत्वषत्वभावौ संहिताकालेभष्भावोनास्ति छान्दसत्वात् । किञ्च बृहत् देवेभ्योदीयमानत्वात् महत् श्रवः श्रवइत्यन्ननाम महदन्नं विवासतः युष्मभ्यं प्रयच्छ-तः विवासतिः परिचरणकर्मा दानमपिच परिचरणमेव । देवैर्दत्तमन्नं घृतादिभिर्मिश्रीकृत्य पुनः पुनर्यजतइत्यर्थः ॥ ७ ॥

७. वे दम्पती इन्द्रादि देवों का अपलाप नहीं करते—तुम्हारी शोभन बुद्धि को नहीं ढकते। महान् अन्न के द्वारा तुम्हारी परिचर्या करते हैं।

अथाष्टमी—

पुत्रिणाताकुमारिणाविश्वमायुर्व्यश्नुतः । उभाहिरण्यपेशसा ॥ ८ ॥

पुत्रिणा । ता । कुमारिणा । विश्वम् । आयुः । वि ।
अश्नुतः । उभा । हिरण्यऽपेशसा ॥ ८ ॥

पुत्रिणा पुत्रवन्तौ तत्रापि कुमारिणा षोडशवर्षदेशीयपुत्रवन्तौ हिरण्यपेशसा हिर-ण्मयैराभरणैरलंकृतरूपौ उभा उभौ ता तौ दंपती विश्वं सर्वमायुरायुष्यं व्यश्नुतः व्या-प्नुतः यज्ञेन तयोः पुत्रादिकं धनमायुश्च संभवतीत्यर्थः ॥ ८ ॥

८. वे पुत्रवाले हैं—कुमार (षोडशवर्षीय) पुत्रवाले हैं। वे स्वर्ण-विभूषित होकर पूर्ण आयु प्राप्त करते हैं।

अथ नवमी—

वीतिहोत्राकृतद्वसूदशस्यन्तामृतायकम् ।
समूधोरोमशंहतोदेवेषुकृणुतोदुवः ॥ ९ ॥

वीतिऽहोत्रा । कृतद्वसू इति कृतत्ऽवसू । दशस्यन्ता । अमृताय ।
कम् । सम् । ऊधः । रोमशम् । हतः । देवेषु । कृणुतः । दुवः ॥ ९ ॥

वीतिहोत्रा वीतिहोत्रौ वीतिः प्रियकरो होत्रा यज्ञोययोस्तौ अनेन यज्ञेन तयोः सुखादिकं संभवति तादृशौ। यद्वा वीतिः कान्त्यर्थः होत्रेतिवाङ्नाम अस्मद्विषयां स्तुतिं कुरुतमिति पृथक्पृथक् देवैः काम्यमानस्तुती अतएव कं सुखप्रदं हवीरूपमन्नं दशस्यन्ता देवेभ्यः प्रयच्छन्तौ कृतद्वसू तकारोपजनश्छान्दसः याचमानकृतधनौ पात्रेषूपयुक्तधनावित्यर्थः। एवंविधौ दंपती अमृताय अमरणाय सन्तानाभिवृद्धये रोमशं रोमवन्तं वृषणं ऊधः योनिंच संहतः संयोजयतइति मैथुनमनूद्यते ततः सपुत्रादिकौ तौ देवेषु दुवः स्तुत्यन्नदानरूपां परिचर्यां कृणुतः कुरुतः पञ्चभिर्दंपती अस्तूयेताम्॥ ९॥

९. प्रिय यज्ञवाले इन दम्पती की स्तुति देवों की कामना करती है। वे देवों को सुखप्रद अन्न प्रदान करते हैं। वे उपयुक्त धन हैं। वे अमरत्व या सन्तति के लाभ के लिए रोमश (पुरुषेन्द्रिय) और ऊध (स्त्री की जननेन्द्रिय) का संयोग करते हैं। वे देवों की सेवा करते हैं।

आशर्मपर्वतानांवृणीमहेनदीनाम्। आविष्णोःसचाभुवः॥१०॥३९॥

आ। शर्म। पर्वतानाम्। वृणीमहे। नदीनाम्। आ। विष्णोः। सचाऽभुवः॥ १०॥ ३९॥

एतदादिषु दंपत्योराशिषः यष्टारोवयं पर्वतानां स्वर्गफलपुष्पसहितलतादिभिर्यत् शर्म सुखं तत्तेषां स्थैर्यलक्षणं सुखंवा नदीनाञ्च उभयकूलवासिभिर्मुनिभिर्मनुष्यैर्वा जपाद्यनुष्ठानेकृते यत्सुखं तासां भवति तत्सुखं एकत्रस्थित्वा सकलपदार्थभोक्तृत्वलक्षणं अनुष्ठानलक्षणं सुखमावृणीमहे। संभजामहे सचाभुवः देवैः सहभवतः देवसहितस्य विष्णोरपि शत्रुहननलक्षणं यत्सुखं तदपि वयमावृणीमहे बाधाभावाद्धविःप्रदानेन देवैः सहवर्तामइत्यर्थः॥ १०॥

१०. हम पर्वत के सुख (स्थिरता आदि) और नदी के सुख (जप आदि) की प्रार्थना करते हैं। देवों के साथ विष्णु के सुख की भी हम प्रार्थना करते हैं। ॥ इति षष्ठस्य द्वितीये एकोनचत्वारिंशोवर्गः॥ ३९॥

ऐतुपूषारयिर्भगःस्वस्तिसर्वधातमः। उरुरध्वास्वस्तये॥ ११॥

आ। एतु। पूषा। रयिः। भगः। स्वस्ति। सर्वऽधातमः। उरुः। अध्वा। स्वस्तये॥ ११॥

रयिर्धनानां दाता भगोभजनीयः सर्वैः सर्वधातमः सर्वेषां धारयितृतमः सर्वेषांधनादिभिः पोषयितृतमः पूषा एतन्नामकोदेवः स्वस्ति क्षेमेण ऐतु अस्मान्प्रतिगच्छतु ततः मार्गरक्षके पूषण्यागतेसति उरुः विस्तीर्णः अध्वा मार्गः स्वस्तये अस्माकमविनाशाय भवतु॥ ११॥

११. धनों के दाता, भजनीय और सबके पोषक पूषा रक्षा के साथ आवें। उनके आने पर विस्तृत मार्ग हमारे लिए मङ्गलकर हो।

अथ द्वादशी—

अरमतिरनर्वणोविश्वोदेवस्यमनसा। आदित्यानामनेहइत्॥१२॥

अरमतिः। अनर्वणः। विश्वः। देवस्य। मनसा। आदित्यानाम्। अनेहः। इत्॥ १२॥

देवानांमध्ये पूषणमाह अनर्वणः अर्वागन्तव्यः शत्रुभिरगन्तव्यस्य अमत्यृतस्य देवस्य द्योतमानस्य पूष्णः विश्वः सर्वः स्तोतृजनः मनसा श्रद्धया भक्त्यैव अरमतिः अलंमतिः पर्याप्तस्तुतिर्भवति। तथाहि आदित्यानामदितेः पुत्राणां देवानां दानमनेहइव अपापमेवखलु। तस्मादन्नादिप्राप्तये स्तोतृजनः पूषणं स्तौतीत्यर्थः॥ १२॥

१२. शत्रुओं के द्वारा न दबने योग्य और प्रकाशक पूषा के सारे स्तोता श्रद्धा से पर्याप्त स्तुति से युक्त होते हैं। आदित्यों का दान पाप-शून्य होता है।

अथ त्रयोदशी—

यथानोमित्रोअर्यमावरुणःसन्तिगोपाः। सुगाऋतस्यपन्थाः॥१३॥

यथा। नः। मित्रः। अर्यमा। वरुणः। सन्ति। गोपाः। सुऽगाः। ऋतस्य। पन्थाः॥ १३॥

मित्रः अर्यमा वरुणः एतेत्रयोदेवाः नोस्माकं गोपाः गोपायितारोयथासन्ति भवन्ति यैर्मार्गैर्वयमेतैः पालयितव्याभवाम ते ऋतस्य सत्यभूतस्य पन्थाः पन्थानः सुगाः एषां सुगमनाभवन्तु तैरागत्यास्मान् यज्ञमार्गेस्थापयन्त्वित्यर्थः॥ १३॥

१३. मित्र, वरुण और अर्यमा जैसे हमारे रक्षक हैं, वैसे ही सारे यज्ञ-मार्ग भी सुगम हों।

अथ चतुर्दशी—

अग्निंवःपूर्व्यंगिरादेवमीळेवसूनाम्।
सपर्यन्तःपुरुप्रियंमित्रंनक्षेत्रसाधसम्॥ १४॥

अग्निम्। वः। पूर्व्यम्। गिरा। देवम्। ईळे। वसूनाम्। सपर्यन्तः। पुरुऽप्रियम्। मित्रम्। न। क्षेत्रऽसाधसम्॥ १४॥

हे देवाः वोयुष्माकं पूर्व्यं मुख्यं पुरतोगंतारंवा देवं स्वभासा दीप्यमानमग्निं वसूनां प्राप्तये गिरा स्तुतिलक्षणयावाचा ईळे अहं स्तौमि। किञ्च सपर्यन्तःयुष्मान्परिचरन्तोमनुष्याःपु-

रुम्रियं बहुविधमियं बहूनामभिमतदानेन प्रीणयितारंवा क्षेत्रसाधसं क्षियन्ति निवसन्ति कर्मकरणार्थमत्रेति क्षेत्रोयज्ञः तस्य साधकं। साधने दृष्टान्तः—मित्रंन यथा मित्रं सुहृत् अन्यस्य क्षेत्रं केदारादिकं साधयति तद्वत् यज्ञसाधकमग्निं वसुप्राप्तये स्तुवन्ति ॥ १४ ॥

१४. देवो, तुम लोगों के मुख्य और दीप्तिमान् अग्नि की, धन की प्राप्ति के लिए, स्तुति-वचन के द्वारा, स्तुति करता हूँ। तुम्हारे परिचर्या-कर्त्ता मनुष्य अनेक लोगों के प्रिय होते हैं। वे यज्ञसाधक मित्र के समान अग्नि की स्तुति करते हैं।

मक्षूदेववतोरथःशूरोवापृत्सुकासुचित्।
देवानांयइन्मनोयजमानइयक्षत्यभीदयज्वनोभुवत् ॥ १५ ॥

मक्षु। देवऽवतः। रथः। शूरः। वा। पृत्ऽसु। कासु। चित्।
देवानाम्। यः। इत्। मनः। यजमानः। इयक्षति। अभि।
इत्। अयज्वनः। भुवत् ॥ १५ ॥

देववतः देवायष्टव्यतया यस्यसन्ति सदेववान् तस्य रथोदेवैर्दत्तः मक्षु शीघ्रं दुर्गमपि प्रविशति सर्वत्राप्रतिहतगतिरित्यर्थः। तत्रदृष्टान्तः—वाशब्दोत्रोपमानवाची यथा शूरोयोद्धा कासुचित् पृत्सु पृतनासु तद्वत् योदेवानां इदवधारणे मनएवइयक्षति स्तुतिभिः पूजयितुमिच्छति यद्वा देवानां मनइयक्षति हविर्भिर्यष्टुमिच्छति सयजमानः अयज्वनःयागं अकुर्वतोजनान् अभिभुवत् स्वसामर्थ्येनाभिभवत्येव। इयक्षन्ति यक्षपूजायाम् यजदेवपूजादिषु उभयोरभ्यासस्यसम्प्रसारणं छान्दसं। पूर्वस्य स्कोः संयोगाद्योरिति ककारलोपः ॥ १५ ॥

१५. देववान् व्यक्ति का रथ उसी तरह शीघ्र दुर्ग में प्रवेश करता है, जिस तरह शूर किसी सेना के मध्य में घुसता है। जो यजमान देवों के मन की स्तुति-द्वारा पूजा करने की इच्छा करता है, वह यज्ञ-शून्य को हराता है। अथ षोडशी—

नयजमानरिष्यसिनसुन्वाननदेवयो।
देवानांयइन्मनोयजमानइयक्षत्यभीदयज्वनोभुवत् ॥१६॥

न। यजमान। रिष्यसि। न। सुन्वान। न। देवयो इति देवऽयो।
देवानाम्। यः। इत्। मनः। यजमानः। इयक्षति। अभि।
इत्। अयज्वनः। भुवत् ॥ १६ ॥

हे यजमान योभवान् देवानां न इयक्षति सत्वं नरिष्यसि विनष्टोनभवसि किन्तु पुत्र-पौत्रादिभिर्वर्धसे। हे सुन्वान सोमाभिषवंकुर्वन् यः सुन्वन् तेषां मनइयक्षति सत्वमपि नरिष्यसि। हे देवयोदेवान् कामयमान योदेवानियक्षति तादृशस्त्वमपि नरिष्यसि किन्तु धनादिभिर्वर्धसे देवानां मनोयोयजमानोयष्टुमिच्छति सयागमकुर्वतो जनानभिभवति ॥१६॥

१६. यजमान, तुम विनष्ट नहीं होगे। सोमाभिषवकारी, तुम विनष्ट नहीं होगे। देवाभिलाषी, तुम नहीं विनष्ट होगे। जो यजमान देवों के मन की ही पूजा करना चाहता है, वह यज्ञ-रहितों को हराता है।

नकिष्टंकर्मणानशन्नप्रयोषन्नयोषति।
देवानांयइन्मनोयजमानइयक्षत्यभीदयज्वनोभुवत्॥१७॥

नकिः। तम्। कर्मणा। नशत्। न। प्र। योषत्। न। योषति।
देवानाम्। यः। इत्। मनः। यजमानः। इयक्षति। अभि। इत्।
अयज्वनः। भुवत्॥ १७॥

यो यजमानो देवानां मनोयष्टुमिच्छति तं नकिर्नकश्चिदपि नशत् स्वकीयेन कर्मणा नव्याप्नोति नशतिर्व्याप्तिकर्मा। किञ्च सयष्टा न प्रयोषत् स्वस्मात्स्थानान्नविभक्तः पृथक्कृतोनभवति। किञ्च नयोषति पुत्रादिभिर्धनादिभिश्च नविभक्तोभवति। युमिश्रणामिश्रणयोरित्यस्य उभयत्रलेट्यडागमः। शिष्टं व्याख्यातम्॥ १७॥

१७. जो यजमान देवों के मन का यज्ञ करने की इच्छा करता है, उसे कर्म-द्वारा कोई व्याप्त नहीं कर सकता। वह कभी भी अपने स्थान से अलग नहीं होता। वह पुत्रादि से भी पृथक् नहीं होता। जो यजमान देवों के मन की, स्तुति के द्वारा, पूजा करने की इच्छा करता है, वह यज्ञ-शून्यों को अभिभूत करता है।

अथाष्टादशी—

असदत्रसुवीर्यमुतत्यदाश्वश्व्यम्।
देवानांयइन्मनोयजमानइयक्षत्यभीदयज्वनोभुवत्॥१८॥ ४०॥

असत्। अत्र। सुऽवीर्यम्। उत। त्यत्। आशुऽअश्व्यम्।
देवानाम्। यः। इत्। मनः। यजमानः। इयक्षति। अभि। इत्।
अयज्वनः। भुवत्॥ १८॥ ४०॥

योयजमानो देवानां मनोयष्टुमिच्छति अत्रास्मिन्यजमाने सुवीर्यं शोभनवीर्योपेतं पुत्रादिकमसत् भवत्येव उतापिच आश्वश्व्यं आशुगमनाश्वसंघयुक्तं त्यत् तद्धनादिकं तस्मिन्यजमाने भवति देवानां मनोयोजनः हविर्भिर्यष्टुमिच्छति यद्वा पूजयितुमिच्छति सजनः अयज्वनः सर्वान् अभिभवत्येव ॥ १८ ॥

१८. जो यजमान देवों के मन का यज्ञ करने की इच्छा करता है, उसे सुन्दर वीर्यवाला पुत्र उत्पन्न होता है, अश्वों से युक्त धन भी उसे होता है। जो यजमान देवों के मन की, स्तुति के द्वारा, पूजा करने की इच्छा करता है, वह यज्ञ-शून्यों को अभिभूत करता है।

॥ इति षष्ठस्य द्वितीये चत्वारिंशोवर्गः ॥ ४० ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके द्वितीयोध्यायः समाप्तः ॥२॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्दे विद्यातीर्थंमहेश्वरम् ॥ १ ॥

अथ षष्ठस्यतृतीयोध्यायआरभ्यते प्रकृतानीति त्रिंशदृचं द्वितीयं सूक्तम् तत्रेयमनुक्रमणिका—प्रकृतानित्रिंशन्मेधातिथिरिति । काण्वोमेधातिथिर्ऋषिः परंगायत्रं प्राग्वत्सप्रेरिति परिभाषया गायत्रीछन्दः अनादेशपरिभाषयेन्द्रोदेवता । महाव्रतेनिष्केवल्ये गायत्रतृचाशीतौ एतत्सूक्तम् तथैवपञ्चमारण्यके शौनकेनसूत्रितम्—प्रकृतान्यृजीषिण आद्यायेअग्निमिन्धतइति । अतिरात्रे प्रथमेपर्याये मैत्रावरुणशस्त्रे प्रकृतानीतितृचोनुरूपः । सूत्रितञ्च—प्रवइन्द्रायमादनं प्रकृतान्यृजीषिणइति । तस्मिन्नेवशस्त्रे प्रतिश्रुतायेत्याद्याः पञ्चदशर्चः । सूत्र्यतेहि—प्रतिश्रुतायवोधृषदिंति पञ्चदशेति । दशमेहनि प्रातःसवनेअच्छावाकवादे पत्नीयजमानस्थाने प्रतिश्रुतायेतितृचः । सूत्रितञ्च—प्रतिश्रुतायवोधृषदितितृचाविति । अहीनान्तर्गतस्यातिरात्रस्य प्रथमेपर्याये होतुः पन्यइदुपगायतेत्यनुरूपः ।

तत्र प्रथमा—

ओम् प्रकृतान्यृंजीषिणःकण्वाइन्द्रस्यगाथया ।
मदेसोमस्यवोचत ॥ १ ॥

प्र । कृतानि । ऋजीषिणः । कण्वाः । इन्द्रस्य । गाथया ।
मदे । सोमस्य । वोचत ॥ १ ॥

हे कण्वाः ऋजीषिणऋजीषवतः सोमस्य कृतानि कर्माणि इन्द्रस्य गाथया इन्द्रस्य वाचा मदे अस्य मदे संजातेसति प्रवोचत प्रब्रूत ॥ १ ॥

१. कण्वगण, इन्द्र की गाथा के द्वारा इन्द्र के मत्त होने पर तुम लोग "ऋजीष" सोम के कर्मों को कीर्त्तित करो ।

अथ द्वितीया—

यःसृबिन्दमनर्शनिंपिप्रुंदासमहीशुवम् । वधीदुग्रोरिणन्नपः ॥ २ ॥

यः । सृबिन्दम् । अनर्शनिम् । पिप्रुम् । दासम् ।
अहीशुवम् । वधीत् । उग्रः । रिणन् । अपः ॥ २ ॥

यइन्द्र उग्रःउद्गूर्णस्तेजस्वीवा सोऽपउदकानि रिणन् प्रेरयन् सृविन्दनामकं शत्रुं अनर्शनिमनर्शनामकं पिप्रुं पिप्रुनामकंच दासंच अहीशुवंच शत्रुं वधीत् अवधीज्जघान ॥ २ ॥

२. जल प्रेरित करते हुए उग्र इन्द्र ने सृविन्द, अनर्शनि, पिप्रु, दास और अहीशुव का वध किया था।

न्यर्बुदस्यविष्टपंवर्ष्माणंबृहतस्तिर । कृषेतदिंद्रपौंस्यम् ॥ ३ ॥

नि । अर्बुदस्य । विष्टपम् । वर्ष्माणम् । बृहतः ।
तिर । कृषे । तत् । इन्द्र । पौंस्यम् ॥ ३ ॥

हे इन्द्र बृहतोमहतोर्बुदस्य मेघस्य वर्ष्माणमुदकस्य वारकं विष्टपं स्थानं नितिर विध्य तत्प्रसिद्धं पौंस्यं व्रतं चकृषे कुरु ॥ ३ ॥

३. इन्द्र, मेघ के आवरक स्थान को छेदो। इस वीर-कर्म का सम्पादन करो।

अथ चतुर्थी—

प्रतिश्रुतायवोधृषत्तूर्णाशंनगिरेरधि । हुवेसुशिप्रमूतये ॥ ४ ॥

प्रति । श्रुताय । वः । धृषत् । तूर्णाशम् । न । गिरेः ।
अधि । हुवे । सुऽशिप्रम् । ऊतये ॥ ४ ॥

हे स्तोतारोवोयुष्माकं श्रुताय स्तुतीनां श्रवणाय रक्षणायच धृषच्छत्रून् धृषन्तं सुशिप्रं सुहनुमिन्द्रं प्रति हुवे ह्वयामि। तूर्णाशं न यथा घर्मेभितप्तः पुमान् तूर्णाशमुदकं । तथा चयास्कः-तूर्णाशमुदकंभवति तूर्णमश्नुतेति[1] । गिरेरधि मेघं प्रति ह्वयति । पर्वतः गिरिरिति मेघनामसुपाठात् तद्वदित्यर्थः। किमर्थं ऊतये रक्षणाय ॥ ४ ॥

४. स्तोताओ, जैसे मेघ से जल की प्रार्थना की जाती है, वैसे ही शत्रुओं के दमन-कर्त्ता और शोभन जबड़ेवाले इन्द्र से तुम्हारी स्तुति सुनने और तुम्हारी रक्षा की प्रार्थना करता हूँ।

अथ पञ्चमी—

सगोरश्वस्यविव्रजंमन्दानःसोम्येभ्यः । पुरंनशूरदर्षसि ॥ ५ ॥ १॥

सः । गोः । अश्वस्य । वि । व्रजम् । मन्दानः ।
सोम्येभ्यः । पुरम् । न । शूर । दर्षसि ॥ ५ ॥ १ ॥

---

1 नि० ५. १६. ।

हे शूरेन्द्र सः प्रसिद्धः त्वं मन्दानोमोदमानः गोरश्वस्यचव्रजं निवासस्थानं सोम्येभ्यः सोमार्हेभ्यः पुरंन शत्रूणां नगरमिव विदर्षसि विवृतद्वारं करोषि ॥ ५ ॥

५. शूर, तुम प्रसन्न होकर शत्रु नगरी के समान सोम के योग्य स्तोताओं के लिए गौ और अश्व के रहने के द्वार खोलते हो ।

॥ इति षष्ठस्य तृतीये प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी–

यदिंमेरारणःसुतउक्थेवादधंसेचनः । आरादुपस्वधागंहि ॥ ६ ॥

यदि । मे । ररणः । सुते । उक्थे । वा । दधंसे ।
चनः । आरात् । उप । स्वधा । आ । गहि ॥ ६ ॥

हे इन्द्र मे मम सुते अभिषुते सोमे उक्थे स्तोत्रेवा यदि रारणः रमसे चनोन्नं यदिच दधसे मह्यं प्रयच्छसि तर्हि आराद्दूराव स्वधान्नेनोपागहि उपागच्छ ॥ ६ ॥

६. इन्द्र, यदि मेरे अभिषुत सोम अथवा स्तोत्र में अनुरक्त हो और यदि मुझे अन्न देते हो तो दूर देश से, अन्न के साथ, पास आओ ।

वयंघातेअपिष्मसिस्तोतारइन्द्रगिर्वणः । त्वन्नोजिन्वसोमपाः॥७॥

वयम् । घ । ते । अपि । स्मसि । स्तोतारः । इन्द्र ।
गिर्वणः । त्वम् । नः । जिन्व । सोमऽपाः ॥ ७ ॥

हे गिर्वणोगीर्भिर्वननीयेन्द्र ते तवापि वयं घ वयंखलु स्तोतारः स्मसि भवामः । हे सोमपाः सोमस्यपातरिन्द्र त्वं नोस्मान् जिन्व प्रीणयसि ॥ ७ ॥

७. स्तुति-योग्य इन्द्र, हम तुम्हारे स्तोता हैं । हे सोमपायी, तुम हमें प्रसन्न करते हो ।

अथाष्टमी–

उतनःपितुमाभरसंरराणोअविक्षितम् । मघवन्भूरितेवसु ॥ ८ ॥

उत । नः । पितुम् । आ । भर । सम्ऽरराणः ।
अविऽक्षितम् । मघऽवन् । भूरि । ते । वसु ॥ ८ ॥

उत अपिच हे मघवन् संरराणः संरममाणस्त्वमविक्षितमविक्षीणं पितुमन्नं । पृक्षः पितुरिति अन्ननामसुपाठात् । नोस्मभ्यमाभराहर ते तव वसु धनं भूरि अधिकं हि ॥ ८ ॥

८. धनी इन्द्र, प्रसन्न होकर तुम हमें अक्षय्य अन्न दो । तुम्हारे पास प्रचुर धन है ।

अथ नवमी—

उतनोगोमतस्कृधिहिरण्यवतोअश्विनः । इळाभिःसंरभेमहि ॥ ९ ॥

उत । नः । गोऽमतः । कृधि । हिरण्यऽवतः ।
अश्विनः । इळाभिः । सम् । रभेमहि ॥ ९ ॥

उतापिच हे इन्द्र नोस्मान् गोमतोगोमिनः कृधि कुरु अश्विनोश्वयुक्तान्कृधि हिरण्यवतो-मेघवतश्च कृधि इळाभिरन्नैश्च संरभेमहि वयं संरब्धाभवेम ॥ ९ ॥

९. तुम हमें गौ, अश्व और हिरण्य से सम्पन्न करो। हम अन्न-युक्त हों।

अथ दशमी—

बृबदुक्थंहवामहेसृप्रकरस्नमूतये । साधुकृण्वन्तमवसे ॥ १० ॥ २ ॥

बृबत्ऽउक्थम् । हवामहे । सृप्रऽकरस्नम् ।
ऊतये । साधु । कृण्वन्तम् । अवसे ॥ १० ॥ २ ॥

ऊतये लोकस्य रक्षणाय सृप्रकरस्नं प्रसृतबाहुं । करस्नौ बाहू कर्मणां प्रस्नातारावितियास्कवचनात्[1] । अवसे लोकस्यपालनाय साधु कृण्वन्तं साधुकुर्वन्तं बृबदुक्थं बृहदुक्थं इन्द्रं हवामहे ह्वयामः । तथाचयास्कः—बृबदुक्थोमहदुक्थोवक्तव्यमस्माउक्थमिति[2] ॥ १० ॥

१०. संसार की रक्षा के लिए इन्द्र भुजाओं को पसारते और पालन के लिए साधु-कार्य करते हैं। वे महान् उक्थवाले हैं। हम इन्द्र को बुलाते हैं। ॥ इति षष्ठस्य तृतीये द्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

यःसंस्थेचिच्छतक्रतुरादींकृणोतिवृत्रहा । जरितृभ्यःपुरूवसुः ॥ ११ ॥

यः । सम्ऽस्थे । चित् । शतऽक्रतुः । आत् । ईम् ।
कृणोति । वृत्रऽहा । जरितृऽभ्यः । पुरुऽवसुः ॥ ११ ॥

यः प्रसिद्धइन्द्रः संस्थे संग्रामे शतक्रतुर्बहुकर्माभवति अपिच आदनन्तरमीमिदं शत्रु-वधादिकं कृणोति करोति चिदेव अयं इन्द्रोवृत्रहा शत्रूणां हन्ताभवति । किञ्च जरितृभ्यः स्तोतृणामर्थे पुरुवसुः बहुधनोभवति न स्वार्थमित्यर्थः ॥ ११ ॥

११. जो इन्द्र संग्राम में बहुकर्मा होते और अनन्तर शत्रु-वध करते हैं, जो इन्द्र वृत्र-हन्ता हैं और स्तोताओं के लिए बहुधनवान् होते हैं—

---

1 नि० ६. १७. । 2 नि० ६. ४. ।

अथ द्वादशी—

स नः॑ शक्रश्चिदा श॑कद्दान॑वाँ अन्तराभ॒रः । इन्द्रो॒ विश्वा॑भिरू॒तिभिः॑ ॥ १२ ॥

सः । नः॒ । श॒क्रः । चि॒त् । आ । श॒क॒त् । दान॑ऽवान् ।

अ॒न्त॒र॒ऽआ॒भ॒रः । इन्द्रः॑ । विश्वा॑भिः । ऊ॒तिऽभिः॑ ॥ १२ ॥

शक्रः शक्तः सइन्द्रः नश्चिदस्मानप्याशकच्छक्तान्करोतु अपिचेन्द्रोदानवान्विश्वाभिः सर्वैरूतिभिः पालनैरन्तराभरः अन्तराहरः छिद्राणामापूरकश्छिद्रापिधायीत्यर्थः ॥ १२ ॥

१२. वे ही शक्र (शक्त = इन्द्र) हमें शक्तिशाली करें। इन्द्र दानी हैं और वे सारी रक्षाओं के द्वारा हमारे छिद्रों को परिपूर्ण करते हैं।

अथ त्रयोदशी—

यो रा॒यो॒३॒॑वनि॑र्म॒हान्त्सु॑पा॒रः सु॑न्व॒तः सखा॑ । तमिन्द्र॑म॒भि गा॑यत ॥ १३ ॥

यः । रा॒यः । अ॒वनिः॑ । म॒हान् । सु॒ऽपा॒रः । सु॒न्व॒तः ।

सखा॑ । तम् । इन्द्र॑म् । अ॒भि । गा॒य॒त ॥ १३ ॥

यइन्द्रो रायो धनस्यावनिः पालकोमहान् सर्वोत्तमः सुपारः शोभनपारणश्च भवति यश्च सुन्वतः सोमाभिषवंकुर्वतो यजमानस्य सखा प्रियोभवति तमिन्द्रमभिगायताभिष्टुवत । हेस्तोतारइतिशेषः ॥ १३ ॥

१३. जो इन्द्र धन के रक्षक, सर्वोत्तम, शोभन पारवाले और सोमाभिषव-कारी के सखा हैं, उन्हीं इन्द्र के लिए स्तुति करो।

अथ चतुर्दशी—

आ॒य॒न्तारं॒ महि॑ स्थि॒रं पृत॑नासु श्रवो॒जित॑म् । भूरे॒रीशा॑न॒मोज॑सा ॥ १४ ॥

आ॒ऽय॒न्तार॑म् । महि॑ । स्थि॒रम् । पृत॑नासु ।

श्र॒वः॒ऽजित॑म् । भूरेः॑ । ईशा॑नम् । ओज॑सा ॥ १४ ॥

आयन्तारमागन्तारं महि महान्तं पृतनासु संग्रामेषु स्थिरमचलं श्रवोजितं श्रवसांजेतारं ओजसा बलेन भूरेर्बहोर्धनस्य ईशानमीश्वरमभिगायत ॥ १४ ॥

१४. इन्द्र आनेवाले, युद्ध-क्षेत्र में अविचल, अन्न के विजेता और बल-पूर्वक प्रचुर धन के ईश्वर हैं।

अथ पञ्चदशी—

नकि॑रस्य॒ शची॑नां निय॒न्ता सू॒नृता॑नाम् । नकि॑र्व॒क्ता न दा॒दिति॑ ॥ १५ ॥ २ ॥

नकिः । अस्य । शचीनाम् । निऽयन्ता । सूनृतानाम् ।
नकिः । वक्ता । न । दात् । इति ॥ १५ ॥ ३ ॥

अस्येन्द्रस्य सूनृतानां शोभनानां शचीनां कर्मणां धीः शचीति कर्मनामसुपाठात् नकिर्नकश्चिन्नियन्ता नियामकः अयमिन्द्रोनदादिति नप्रयच्छतीति नकिर्वक्ता नकश्चिद्वदति । किंतु सर्वोपि जनोयं प्रदातेत्येव ब्रवीतीत्यर्थः ॥ १५ ॥

१५. इन्द्र के शोभन कार्यों का कोई नियामक नहीं है। इन्द्र दाता नहीं है, यह कोई नहीं कहता ।

॥ इति षष्ठस्य तृतीये तृतीयोवर्गः ॥ ३ ॥

अथ षोडशी—

ननूनंब्रह्मणामृणंप्राशूनामस्तिसुन्वताम् । नसोमोअप्रतापपे॥ १६॥

न । नूनम् । । ब्रह्मणाम् । ऋणम् । प्राशूनाम् । अस्ति । सुन्वताम् ।
न । सोमः । अप्रता । पपे ॥ १६ ॥

प्राशूनां ये सोमं प्राश्नुवन्ति ते प्राशवस्तेषां सोमं सुन्वतां ब्रह्मणां ब्राह्मणानां ऋणं देवऋणं ननूनमस्ति नखलुविद्यते । तथाचश्रूयते—एषवाअनृणोयः पुत्री यज्वाब्रह्मचारीति[1] । किञ्च अप्रताऽविस्तीर्णधनेन सोमोनपपे न पीयते प्रभूतधनेनैव सोमः पीयतइत्यर्थः ॥ १६ ॥

१६. सोमाभिषवकारी और सोमपायी ब्राह्मणों (स्तोताओं) के पास ऋण (देव-ऋण) नहीं है। प्रचुर धनवाला ही सोमपान कर सकता है।

पन्यइदुपगायतपन्यंउक्थानिशंसत । ब्रह्माकृणोतपन्यइत् ॥ १७॥

पन्यें । इत् । उप । गायत । पन्यें । उक्थानि । शंसत ।
ब्रह्म । कृणोत । पन्यें । इत् ॥ १७ ॥

हे उपगातारः पन्येइत् स्तुत्यएवेन्द्रे उपगायत उपगानं कुरुत। किञ्च पन्ये स्तुत्यएवेन्द्रे उक्थानि स्तोत्राणि शंसत हे स्तोतारइतिशेषः । पन्यइत् स्तुत्यएवेन्द्रे ब्रह्मब्रह्माण्यन्नानि स्तोत्राणि कृणोत कुरुत ॥ १७ ॥

१७ स्तुत्य इन्द्र के लिए गान करो। स्तुत्य इन्द्र के लिए स्तोत्र उच्चारण करो। स्तुत्य इन्द्र के लिए स्तोत्रों को बनाओ।

---

1 तै० सं० ६. ३. १०.।

अथाष्टादशी—

पन्यआदर्दिरच्छतासहस्रांवाज्यवृतः। इन्द्रोयोयज्वनोवृधः॥१८॥

पन्यः। आ। दर्दिरत्। शता। सहस्रा। वाजी। अवृतः। इन्द्रः। यः। यज्वनः। वृधः॥ १८॥

योवाजी बलवान् शता वीराणां शतानि सहस्रा सहस्राणि चादर्दिरदाभिमुख्येन दारयति सोयमिन्द्रः शत्रुभिरवृतः पन्यः स्तुत्योभवति यज्वनो विधिनेष्टवतो यजमानस्य वृधोवर्धयिताच भवति॥ १८॥

१८. स्तुत्य और बली इन्द्र ने सैकड़ों और हजारों शत्रुओं को विदारित किया है। वे शत्रुओं के द्वारा अनाच्छादित हैं। वे यज्ञकारी के वर्द्धक हैं।

अथैकोनविंशी—

विषूचरस्वधाअनुकृष्टीनामन्वाहुवः। इंद्रपिबसुतानाम् ॥ १९॥

वि। सु। चर। स्वधाः। अनु। कृष्टीनाम्। अनु। आऽहुवः। इन्द्र। पिब। सुतानाम्॥ १९॥

हे इन्द्र आहुवः आह्वातव्यस्त्वं कृष्टीनां मनुष्याणां स्वधाः हवींष्यनु सु सुष्ठु विचर। द्वितीयोनुपूरणः। सुतानामभिषुतान् सोमांश्च पिब॥ १९॥

१९. आह्वान के योग्य इन्द्र, मनुष्यों के हव्य के निकट विचरण करो और अभिषुत सोम पियो।

अथ विंशी—

पिबस्वधैनवानामुतयस्तुग्र्येसचा। उतायमिंद्रयस्तव॥ २०॥४॥

पिब। स्वऽधैनवानाम्। उत। यः। तुग्र्ये। सचा। उत। अयम्। इन्द्र। यः। तव॥ २०॥ ४॥

हे इन्द्र स्वधैनवानां स्वधैनवान् स्वभूतपयसोधेनोः संबन्धिनः सोमान् धेन्वा क्रीतानित्यर्थः। तथाचश्रूयते—धेन्वाक्रीणातीति[1]। उतापिच यः सोमस्तुग्र्ये उदके बुसं तुग्र्येत्युदकनामसुपाठात्। सचा संसृष्टस्तमपि सोमं पिब। उतापिच यः सोमः तवत्वदीयस्त्वामुद्दिश्य गृहीतः सोयं त्वया पातव्यइतिशेषः॥ २०॥

२०. इन्द्र, गाय के बदले में खरीदे गये और जल से प्रस्तुत किये गये अपने इस सोम का पान करो।

॥ इति षष्ठस्य तृतीये चतुर्थोवर्गः॥ ४॥

---

१ तै० सं० ६. १. १०.।

अथैकविंशी—

अतीहिमन्युषाविणंसुषुवांसमुपारणे। इमंरातंसुतंपिब ॥ २१ ॥

अति। इहि। मन्युऽसाविनम्। सुसुऽवांसम्। उपऽअरणे।

इमम्। रातम्। सुतम्। पिब ॥ २१ ॥

हे इन्द्र मन्युषाविणं क्रोधेन सोमं सुन्वन्तमतीह्यतिगच्छ तथोपारणे ब्राह्मणा उपेत्य यस्मिन्देशे न रमन्ते सउपारणस्तस्मिन्देशे सुषुवांसं सुन्वन्तमतीहि इमं रातं ब्राह्मणोपद्रवरहितेदेशेस्माभिर्दत्तमिमं सुतं सोमं पिब ॥ २१ ॥

२१. इन्द्र, क्रोध के साथ अभिषव करनेवाले और अनुपयुक्त स्थान में अभिषव करनेवाले को लाँघकर चले आओ। हमारे द्वारा प्रदत्त इस अभिषुत सोम का पान करो।

अथद्वाविंशी—

इहितिस्रःपरावतइहिपंचजनाँअति। धेनाइंद्रावचाकशत् ॥ २२ ॥

इहि। तिस्रः। पराऽवतः। इहि। पञ्च। जनान्। अति। धेनाः।

इन्द्र। अवऽचाकशत् ॥ २२ ॥

हे इन्द्र धेनाः अस्मदीयाः स्तुतीः अवचाकशत् यःअपश्यत् सत्वं परावतोदूरात् आरे परावतइति दूरनामसुपाठात् तिस्रः अग्रपृष्ठपार्श्वदिशः इहि गच्छ अनेनाग्रतः पृष्ठतः पार्श्वतश्चेन्द्रस्यागमनमाशास्ते। अपिच जनान्मनुष्यान् अतीहि अतिगच्छ। यद्वा गन्धर्वाः पितरोदेवा असुरारक्षांसिच पञ्चजनास्तानतीहीत्यर्थः। तथाचयास्कः—गन्धर्वाः पितरोदेवा असुरा रक्षांसीत्येके चत्वारोवर्णा निषादःपञ्चमइत्यौपमन्यवइति[1] ॥ २२ ॥

२२. इन्द्र, हमारी स्तुति को तुमने देखा अथवा समझा है। तुम दूर देश से हमारे आगे, पीछे और पार्श्व में आओ। तुम गन्धर्वों, पितरों, देवों, असुरों और राक्षसों (पञ्चजनों) को लाँघकर पधारो।

सूर्योरश्मिंयथासृजात्वायच्छन्तुमेगिरः। निम्नमापोनसध्र्यक् ॥ २३ ॥

सूर्यः। रश्मिम्। यथा। सृज। आ। त्वा। यच्छन्तु।

मे। गिरः। निम्नम्। आपः। न। सध्र्यक् ॥ २३ ॥

हे इन्द्र सूर्योयथा रश्मिं रश्मीन्किरणानश्वप्रग्रहान्वा विसृजति तथा मत्यं धनं विसृज। अपिच मे मदीयागिरः स्तुतयः सध्र्यक् सह त्वा त्वामायच्छन्तु निम्नमापोन यथा निम्नंदेशमापः सह परिगृह्णन्ति तद्वदित्यर्थः ॥ २३ ॥

२३. सूर्य जैसे किरणों को देते हैं, वैसे ही धन दो। जैसे नीची भूमि में जल मिलता है, वैसे ही मेरी स्तुतियाँ तुम्हारे साथ मिलें।

---

1 नि० ३.८.।

अथ चतुर्विंशी—

अध्वर्यवा तु हि षिञ्च सोमं वीराय शिप्रिणे । भरा सुतस्य पीतये ॥२४॥

अध्वर्यो इति । आ । तु । हि । सिञ्च । सोमम् ।
वीराय । शिप्रिणे । भर । सुतस्य । पीतये ॥ २४ ॥

हे अध्वर्यो शिप्रिणे हनूमते वीराय शूरायेन्द्राय सोमं तु हि क्षिप्रमेवासिंच । सुतस्य सुतं सोमं पीतये पानायच भराहरच ॥ २४ ॥

२४. अध्वर्युओ, सुन्दर शिरस्त्राण अथवा जबड़ेवाले और वीर इन्द्र के लिए शीघ्र सोम का सेचन करो। सोमपान के लिए इन्द्र को बुलाओ।

य उद्नः फलिगं भिनन्न्यक्सिन्धूँरवासृजत् । यो गोषु पक्वं धारयत् ॥२५॥५॥

यः । उद्नः । फलिऽगम् । भिनत् । न्यक् । सिन्धून् ।
अवऽअसृजत् । यः । गोषु । पक्वम् । धारयत् ॥ २५ ॥ ५ ॥

यउद्नःउदकार्थं फलिगं मेघं रैवतः फलिगइति मेघनामसुपाठाव भिनत् अभिनत् सिन्धून्पश्चान्तरिक्षात्न्यगर्वागवासृजत् । यश्च गोषु पक्वं पयोधारयदधारयत् सइन्द्रइत्यर्थः ॥ २५ ॥

२५. जिन्होंने जल के लिए मेघ को भिन्न किया है, जिन्होंने अन्तरिक्ष से जल को नीचे भेजा है और जिन्होंने गौओं को पक्व दुग्ध प्रदान किया है, वही इन्द्र हैं।

॥ इति षष्ठस्य तृतीये पंचमोवर्गः ॥ ५ ॥

अथ षड्विंशी—

अहन्वृत्रमृचीषम और्णवाभमहीशुवम् । हिमेनाविध्यदर्बुदम् ॥२६॥

अहन् । वृत्रम् । ऋचीषमः । और्णऽवाभम् । अहीशुवम् ।
हिमेन । अविध्यत् । अर्बुदम् ॥ २६ ॥

ऋचीषमो ऋचा दीप्त्यासमइन्द्रो वृत्रं वृत्रनामकं शत्रुमहन् अहनत् जघान तथा और्णवाभमौर्णवाभनामकमहीशुवमहीशुवनामकंच शत्रुमहन् तथा हिमेन तुषारेणोदकेन वार्बुदं मेघमविध्यत् ॥ २६ ॥

२६. दीप्ति-समान इन्द्र ने वृत्र, और्णनाभ और अहीशुव का वध किया है। इन्द्र ने तुषार-जल से मेघ को फोड़ा है।

प्र व उग्राय निष्टुरेऽषाळ्हाय प्रसक्षिणे । देवत्तं ब्रह्म गायत ॥ २७ ॥

प्र । वः । उग्राय॑ । निःऽतुरे॑ । अषा॑ह्लाय । प्रऽस॒क्षिणे॑ ।
दे॒वत्त॑म् । ब्रह्म॑ । गा॒य॒त॒ ॥ २७ ॥

हे उद्गातारोवो यूयं उग्रायोद्गूर्णाय निष्ठुरे शत्रून्निस्तरते अषाह्लाय शत्रूणामभिभवित्रे प्रसक्षिणे प्रसहनशीलायेन्द्राय देवत्तं देवप्रसादलब्धं ब्रह्म स्तोत्रं प्रगायत ॥ २७ ॥

२७. उद्गाताओ, उग्र, निष्ठुर, अभिभवकर्त्ता और बल-पूर्वक हरण-कर्त्ता इन्द्र के लिए देवों की प्रसन्नता से प्राप्त स्तोत्र गाओ।

योविश्वा॑न्य॒भिव्र॒तासोम॑स्य॒मदे॒अन्ध॑सः । इन्द्रो॑दे॒वेषु॒चेत॑ति॥२८

यः । विश्वा॑नि । अ॒भि । व्र॒ता । सोम॑स्य । मदे॑ ।
अन्ध॑सः । इन्द्रः॑ । दे॒वेषु॑ । चेत॑ति ॥ २८ ॥

अन्धसोद्यमानस्य सोमस्य मदे संजाते विश्वानि सर्वाणि व्रता व्रतानि कर्माणि यइन्द्रो-देवेष्वभिचेतति ज्ञापयति तस्माइंद्राय देवत्तं ब्रह्मगायतेत्यर्थः ॥ २८ ॥

२८. सोम की मत्तता उत्पन्न होने पर इन्द्र देवों के पास सारे कर्मों को सूचित करते हैं।

अथैकोनत्रिंशी—

इ॒हत्यासध॒मा॒द्या॒हरी॒हिर॑ण्यकेश्या । वो॒ळ्हाम॒भिप्रयो॑हि॒तम् ॥२९॥

इ॒ह । त्या । स॒ध॒ऽमाद्या॑ । हरी॒ इति॑ । हिर॑ण्यऽकेश्या ।
वो॒ळ्हाम् । अ॒भि । प्रयः॑ । हि॒तम् ॥ २९ ॥

इहयज्ञे त्या तौ प्रसिद्धौ सधमाद्या सहमाद्यन्तौ हिरण्यकेश्या हिरण्यकेश्यौ हरी एतन्ना-मकौ अश्वौ हितं हितकरं प्रयः सोमरूपमन्नं अभि अभिलक्ष्य वोळ्हां इन्द्रं वहतां प्रापयतामिति ॥ २९ ॥

२९. वे एक साथ ही प्रमत्त और हिरण्य केशवाले दोनों हरि नाम के अश्व इस यज्ञ में सोम रूप अन्न के अभिमुख इन्द्र को ले आवें।

अथ त्रिंशी—

अ॒र्वाञ्चं॑त्वापुरुष्टुतप्रि॒यमे॑धस्तुता॒हरी॑। सो॒म॒पेया॑यवक्षतः॥३०॥६॥

अ॒र्वाञ्च॑म् । त्वा॒ । पु॒रु॒ऽस्तु॒त॒ । प्रि॒यमे॑धऽस्तुता ।
हरी॒ इति॑ । सो॒म॒ऽपेया॑य । व॒क्ष॒तः॒ ॥ ३० ॥ ६ ॥

हे पुरुष्टुत इन्द्र त्वा त्वां प्रियमेधस्तुता हरी अश्वौ सोमपेयाय सोमपानायावांञ्चमस्मद-भिमुखं वक्षतोवहतः ॥ ३० ॥

३०. अनेकों के द्वारा स्तुत इन्द्र, प्रियमेध-द्वारा स्तुत अश्विद्वय, सोम-पान के लिए, तुम्हें हमारे अभिमुख ले आवें।

॥ इति षष्ठस्य तृतीये षष्ठोवर्गः ॥ ६ ॥

वयंघत्वेत्येकोनविंशर्चं तृतीयंसूक्तं काण्वस्यमेधातिथेरार्षं बृहतीछंदस्कम् षोडश्याद्यास्ति-स्रोगायत्र्यः एकोनविंश्यनुष्टुप् इन्द्रोदेवता। तथाचानुक्रांतम्--वयंघैकोना मेध्यातिथिर्बार्हतं त्रि-गायत्र्यनुष्टुबन्तमिति। महाव्रते निष्केवल्ये बार्हततृचाशीतावादितः पञ्चदशर्चः। तथैवपञ्चमारण्यके शौनकेनसूत्र्यते--वयंघत्वासुतावन्तइतिपञ्चदश मोषुत्वावाघतश्चनेत्येतस्यद्विपदांचोद्धरतीति। चा-तुर्विंशिकेहनि माध्यन्दिनेसवने ब्राह्मणाच्छंसिशस्त्रे वयंघत्वेतितृचोवैकल्पिकःस्तोत्रियः। तथाच-सूत्रं--वयंघत्वासुतावन्तः कईंवेदसुतेसचेति। स्वरसाम्नि अयमेवतृचोनुरूपः। सूत्रितश्च--वयं-घत्वासुतावन्तइति तिस्रोबृहत्यइति। तस्मिन्नेवशस्त्रे कईंवेदेति वैकल्पिकोनुरूपः। सूत्रमुक्तमेव।

तत्र प्रथमा--

वयंघत्वासुतावन्तआपोनवृक्तबर्हिषः।
पवित्रस्यप्रस्रवणेषुवृत्रहन्परिस्तोतारआसते ॥ १ ॥

वयम्। घ। त्वा। सुतऽवन्तः। आपः। न। वृक्तऽबर्हिषः। पवित्रस्य। प्रऽस्रवणेषु। वृत्रऽहन्। परि। स्तोतारः। आसते ॥ १ ॥

हे वृत्रहन् त्वा त्वां वयंघ वयंखलु सुतवन्तः सोममभिषुतवन्तः आपोन आपइव प्रवण-मभिगच्छामः पवित्रस्य सोमानां प्रस्रवणेषु वृक्तबर्हिषस्तीर्णबर्हिषः स्तोतारश्च त्वां पर्यासते प-र्युपासते ॥ १ ॥

१. वृत्रघ्न इन्द्र, हम लोगों ने सोमाभिषव किया है। जल के समान हम तुम्हारे सामने जाते हैं। पवित्र सोम के प्रसृत होने पर कुश-विस्तार किये हुए स्तोता लोग तुम्हारी उपासना करते हैं।

अथ द्वितीया--

स्वरन्तित्वासुतेनरोवसोनिरेकउक्थिनः।
कदासुतंतृषाणओकआगमइंद्रस्वब्दीववंसगः ॥ २ ॥

स्वरन्ति। त्वा। सुते। नरः। वसो इति। निरेके। उक्थिनः।
कदा। सुतम्। तृषाणः। ओकः। आ। गमः।
इन्द्र। स्वब्दीऽइव। वंसगः ॥ २ ॥

हे वसो वासयितरिन्द्र त्वा त्वां सुतेभिषुते सोमे निरेके निर्गमने उक्थिनः नरोनेतारः स्वरन्ति शब्दायन्ते। अपि चेन्द्रः सुतं सोमं प्रति तृषाणः तृष्यन् स्वब्दीव स्वभूतशब्दइव वंसगो वननीयगमनोवृषभः शब्दं कुर्वन्कदा ओकः स्थानमागमः आगमत्॥ २॥

२. निवास-दाता इन्द्र, अभिषुत सोम के निर्गत होने पर उक्थवाले नेता लोग स्तोत्र करते हैं। सोम के पिपासु होकर, बैल के समान शब्द करते हुए, यज्ञ-स्थान में इन्द्र कब आवेंगे ?

कण्वेभिर्धृष्णवाधृषद्वाजंदर्षिसहस्रिणम्।
पिशङ्गरूपंमघवन्विचर्षणेमक्षूगोमंतमीमहे॥ ३॥

कण्वेभिः। धृष्णो इति। आ। धृषत्। वाजम्।
दर्षि। सहस्रिणम्। पिशङ्गऽरूपम्। मघऽवन्।
विऽचर्षणे। मक्षु। गोऽमन्तम्। ईमहे॥ ३॥

हे धृष्णो धर्षकेन्द्र कण्वेभिः कण्वानुद्दिश्य विभक्तिव्यत्ययः सहस्रिणं सहस्रसंख्याकं वाजमादर्षि देहि। हे मघवन् धनवन् विचर्षणे विद्रष्टरिन्द्र धृषत् धृष्टं पिशङ्गरूपं गोमन्तंच वाजं मक्षु शीघ्रमीमहे याचामहे त्वामितिशेषः॥ ३॥

३. शत्रुओं के दमनकारी इन्द्र, कण्वों के लिए सहस्र-संख्यक अन्न दो। धनी और विशेष द्रष्टा इन्द्र, हम धृष्ट, पिशंग (पीले) रूपवाले और गोमान् अन्न की याचना करते हैं।

पाहिगायान्धसोमदइन्द्रायमेध्यातिथे।
यःसंमिश्लोहर्योर्यःसुतेसचावज्रीरथोहिरण्ययः॥ ४॥

पाहि। गाय। अन्धसः। मदे। इन्द्राय। मेध्यऽअतिथे।
यः। सम्ऽमिश्लः। हर्योः। यः। सुते।
सचा। वज्री। रथः। हिरण्ययः॥ ४॥

हे मेध्यातिथे पाहि सोमं पिब अन्धसः पीतस्य सोमस्य मदे तस्माइन्द्राय गाय स्तोत्रंचपठ। यः इन्द्रोहर्योरश्वयोः संमिश्लः स्वरथेसंमिश्लयिता यश्च सुतेसोमे सचा सहायः यइन्द्रोवज्री यस्य रथोहिरण्ययोहिरण्मयः॥ ४॥

४. मेध्यातिथि, सोमपान करो। जो हरि नामक अश्वों को रथ में जोतते हैं, जो सोम में सहायक हैं, जो वज्रधर हैं और जिनका रथ सोने का है, सोम-जन्य मत्तता होने पर उन्हीं इन्द्र की स्तुति करो।

अथ पंचमी—

यःसुषव्यःसुदक्षिणइनोयःसुक्रतुर्गृणे ।
यआकरःसहस्रायःशतामघइन्द्रोयःपूर्भिदारितः ॥५॥७॥

यः । सुऽसव्यः । सुऽदक्षिणः । इनः । यः । सुऽक्रतुः । गृणे । यः ।
आऽकरः । सहस्रा । यः । शतऽमघः । इन्द्रः । यः ।
पूःऽभित् । आरितः ॥ ५ ॥ ७ ॥

यः सुषव्यः शोभनसव्यहस्तः यश्च सुदक्षिणः यश्चेनईश्वरः। नियुत्वान् इनइतीश्वरनामसुपाठात्। यश्चापि सुक्रतुः सुप्रज्ञः सहस्रा सहस्राणां बहूनां यश्चाकरः कर्ता यश्चापि शतमघः बहुधनः यश्च पूर्भित् पुरां भेत्ता यश्चारितः प्रत्यृतःस्तोमान् । तथाचयास्कः—यआरितः कर्मणिकर्मणिस्थिरः प्रत्यृतःस्तोमानिति[1] । अस्माभिः स्तूयतेच ॥ ५ ॥

५. जिनका बायाँ हाथ सुन्दर है, दाहिना हाथ सुन्दर है, जो ईश्वर, सुन्दर-प्रज्ञ और सहस्रों के कर्त्ता हैं, जो बहुधनशाली हैं, जो पुरी को तोड़ते हैं और जो यज्ञ में स्थिर हैं, उन्हीं इन्द्र की स्तुति करो।

॥ इति षष्ठस्य तृतीये सप्तमोवर्गः ॥ ७ ॥

अथ षष्ठी—

योधृषितोयोवृतोयोअस्तिश्मश्रुषुश्रितः ।
विभूतद्युम्नश्च्यवनःपुरुष्टुतःक्रत्वागौरिवशाकिनः ॥ ६ ॥

यः । धृषितः । यः । अवृतः । यः । अस्ति । श्मश्रुषु । श्रितः ।
विभूतऽद्युम्नः । च्यवनः । पुरुऽस्तुतः । क्रत्वा । गौःऽइव । शाकिनः ॥६ ॥

योधृषितः शत्रूणांधर्षयिता यश्चावृतः शत्रुभिरावृतः यश्चापि श्मश्रुषु युद्धेषु।श्रवःअयंत्यस्मिन्निति व्युत्पत्तेः श्मश्रु युद्धमितिवृद्धावदन्ति। श्रितोस्ति भवति यश्चापि विभूतद्युम्नः प्रभूतधनः यश्च च्यवनः सोमानां च्यावयिता यश्चापि पुरुष्टुतो बहुस्तुतः सइन्द्रः क्रत्वा कर्मणः शाकिनः शक्तस्य यजमानस्य गौरिव यथा गौः पयसोदोग्ध्री तथा कामानां दोग्धाभवति ॥६॥

६. जो शत्रुओं के धर्षक हैं, जो शत्रुओं के द्वारा अनाच्छादित हैं, युद्ध में जिनके आश्रित हुआ जाता है, जो प्रचुर धनवाले हैं, जो सोमपायी हैं और जो बहुतों के द्वारा स्तुत हैं वे इन्द्र स्वकर्म में समर्थ यजमान के लिए दुग्धदायिनी गौ के समान हैं। उन इन्द्र की स्तुति करो।

कईंवेदसुतेसचापिबन्तंकद्वयोदधे ।
अयंयःपुरोविभिनत्योजसामन्दानःशिप्र्यन्धसः ॥ ७ ॥

---

१ निं० ५. १५.

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे ।
अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः ।
शिप्री । अन्धसः ॥ ७ ॥

सुतेभिषुतेसोमे सचा ऋत्विजासह सोमं पिबन्तमीमेनमिन्द्रं कोवेद वेत्ति नकोपिवेत्ती-त्यर्थः कत् किंवा वयोन्नं दधे धारयति योयमिन्द्रः शिप्री हनूमानन्धसः सोमेन मन्दानोम-न्दमानः ओजसा बलेन पुरोविभिनत्ति ॥ ७ ॥

७. जो इन्द्र सुन्दर जबड़ेवाले हैं, जो सोम-द्वारा परितृप्त हैं और जो बल से पुरी का भेदन करते हैं, सोमाभिषव होने पर ऋत्विकों के साथ सोमपायी उन इन्द्र को कौन जानता है? कौन उनके लिए अन्न धारण करता है?

दानामृगोनवारणःपुरुत्राचरथंदधे ।
नकिष्ट्वानियमदासुतेगमोमहांश्चरस्योजसा ॥ ८ ॥

दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथम् । दधे ।
नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् ।
चरसि । ओजसा ॥ ८ ॥

मृगः शत्रूणामन्वेषको वारणोगजो दानामदजलानीव पुरुत्रा बहुषु यज्ञेषु चरथं चरण-शीलं मदं दधे इन्द्रोधारयति । अथप्रत्यक्षस्तुतिः हे इन्द्र त्वा त्वां नकिर्नियमत् नकश्चिन्निय-च्छति सुतेसोमे आगमः आगच्छ । महान् हि त्वमोजसा बलेन सर्वतश्चरसि ॥ ८ ॥

८. जैसे शत्रुओं की खोज करनेवाला हाथी मद-जल धारण करता है, वैसे ही इन्द्र यज्ञ में चरणशील मत्तता धारण करते हैं। इन्द्र, तुम्हें कोई नियमित नहीं कर सकता। सोमाभिषव की ओर पधारो। महान् तुम बल के द्वारा सर्वत्र विचरण करते हो।

यउग्रःसन्ननिष्टृतःस्थिरोरणायसंस्कृतः ।
यदिस्तोतुर्मघवाशृणवद्धवंनेन्द्रोयोषत्यागमत् ॥ ९ ॥

यः । उग्रः । सन् । अनिःऽस्तृतः । स्थिरः । रणाय ।
संस्कृतः । यदि । स्तोतुः । मघऽवा । शृणवत् । हवम् । न ।
इन्द्रः । योषति । आ । गमत् ॥ ९ ॥

यउग्रः उद्गूर्णः ओजस्वीवा सन्भवन् अनिष्टृतः शत्रुभिरनिस्तीर्णः स्थिरोचलोरणाय युद्धाय संस्कृतः शस्त्रैरलंकृतः सोमैर्वासंस्कृतः सइन्द्रोमघवा धनवान् यदिस्तोतुर्हवमाह्वानं शृणवच्छृणोति तर्ह्यन्यत्र नयोषति नगच्छति किंतु आगमत् तत्रैवागच्छति ॥ ९ ॥

९. इन्द्र के उग्र होने पर शत्रु लोग उन्हें आच्छादित नहीं कर सकते। वे अचल हैं। वे युद्ध के लिए शस्त्रों-द्वारा अलंकृत हैं। धनी इन्द्र यदि स्तोता का आह्वान सुनते हैं, तब अन्यत्र नहीं जाते, केवल वहीं आते हैं।

सत्यमित्थावृषेदसिवृषजूतिर्नोऽवृतः।
वृषाह्युग्रशृण्विषेपरावतिवृषोअर्वावतिश्रुतः ॥ १० ॥ ८॥

सत्यम्। इत्था। वृषा। इत्। असि। वृषऽजूतिः। नः।
अवृतः। वृषा। हि। उग्र। शृण्विषे। पराऽवति। वृषो इति।
अर्वाऽवति। श्रुतः ॥ १० ॥ ८ ॥

हे उग्र उद्गूर्णेन्द्र त्वं सत्यमित्था इत्थं वृषेत् कामानां वर्षकएवासि वृषजूतिः वृषभिश्चाकृष्टो नोस्माकमवृतः शत्रुभिरपरिवृतश्चासि वृषा हि सेचकएव शृण्विषे श्रूयसे। परावति दूरेपि वृषोवृषैव अर्वावति समीपेपि वृषा सेचकएव श्रुतोवृषैवाश्रूयथाः ॥ १० ॥

१०. उग्र इन्द्र तुम सचमुच ऐसे ही मनोरथ-वर्षक हो। तुम कामवर्षकों के द्वारा आकृष्ट हो और हमारे शत्रुओं के द्वारा अनाच्छादित हो। तुम अभीष्ट-वर्षक कहकर विख्यात हो। तुम दूर और समीप में अभीष्टवर्षी कहकर विख्यात हो।

॥ इति षष्ठस्य तृतीयेष्टमोवर्गः ॥ ८ ॥

वृषणस्तेअभीशवोवृषाकशाहिरण्ययी।
वृषारथोमघवन्वृषणाहरीवृषात्वंशतक्रतो ॥ ११ ॥

वृषणः। ते। अभीशवः। वृषा। कशा। हिरण्ययी।
वृषा। रथः। मघऽवन्। वृषणा। हरी इति। वृषा। त्वम्।
शतक्रतो इति शतऽक्रतो ॥ ११ ॥

हे मघवन् ते तव अभीशवोरश्मयोऽश्वरशनाः वृषणः वर्षितारः हिरण्ययी हिरणमयी कशापि वृषा रथोपि वृषा वर्षिता हरी अश्वावपि वृषणा वृषणौ वर्षितारौ हे शतक्रतो बहुप्रज्ञेन्द्र त्वंच वृषा वर्षिता ॥ ११ ॥

११. धनी इन्द्र, तुम्हारी घोड़े की रस्सियाँ (लगाम) अभीष्टवर्षक हैं; तुम्हारी, सोने की कशा (चाबुक) अभीष्टवर्षक है, तुम्हारे दोनों अश्व अभीष्टदाता हैं और हे शतक्रतु इन्द्र, तुम अभीष्ट-वर्षक हो।

वृषासोतासुनोतुतेवृषन्नृजीपिन्नाभर।
वृषादधन्वेवृषणंनदीष्वातुभ्यंस्थातर्हरीणाम् ॥ १२ ॥

वृषा । सोता । सुनोतु । ते । वृषन् । ऋजीषिन् । आ । भर ।
वृषा । दधन्वे । वृषणम् । नदीषु । आ । तुभ्यम् ।
स्थातः । हरीणाम् ॥ १२ ॥

हे वृषन् वर्षितरिन्द्र ते तव सोताभिषवकर्ता वृषा वर्षितासन् सुनोतु सोममभिषुणोतु । हे ऋजीषिन् ऋजुगमनेन्द्र आभर धनमस्मभ्यमाहर हरीणामश्वानां आ आभिमुख्येन हेस्थातरिन्द्र तुभ्यं नदीषूदकेषु वृषणं वर्षितारं सोमं वृषा वर्षिता दधन्वे धारितवानभिषवार्थम् ॥ १२ ॥

१२. काम-वर्षक इन्द्र, तुम्हारा सोमाभिषव करनेवाला अभीष्ट-वर्षक होकर सोम का अभिषव करे। सरल-गामी इन्द्र, धन दो। इन्द्र, अश्वों के अभिमुख स्थित और वर्षक तुम्हारे लिए जल में सोम का अभिषव करनेवाले ने सोम को धारण किया था।

एन्द्रयाहिपीतयेमधुशविष्ठसोम्यम् ।
नायमच्छामघवांश्रृणवद्गिरोब्रह्मोक्थाचसुक्रतुः ॥ १३ ॥

आ । इन्द्र । याहि । पीतये । मधु । शविष्ठ । सोम्यम् ।
न । अयम् । अच्छ । मघऽवा । शृणवत् । गिरः । ब्रह्म ।
उक्था । च । सुऽक्रतुः ॥ १३ ॥

हे शविष्ठ बलवत्तमेन्द्र सोम्यं सोमात्मकं मध्वमृतं पीतये पानायायाहि आगच्छ । किमर्थमागमनमित्यतआह यतआगमनमन्तरेण मघवा धनवान्सुक्रतुः सुकर्मा शोभनप्रज्ञोवायमिन्द्रोगिरः स्तुतीः ब्रह्म स्तोत्राण्युक्थानिच नाच्छ शृणवत् नाभिशृणोति अतआगमनमित्यर्थः ॥ १३ ॥

१३. श्रेष्ठ बली इन्द्र, सोम-रूप मधु के पान के लिए आओ। बिना आये धनी और सुकृती इन्द्र स्तुति, स्तोत्र और उक्थ नहीं सुनते।

अथ चतुर्दशी—

वहन्तुत्वारथेष्ठामाहरयोरथयुजः ।
तिरश्चिदर्यंसवनानिवृत्रहन्नन्येषांयाशतक्रतो ॥ १४ ॥

वहन्तु । त्वा । रथेऽस्थाम् । आ । हरयः । रथऽयुजः ।
तिरः । चित् । अर्यम् । सवनानि । वृत्रऽहन् । अन्येषाम् ।
या । शतक्रतो इति शतऽक्रतो ॥ १४ ॥

हे वृत्रहन् शतक्रतो बहुप्रज्ञ रथेष्ठां रथस्थमर्यमीश्वरं त्वा त्वां रथयुजो रथेयुक्ता हरयोश्वाः अन्येषां या यानि सवनानि सन्ति तानि तिरश्चिव तिरस्कुर्वन्तः सवनान्यस्मदीयानि सवनान्यावहन्तु प्रापयन्तु ॥ १४ ॥

१४. वृत्रघ्न और बहुप्रज्ञ इन्द्र, तुम रथस्थ और ईश्वर हो। रथ में जोते हुए अश्व दूसरों के यज्ञों का तिरस्कार करके तुम्हें हमारे यज्ञ में ले आवें।

अस्माकमद्यान्तमंस्तोमंधिष्वमहामह।

अस्माकंतेसवनासन्तुशंतमामदायद्युक्षसोमपाः ॥ १५ ॥ ९ ॥

अस्माकम्। अद्य। अन्तमम्। स्तोमम्। धिष्व। महाऽमह।

अस्माकम्। ते। सवना। सन्तु। शम्ऽतमा।

मदाय। द्युक्ष। सोमऽपाः ॥ १५ ॥ ९ ॥

हे महामह महतामपि महान् महापूज्यवा अद्यान्तममन्तिकतममस्माकं मेध्यातिथीनां स्तोमं धिष्व धारय। हे द्युक्ष दीप्त सोमपाः सोमस्य पातरिन्द्र ते तव मदाय मदार्थं सवना सवनान्यस्माकं शन्तमा शन्तमानि सुखतमानि सन्तु भवन्तु ॥१५॥

१५ महामह (महापूज्य) इन्द्र, आज हमारे समीप के सोम को धारण करो। दीप्त सोम के पीनेवाले इन्द्र, तुम्हारी मत्तता के लिए हमारे यज्ञ कल्याणवाही हों।

॥ इति षष्ठस्य तृतीये नवमोवर्गः ॥ ९ ॥

अथ षोडशी—

नहिषस्तवनोममंशास्त्रेअन्यस्यरण्यंति।

योअस्मान्वीरआनयत् ॥ १६ ॥

नहि। सः। तव। नो इति। मम। शास्त्रे। अन्यस्य।

रण्यति। यः। अस्मान्। वीरः। आ। अनयत् ॥ १६ ॥

योवीरः शूरोनोस्माननयत् सइन्द्रस्तव शास्त्रे शासने नहि रण्यति न रमते ममापि शास्त्रे नोरण्यति अन्यस्यापि शासने न रण्यति किंतु रक्षणएव रमतइत्यर्थः ॥ १६ ॥

१६. वीर इन्द्र हमारे नेता हैं। वे मेरे, तुम्हारे और दूसरे के शासन में प्रसन्न नहीं होते।

अथ सप्तदशी—

इन्द्रश्चिद्घातदब्रवीत्स्त्रियाअशास्यंमनः।

उतोअहक्रतुंरघुम् ॥ १७ ॥

इन्द्रः । चित् । घ । तत् । अब्रवीत् । स्त्रियाः । अशास्यम् ।
मनः । उतो इति । अह । क्रतुम् । रघुम् ॥ १७ ॥

योमेध्यामिथेर्धनमदाता प्लायोगिरासंगः सपुमान् भूत्वा स्त्र्यभवत् तदा यइन्द्रउवाच तदिदमाह। तथाचाहुः—प्लायोगिश्चासंगोयः स्त्रीभूत्वा पुमानभूत् समेध्यातिथये दानं दत्वेति । इन्द्रश्चिद् घ इन्द्रः खलु तदब्रवीद् स्त्रिया मनश्चित्तं अशास्यं पुरुषेणाशिष्यं शासितुमशक्यं प्रबलत्वादिति । उतो अपि स्त्रियाः क्रतुं प्रज्ञां रघुं लघुमह आह ॥ १७ ॥

१७. (मेध्यातिथि के धनदाता प्रायोगि जिस समय पुरुष से स्त्री हुए थे, उस समय) इन्द्र ने ही कहा था कि "स्त्री के मन का शासन करना असम्भव है। स्त्री की बुद्धि छोटी होती है।"

सप्तीचिद्घामदच्युतामिथुनावहतोरथम् ।
एवेद्धूर्वृष्णउत्तरा ॥ १८ ॥

सप्ती इति । चित् । घ । मदऽच्युता । मिथुना । वहतः ।
रथम् । एव । इत् । धूः । वृष्णः । उत्ऽतरा ॥ १८ ॥

सप्ती चिद्धेन्द्रस्याश्वावपि खलु मदच्युता सोमं प्रतिगन्तारौ इन्द्रस्यैव रथं मिथुनौ वहतः एवेद्देवमेव वृष्णइन्द्रस्य रथः धूरुत्तराश्वयोरुत्तराभवति ॥ १८ ॥

१८. सोम के अभिमुख जानेवाले दोनों अश्व इन्द्र के रथ को ले जाते हैं। इसी प्रकार अभीष्ट-वर्षक इन्द्र का रथ अश्वों की दृष्टि से श्रेष्ठ है। अथैकोनविंशी—

अधःपश्यस्वमोपरिसंतरांपादकौहर ।
मातेकशप्लकौदृशन्स्त्रीहिब्रह्माबभूविथ ॥ १९ ॥ १० ॥

अधः । पश्यस्व । मा । उपरि । सम्ऽतराम् । पादकौ । हर । मा ।
ते । कशऽप्लकौ । दृशन् । स्त्री । हि । ब्रह्मा । बभूविथ ॥ १९ ॥ १० ॥

एवमन्तरिक्षादागच्छन् रथस्थइन्द्रः स्त्रियं सन्तं स्वस्मात् पुंस्त्वमिच्छन्तं प्लायोगिं यद् उवाच तदाह—हे प्लायोगे त्वं स्त्री सती अधः पश्यस्व एषस्त्रीणांधर्मः उपरि मापश्यस्व उपरिदर्शनं स्त्रीणां धर्मोनभवति हि । पादकौ पादावपि सन्तरां संश्लिष्टौ यथा भवतस्तथा हर । यथा पुरुषोविश्लिष्टपादनिधानोभवति तथा त्वया स्त्रिया न कर्तव्यमित्यर्थः । अपिच ते कशप्लकौ कशश्चप्लकश्च

कशप्लकौ कशतिराहननकर्मा कशप्लकावुभेअंगे माद्दशन् पुरुषानपश्यन्तु तयोरदर्शनं वाससः सुष्ठु परिधानेन भवति । अतः सुष्ठु वाससा परिधानं कुरु । स्त्रियोह्यागुल्फादभिसंवीताभवन्तीत्यर्थः । हि यस्मात्कारणात् ब्रह्मासन् स्त्री बभूविथ ॥ १९ ॥

१९. (इन्द्र ने कहा) प्रायोगि, तुम नीचे देखा करो, ऊपर नहीं। (स्त्रियों का यही धर्म है।) पैरों को संकुचित रक्खो (मिलाये रक्खो)। (इस प्रकार कपड़े पहनो कि) तुम्हारे कश (ओष्ठ-प्रान्त) और प्लक (नारी-कटि का निम्न भाग) को कोई देखने नहीं पावे। यह सब इसलिए करो कि तुम स्तोता होकर भी स्त्री हुए हो।

॥ इति षष्ठस्य तृतीये दशमोवर्गः ॥ १० ॥

एन्द्रयाहीत्यष्टादशर्चं चतुर्थं सूक्तं काण्वस्य नीपातिथेरार्षं आनुष्टुभं षोडश्याद्यास्तिस्रोगायत्र्यः वसुरोचिषोंगिरोगोत्राः सहस्रसंख्याकाः आयदिन्द्रश्चेत्यादीनां तासां तिसृणामृषयः इन्द्रोदेवता। तथाचानुक्रमणम्—एन्द्रयाहिह्यूना नीपातिथिरानुष्टुभं तृचोन्त्योगायत्रस्तंसहस्रंवसुरोचिषोंगिरसोपश्यन्निति । विनियोगोलैंगिकः ।

एन्द्रंयाहिहरिभिरुपकण्वस्यसुष्टुतिम् ।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ १ ॥

आ । इन्द्र । याहि । हरिऽभिः । उप । कण्वस्य । सुऽस्तुतिम् ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१॥

हे इन्द्र कण्वस्य सुष्टुतिं शोभनांस्तुतिं हरिभिरश्वैरुपायाहि आगच्छ दिवोद्युलोकं द्वितीयार्थेषष्ठी अमुष्यामुष्मिन्निन्द्रे शासतः शासति विभक्तिव्यत्ययः तत्र वयं सुखमास्महे दिवावसो दीप्तहविष्केन्द्र दिवं स्वर्गं यय यूयं गच्छत बहुवचनं पूजार्थम्। यद्वा हे दिवावसो दिवोद्युनामकं अमुष्यामुं लोकं शासतः शासनंकुर्वन्तोयूयं दिवं स्वर्गं यय गच्छत अत्रबहुवचनं पूजार्थमित्यर्थः ॥ १ ॥

१. इन्द्र, अश्वों के साथ तुम कण्वों की सुन्दर स्तुति के अभिमुख आओ। इन्द्र द्युलोक का शासन करते हैं। दीप्त हविवाले इन्द्र, तुम द्युलोक में जाओ।

अथ द्वितीया—

आत्वाग्रावावदन्निहसोमीघोषेणयच्छतु ।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ २ ॥

आ । त्वा । ग्रावा । वदन् । इह । सोमी । घोषेण । यच्छतु । दिवः ।
अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ २ ॥

हे इन्द्र त्वां त्वामिहयज्ञे ग्रावा सोमाभिषवपाषाणः सोमी सोमवान् वदन् शब्दंकुर्वन् घोषेण ध्वनिनासह आयच्छतु। सिद्धमन्यत् ॥ २ ॥

२. इस यज्ञ में सोमवान् अभिषव-प्रस्तर शब्द करते हुए, ध्वनि के साथ, तुम्हें दान करें। इन्द्र, द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

अत्राविनेमिरेषामुरांनधूनुतेवृकः।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ ३ ॥

अत्र। वि। नेमिः। एषाम्। उराम्। न। धूनुते। वृकः। दिवः। अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो ॥ ३ ॥

अत्रास्मिन्यज्ञे एषामभिषवग्राव्णां नेमिः सोमलता विधूनुते विशेषेण कम्पयति उरांमेषीं वृकोन वृकइव। सिद्धमन्यत् ॥ ३ ॥

३. इस यज्ञ में अभिषव-पाषाण सोमलता को उसी प्रकार कँपाता है, जिस प्रकार तेंदुआ भेड़ को कँपाता है। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आत्वाकण्वाइहावसेहवन्तेवाजसातये।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ ४ ॥

आ। त्वा। कण्वाः। इह। अवसे। हवन्ते। वाजऽसातये। दिवः। अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो ॥ ४ ॥

हे इन्द्र त्वा त्वामिहयज्ञे कण्वाः अवसे रक्षणाय वाजसातये अन्नस्य प्राप्त्यर्थंच आहवन्ते आभिमुख्येन ह्वयन्ति सिद्धमन्यत् ॥ ४ ॥

४. रक्षण और अन्न-प्राप्ति के लिए कण्व लोग इन्द्र को इस यज्ञ में बुलाते हैं। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

दधामितेसुतानांवृष्णेनपूर्वपाय्यम्।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ ५ ॥ ११ ॥

दधामि। ते। सुतानाम्। वृष्णे। न। पूर्वऽपाय्यम्। दिवः। अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो ॥ ५ ॥ ११ ॥

हे इन्द्र ते तुभ्यं सुतानां द्वितीयार्थेषष्ठी सुतान् सोमान् दधामि प्रयच्छामि। वृष्णे न यथा वायवे पूर्वपाय्यं यज्ञमुखे पेयं प्रयच्छन्ति तद्वदहं प्रयच्छामीत्यर्थः। सिद्धमन्यत्॥ ५॥

५. कामवर्षक वायु को जैसे प्रथम सोमरस प्रदान किया जाता है, वैसे ही मैं तुम्हें अभिषुत सोम प्रदान करूँगा। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

॥ इति षष्ठस्य तृतीये एकादशोवर्गः॥ ११॥

अथ षष्ठी—

स्मत्पुरन्धिर्नआगहिविश्वतोधीर्नऊतये।
दिवोअमुष्यशासतोदिवंययदिवावसो॥ ६॥

स्मत्ऽपुरन्धिः। नः। आ। गहि। विश्वतःऽधीः। नः। ऊतये।
दिवः। अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो॥६॥

हे इन्द्र स्मत्पुरन्धिः स्वर्गकुटुंबी नः अस्मान् आगहि। तथा विश्वतः धीः सर्वतोजगतोधारकः त्वं नः अस्माकं ऊतये रक्षणाय आगहि आगच्छ॥ ६॥

६. स्वर्ग के कुटुम्बी इन्द्र, तुम हमारे पास आओ। सारे संसार के रक्षक इन्द्र, हमारे रक्षण के लिए आओ। इन्द्र, द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आनोयाहिमहेमतेसहस्रोतेशतामघ।
दिवोअमुष्यशासतोदिवंययदिवावसो॥ ७॥

आ। नः। याहि। महेऽमते। सहस्रऽऊते। शतऽमघ। दिवः।
अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो॥ ७॥

हे महेमते महाबुद्धे सहस्रोते सहस्ररक्षण शतामघ बहुधनेन्द्र त्वं नोस्मानायात्यागच्छ। सिद्धमन्यत्॥ ७॥

७. महामति, सहस्र रक्षावाले और प्रचुर धनी इन्द्र, हमारे पास आओ। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आत्वाहोतामनुर्हितोदेवत्रावक्षदीड्यः।
दिवोअमुष्यशासतोदिवंययदिवावसो॥ ८॥

आ। त्वा। होता। मनुःऽहितः। देवऽत्रा। वक्षत्। ईड्यः। दिवः।
अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो॥ ८॥

हे इन्द्र त्वा त्वां देवत्रा देवानांमध्ये ईड्यः स्तुत्योहोता देवानामाह्वाताग्निर्मनुर्हितोमनुष्यैर्गृहेषु निहितआवक्षद्व वहतु। सिद्धमन्यत्॥ ८॥

८. इन्द्र, देवों में स्तुत्य और मनुष्यों के द्वारा गृह में स्थापित होता अग्नि तुम्हें वहन करें। इन्द्र, द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आत्वामदच्युताहरीश्येनंपक्षेववक्षतः।
दिवोअमुष्यशासतोदिवंयय़दिवावसो॥ ९॥

आ। त्वा। मदऽच्युता। हरी इति। श्येनम्। पक्षाऽइव। वक्षतः।
दिवः। अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो॥ ९॥

हे इन्द्र त्वा त्वां मदच्युता मदच्युतौ शत्रूणां मदस्य च्यावयितारौ हरी अश्वौ श्येनं श्येनाख्यं पक्षिणं पक्षेव आत्मीयपक्षाविव आवक्षतः आवहताम्। सिद्धमन्यत्॥ ९॥

९. जैसे श्येन पक्षी (बाज) अपने दोनों पंखों को ढोता है, वैसे ही मदस्रावी अश्वद्वय तुम्हें वहन करें। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आयाह्यर्यआपरिस्वाहासोमस्यपीतये।
दिवोअमुष्यशासतोदिवंयय़दिवावसो॥ १०॥ १२॥

आ। याहि। अर्यः। आ। परि। स्वाहा। सोमस्य।
पीतये। दिवः। अमुष्य। शासतः। दिवम्।
यय। दिवावसो इति दिवाऽवसो॥ १०॥ १२॥

हे अर्येश्वर त्वं आ परि सर्वतः आयाह्यागच्छ पीतये तवपानार्थं सोमस्य सोमं स्वाहा स्वाहाकरोमि। सिद्धमन्यत्॥ १०॥

१०. स्वामी इन्द्र, तुम चारों तरफ़ से आओ। तुम्हें पीने के लिए मैं सोम का स्वाहा करता हूँ। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

॥ इति षष्ठस्य तृतीये द्वादशोवर्गः॥ १२॥

अथैकादशी—

आनोयाह्युपश्रुत्युक्थेषुरणयाइह।
दिवोअमुष्यशासतोदिवंयय़दिवावसो॥ ११॥

आ । नः । याहि । उपऽश्रुति । उक्थेषु । रणय । इह । दिवः ।
अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ ११ ॥

हे इन्द्र त्वं नोस्माकमिहयज्ञे उक्थेषु शस्त्रेषु पठ्यमानेषु उपश्रुति उपश्रुतौ समीपमायात्यागच्छ अस्मान् रणयच । सिद्धमन्यत् ॥ ११ ॥

११. उक्थों का पाठ होने पर तुम इस यज्ञ में हमारे समीप आओ और हमें प्रसन्न करो। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

सरूपैरासुनोगहिसंभृतैःसम्भृताश्वः ।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ १२ ॥

सऽरूपैः । आ । सु । नः । गहि । सम्ऽभृतैः । संभृतऽअश्वः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति
दिवाऽवसो ॥ १२ ॥

हे इन्द्र संभृताश्वः पुष्टाश्वस्त्वं सुसंभृतैः सरूपैः समानरूपैरश्वैः नोस्मानागह्यागच्छ । सिद्धमन्यत् ॥ १२ ॥

१२. पुष्ट अश्ववाले इन्द्र, पुष्ट और समान रूपवाले अश्वों के साथ आओ। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आयाहिपर्वतेभ्यःसमुद्रस्याधिविष्टपः ।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ १३ ॥

आ । याहि । पर्वतेभ्यः । समुद्रस्य । अधि । विष्टपः । दिवः ।
अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १३ ॥

हे इन्द्र त्वं पर्वतेभ्यः आयाह्यागच्छ समुद्रस्यान्तरिक्षस्य विष्टपोविष्टपाच्चाध्यायाहीत्यर्थः । सिद्धमन्यत् ॥ १३ ॥

१३. तुम पर्वत से आओ। तुम अन्तरिक्ष-प्रदेश से आओ। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

अथ चतुर्दशी—

आनोगव्यान्यश्व्यासहस्राशूरदर्दृहि ।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ १४ ॥

आ । नः । गव्यानि । अश्व्या । सहस्रा । शूर । दर्दृहि । दिवः ।
अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १४॥

हे शूरेन्द्र त्वं नोस्मभ्यं सहस्रा सहस्राणि सहस्रसंख्यानि गव्यानि गोहितानि गोरूपाणि वा अश्व्या अश्व्यान्यश्वहितानि अश्वात्मकानिवा दर्दृह्याविवृणु । सिद्धमन्यत् ॥ १४ ॥

१४. शूर इन्द्र, तुम हमें सहस्र गायें और अश्व दो। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

आनःसहस्रशोभरायुतानिशतानिच ।
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ १५ ॥

आ । नः । सहस्रऽशः । भर । अयुतानि । शतानि । च । दिवः ।
अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१५॥

हे इन्द्र नोस्मभ्यं सहस्रशः सहस्रधा अयुतानि शतानिच अभीष्टानि वस्तून्याभराहर । सिद्धमन्यत् ॥ १५ ॥

१५. इन्द्र, हमें सहस्र, दश सहस्र और सौ अभीष्ट दान करो। इन्द्र द्युलोक का शासन करते हैं। दीप्त हव्यवाले इन्द्र, तुम द्युलोक में जाओ।

अथ षोडशी—

आयदिन्द्रश्चदद्वहेसहस्रंवसुरोचिषः ।
ओजिष्ठमश्व्यंपशुम् ॥ १६ ॥

आ । यत् । इन्द्रः । च । दद्वहे इति । सहस्रम् । वसुऽरोचिषः ।
ओजिष्ठम् । अश्व्यम् । पशुम् ॥ १६ ॥

वसुरोचिषो वसुदीप्तयो वयं सहस्रं सहस्रसंख्याकानामस्माकं नेता इन्द्रश्च ओजिष्ठं बलवत्तरमश्व्यमश्वात्मकं पशुंच यद्यदा आदद्वहे पारावतादादद्महे उत्तरत्रसंबन्धः ॥ १६ ॥

१६. हम धन के द्वारा सुशोभित होते हैं। सहस्र संख्यक हम और नेता इन्द्र बलवान् अश्व-पशु ग्रहण करते हैं।

अथ सप्तदशी—

यदृज्रावातरंहसोरुषासोरघुष्यदः ।
भ्राजन्तेसूर्याइव ॥ १७ ॥

ये । ऋज्राः । वातंऽरंहसः । अरुषासः । रघुऽस्यदः । भ्राजन्ते । सूर्याःऽइव ॥ १७ ॥

तदा येऋज्रा ऋजुगामिनो वातरंहसो वायुसदृशवेगा अरुषासः आरोचमाना रघुष्यदो लघुस्यन्दमानाअश्वाः सूर्याइव-यथा सूर्यस्तथा भ्राजन्ते ॥ १७ ॥

१७. सरलगामी, वायु के समान वेगवाले, रुचिकर और अल्प-आर्द्र अश्व सूर्य के समान कान्ति पाते हैं।

अथाष्टादशी—

पारावतस्यरातिषुद्रवच्चक्रेष्वाशुषुं ।
तिष्ठंवनस्यमध्यआ ॥ १८ ॥ १३ ॥

पारावतस्य । रातिषु । द्रवत्ऽचंक्रेषु । आशुषुं । तिष्ठम् । वनस्य । मध्ये । आ ॥ १८ ॥ १३ ॥

तेष्वश्वेषु पारावतस्य रातिषु देयेषु द्रवच्चक्रेषु द्रवद्रथचक्रेष्वाशुष्वश्वेषु । ताक्ष्यंआशुरित्यश्वनामसुपाठात् । प्रतिगृहीतेषु सत्सु वनस्यमध्ये आतिष्ठमिति वसुरोचिषाम् सहस्रं वदन्ति ॥ १८ ॥

१८. जिस समय पारावत ने रथचक्रों को गतिशील बनानेवाले इन अश्वों को प्रदान किया था, उस समय मैं वन के मध्य में था।

॥ इति षष्ठस्य तृतीये त्रयोदशोवर्गः ॥ १३ ॥

अग्निनेन्द्रेणेति चतुर्विंशत्यृचं पञ्चमंसूक्तं श्यावाश्वस्यात्रेयस्यार्षम् । अत्रानुक्रमणिका—अग्निनाचतुर्विंशतिः श्यावाश्वआश्विनमुपरिष्टाज्ज्योतिषं पंक्तिमहाबृहतीं पंक्त्यन्तमिति । उपरिष्टाज्ज्योतिश्छन्दः । चतुर्थपादस्याष्टाक्षरत्वात् यतोष्टकस्ततोज्योतिरिति तल्लक्षणम् । द्वाविंशीपंक्तिः त्रयोविंशीमहाबृहती चत्वारोष्टकाजागतश्च महाबृहतीत्युक्तलक्षणोपेतत्वात् । चतुर्विंशीपक्तिः । अश्विनौदेवता अश्विनोर्यामे होतुरतिरिक्तोक्थ्ये अग्निनेन्द्रेणेत्येतत्सूक्तम् सूत्रितञ्च—अग्निनेन्द्रेणाभात्यग्निरिति ।

तत्र प्रथमा—

अग्निनेन्द्रेणवरुणेनविष्णुनादित्यैरुद्रैर्वसुभिःसचाभुवा ।
सजोषसाउषसासूर्येणचसोमंपिबतमश्विना ॥ १ ॥

अग्निना । इन्द्रेण । वरुणेन । विष्णुना । आदित्यैः । रुद्रैः ।
वसुऽभिः सचाऽभुवा । सऽजोषसौ । उषसा । सूर्येण । च । सोमम् ।
पिबतम् । अश्विना ॥ १ ॥

हे अश्विना अश्विनौ अग्निना इन्द्रेण वरुणेन विष्णुना आदित्यैरुद्रैर्वसुभिश्च सचाभुवा सहभूतौ उषसा सूर्येणच सजोषसा संगतौ युवां सोमं पिबतम् ॥ १ ॥

१. अश्विद्वय, तुम लोग अग्नि, इन्द्र, वरुण, विष्णु, आदित्यगण, रुद्रगण और वसुगण के साथ और उषा तथा सूर्य के साथ मिलकर सोम-पान करो।

विश्वाभिर्धीभिर्भुवनेनवाजिनादिवापृथिव्याद्रिभिःसचाभुवा।
सजोषसाउषसासूर्येणचसोमंपिबतमश्विना ॥ २ ॥

विश्वाभिः । धीभिः । भुवनेन । वाजिना । दिवा ।
पृथिव्या । अद्रिऽभिः । सचाऽभुवा । सऽजोषसौ ।
उषसा । सूर्येण । च । सोमम् । पिबतम् । अश्विना ॥ २ ॥

हे वाजिना बलिनावश्विनौ विश्वाभिः सर्वाभिर्धीभिः प्रज्ञाभिः भुवनेनाखिलेन भूतजातेनच दिवा द्युलोकेनच पृथिव्याचाद्रिभिश्च सचाभुवा सहभूतौ उषसा सूर्येणच संगतौ युवां सोमं पिबतम् ॥ २ ॥

२. बली अश्विद्वय, तुम लोग सारी प्रजा, प्राणि-समुदाय, द्युलोक, पृथिवी और पर्वत के साथ तथा उषा और सूर्य के साथ मिलकर सोम का पान करो।

विश्वैर्देवैस्त्रिभिरेकादशैरिहाद्भिर्मरुद्भिर्भृगुभिःसचाभुवा।
सजोषसाउषसासूर्येणचसोमंपिबतमश्विना ॥ ३ ॥

विश्वैः । देवैः । त्रिऽभिः । एकादशैः । इह । अत्ऽभिः ।
मरुत्ऽभिः । भृगुऽभिः । सचाऽभुवा । सऽजोषसौ ।
उषसा । सूर्येण । च । सोमम् । पिबतम् । अश्विना ॥ ३ ॥

हे अश्विनौ विश्वैर्देवैः त्रिभिः एकादशैः त्रयस्त्रिंशैः इहयज्ञे अद्भिः मरुद्भिः भृगुभिश्च सचाभुवा सहभूतौ उषसा सूर्येणच संगतौ युवां सोमं पिबतम् ॥ ३ ॥

३. अश्विद्वय, तुम लोग इस यज्ञ में भक्षणकर्त्ता तेंतीस देवों, मरुतों और भृगुओं के साथ तथा उषा और सूर्य से मिलकर सोम-पान करो।

अथ चतुर्थी—

जुषेथांयज्ञंबोधतंहवस्यमेविश्वेहदेवौसवनावगच्छतम् ।
सजोषसाउषसासूर्येणचेषंनोवोह्ळमश्विना ॥ ४ ॥

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । विश्वा ।
इह । देवौ । सवना । अव । गच्छतम् । सऽजोषसौ । उषसा । सूर्येण ।
च । आ । इषम् । नः । वोह्ळम् । अश्विना ॥ ४ ॥

हे अश्विनौ देवौ यज्ञं जुषेथां सेवेथां । मे मम हवस्य हवं बोधतं जानीतं । इहयज्ञे विश्वा सवना सर्वाणि सवनानि अवगच्छतं प्राप्नुतम् । इषं अन्नं आवोह्ळं प्रापयतम् ॥ ४ ॥

४. देव अश्विद्वय, तुम लोग यज्ञ का सेवन करो। मेरे आह्वान को समझो। इस यज्ञ में सारे सवनों को प्राप्त करो। उषा और सूर्य के साथ मिलकर हमारा अन्न ग्रहण करो।

स्तोमंजुषेथांयुवशेवकन्यनांविश्वेहदेवौसवनावगच्छतम् ।
सजोषसाउषसासूर्येणचेषंनोवोह्ळमश्विना ॥ ५ ॥

स्तोमम् । जुषेथाम् । युवशाऽइव । कन्यनाम् । विश्वा ।
इह । देवौ । सवना । अव । गच्छतम् । सऽजोषसौ ।
उषसा । सूर्येण । च । आ । इषम् । नः । वोह्ळम् । अश्विना ॥ ५॥

हे अश्विनौ देवौ युवां इहास्मिन्यज्ञे स्तोमं जुषेथां सेवेथाम् । युवशेव यथा युवानौ कन्यनां कन्यानामाह्वानं सेवेते तद्वदित्यर्थः । इहयज्ञे विश्वानि सवनान्यवगच्छतं प्राप्नुतं । सिद्धमन्यत् ॥ ५॥

५. देव अश्विद्वय, जैसे युवक कन्याओं की बुलाहट को सेवित करते हैं, वैसे ही तुम लोग इस यज्ञ में स्तोम की सेवा करो। इस यज्ञ में स्तोम की सेवा करो। इस यज्ञ में सारे सवनों को प्राप्त करो। उषा और सूर्य के साथ मिलकर हमारा सोम-रूप अन्न ग्रहण करो।

गिरौजुषेथामध्वरंजुषेथांविश्वेहदेवौसवनावगच्छतम् ।
सजोषसाउषसासूर्येणचेषंनोवोह्ळमश्विना ॥ ६ ॥ १४ ॥

गिरः । जुषेथाम् । अध्वरम् । जुषेथाम् । विश्वा ।
इह । देवौ । सवना । अव । गच्छतम् । सऽजोषसौ । उषसा ।
सूर्येण । च । आ । इषम् । नः । वोह्ळम् । अश्विना ॥ ६ ॥ १४ ॥

हे देवौ अश्विनौ अस्माकं गिरः स्तुतीः जुषेथां सेवेथां। तथा अध्वरं यज्ञञ्च जुषेथां। इहयज्ञे विश्वा विश्वानि सवनानि अवगच्छतं प्राप्नुतम्॥ ६॥

६. देव अश्विद्वय, हमारी स्तुति का सेवन करो। यज्ञ की सेवा करो। इस यज्ञ में सारे सवनों को प्राप्त करो। उषा और सूर्य के साथ मिलकर हमारा अन्न ग्रहण करो। ॥ इति षष्ठस्य तृतीये चतुर्दशोवर्गः॥ १४॥

हारिद्रवेवपतथोवनेदुपसोमंसुतंमहिषेवावगच्छथः।
सजोषसाउषसासूर्येणचत्रिर्वर्तिर्यातमश्विना॥ ७॥

हारिद्रवाऽइव। पतथः। वना। इत्। उप। सोमम्। सुतम्। महिषाऽइव। अव। गच्छथः। सऽजोषसौ। उषसा। सूर्येण। च। त्रिः। वर्तिः। यातम्। अश्विना॥ ७॥

हे अश्विना अश्विनौ युवां सुतमभिषुतं सोममुपपतथः हारिद्रवेव यथा हारिद्रवौ पक्षिणौ वना वनान्युदकानिवा वनमित्युदकनामसुपाठात् उपपततः तद्वदित्यर्थः। महिषाविव यथा पिपासितौ महिषावुदकान्युपगच्छतः। तथा सुतं सोममवगच्छथः। उषसा सूर्येणच संगतौ त्रिर्वर्तिस्त्रिमार्गं यातंच॥ ७॥

७. जैसे दो हारिद्रव पक्षी (शुक अथवा हारीत?) जल पर गिरते हैं, वैसे ही तुम लोग अभिषुत सोम की ओर गिरो। दो भैंसों के समान सोम को जानो। उषा और सूर्य के साथ मिलकर त्रिमार्गों में जाओ।

हंसाविवपतथोअध्वगाविवसोमंसुतंमहिषेवावगच्छथः।
सजोषसाउषसासूर्येणचत्रिर्वर्तिर्यातमश्विना॥ ८॥

हंसौऽइव। पतथः। अध्वगौऽइव। सोमम्। सुतम्। महिषाऽइव। अव। गच्छथः। सऽजोषसौ। उषसा। सूर्येण। च। त्रिः। वर्तिः। यातम्। अश्विना॥ ८॥

हे अश्विनौ युवां हंसाविव यथा हंसौ अध्वगाविव यथाच पथिकाउदकं गच्छतस्तथा वेगेन सुतं सोमं पतथोगच्छथः। सिद्धमन्यत्॥ ८॥

८. अश्विद्वय, दो हंसों और दो पथिकों के समान अभिषुत सोम के अभिमुख आओ और दो भैंसों के समान सोम को समझो। उषा और सूर्य के साथ मिलकर त्रिमार्ग में गमन करो।

अथ नवमी—

श्येनाविवपतथोहव्यदातयेसोमंसुतंमहिषेवावगच्छथः ।
सजोषसाउषसासूर्येणचत्रिर्वर्तिर्यातमश्विना ॥ ९ ॥

श्येनौऽइव । पतथः । हव्यऽदातये । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः । सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ९ ॥

हे अश्विनौ युवां श्येनाविव यथाश्येनौ गगनंगच्छतस्तथा वेगेन सुतं सोमं हव्यदातये यजमानार्थं पतथोगच्छथः । सिद्धमन्यत् ॥ ९ ॥

९ अश्विद्वय, तुम लोग दो श्येन पक्षियों के समान अभिषुत सोम की ओर आओ और दो भैंसों के समान सोम को जानो। उषा और सूर्य के साथ मिलकर त्रिमार्ग में गमन करो।

अथ दशमी—

पिबतंचतृप्णुतंचाचगच्छतंप्रजांचधत्तंद्रविणंचधत्तम् ।
सजोषसाउषसासूर्येणचोर्जंनोधत्तमश्विना ॥ १० ॥

पिबतम् । च । तृप्णुतम् । च । आ । च । गच्छतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् । सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ १० ॥

हे अश्विनौ युवां सोमं पिबतञ्च तृप्णुतञ्च तृप्यतंच पानार्थं तृप्त्यर्थं चागच्छतं सोमंपीत्वा तृप्तौसंतौ युवां अस्मभ्यं प्रजाञ्च धत्तं धारयतं द्रविणं धनञ्च धत्तम् उषसासूर्येणच संगतौ नोस्मभ्यं ऊर्जं बलंच धत्तम् ॥ १० ॥

१०. अश्विद्वय, सोमपान करो। तृप्त होओ। आओ सन्तान दो। धन दो। उषा और सूर्य के साथ मिलकर हमें बल दो।

अथैकादशी—

जयतंचप्रस्तुतंचप्रचावतंप्रजांचधत्तंद्रविणंचधत्तम् ।
सजोषसाउषसासूर्येणचोर्जंनोधत्तमश्विना ॥ ११ ॥

जयतम् । च । प्र । स्तुतम् । च । प्र । च । अवतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् । सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ ११ ॥

हे अश्विनौ युवां जयतं शत्रूंश्च जयतम् प्रस्तुतं स्तोतॄंश्च प्रचावतमस्मांश्च प्ररक्षतम् । अन्यत्सिद्धम् ॥ ११ ॥

११. अश्विद्वय, तुम शत्रुओं को जीतो। स्तोताओं की प्रशंसा और रक्षा करो। सन्तान दो। धन दो। उषा और सूर्य के साथ मिलकर हमें बल दो।

हतंचशत्रून्यततंचमित्रिणःप्रजांचधत्तंद्रविणंचधत्तम् ।
सजोषसाउषसासूर्येणचोर्जंनोधत्तमश्विना ॥ १२॥१५॥

हतम् । च । शत्रून् । यततम् । च । मित्रिणः । प्रऽजाम् । च ।
धत्तम् । द्रविणम् । च । धत्तम् । सऽजोषसौ । उषसा । सूर्येण ।
च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ १२ ॥ १५ ॥

हे अश्विनौ युवां शत्रूंश्च हतम् अपिच यततं मित्रिणोमैत्रीयुक्तांश्च गच्छतम् । सिद्धमन्यत् ॥ १२ ॥

१२. अश्विद्वय, तुम लोग शत्रु का विनाश करो। मंत्री से युक्त होकर गमन करो। सन्तान दो। धन दो। उषा और सूर्य के साथ मिलकर हमें बल दो।

॥ इति षष्ठस्य तृतीये पञ्चदशोवर्गः ॥ १५ ॥

अथ त्रयोदशी—

मित्रावरुणवन्ताउतधर्मवन्तामरुत्वन्ताजरितुर्गच्छथोहवम् ।
सजोषसाउषसासूर्येणचादित्यैर्यातमश्विना ॥ १३ ॥

मित्रावरुणऽवन्तौ । उत । धर्मऽवन्ता । मरुत्वन्ता । जरितुः ।
गच्छथः । हवम् । सऽजोषसौ । उषसा । सूर्येण ।
च । आ । आदित्यैः । यातम् । अश्विना ॥ १३ ॥

उतापिच हे अश्विनौ युवां मित्रावरुणवन्तौ मित्रावरुणयुक्तौ धर्मवन्ता धर्मयुक्तौ उतापिच मरुत्वन्ता मरुद्भिर्युक्तौच जरितुः स्तोतुर्हवमाह्वानं गच्छथः आगच्छतम् । उषसासूर्येण चादित्यैश्च सजोषसा संगतौ यातं गच्छतम् ॥ १३ ॥

१३. अश्विद्वय, तुम लोग मित्र, वरुण, धर्म और मरुतों से युक्त हो। तुम लोग स्तोता के आह्वान की ओर जाओ और उषा, सूर्य और आदित्यों के सहित जाओ।

अङ्गिरस्वन्ताउतविष्णुवन्तामरुत्वन्ताजरितुर्गच्छथोहवम् ।
सजोषसाउषसासूर्येणचादित्यैर्यातमश्विना ॥ १४ ॥

अङ्गिरस्वन्तौ । उत । विष्णुऽवन्ता । मरुत्वन्ता । जरितुः ।
गच्छथः । हवम् । सऽजोषसौ । उषसा । सूर्येण । च ।
आ । आदित्यैः । यातम् । अश्विना ॥ १४ ॥

उतापिच हे अश्विनौ युवां अङ्गिरस्वन्तौ अङ्गिरोभिर्युक्तौ विष्णुवन्ता विष्णुनाच सहितौ मरुत्वन्ता मरुद्भिश्चसहितौ मे जरितुःस्तोतुराह्वानं गच्छतम् ॥ १४ ॥

१४. अश्विद्वय, तुम लोग अङ्गिरा, विष्णु और मरुतों के साथ स्तोता के आह्वान की ओर जाओ तथा उषा, सूर्य और आदित्यों के साथ जाओ।

ऋभुमन्तावृषणावाजवन्तामरुत्वन्ताजरितुर्गच्छथोहवम् ।
सजोषसाउषसासूर्येणचादित्यैर्यातमश्विना ॥ १५ ॥

ऋभुऽमन्ता । वृषणा । वाजऽवन्ता । मरुत्वन्ता । जरितुः ।
गच्छथः । हवम् । सऽजोषसौ । उषसा । सूर्येण । च ।
आ । आदित्यैः । यातम् । अश्विना ॥ १५ ॥

हे अश्विनौ ऋभुमंता ऋभुसहितौ वृषणा कामानां वर्षितारौ वाजवन्ता वाजयुक्तौ मरुत्वन्तौच स्तोतुराह्वानं गच्छतम् । ऋभुमन्ता वाजवन्तेति ज्येष्ठकनिष्ठाभ्यां व्यपदेशः । सिद्धमन्यत् ॥ १५ ॥

१५. अश्विद्वय, तुम लोग ऋभु, काम-वर्षक वाज और मरुतों के साथ स्तोता के आह्वान की ओर जाओ और उषा, सूर्य तथा आदित्यों के साथ गमन करो।

ब्रह्मजिन्वतमुताजिन्वतंधियोहतंरक्षांसिसेधतममीवाः ।
सजोषसाउषसासूर्येणचसोमंसुन्वतोअश्विना ॥ १६ ॥

ब्रह्म । जिन्वतम् । उत । जिन्वतम् । धियः । हतम् ।
रक्षांसि । सेधतम् । अमीवाः । सऽजोषसौ । उषसा । सूर्येण ।
च । सोमम् । सुन्वतः । अश्विना ॥ १६ ॥

हे अश्विनौ युवां ब्रह्म ब्राह्मणं जिन्वतं प्रीणयतम् । उतापिच धियः कर्माणि जिन्वतं । हतंच रक्षांसि । अमीवाः राक्षसांश्च सेधतम् । उषसा सूर्येणच संगतौ सुन्वतोयजमानस्य सोमं पिबतमित्यर्थः ॥ १६ ॥

१६. अश्विद्वय, तुम लोग स्तोत्र और कर्म को जीतो। राक्षसों का शासन और वध करो। उषा और सूर्य के साथ अभिषव-कर्त्ता के सोम का पान करो।

अथ सप्तदशी—

क्षत्रंजिन्वतमुतजिन्वतंनृन्हतंरक्षांसिसेधतममीवाः ।
सजोषसाउषसासूर्येणचसोमंसुन्वतोअश्विना ॥ १७ ॥

क्षत्रम् । जिन्वतम् । उत । जिन्वतम् । नॄन् । हतम् ।
रक्षांसि । सेधतम् । अमीवाः । सऽजोषसौ । उषसा ।
सूर्येण । च । सोमम् । सुन्वतः । अश्विना ॥ १७ ॥

हे अश्विनौ युवां क्षत्रं क्षत्रियं जिन्वतं उतापिच नॄन् योद्धॄन् जिन्वतम् । सिद्धमन्यत् ॥१७॥

१७. अश्विद्वय, तुम लोग क्षत्र (बल) और योद्धाओं को जीतो। राक्षसों का शासन और वध करो। उषा और सूर्य के साथ सोमाभिषव-कारी का सोमपान करो।

अथाष्टादशी—

धेनूर्जिन्वतमुतजिन्वतंविशोहतंरक्षांसिसेधतममीवाः ।
सजोषसाउषसासूर्येणचसोमंसुन्वतोअश्विना ॥ १८ ॥ १६ ॥

धेनूः । जिन्वतम् । उत । जिन्वतम् । विशः । हतम् । रक्षांसि ।
सेधतम् । अमीवाः । सऽजोषसौ । उषसा । सूर्येण । च ।
सोमम् । सुन्वतः । अश्विना ॥ १८ ॥ १६ ॥

हे अश्विनौ धेनूर्जिन्वतमुतापिच विशोवैश्यांश्च जिन्वतम् । सिद्धमन्यत् ॥ १८ ॥

१८. अश्विद्वय, धेनु और विशों (वैश्यों) को जीतो, राक्षसों का शासन और वध करो। उषा और सूर्य के साथ सोम के अभिषव-कर्त्ता का सोमपान करो। ॥ इति षष्ठस्य तृतीये षोडशोवर्गः ॥ १६ ॥

अथैकोनविंशी—

अत्रेरिवशृणुतंपूर्व्यस्तुतिंश्यावाश्वस्यसुन्वतोमदच्युता ।
सजोषसाउषसासूर्येणचाश्विनातिरोअह्न्यम् ॥ १९ ॥

अत्रेःऽइव । शृणुतम् । पूर्व्यऽस्तुतिम् । श्यावऽअश्वस्य ।
सुन्वतः । मदऽच्युता । सऽजोषसौ । उषसा । सूर्येण ।
च । अश्विना । तिरःऽअह्न्यम् ॥ १९ ॥

हे अश्विनौ मदच्युता शत्रूणां मदस्य च्यावयितारौ युवां सुन्वतःसोमाभिषवंकुर्वतः श्यावाश्वस्य ममपितामहस्यात्रेरिव पूर्व्यस्तुतिं मुख्यांस्तुतिं श्रृणुतं उषसा सूर्येणच संगतौ तिरोअह्न्यं सोमं पिबतं तिरोहिते पूर्वस्मिन्नहन्यपरेद्युः मातरश्विनोर्यागइति ॥ १९ ॥

१९. अश्विद्वय, तुम लोग शत्रुओं का गर्व खर्व करनेवाले हो, तुम लोग जैसे अत्रि की स्तुति को सुनते थे, वैसे ही श्यावाश्व की (मेरी) मुख्य स्तुति सुनो। उषा और सूर्य के साथ मिलकर प्रातःकाल के यज्ञ में सोमपान करो।

सर्गाँइवसृजतंसुष्टुतीरुपंश्यावाश्वंस्यसुन्वतोमंदच्युता ।
सजोषंसाउषसासूर्येणचाश्विंनातिरोअंह्न्यम् ॥ २० ॥

सर्गान्ऽइव । सृजतम् । सुऽस्तुतीः । उपं । श्यावऽअंश्वस्य ।
सुन्वतः । मदऽच्युता । सऽजोषंसौ । उषसां । सूर्येण ।
च । अश्विंना । तिरःऽअंह्न्यम् ॥ २० ॥

हे अश्विनौ श्यावाश्वस्य मम सुष्टुतीः शोभनाः स्तुतीः सर्गानिव । आभरणानि वा हवींषि वा सर्गाः । तान्यथा तथात्मन्युपसृजतम् । सिद्धमन्यत् ॥ २० ॥

२०. अश्विद्वय, श्यावाश्व की सुन्दर स्तुति को, आभरण के समान, ग्रहण करो। उषा और सूर्य के साथ मिलकर प्रातःकाल के यज्ञ में सोमपान करो।

अथैकविंशी—

रश्मीँरिवयच्छतमध्वराँउपंश्यावाश्वंस्यसुन्वतोमंदच्युता ।
सजोषंसाउषसासूर्येणचाश्विंनातिरोअंह्न्यम् ॥ २१ ॥

रश्मीन्ऽइव । यच्छतम् । अध्वरान् । उपं । श्यावऽअंश्वस्य ।
सुन्वतः । मदऽच्युता । सऽजोषंसौ । उषसां । सूर्येण । च ।
अश्विंना । तिरःऽअंह्न्यम् ॥ २१ ॥

हे अश्विनौ श्यावाश्वस्य मम अध्वरान् रश्मीनिव यथाश्वप्रग्रहांस्तद्वदुपयच्छतम् उपगच्छतम् । सिद्धमन्यत् ॥ २१ ॥

२१. अश्विद्वय; अश्व-रज्जु (लगाम) के समान श्यावाश्व के यज्ञाभिमुख गमन करो। उषा और सूर्य के साथ मिलकर प्रातःकाल के यज्ञ में सोमपान करो।

अर्वाग्रथंनियंच्छतंपिबंतंसोम्यंमधुं ।
आयांतमश्विनागंतमवस्युर्वामहंहुवेधत्तंरत्नानिदाशुषे ॥ २२ ॥

अर्वाक् । रथम् । नि । यच्छतम् । पिबतम् । सोम्यम् । मधु ।
आ । यातम् । अश्विना । आ । गतम् । अवस्युः । वाम् ।
अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥ २२ ॥

हे अश्विनौ वां स्वीयं रथमर्वागस्मदभिमुखं नियच्छतं सोम्यं सोममयं मध्वमृतञ्च पिबतम् यज्ञमायातञ्च । सोमं प्रत्यागतमागच्छतञ्च । अवस्युः रक्षणकामोहं श्यावाश्वो वां हुवे ह्वयामि । दाशुषे हवींषि प्रयच्छते मह्यं रत्नानि धत्तं धारयतम् ॥ २२ ॥

२२. अश्विद्वय, अपना रथ हमारे सामने ले आओ, सोमरूप मधु का पान करो, यज्ञ में आगमन करो और सोम के अभिमुख आगमन करो। रक्षाभिलाषी होकर मैं तुम्हें बुलाता हूँ। हव्यदाता को (मुझे) रत्न दान करो।

नमोवाकेप्रस्थितेअध्वरेनराविवक्षणस्यपीतये ।
आयातमश्विनागतमवस्युर्वामहंहुवेधत्तंरत्नानिदाशुषे ॥ २३ ॥

नमःऽवाके । प्रऽस्थिते । अध्वरे । नरा । विवक्षणस्य । पीतये ।
आ । यातम् । अश्विना । आ । गतम् । अवस्युः । वाम् । अहम् ।
हुवे । धत्तम् । रत्नानि । दाशुषे ॥ २३ ॥

हे अश्विना नरा नेतारौ युवां विवक्षणस्य हवनशीलस्य मम प्रस्थिते नमोवाके । नमस्काराय प्रोच्यते सनमोवाकस्तस्मिन्नध्वरे यज्ञे।तथाच ब्राह्मणम्—उभयं सहवा एतद्यज्ञे सूक्तवाकश्च ममोवाकश्चेति । पीतये सोमपानायायातम । सिद्धमन्यत ॥ २३ ॥

२३. अश्विद्वय, तुम लोग नेता हो। मुझ हवनशील के इस किये जाते हुए नमोवाक्य-युक्त यज्ञ में सोमपान के लिए आओ। सोम के अभिमुख आओ। मैं रक्षाभिलाषी होकर तुम्हें बुलाता हूँ। हव्यदाता को रत्न दान करो।

अथ चतुर्विंशी—

स्वाहाकृतस्यतृम्पतंसुतस्यदेवावन्धसः ।
आयातमश्विनागतमवस्युर्वामहंहुवेधत्तंरत्नानिदाशुषे॥२४॥१७॥

स्वाहाऽकृतस्य । तृम्पतम् । सुतस्य । देवौ । अन्धसः । आ ।
यातम् । अश्विना । आ । गतम् । अवस्युः । वाम् । अहम् ।
हुवे । धत्तम् । रत्नानि । दाशुषे ॥ २४ ॥ १७ ॥

हे अश्विनौ देवौ युवां सुतस्याभिषुतस्य स्वाहाकृतस्य हुतस्यान्धसः सोमस्य तृम्पतं तृप्यतं। सिद्धमन्यत् ॥ २४ ॥

२४. देव अश्विद्वय, तुम लोग अभिषुत और स्वाहाकृत सोम से तृप्ति प्राप्त करो। यज्ञ में आओ। सोम के अभिमुख आओ। मैं रक्षाभिलाषी होकर तुम्हें बुलाता हूँ। तुम हव्यदाता को रत्न दो।

॥ इति षष्ठस्य तृतीये सप्तदशोवर्गः ॥१७॥

अवितासीति सप्तर्चं षष्ठं सूक्तं आत्रेयस्य श्यावाश्वस्यार्षम्। अत्रेयमनुक्रमणिका—अवितासिसप्तशाक्वरंमहापंक्त्यन्तमिति। षट्पञ्चाशदक्षरा शक्वरी छन्दः श्यावाश्वेति सप्तमी महापङ्क्तिः षडष्टकावा महापङ्क्तिरिति लक्षणसद्भावात् दशरात्रे। पञ्चमेहनि मरुत्वतीये इदंसूक्तम्। सूत्रितञ्च—अवितासीत्थाहीति।

अ॒वि॒तासि॑सु॒न्व॒तोवृ॒क्तब॑र्हिषः॒पिबा॒सोम॒ंमदा॑य॒कंश॑तक्रतो।
यंतेभा॒गमधा॑रय॒न्विश्वाः॑सेहा॒नःपृत॑नाउ॒रुज्र॒यः॒सम॑प्सु॒जिन्म॒
रुत्वाँइन्द्रसत्पते ॥ १ ॥

अ॒वि॒ता। अ॒सि॒। सु॒न्व॒तः। वृ॒क्तऽब॑र्हिषः। पिब॑। सोम॑म्। मदा॑य। कम्। श॒त॒क्र॒तो॒ इति॑ शत॒ऽक्र॒तो। यम्। ते॒। भा॒गम्। अधा॑रयन्। विश्वाः॑। से॒हा॒नः। पृत॑नाः। उ॒रु। ज्रयः॑। सम्। अ॒प्सु॒ऽजित्। म॒रुत्वा॑न्। इ॒न्द्र॒। स॒त्ऽप॒ते॒ ॥ १ ॥

हे शतक्रतो बहुकर्मन्निंद्र सुन्वतः सोमाभिषवं कुर्वतो वृक्तबर्हिषस्तीर्णबर्हिषो यजमानस्य अविता रक्षितासि भवसि मदाय मदार्थं सोमं पिब। हे सत्पते सतां पते मरुत्वान् मरुत्वन् इन्द्र ते तुभ्यं यं सोमस्य भागमधारयन् सर्वे देवा अकल्पयन्। तथाच यजुर्ब्राह्मणं—सएतं माहेन्द्रमुद्धारमुदहरत। वृत्रंहत्वान्यदेवतास्वधीति[1]। तं भागं विश्वाः पृतनाः शत्रूणां सर्वाः सेनाः उरु बहु ज्रयोवेगंच संसेहानः सम्यगभिभवन्नप्सुजिदप्सुजेता च सन् पिब ॥ १ ॥

१. बहुकर्मा (शतक्रतु) इन्द्र, सोम का अभिषव करनेवाले और कुश-विस्तार करनेवाले यजमान के तुम रक्षक हो। सत्पति (सज्जनों के स्वामी) और मरुतों से युक्त इन्द्र, देवों ने तुम्हारे लिए जो सोम का भाग निश्चित किया है, सारी शत्रु-सेना और प्रचुर वेग को अभिभूत करके और जल-मध्य में जेता होकर मत्त होने के लिए उस सोम-भाग को पियो।

अथ द्वितीया—

प्राव॑स्तो॒तारं॑मघव॒न्नव॒त्वांपिबा॒सोम॒ंमदा॑य॒कंश॑तक्रतो।
यंतेभा॒गमधा॑रय॒न्विश्वाः॑सेहा॒नःपृत॑नाउ॒रुज्र॒यः॒सम॑
प्सु॒जिन्म॒रुत्वाँइन्द्रसत्पते ॥ २ ॥

१ तै० सं० ६. ५. ७.।

प्र । अव । स्तोतारम् । मघऽवन् । अव । त्वाम् । पिब । सोमम् ।
मदाय । कम् । शतक्रतो इति शतऽक्रतो । यम् । ते । भागम् ।
अधारयन् । विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः । सम् ।
अप्सुऽजित् । मरुत्वान् । इन्द्र । सत्ऽपते ॥ २ ॥

हे मघवन् स्तोतारं प्राव प्ररक्ष त्वांचाव सोमपानेन रक्ष । सिद्धमन्यत् ॥ २ ॥

२. धनी इन्द्र, स्तोता की रक्षा करो। सोम-पान के द्वारा अपनी भी रक्षा करो। सत्पति और मरुतों से युक्त बहुकर्मा इन्द्र, देवों ने तुम्हारे लिए जो सोम-भाग कल्पित किया है, सारी सेना और बहुवेग को अभिभूत करके और जल-मध्य में विजेता होकर मत्त होने के लिए उस सोम-भाग को पियो।

ऊर्जादेवाँअवस्योजसात्वांपिबासोमंमदायकंशतक्रतो ।
यंतेभागमधारयन्विश्वाःसेहानःपृतनाउरुज्रयःसमप्सुजिन्म
रुत्वाँइन्द्रसत्पते ॥ ३ ॥

ऊर्जा । देवान् । अवसि । ओजसा । त्वाम् । पिब । सोमम् । मदाय ।
कम् । शतक्रतो इति शतऽक्रतो । यम् । ते । भागम् । अधारयन् ।
विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः । सम् ।
अप्सुऽजित् । मरुत्वान् । इन्द्र । सत्ऽपते ॥ ३ ॥

हे इन्द्र त्वं देवानूर्जान्नेन हविषावसि रक्षसि त्वामप्योजसा बलेनावसि । सिद्धमन्यत् ॥३॥

३. अन्न-द्वारा देवों की रक्षा करते हो और अपने को बल के द्वारा बचाते हो। सत्पति और मरुतों से युक्त बहुकर्मा इन्द्र, देवों ने तुम्हारे लिए जो सोम भाग निश्चित किया है, सारी सेना और बहुवेग को दबाकर और जल के बीच विजयी होकर मत्त होने के लिए उस सोम-भाग को पियो

जनितादिवोजनितापृथिव्याःपिबासोमंमदायकंशतक्रतो ।
यंतेभागमधारयन्विश्वाःसेहानःपृतनाउरुज्रयःसमप्सुजि
न्मरुत्वाँइन्द्रसत्पते ॥ ४ ॥

जनिता । दिवः । जनिता । पृथिव्याः । पिब । सोमम् । मदाय ।
कम् । शतक्रतो इति शतऽक्रतो । यम् । ते । भागम् । अधारयन् ।
विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः । सम् ।
अप्सुऽजित् । मरुत्वान् । इन्द्र । सत्ऽपते ॥ ४ ॥

हे इन्द्र त्वं दिवोद्युलोकस्य जनिता जनकोसि पृथिव्याश्च जनितासि। सिद्धमन्यत्॥४॥

४. तुम द्युलोक और पृथिवी के जनक हो। सत्पति और मरुतों से युक्त बहुकर्मा इन्द्र, तुम्हारे लिए देवों ने जो सोम-भाग निश्चित किया है, सारी शत्रु-सेना और बहुवेग को अभिभूत करके तथा जल-मध्य में विजयी होकर मत्त होने के लिए उसी सोम-भाग को पियो।

जनिताश्वानांजनितागवामसिपिबासोमंमदायकंशतक्रतो।
यंतेभागमधारयन्विश्वाःसेहानःपृतनाउरुज्रयःसमप्सुजि
न्मरुत्वाँइन्द्रसत्पते॥ ५॥

जनिता। अश्वानाम्। जनिता। गवाम्। असि। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो। यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्। मरुत्वान्। इन्द्र। सत्ऽपते॥ ५॥

हे इन्द्र त्वं अश्वानां जनिता जनकोसि गवाञ्च जनितासि। सिद्धमन्यत्॥ ५॥

५. तुम अश्वों और गौओं के जनक (पिता) हो। सत्पति और मरुतों से युक्त बहुकर्मा इन्द्र, तुम्हारे लिए देवों ने जो सोम-भाग परिकल्पित किया है, सारी शत्रु-सेना और बहुवेग को अभिभूत करके तथा जल-मध्य में विजयी होकर मत्त होने के लिए उसी सोम-भाग को पियो।

अत्रीणांस्तोममद्रिवोमहस्कृधिपिबासोमंमदायकंशतक्रतो।
यंतेभागमधारयन्विश्वाःसेहानःपृतनाउरुज्रयःसमप्सुजिन्म
रुत्वाँइन्द्रसत्पते॥ ६॥

अत्रीणाम्। स्तोमम्। अद्रिऽवः। महः। कृधि। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो। यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्। मरुत्वान्। इन्द्र। सत्ऽपते॥ ६॥

हे अद्रिवः अद्रिमन् अत्रीणां स्तोमं महस्कृधि पूजितं कुरु। सिद्धमन्यत्॥ ६॥

६. पर्वतवाले इन्द्र, अत्रि लोगों (हम लोगों) का सोम पूजित करो। सत्पति और मरुतों से युक्त बहुकर्मा इन्द्र देवों ने तुम्हारे लिए जो सोम-भाग परिकल्पित किया है, समस्त शत्रु-सेना और बहुवेग को दबाकर तथा जलमध्य में विजेता बनकर मत्त होने के लिए उसी सोम-भाग को पियो।

श्यावाश्वस्यसुन्वतस्तथांशृणुयथाशृणोरत्रेःकर्माणिकृण्वतः।
प्रत्रसदस्युमाविथत्वमेकइन्नृषाह्यइन्द्रब्रह्माणिवर्धयन् ॥७॥१८॥

श्यावऽअश्वस्य। सुन्वतः। तथा। शृणु। यथा। अशृणोः। अत्रेः। कर्माणि। कृण्वतः। प्र। त्रसदस्युम्। आविथ। त्वम्। एकः। इत्। नृऽसह्ये। इन्द्र। ब्रह्माणि। वर्धयन् ॥ ७ ॥ १८ ॥

हे इन्द्र त्वं सुन्वतः सोमाभिषवं कुर्वतः श्यावाश्वस्य मम स्तुतिं कर्माणि कृण्वतः कुर्वतोत्रेर्यथा शृणोरश्रौषीस्तथा शृणु। अपिच त्वमेकइदेकएव नृषाह्ये युद्धे ब्रह्माणि स्तोत्राणि कामैर्वर्धयन् त्रसदस्युं प्राविथ ॥ ७ ॥

७. इन्द्र, तुमने जैसे यज्ञ-कर्त्ता अत्रि ऋषि की स्तुति सुनी थी, वैसे ही सोमाभिषव-कर्त्ता श्यावाश्व की (मेरी) स्तुति सुनो। अकेले ही तुमने युद्ध में स्तोत्रों को वर्द्धित करते हुए त्रसदस्यु को बचाया था।

॥ इति षष्ठस्य तृतीयेष्टादशो वर्गः ॥ १८ ॥

प्रेदंब्रह्मेति सप्तर्चं सप्तमं सूक्तं आत्रेयस्य श्यावाश्वस्यार्षं आद्या द्वापञ्चाशदक्षरा अतिजगती शिष्टाः षड्चः षडष्टका महापङ्क्तयः। इन्द्रोदेवता। तथाचानुक्रान्तम्—प्रेदंमहापाङ्क्तमाद्यातिजगतीति। महाव्रते निष्केवल्येएतत्सूक्तम्। तथाच सूत्रम्—प्रेदंब्रह्मेन्द्रोमदायेति।

तत्र प्रथमा—

प्रेदंब्रह्मवृत्रतूर्येष्वाविथप्रसुन्वतःशचीपतइन्द्रविश्वाभिरूतिभिः।
माध्यंदिनस्यसवनस्यवृत्रहन्ननेद्यपिबासोमस्यवज्रिवः ॥ १ ॥

प्र। इदम्। ब्रह्म। वृत्रऽतूर्येषु। आविथ। प्र। सुन्वतः। शचीऽपते। इन्द्र। विश्वाभिः। ऊतिऽभिः। माध्यंदिनस्य। सवनस्य। वृत्रऽहन्। अनेद्य। पिब। सोमस्य। वज्रिऽवः ॥ १ ॥

हे शचीपते इन्द्र त्वं वृत्रतूर्येषु संग्रामेषु इदं ब्रह्म इमान् ब्राह्मणान् विश्वाभिः सर्वाभिःऊतिभीरक्षाभिः प्राविथ प्ररक्ष। सुन्वतः सोमाभिषवं कुर्वतो यजमानांश्च प्राविथ। अपिच हे अनेद्यानिन्द्य वज्रिवो वज्रिन् वृत्रहन्निन्द्र माध्यन्दिनस्य सवनस्य संबन्धिनं सोमस्य सोमं पिब ॥१॥

१. यज्ञपति इन्द्र, युद्ध में तुम सारे रक्षणों से इस स्तोत्र (ब्राह्मण) की रक्षा करो। सोमाभिषव की भी रक्षा करना। अनिन्द्य वज्री और वृत्रघ्न इन्द्र, माध्यन्दिन सवन का सोम पियो।

सेहानउग्रपृतनाअभिद्रुहःशचीपतइन्द्रविश्वाभिरूतिभिः।
माध्यंदिनस्यसवनस्यवृत्रहन्ननेद्यपिबासोमस्यवज्रिवः ॥ २ ॥

सेहानः । उग्र । पृतनाः । अभि । द्रुहः । शचीऽपते । इन्द्र ।
विश्वाभिः । ऊतिऽभिः । माध्यंन्दिनस्य । सवनस्य । वृत्रऽहन् ।
अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ २ ॥

हे शचीपते कर्मपते उग्र उद्गूर्णेन्द्र अभिद्रुहो द्रोग्धीः पृतनाः सेनाः सेहानोभिभवन् सर्वैः पालनैः ब्राह्मणान्प्राविथेत्यर्थः । सिद्धमन्यत् ॥ २ ॥

२. कर्मपति (शचीपति) और उग्र इन्द्र, शत्रु-सेनाओं को अभिभूत करके सारी रक्षाओं के द्वारा स्तोत्र (ब्राह्मण) की रक्षा करो। अनिन्दनीय (प्रशंसनीय), वज्रधर और वृत्रहन्ता इन्द्र, माध्यन्दिन सवन का सोम पियो।

एकराळस्यभुवनस्यराजसिशचीपतइन्द्रविश्वाभिरूतिभिः ।
माध्यंन्दिनस्यसवनस्यवृत्रहन्ननेद्यपिबासोमस्यवज्रिवः ॥ ३ ॥

एकऽराट् । अस्य । भुवनस्य । राजसि । शचीऽपते । इन्द्र ।
विश्वाभिः । ऊतिऽभिः । माध्यंन्दिनस्य । सवनस्य । वृत्रऽहन् ।
अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ३ ॥

हे शचीपते इन्द्र अस्य भुवनस्य एकराट् एकएव राजा सन् राजसि भ्राजसे । सिद्धमन्यत् ॥३॥

३. यज्ञपति इन्द्र, तुम इस भुवन के एकमात्र राजा होकर और सारी रक्षाओं से युक्त होकर शोभा पाते हो। अनिन्दनीय वज्रधर और वृत्रघ्न इन्द्र, माध्यन्दिन सवन का सोम पियो।

सस्थावानायवयसित्वमेकइच्छचीपतइन्द्रविश्वाभिरूतिभिः ।
माध्यंन्दिनस्यसवनस्यवृत्रहन्ननेद्यपिबासोमस्यवज्रिवः ॥ ४ ॥

सऽस्थावाना । यवयसि । त्वम् । एकः । इत् । शचीऽपते । इन्द्र ।
विश्वाभिः । ऊतिऽभिः । माध्यंन्दिनस्य । सवनस्य । वृत्रऽहन् ।
अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ४ ॥

हे शचीपते इन्द्र त्वमेकइत् एकएव सस्थावाना समानं तिष्ठताविमौ लोकौ यवयसि पृथक्करोषि । सिद्धमन्यत् ॥ ४ ॥

४. यज्ञपति इन्द्र, समान रूप से अवस्थित इस लोक-द्वय को तुम्हीं अलग करते हो। अनिन्दनीय, वज्रधर और वृत्रघ्न इन्द्र, माध्यन्दिन सवन का सोम पियो।

अथ पञ्चमी—

क्षेमस्यचप्रयुजश्चत्वमीशिषेशचीपतइन्द्रविश्वाभिरूतिभिः।
माध्यन्दिनस्यसवनस्यवृत्रहन्ननेद्यपिबासोमस्यवज्रिवः॥ ५॥

क्षेमस्य। च। प्रऽयुजः। च। त्वम्। ईशिषे। शचीऽपते। इन्द्र।
विश्वाभिः। ऊतिऽभिः। माध्यन्दिनस्य। सवनस्य। वृत्रऽहन्।
अनेद्य। पिब। सोमस्य। वज्रिऽवः॥ ५॥

अपिच हे शचीपते इन्द्र त्वं सर्वस्य जगतः क्षेमस्य प्रयुजश्च प्रयोगस्य च योगक्षेम-योरित्यर्थः ईशिषे ईश्वरोभवसि। सिद्धमन्यत्॥ ५॥

५. यज्ञपति (शचीपति) इन्द्र, सारी रक्षाओं से युक्त होकर समस्त संसार, मङ्गल और प्रयोग के ईश्वर हो। अनिन्दनीय, वज्रधर और वृत्रघ्न इन्द्र, माध्यन्दिन सवन का सोम पियो।

क्षत्रायत्वमवसिनत्वमाविथशचीपतइन्द्रविश्वाभिरूतिभिः।
माध्यंदिनस्यसवनस्यवृत्रहन्ननेद्यपिबासोमस्यवज्रिवः॥ ६॥

क्षत्राय। त्वम्। अवसि। न। त्वम्। आविथ। शचीऽपते। इन्द्र।
विश्वाभिः। ऊतिऽभिः। माध्यन्दिनस्य। सवनस्य। वृत्रऽहन्।
अनेद्य। पिब। सोमस्य। वज्रिऽवः॥ ६॥

हे शचीपते इन्द्र त्वं क्षत्राय जगतोबलाय भवसि अवस्याश्रितान्रक्षसि। त्वं नाविथ केनापि नरक्ष्यसे। सिद्धमन्यत्॥ ६॥

६. यज्ञपति इन्द्र, सारी रक्षाओं से युक्त होकर संसार के बल के लिए होते हो—आश्रितों की रक्षा करते हो। तुम्हारी रक्षा कोई नहीं करता। अनिन्दनीय, वज्री और वृत्रघ्न, माध्यन्दिन सवन का सोम पियो।

अथ सप्तमी—

श्यावाश्वस्यरेभतस्तथाशृणुयथाशृणोरत्रेःकर्माणिकृण्वतः।
प्रत्रसदस्युमाविथत्वमेकइन्नृषाह्यइन्द्रक्षत्राणिवर्धयन्॥ ७॥१९॥

श्यावऽअश्वस्य। रेभतः। तथा। शृणु। यथा। अशृणोः। अत्रेः।
कर्माणि। कृण्वतः। प्र। त्रसदस्युम्। आविथ। त्वम्। एकः।
इत्। नृऽसह्ये। इन्द्र। क्षत्राणि। वर्धयन्॥ ७॥ १९॥

हे इन्द्र रेभतः स्तुवतः श्यावाश्वस्य मम स्तुतिं कर्माणि कृण्वतोऽत्रेर्यथा अशृणोः तथा शृणु। अपिच क्षत्राणि बलानि कामैर्वर्धयन् युद्धे त्वमेकएव त्रसदस्युं प्राविथ ॥ ७ ॥

७. इन्द्र, तुमने जैसे यज्ञ-कर्त्ता अत्रि की स्तुति सुनी थी, वैसे ही (मुझ) स्तोता श्यावाश्व की स्तुति सुनो। तुमने अकेले ही युद्ध में स्तोत्रों को वर्द्धित करके त्रसदस्यु की रक्षा की थी।

॥ इति षष्ठस्य तृतीये एकोनविंशोवर्गः ॥ १९ ॥

यज्ञस्यहीति दशर्चमष्टमं सूक्तम् श्यावाश्वस्यार्षम् प्राग्वत्सप्रेः परिभाषया गायत्रमिन्द्राग्नि-देवताकम्। तथाचानुक्रान्तम्—यज्ञस्यदशैन्द्राग्नमिति। पृष्ठ्याभिप्लवषडहयोः प्रातःसवनेच्छावाकशस्त्रे आवापार्थमेतत्सूक्तं। सूत्रितश्च—यज्ञस्यहिस्थइत्यच्छावाकस्येति। चातुर्विंशिकेहनिप्रातः सवने यज्ञस्यहिस्थइति षळहस्तोत्रियसंज्ञकस्तृचः सूत्रितश्च—इन्द्राग्नीयुवामिमेयज्ञस्यहिस्थ-ऋत्विजेत्यच्छावाकस्येति। अग्निष्टोमे प्रातःसवनेच्छावाकस्य प्रातर्यावभिरिति प्रातःसवनीयस्य प्रस्थितयाज्या। सूत्रितश्च—प्रातर्यावभिरिति यजतीति। चातुर्विंशिकेप्रातःसवनेच्छावाकशस्त्रे श्यावाश्वस्येत्ययं पर्यासस्तृचः। अन्यत्राप्यहर्गणेषु। द्वितीयादिष्वहःसु सूत्र्यतेहि—श्यावाश्व-स्यसुन्वतइति तृचाः पर्यासाइति।

तत्र प्रथमा—

यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्मसु।
इन्द्राग्नीतस्यबोधतम् ॥ १ ॥

यज्ञस्य। हि। स्थः। ऋत्विजा। सस्नी इति। वाजेषु।
कर्मऽसु। इन्द्राग्नी इति। तस्य। बोधतम् ॥ १ ॥

हे इन्द्राग्नी सस्नी शुद्धौ युवां यज्ञस्य ऋत्विजा ऋत्विजौ स्थः भवथोहि। वाजेषु कर्मसु युद्धेषु चोपतिष्ठन्ताविन्द्राग्नी तस्य यजमानस्य मम स्तुतिं वा बोधतं जानीतम् ॥ १ ॥

१. इन्द्र और अग्नि, तुम लोग शुद्ध और ऋत्विक् हो। युद्धों और कर्मों में मुझ यजमान की स्तुति को जानो।

अथ द्वितीया—

तोशासारथयावानावृत्रहणापराजिता।
इन्द्राग्नीतस्यबोधतम् ॥ २ ॥

तोशासा। रथऽयावाना। वृत्रऽहना। अपराऽजिता।
इन्द्राग्नी इति। तस्य। बोधतम् ॥ २ ॥

हे इन्द्राग्नी तोशासा शत्रून् हिंसन्तौ रथयावाना रथेन गच्छन्तौ वृत्रहणा वृत्रस्य हन्तारौ अपराजिता केनाप्यपराजितौ तस्य तं मां बोधतम् ॥ २ ॥

२. इन्द्र और अग्नि, तुम लोग शत्रु-हिंसक, रथ के द्वारा गमनशील, वृत्रघ्न और अपराजित हो। तुम मुझे जानो।

अथ तृतीया—

इदंवांमदिरंमध्वधुक्षन्नद्रिभिर्नरः।
इन्द्राग्नीतस्यंबोधतम् ॥ ३ ॥

इदम्। वाम्। मदिरम्। मधु। अधुक्षन्। अद्रिऽभिः।
नरः। इन्द्राग्नी इति। तस्य। बोधतम् ॥ ३ ॥

हे इन्द्राग्नी वां युवां उद्दिश्य नरो यज्ञस्य नेतारोद्रिभिर्ग्रावभिः इदं मसिद्धं मदिरं मदकरं मधु सोमात्मकममृतं अधुक्षन् अपूरयन्। सिद्धमन्यत् ॥ ३ ॥

३. इन्द्र और अग्नि, यज्ञ के नेताओं ने तुम्हारे लिए, पाषाण के द्वारा, इस मदकर मधु (सोम) का दोहन किया है। तुम मुझे जानो।

अथ चतुर्थी—

जुषेथांयज्ञमिष्टयेसुतंसोमंसधस्तुती।
इन्द्राग्नीआगतंनरा ॥ ४ ॥

जुषेथाम्। यज्ञम्। इष्टये। सुतम्। सोमम्।
सधस्तुती इति सधऽस्तुती। इन्द्राग्नी इति। आ। गतम्। नरा ॥४॥

हे सधस्तुती सहभूतस्तुती नरानेताराविंद्राग्नी यज्ञं जुषेथां सेवेथां इष्टये यागाय सुतमभिषुतं सोमञ्च आगतमागच्छतम् ॥ ४ ॥

४. एक साथ ही स्तुत्य और नेता इन्द्र तथा अग्नि, यज्ञ की सेवा करो। यज्ञ के लिए अभिषुत सोम की ओर आओ।

अथ पञ्चमीं—

इमाजुषेथांसवनायेभिर्हव्यान्यूहथुः।
इन्द्राग्नीआगतंनरा ॥ ५ ॥

इमा। जुषेथाम्। सवना। येभिः। हव्यानि। ऊहथुः।
इन्द्राग्नी इति। आ। गतम्। नरा ॥ ५ ॥

हे इन्द्राग्नी नरानेतारौ युवां येभिः यैः सवनैः हव्यान्यूहथुः वहथस्तानीमा इमानि सवना सवनानि जुषेथां सेवेथामागतञ्च ॥ ५॥

५. इन्द्र और अग्नि, तुम लोग नेता हो। तुम लोग जिसके द्वारा हव्य का वहन करते हो, उसी सवन की सेवा करो। यहाँ आओ।

अथ षष्ठी–

इमांगा॑य॒त्रव॑र्तनिं॒जु॒षेथां॑सुष्टु॒तिंमम॑ ।
इन्द्रा॑ग्नी॒आग॑तंनरा ॥ ६ ॥ २० ॥

इ॒माम् । गा॒य॒त्रऽव॑र्तनिम् । जु॒षेथा॑म् । सु॒ऽस्तु॒तिम् । मम॑ ।
इन्द्रा॑ग्नी॒ इति॑ । आ । ग॒त॒म् । न॒रा ॥ ६ ॥ २०॥

हे इन्द्राग्नी नरौ युवां मम गायत्रवर्तनिं गायत्रमार्गामिमां सुष्टुतिं शोभनां स्तुतिं जुषेथां सेवेथामागतञ्च ॥ ६ ॥

६. नेता इन्द्र और अग्नि, तुम लोग इस गायत्र-मार्ग की सुन्दर स्तुति की सेवा करो। आओ।

॥ इति षष्ठस्य तृतीये विंशोवर्गः ॥ २० ॥

अथ सप्तमी–

प्रा॒त॒र्याव॑भि॒राग॑तंदे॒वेभि॑र्जेन्यावसू ।
इन्द्रा॑ग्नी॒सोम॑पीतये ॥ ७ ॥

प्रा॒त॒र्याव॑ऽभिः । आ । ग॒त॒म् । दे॒वेभि॑ः । जे॒न्या॒व॒सू॒ इति॑ ।
इन्द्रा॑ग्नी॒ इति॑ । सोम॑ऽपीतये ॥ ७ ॥

हे जेन्यावसू जेतव्यशत्रुधनाविन्द्राग्नी प्रातर्यावभिः देवेभिः देवैः सह सोमपीतये सोमस्य पानायागतमागच्छतम् ॥ ७ ॥

७. धन-विजयी इन्द्र और अग्नि, तुम लोग प्रातःकाल देवों के साथ सोमपान के लिए आओ।

अथाष्टमी–

श्या॒वाश्व॑स्यसु॒न्व॒तोत्री॒णांशृ॑णु॒तंहव॑म् ।
इन्द्रा॑ग्नी॒सोम॑पीतये ॥ ८ ॥

श्यावऽअश्वस्य । सुन्वतः । अत्रीणाम् । शृणुतम् । हवम् ।
इन्द्राग्नी इति । सोमऽपीतये ॥ ८ ॥

हे इन्द्राग्नी युवां सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य श्यावाश्वस्य ममात्रीणामृत्विजां हवमाह्वानं सोमस्य पानाय शृणुतम् ॥ ८ ॥

८. इन्द्र और अग्नि, सोमपान के लिए तुम लोग सोम का अभिषव करनेवाले श्यावाश्व के ऋत्विकों का आह्वान सुनो।

एवावामह्वऊतयेयथाहुवन्नमेधिराः ।
इन्द्राग्नीसोमपीतये ॥ ९ ॥

एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त ।
मेधिराः । इन्द्राग्नी इति । सोमऽपीतये ॥ ९ ॥

हे इन्द्राग्नी वां युवां यथा मेधिराः प्राज्ञा अहुवन्त आहूतवन्तः एव एवमहमूतये रक्षणाय सोमस्य पीतये चाह्वे ह्वयामि ॥ ९ ॥

९. इन्द्र और अग्नि, जैसे प्राज्ञों ने तुम्हें बुलाया है, वैसे ही मैं, रक्षा और सोमपान के लिए, तुम्हें बुलाता हूँ।

अथ दशमी—

आहंसरस्वतीवतोरिन्द्राग्न्योरवोवृणे ।
याभ्यांगायत्रमृच्यते ॥ १० ॥ २१ ॥

आ । अहम् । सरस्वतीऽवतोः । इन्द्राग्न्योः । अवः ।
वृणे । याभ्याम् । गायत्रम् । ऋच्यते ॥ १० ॥ २१ ॥

याभ्यां ययोरिन्द्राग्न्योरर्थं गायत्रं साम ऋच्यते स्तूयते तयोः सरस्वतीवतोः स्तुतिमतोरिन्द्राग्न्योः संबंध्यवो रक्षणमहमावृणे ॥ १० ॥

१०. जिनके लिए साम-गान किया जाता है, मैं उन्हीं स्तुतिवाले इन्द्र और अग्नि के पास रक्षण की प्रार्थना करता हूँ।

॥ इति षष्ठस्य तृतीये एकविंशोवर्गः ॥ २१ ॥

अग्निमस्तोषीति दशर्चं नवमं सूक्तं काण्वस्य नाभाकस्यार्षं षडष्टका महापंक्तिश्छन्दः अग्निर्देवता । अनुक्रान्तञ्च—अग्निमस्तोषिनाभाकआग्नेयं महापांक्तंहीति । विनियोगोलैङ्गिकः ।

तत्र प्रथमा—

अ॒ग्निम॑स्तोष्यृ॒ग्मिय॑म॒ग्निमी॒ळा य॒जध्यै॑ ।
अ॒ग्निर्दे॒वाँ अ॑नक्तु न उ॒भे हि वि॒दथे॑ क॒विर॒न्तश्चर॑ति दू॒त्यं१॒॑
नभ॑न्तामन्य॒के स॑मे ॥ १ ॥

अ॒ग्निम् । अ॒स्तो॒षि॒ । ऋ॒ग्मिय॑म् । अ॒ग्निम् । ई॒ळा । य॒जध्यै॑ ।
अ॒ग्निः । दे॒वान् । अ॒न॒क्तु॒ । नः॒ । उ॒भे इति॑ । हि । वि॒दथे॒ इति॑ ।
क॒विः । अ॒न्तरिति॑ । चर॑ति । दू॒त्य॑म् । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥१॥

ऋग्मियं ऋगर्हं अग्निमस्तोषि स्तौमि । अपिचाग्निं यजध्यै यष्टुमीळा स्तुत्या स्तौमीत्यर्थः अपिचाग्निर्नोस्माकं विदथे यज्ञे देवान् हविर्भिरनक्तु । कविः क्रान्तदर्श्यग्निः उभे द्यावापृथिव्यावन्तर्मध्ये दूत्यं हविर्वहनादिलक्षणं दूतकर्म चरति । अन्यके शत्रवोपि समे सर्वे नभन्तां नभतिर्हिंसाकर्मा अग्निना हिंस्यन्ताम् ॥ १ ॥

१. ऋक् मन्त्रों के योग्य अग्नि की मैं स्तुति करता हूँ। यज्ञ के लिए स्तुति-द्वारा मैं अग्नि की स्तुति करता हूँ। हमारे यज्ञ में अग्नि हव्य-द्वारा देवों की पूजा करें। कवि अग्नि स्वर्ग और पृथिवी के बीच दूत-कर्म करते हैं। अग्नि सारे शत्रुओं को मारें।

न्य॑ग्ने॒ नव्य॑सा॒ वच॑स्त॒नूषु॒ शंस॑मेषाम् ।
न्यरा॑ती॒ररा॑व्णां॒ विश्वा॑ अ॒र्यो अरा॑ती॒रि॒तो यु॑च्छन्त्वा॒मुरो॒ नभ॑
न्तामन्य॒के स॑मे ॥ २ ॥

नि । अ॒ग्ने॒ । नव्य॑सा । वचः॑ । त॒नूषु॑ । शंस॑म् । ए॒षा॒म् । नि ।
अरा॑तीः । ररा॑व्णाम् । विश्वाः॑ । अ॒र्यः । अरा॑तीः । इ॒तः ।
यु॒च्छ॒न्तु॒ । आ॒ऽमुरः॑ । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ २ ॥

हे अग्ने तनूष्वस्माकमंगेषु नव्यसा नवतरेण वचः वचसा स्तोत्रेण एषां शत्रूणां शंसं शंसनं निदहेत्यर्थः । रराव्णां हविःप्रयच्छन्तामरातीः शत्रूंश्च निदह । अपिच विश्वाः सर्वे अर्योभिगच्छन्त । आमुरः आमूढा अरातीः शत्रवः इतोयुच्छन्तु गच्छन्तु । सिद्धमन्यत् ॥ २ ॥

२. अग्नि, नवीन स्तोत्रों के द्वारा हमारे अङ्गों में जो शत्रुओं की (भावी) हिंसा है, उसे जलाना। हव्यदाताओं के शत्रुओं को जलाओ। अभिगमनवाले सारे मूढ़ शत्रु यहाँ से चले जायें। अग्नि सारे शत्रुओं को मारें।

अथ तृतीया—

अग्ने॒ मन्मा॑नि॒ तुभ्यं॒ कं घृ॒तं न जु॑ह्व आ॒सनि॑ ।
स दे॒वेषु॒ प्र चि॑किद्धि॒ त्वं ह्यसि॑ पू॒र्व्यः शि॒वो दू॒तो वि॒वस्व॑तो॒ नभ॑न्तामन्य॒के स॑मे ॥ ३ ॥

अग्ने॑ । मन्मा॑नि । तुभ्य॑म् । कम् । घृ॒तम् । न । जु॒ह्वे॒ । आ॒सनि॑ ।
सः । दे॒वेषु॑ । प्र । चि॒कि॒द्धि॒ । त्वम् । हि । असि॑ । पू॒र्व्यः ।
शि॒वः । दू॒तः । वि॒वस्व॑तः । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ ३ ॥

हे अग्ने तुभ्यं त्वदर्थं आसनि आस्ये कं घृतं न यथा सुखकरं घृतं जुह्वत्यन्ये तद्वदहमपि तवास्ये मन्मानि मननीयानि स्तोत्राणि जुह्वे जुहोमि । सत्वं देवेषु देवानां मध्ये प्रचिकिद्धि अस्मदीयाः स्तुतीर्जानीहि । हि अपिच त्वं पूर्व्यः प्रत्नोसि शिवः सुखकरश्चासि विवस्वतो दूतश्चासि । सिद्धमन्यत् ॥ ३ ॥

३. अग्नि, तुम्हारे मुंह में सुखकर घृत के समान स्तोत्र का होम करता हूँ। देवों में तुम हमारी स्तुति को जानो। तुम प्राचीन हो, सुखकर हो और देवों के दूत हो। अग्नि सारे शत्रुओं को मारें।

तत्त॑द॒ग्निर्वयो॑ दधे॒ यथा॑यथा कृप॒ण्यति॑ ।
ऊ॒र्जाहु॑तिर्वसू॑नां॒ शं च॒ योश्च॒ मयो॑ दधे॒ विश्व॑स्यै दे॒वहू॑त्यै॒ नभ॑न्तामन्य॒के स॑मे ॥ ४ ॥

तत्ऽत॑त् । अ॒ग्निः । वयः॑ । द॒धे॒ । यथा॑ऽयथा । कृ॒प॒ण्यति॑ ।
ऊ॒र्जाऽआ॑हुतिः । वसू॑नाम् । शम् । च॒ । योः । च॒ । मयः॑ । द॒धे॒ ।
विश्व॑स्यै । दे॒वऽहू॑त्यै । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ ४ ॥

यथा यथा यद्यदन्नं कृपण्यति स्तोतृभिर्याच्यते तत्तद्वयोग्निर्दधे स्तोतृभ्यः प्रयच्छति अपिचोर्जाहुतिरन्नेनाहूयमानोग्निः वसूनां हविषां वासकानां यजमानानां शं शांतिनिमित्तं योः विषययोगजनितं च मयः सुखं दधे करोति । विश्वस्यै देवहूत्यै सर्वस्मै देवानां ह्वानाय च भवति यः कश्चनापि देवो यदि हूयते अग्निरेव सर्वं करोतीत्यर्थः । सिद्धमन्यत् ॥ ४ ॥

४. स्तोता लोग जो-जो अन्न माँगते हैं, अग्नि वही-वही अन्न प्रदान करते हैं। अग्नि अन्न के द्वारा बुलाये जाकर यजमानों को शान्तिकर और विषयोपभोग-जन्य सुख देते हैं। वह सारे देवों के आह्वानों में रहते हैं। अग्नि सारे शत्रुओं को मारें।

अथ पञ्चमी—

सचिकेतसहीयसाग्निश्चित्रेणकर्मणा।
सहोताशश्वतीनांदक्षिणाभिरभीवृतइनोतिचप्रती
व्यंनभन्तामन्यकेसमे ॥ ५ ॥ २२ ॥

सः। चिकेत। सहीयसा। अग्निः। चित्रेण। कर्मणा। सः।
होता। शश्वतीनाम्। दक्षिणाभिः। अभिऽवृतः। इनोति। च।
प्रतीव्यम्। नभन्ताम्। अन्यके। समे ॥ ५ ॥ २२ ॥

सोग्निः सहीयसा अभिभावुकेन चित्रेण नानाविधेन कर्मणा व्यापारेण चिकेत ज्ञायते सोग्निः शश्वतीनां बह्वीनां देवतानां होता ह्वाता दक्षिणाभिः पशुभिश्चाभीवृतः परिवृतः प्रतीव्यं प्रत्येतव्यं शत्रुमिनोतिच गच्छतिच। सिद्धमन्यत ॥ ५ ॥

५. वे अग्नि अभिभवकारक नाना प्रकार के कर्मों के द्वारा जाने जाते हैं। वे सारे देवों के होता हैं। वे पशुओं से घेरे गये हैं। वे शत्रुओं के सम्मुख गमन करते हैं। अग्नि सारे शत्रुओं को मारें।

॥ इति षष्ठस्य तृतीये द्वाविंशोवर्गः ॥ २२ ॥

अग्निर्जातादेवानामग्निर्वेदमर्तानामपीच्यम्।
अग्निःसद्रविणोदाअग्निर्द्वाराव्यूर्णुतेस्वाहुतोनवी
यसानभन्तामन्यकेसमे ॥ ६ ॥

अग्निः। जाता। देवानाम्। अग्निः। वेद। मर्तानाम्। अपीच्यम्।
अग्निः। सः। द्रविणःऽदाः। अग्निः। द्वारा। वि। ऊर्णुते। सुऽआहुतः।
नवीयसा। नभन्ताम्। अन्यके। समे ॥ ६ ॥

देवानां जाता जातानि जन्मान्यग्निर्वेद वेत्ति मर्तानां मनुष्याणां चापीच्यं गुह्यमग्निर्वेद वेत्ति सोग्निर्द्रविणोदाः धनस्य दाता नवीयसा नवतरेण हविषा स्वाहुतः सम्यक्हुतोग्निः द्वारा धनस्य द्वाराणि व्यूर्णुतेच। सिद्धमन्यत ॥ ६ ॥

६. अग्नि देवों का जन्म जानते हैं। अग्नि मनुष्यों के गोपनीय को जानते हैं। अग्नि धनद हैं। वे अभिनव हव्य-द्वारा भली भाँति आहूत होकर धन का द्वार उद्घाटित करते हैं। अग्नि सारे शत्रुओं को मारें।

अग्निर्देवेषुसंवसुःसविक्षुयज्ञियास्वा।
समुदाकाव्यापुरुविश्वंभूमेवपुष्यतिदेवोदेवेषुयज्ञियो
नभन्तामन्यकेसमे ॥ ७ ॥

अग्निः । देवेषु । सम्ऽवसुः । सः । विक्षु । यज्ञियासु । आ । सः । मुदा । काव्या । पुरु । विश्वम् । भूमऽइव । पुष्यति । देवः । देवेषु । यज्ञियः । नभन्ताम् । अन्यके । समे ॥ ७ ॥

यो देवेषु मध्येग्निः संवसुः संवसति सोग्निर्यज्ञियासु यज्ञार्हासु विक्षु प्रजास्वप्यासंवसुः। किञ्च सोग्निः पुरु बहूनि काव्या कर्माणि भूमेव यथा भूमिः विश्वं तथा मुदा मोदेन पुष्यति देवेषु मध्ये देवोग्निर्यज्ञियोयज्ञार्हश्च भवति । सिद्धमन्यत् ॥ ७ ॥

७. अग्नि देवों में रहते हैं। वे यज्ञार्ह प्रजागण में रहते हैं जैसे भूमि सारे संसार का पोषण करती है, वैसे ही वे सहर्ष सारे कार्यों का पोषण करते हैं। अग्नि देवों में यज्ञ-योग्य हैं। वे सारे शत्रुओं को मारें।

योअग्निःसप्तमानुषःश्रितोविश्वेषुसिन्धुषु ।
तमागन्मत्रिपस्त्यंमंधातुर्दस्युहन्तममग्निंयज्ञेषुपूर्व्यं
नभन्तामन्यकेसमे ॥ ८ ॥

यः । अग्निः । सप्तऽमानुषः । श्रितः । विश्वेषु ।
सिन्धुषु । तम् । आ । अगन्म । त्रिऽपस्त्यम् ।
मन्धातुः । दस्युहन्ऽतमम् । अग्निम् । यज्ञेषु ।
पूर्व्यम् । नभन्ताम् अन्यके । समे ॥ ८ ॥

योग्निः सप्तमानुषः विश्वेषु सर्वेषु सिन्धुषु नदीषु श्रितः त्रिपस्त्यं त्रिस्थानं मन्धातुः यौवनाश्वस्य मान्धातुर्दस्युहन्तमं दस्यूनां हन्तारं यज्ञेषु पूर्व्यं मुख्यं तमग्निं वयमागन्म । सिद्धमन्यत् ॥ ८ ॥

८. अग्नि सात मनुष्यों (सिन्धु आदि सात नदियों के तट-वासियों) वाले और सारी नदियों में आश्रित हैं। वे तीन स्थानों (द्यौ, पृथिवी और अन्तरिक्ष) वाले हैं। अग्नि ने यौवनाश्व के पुत्र मान्धाता के लिए सर्वापेक्षा अधिक दस्यु-हनन किया है। वे यज्ञों में मुख्य हैं। अग्नि समस्त शत्रुओं को मारें।

अग्निस्त्रीणित्रिधातून्याक्षेतिविदथाकविः।
सत्रीँरेकादशाँइहयक्षच्चपिप्रयच्चनोविप्रोदूतःपरि
ष्कृतोनभन्तामन्यकेसमे ॥ ९ ॥

अग्निः । त्रीणि । त्रिऽधातूनि । आ । क्षेति । विदथा ।
कविः । सः । त्रीन् । एकादशान् । इह । यक्षत् । च । पिप्रयत् ।
च । नः । विप्रः । दूतः । परिऽष्कृतः । नभन्ताम् । अन्यके । समे ॥९॥

कविः क्रान्तदर्श्यग्निः त्रीणि त्रिधातूनि त्रिबंधनानि पृथिव्यादीनि विदथा वेदनीयानि स्थानान्याक्षेत्यावसति अपिच सोग्निर्दूतो देवानां विप्रः प्राज्ञः परिष्कृतोलंकृतश्च सन्निह यज्ञे त्रीनेकादशान् त्रयस्त्रिंशद्देवान् यक्षद्यजतु नोस्मान् पिप्रयच्च कामैः पूरयतु च। सिद्धमन्यत्॥९॥

९. कवि (क्रान्तदर्शी) अग्नि भू आदि तीन प्रकार के तीन स्थानों में रहते हैं। अग्नि दूत, प्राज्ञ और अलंकृत होकर इस यज्ञ में तैंतीस देवों का यज्ञ करें। हमारी अभिलाषा पूर्ण करें। अग्नि सारे शत्रुओं को मारें।

त्वंनोअग्नआयुषुत्वंदेवेषुपूर्व्यवस्वएकइरज्यसि।
त्वामापःपरिस्रुतःपरियन्तिस्वसेतवोनभन्तामन्यकेसमे॥१०॥२३॥

त्वम् । नः । अग्ने । आयुषु । त्वम् । देवेषु । पूर्व्य । वस्वः । एकः ।
इरज्यसि । त्वाम् । आपः । परिऽस्रुतः । परि । यन्ति ।
स्वऽसेतवः । नभन्ताम् । अन्यके । समे ॥ १० ॥ २३ ॥

हे पूर्व्याग्ने त्वमेकएव आयुषु मनुष्येषु द्रुत्यव आयव इति मनुष्यनामसु पाठात् नोस्माकं वस्वोधनस्य इरज्यसि ईशिषे देवेष्वपि त्वमेकएव वस्व इरज्यसि। अपिच त्वां स्वसेतवः स्वभूतसेतवः परिस्रुतः परिस्रवन्त्यः आपः परियन्ति। परिगच्छन्ति सिद्धमन्यत् ॥ १० ॥

१०. प्राचीन अग्नि, तुम अकेले ही मनुष्यों और देवों के ईश्वर हो। तुम सेतु-स्वरूप हो। तुम्हारे चारों ओर जल जाता है। अग्नि सारे शत्रुओं को मारें।

॥ इति षष्ठस्य तृतीये त्रयोविंशोवर्गः ॥ २३ ॥

इन्द्राग्नीयुवमिति द्वादशर्चं दशमं सूक्तं नाभाकस्यार्षं द्वितीया षट्पञ्चाशदक्षरा शक्करी द्वादशीत्रिष्टुप् शिष्टामहापंक्तयः इन्द्राग्नीदेवता। तथाचानुक्रान्तम्—इन्द्राग्नीद्वादशैन्द्राग्नंत्रिष्टुबन्त्यं द्वितीया शक्करीति। महाव्रते निष्केवल्ये ऊरुभागएव सूक्तं। तथाचपञ्चमारण्यके सूत्रितम्—ऊ-

रूइन्द्राग्नीयुवंसुनइति । चातुर्विंशिकेहनि तृतीयसवने मैत्रावरुणो यदि महावालभिदं शंसेत्त-दानीं माध्यन्दिने सवने होत्रकाःस्वशस्त्रे आरंभणीयाभ्यऊर्ध्वं नाभाकतृचावावपेरन् तत्र ताहि-मध्यमित्यच्छावाकस्य नाभाकतृचः । सूत्रितश्च—ताहिमध्यंभराणामित्यच्छावाकइति । चातुर्विं-शिकेहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनःपूर्वीष्टइन्द्रेति नाभाकतृचः । सूत्रितश्च—पूर्वीष्टइ-न्द्रोपमातयइतिब्राह्मणाच्छंसीति ।

तत्र प्रथमा—

इन्द्राग्नीयुवंसुनःसहन्तादासथोरयिम् ।
येनंदृह्लासमत्स्वावीळुचित्साहिषीमह्यग्निर्वनेववात
इन्नभन्तामन्यकेसमे ॥ १ ॥

इन्द्राग्नी इति । युवम् । सु । नः । सहन्ता । दासथः । रयिम् ।
येन । दृह्ला । समत्ऽसु । आ । वीळु । चित् । सहिषीमहि ।
अग्निः । वनाऽइव । वाते । इत् । नभन्ताम् । अन्यके । समे ॥ १ ॥

हे इन्द्राग्नी सहन्ता शत्रूनभिभवन्तौ युवं युवां नोस्मभ्यं रयिं धनं सुष्ठु दासथः दत्तं । तं रयिं विशिनष्टि येन रयिणा समत्सु संग्रामे दृढाचित् दृढानि स्थिराण्यपि वीळु शत्रुबलानि अग्निर्वनेव यथाग्निर्वनानि वातइद्वातेनैवाभिभवति तथा सहिषीमहि अभिभवाम । सिद्धमन्यत् ॥ १ ॥

१. इन्द्र और अग्नि, शत्रुओं को हराते हुए हमें धन दो। जैसे अग्नि वायु-द्वारा वन को अभिभूत करते हैं, वैसे ही हम भी उस धन की सहायता से दृढ़ शत्रु-बल को दबावेंगे। इन्द्र और अग्नि सारे शत्रुओं को मारें।

अथ द्वितीया—

नहिवांवव्रयामहेथेन्द्रमिद्यजामहेशविष्ठंनृणांनरम् ।
सनःकदाचिदर्वतागमदावाजसातयेगमदामेधसातं
येनभन्तामन्यकेसमे ॥ २ ॥

नहि । वाम् । वव्रयामहे । अथ । इन्द्रम् । इत् । यजामहे ।
शविष्ठम् । नृणाम् । नरम् । सः । नः । कदा । चित् । अर्वता ।
गमत् । आ । वाजऽसातये । गमत् । आ ।
मेधऽसातये । नभन्ताम् । अन्यके । समे ॥ २ ॥

हे इन्द्राग्नी वां युवां न वन्रयामहे वयं धनं न याचामहे। अथत्यपि तर्हि शविष्ठं अतिशयेन बलवन्तं नृणां नरं नेतॄणामपि नेतारं इन्द्रमिदिन्द्रमेव यजामहे सइन्द्रो नोस्मानर्वताश्वेन कदाचिद्वाजसातयेन्नलाभायागमदागच्छति कदाचिन्मेधसातये यज्ञभजनायागमत्। सिद्धमन्यत् ॥ २ ॥

२. इन्द्र और अग्नि, हम तुमसे धन की याचना नहीं करते। सबसे बली और नेताओं के नेता इन्द्र का ही यज्ञ करते हैं। इन्द्र अभी अश्व पर चढ़कर अन्न-प्राप्ति के लिए आते हैं और कभी यज्ञ-प्राप्ति के लिए आते हैं। इन्द्र और अग्नि सारे शत्रुओं को मारें।

ताहिमध्यंभराणामिन्द्राग्नीअधिक्षितः।
ताउंकवित्वनाकवीपृच्छ्यमानासखीयतेसंधीतमश्नुतं
नरानभन्तामन्यकेसमे ॥ ३ ॥

ता। हि। मध्यम्। भराणाम्। इन्द्राग्नी इति। अधिऽक्षितः। तौ।
ऊँम् इति। कविऽत्वना। कवी इति। पृच्छ्यमाना। सखिऽयते।
सम्। धीतम्। अश्नुतम्। नरा। नभन्ताम्। अन्यके। समे ॥ ३ ॥

ता तौ प्रसिद्धाविन्द्राग्नी भराणां मध्यं अधिक्षितः अधिनिवसतो हि। अथ प्रत्यक्षस्तुतिः हे नरा नेतारौ कवित्वना कवित्वेन कवी क्रान्तकर्माणौ पृच्छ्यमाना कविजनैः पृच्छ्यमानौ ताउ तावेवयुवां सखीयते सखित्वमिच्छते यजमानाय धीतं तत्कृतं कर्म समश्नुतम्। सिद्धमन्यत् ॥३॥

३. वे प्रसिद्ध इन्द्र और अग्नि युद्ध के मध्यस्थल में निवास करते हैं। नेताओ, कवि (क्रान्तकर्मी) द्वारा पूछे जाने पर तुम्हीं लोग मित्रता चाहनेवाले यजमान के कृत कर्म को व्याप्त करते हो। इन्द्र और अग्नि सारे शत्रुओं की हिंसा करें।

अभ्यर्चनभाकवदिन्द्राग्नीयजसागिरा।
ययोर्विश्वमिदंजगदियंद्यौःपृथिवीमह्यु१पस्थेबि
भृतोवसुनभन्तामन्यकेसमे ॥ ४ ॥

अभि। अर्च। नभाकऽवत्। इन्द्राग्नी इति। यजसा। गिरा।
ययोः। विश्वम्। इदम्। जगत्। इयम्। द्यौः। पृथिवी। मही।
उपऽस्थे। बिभृतः। वसु। नभन्ताम्। अन्यके। समे ॥ ४ ॥

हे नाभाक नभाकवत् नभाकवन्ताविन्द्राग्नी यजसा यागेन गिरा स्तुत्या चाभ्यर्चाभिपूजय। ययोरिन्द्राग्न्योर्विश्वं सर्वमिदं जगत्तिष्ठति ययोश्चोपस्थे इयं द्यौर्मही महती पृथिवी च द्यावापृथिव्यावुभे वसु धनं बिभृतो धारयतः। सिद्धमन्यद् ॥ ४ ॥

४. यज्ञ और स्तुति के द्वारा नाभाकवाले इन्द्र और अग्नि की पूजा करो। इन्द्र और अग्नि में यह सारा संसार विद्यमान है। इन्हीं इन्द्र और अग्नि की गोद में महती मही और द्युलोक धन को धारण करते हैं। इन्द्र और अग्नि सारे शत्रुओं को मारें।

प्रब्रह्माणिनभाकवदिन्द्राग्निभ्यांमिरज्यत।
यासप्तबुध्नमर्णवंजिह्मबारमपोर्णुतइन्द्रईशानओजं
सानभन्तामन्यकेसमे ॥ ५ ॥

प्र। ब्रह्माणि। नभाकऽवत्। इन्द्राग्निऽभ्याम्। इरज्यत। या। सप्तऽबुध्नम्। अर्णवम्। जिह्मऽबारम्। अपऽऊर्णुतः। इन्द्रः। ईशानः। ओजसा। नभन्ताम्। अन्यके। समे ॥ ५ ॥

ब्रह्माणि स्तोत्राणि इन्द्राग्निभ्यां नभाकवत् प्रेरज्यत नाभाकः प्रेरयते। या याविन्द्राग्नी सप्तबुध्नं सप्तमूलं जिह्मबारं पिहितद्वारमर्णवमपोर्णुतस्तेजोभिराच्छादयतः तयोर्मध्ये ओजसा बलेनेन्द्रईशानईश्वरोभवति। सिद्धमन्यत्॥ ५ ॥

५. नाभाक के समान ऋषि इन्द्र और अग्नि के लिए स्तुति प्रेरित करते हैं। ये इन्द्र और अग्नि सप्त मूलवाले हैं और अवरुद्ध द्वारवाले समुद्र को तेज के द्वारा आच्छादित करते हैं। इन्द्र बल-द्वारा ईश्वर हैं। इन्द्र और अग्नि सारे शत्रुओं को मारें।

अपिवृश्चपुराणवद्व्रततेरिवगुष्पितमोजोदासस्यदम्भय।
वयंतदस्यसंभृतंवस्विन्द्रेणविभजेमहिनभन्तामन्यकेसमे॥६॥२४॥

अपि। वृश्च। पुराणऽवत्। व्रततेःऽइव। गुष्पितम्। ओजः। दासस्य। दम्भय। वयम्। तत्। अस्य। सम्ऽभृतम्। वसु। इन्द्रेण। वि। भजेमहि। नभन्ताम्। अन्यके। समे ॥ ६ ॥ २४ ॥

अपिच हे इन्द्र पुराणवत्मन्नो यथा व्रततेरिव यथा लतायागुष्पितं निर्गतां शाखां वृश्चति तथा शत्रूणां वृश्च छेदय। तदेवाह दासस्य दासनामकस्य शत्रोः ओजोबलं दंभय नाशय। अथ परोक्षस्तुतिः वयं नाभाकाः अस्य दासस्य तत्संसिद्धं संभृतं वसु इन्द्रेण हेतुना विभजेमहि। सिद्धमन्यत्॥ ६ ॥

६. इन्द्र, प्राचीन मनुष्य जैसे लता की शाखा को काटता है, वैसे ही तुम सारे शत्रुओं को काटो। दास नामक शत्रु के बल का विनाश करो। हम इन्द्र की कृपा से दास के उस संगृहीत धन का विभाग कर लेंगे। इन्द्र और अग्नि सारे शत्रुओं को मारें।

॥ इति षष्ठस्य तृतीये चतुर्विंशोवर्गः ॥ २४ ॥

यदिन्द्राग्नीजनाइमेविह्वयन्तेतनागिरा।
अस्माकेभिर्नृभिर्वयंसासह्यामपृतन्यतोवनुयामव
नुष्यतोनभन्तामन्यकेसमे ॥ ७ ॥

यत्। इन्द्राग्नी इति। जनाः। इमे। विऽह्वयन्ते। तना। गिरा।
अस्माकेभिः। नृऽभिः। वयम्। ससह्याम। पृतन्यतः। वनुयाम।
वनुष्यतः। नभन्ताम्। अन्यके। समे ॥ ७ ॥

यत् ये इमे जनाः तना धनेन गिरा स्तुत्या च इन्द्राग्नी विह्वयन्ते विशेषेण ह्वयन्ति तेषु मध्ये वयं नाभाकाः पृतन्यतः पृतनामिच्छन्तः अस्माकेभिरस्माकीनैर्नृभिर्मनुष्यैः ससह्याम शत्रूनभिभवेम। वनुष्यतः स्तुतिमिच्छन्तः शत्रून् वनुयामच। सिद्धमन्यत् ॥ ७ ॥

७. ये जो सब मनुष्य धन और स्तुति के द्वारा इन्द्र और अग्नि को बुलाते हैं, उनमें ससैन्य हम अपने मनुष्यों की सहायता से शत्रुओं को हरावेंगे और स्तुतिवाले शत्रु को ग्रहण करेंगे।

यानुश्वेताववोदिवउच्चरातउपद्युभिः।
इन्द्राग्न्योरनुव्रतमुहानायन्तिसिन्धवोयान्त्सींबन्धा
दमुञ्चतांनभन्तामन्यकेसमे ॥ ८ ॥

या। नु श्वेतौ। अवः। दिवः। उत्ऽचरातः। उप। द्युऽभिः। इन्द्राग्न्योः।
अनु। व्रतम्। उहानाः। यन्ति। सिन्धवः। यान्। सीम्।
बन्धात्। अमुञ्चताम्। नभन्ताम्। अन्यके। समे ॥ ८ ॥

यानु यावेवेन्द्राग्नी श्वेतौ श्वेतवर्णौ सत्वगुणोपेतावित्यर्थः अवोधस्तात् द्युभिर्दीप्तिभिर्दिवउपोच्चरातः उच्चरतस्तयोरेवेन्द्राग्न्योः उहानाः हविर्वहन्तो यजमानाः व्रतं कर्मानुयन्ति। अपि सीमिमाविन्द्राग्नी यान् प्रसिद्धान् सिन्धवः सिन्धून् बन्धात् बन्धनादमुञ्चताम्। सिद्धमन्यत् ॥८॥

८. जो श्वेतवर्ण (सात्त्विक) इन्द्र और अग्नि नीचे से दीप्ति-द्वारा द्यो के ऊपर जाते हैं, उन्हीं के लिए हवि का वहन करते हुए यजमान कर्मानुष्ठान करते हैं। उन्होंने ही प्रख्यात सिन्धु आदि नदियों को बन्धन से मुक्त किया था। इन्द्र और अग्नि सारे शत्रु को मारें।

अथ नवमी—

पूर्वीष्टइन्द्रोपमातयःपूर्वीरुतप्रशस्तयःसूनोहिन्वस्यहरिवः।
वस्वोवीरस्यापृचोयानुसाधन्तनोधियोनभन्तामन्यकेसमे ॥ ९ ॥

पूर्वीः । ते । इन्द्र । उपऽमातयः । पूर्वीः । उत । प्रऽशंस्तयः । सूनो इति ।
हिन्वस्य । हरिऽवः । वस्वः । वीरस्य । आऽपृचः । याः । नु ।
साधन्त । नः । धियः । नभन्ताम् । अन्यके । समे ॥ ९ ॥

हे हरिवो वज्रिन् सूनो प्रेरयितरिन्द्र हिन्वस्य प्रीणयितुः वस्वोदीपकस्य वीरस्यापृचो-धनान्युपयच्छतस्ते तव ता उपमातयउपमानानि पूर्वीर्बहूनि उतापिच प्रशस्तयः पूर्वीः याः नोस्माकं धियः प्रज्ञां नु क्षिप्रं साधन्तासाधयन् । सिद्धमन्यत् ॥ ९ ॥

९. हरि नामक अश्ववाले, वज्रधर और प्रेरक इन्द्र, तुम प्रीतिकर, वीर और धनी हो। तुम्हारे लिए उपमान की अनेक वस्तुएँ हैं। तुम्हारी अनेक प्राचीन प्रशस्तियाँ भी हैं। ये प्रशस्तियाँ हमारी बुद्धि को सिद्ध करें। इन्द्र और अग्नि शत्रुओं को मारें।

तंशिशीतासुवृक्तिभिस्त्वेषंसत्वानमृग्मियम् ।
उतोनुचिद्यओजसाशुष्णस्याण्डानिभेदतिजेष
त्स्वर्वतीरपोनभन्तामन्यकेसमे ॥ १० ॥

तम् । शिशीत । सुवृक्तिऽभिः । त्वेषम् । सत्वानम् । ऋग्मियम् ।
उतो इति । नु । चित् । यः । ओजसा । शुष्णस्य । आण्डानि ।
भेदति । जेषत् । स्वःऽवतीः । अपः । नभन्ताम् । अन्यके । समे ॥ १० ॥

हे स्तोतारः त्वेषं दीप्तं सत्वानं संभक्तारं धनानां ऋग्मियं ऋगर्हं ऋग्भिः स्तोतव्यं तमिन्द्रं सुवृक्तिभिः स्तुतिभिः शिशीत संस्कुरुत । उतोनुचित् अपिच यः इन्द्रः ओजसा बलेन शुष्णस्य शुष्णनामकस्यासुरस्याण्डान्यण्डजातान्यपत्यानि भेदत्यभिनत् सः स्वर्वतीर्दिव्यान्यपः सलिलानि जेषज्जयतु । सिद्धमन्यत् ॥ १० ॥

१०. स्तोताओ, दीप्त, धन-पात्र और ऋग्-मंत्र के योग्य इन्द्र को उत्तम स्तुति-द्वारा संस्कृत करो। जो इन्द्र शुष्म नामक असुर के अपत्यों को मारते हैं, वही स्वर्गीय जल को जीतते हैं। इन्द्र और अग्नि सारे शत्रुओं को मारें।

तंशिशीतास्वध्वरंसत्यंसत्वानमृत्वियम् ।
उतोनुचिद्यओहतआण्डाशुष्णस्यभेदत्यजैः
स्वर्वतीरपोनभन्तामन्यकेसमे ॥ ११ ॥

तम् । शिशीत । सुऽअध्वरम् । सत्यम् । सत्वानम् । ऋत्वियम् ।
उतो इति । नु । चित् । यः । ओहते । आण्डा । शुष्णस्य । भेदति ।
अजैः । स्वःऽवतीः । अपः । नभन्ताम् । अन्यके । समे ॥ ११ ॥

हे स्तोतारः स्वध्वरं सुयज्ञं सत्यमविनाशं सत्वानं संभक्तारस्त्वियम्तौयष्टव्यं तमिन्द्रं शिशीत स्तुतिभिः संस्कुरुत । अथ प्रत्यक्षस्तुतिः उतोनुचिद् अपिच यइन्द्रः ओहते यज्ञं प्रतिगच्छति शुष्णस्याण्डानि अण्डजातानिच भेदति भिनत्ति सत्वं स्ववंतीर्दिव्यान्यपः सलिलान्यजैरजैषीः । सिद्धमन्यद् ॥ ११ ॥

११. स्तोताओ, सुन्दर यज्ञवाले, अविनाशी, धनी और याग-योग्य इन्द्र को स्तुति-द्वारा संस्कृत करो। जो इन्द्र यज्ञ के अभिमुख जाते हैं, वे शुष्ण के अण्डों (अपत्यों) को मारते और स्वर्गीय जल को जीतते हैं। इन्द्र और अग्नि सारे शत्रुओं को मारें।

एवेन्द्राग्निभ्यांपितृवन्नवीयोमन्धातृवदङ्गिरस्वदवाचि ।
त्रिधातुनाशर्मणापातमस्मान्वयंस्यामपतंयोरयीणाम् ॥ १२ ॥ २५ ॥

एव । इन्द्राग्निऽभ्याम् । पितृऽवत् । नवीयः । मन्धातृऽवत् ।
अङ्गिरस्वत् । अवाचि । त्रिऽधातुना । शर्मणा । पातम् ।
अस्मान् । वयम् । स्याम । पतयः । रयीणाम् ॥ १२ ॥ २५ ॥

एवैवं याभ्यामिन्द्राग्निभ्यां पितृवन्नभाकवद् मन्धातृवद् यौवनाश्वमन्धातृवद् चांगिरस्वदंगिरोवच्च नवीयोनवतरमवाचि नाभाकेन मया पाठिताविन्द्राग्नी त्रिधातुना त्रिपर्वणा शर्मणा गृहेण नोस्मान्नाभाकान् पातं रक्षतं । वयं रयीणां धनानां पतयः स्वामिनः स्याम भवेम ॥ १२ ॥

१२. मैंने पिता मान्धाता और अङ्गिरा के समान इन्द्र और अग्नि के लिए नवीन स्तुतियों का पाठ किया है। वे तीन पर्वों (कोठों) वाले गृह-द्वारा हमारा पालन करें। हम धनाधिपति होंगे।

॥ इति षष्ठस्य तृतीये पञ्चविंशोवर्गः ॥ २५ ॥

अस्माऊष्विति दशर्चमेकादशं सूक्तं अत्रेयमनुक्रमणिका—अस्माऊषुदशवारुणंत्विति । नाभाकऋषिः अनुवृत्तत्वात् । महापांक्तंहीत्युक्तत्वादिदमपि महापांक्तं । इदमादिकेद्वे सूक्ते वरुणदेवत्ये । विनियोगेलैंगिकः । चातुर्विंशिकेहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रे आरंभणीयायाऊर्ध्वं सक्षपइत्ययं नाभाकतृचः । सूत्रितञ्च—सक्षपःपरिषस्वजइति मैत्रावरुणइति यःककुभइत्येतत्प्रभृतिकोवा नाभाकतृचः सूत्रितञ्च—यः ककुभोनिधारयइतिचेति ।

तत्र प्रथमा—

अस्माऊषुप्रभूतयेवरुणायमरुद्भ्योर्चाविदुष्टरेभ्यः ।
योधीतामानुषाणांपश्वोगाइवरक्षतिनभन्तामन्यकेसमे ॥ १ ॥

अस्मै । ऊँ इति । सु । प्रऽभूतये । वरुणाय । मरुत्ऽभ्यः ।
अर्च । विदुःऽतरेभ्यः । यः । धीता । मानुषाणाम् ।
पश्वः । गाःऽइव । रक्षति । नभन्ताम् । अन्यके । समे ॥ १ ॥

हे स्तोतः सुप्रभूतये प्रकृष्टधनायास्मै वरुणाय विदुष्टरेभ्यो विद्वत्तरेभ्यो मरुद्भ्यश्चार्च स्तुहि । योवरुणो धीता कर्मणा मानुषाणां मनुष्याणांपश्वः पशून् गाइव रक्षति । सिद्धमन्यत् ॥१॥

१. स्तोता, प्रचुर धन की प्राप्ति के लिए, इन वरुण और अतिशय विद्वान् मरुतों के निमित्त स्तुति करो। कर्म-द्वारा वरुण मनुष्यों के पशु की गौओं के समान रक्षा करते हैं। वे सारे शत्रुओं को मारें।

तमूषुसमनागिरापितॄणांचमन्मभिः ।
नाभाकस्यप्रशस्तिभिर्यःसिन्धूनामुपोदयेसप्तस्वसासमध्य्
मोनभन्तामन्यकेसमे ॥ २ ॥

तम् । ऊँ इति । सु । समना । गिरा । पितॄणाम् । च । मन्मऽभिः ।
नाभाकस्य । प्रशस्तिऽभिः । यः । सिन्धूनाम् । उप । उत्ऽअये ।
सप्तऽस्वसा । सः । मध्यमः । नभन्ताम् । अन्यके । समे ॥ २ ॥

तमु तमेव वरुणं समना समानया गिरा स्तुत्या स्वभिष्टौमि पितॄणां मन्मभिः स्तोमैश्चाभिष्टौमि नाभाकस्य ऋषेः प्रशस्तिभिः स्तोत्रैश्चाभिष्टौमि सिन्धूनां स्यन्दमानानां नदीनां उप समीपे उदये गच्छति यश्च सप्तस्वसा समध्यमइतिवाग्भिर्निरुच्यते अन्यके दुर्धियः शत्रवः समे सर्वे नभन्तां माभूवन् । तथाचयास्कः—तंस्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणाञ्च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः ऋषिर्नाभाकोबभूव यःस्यन्दमानानामासामपामुपोदयेसप्तस्वसारमेनमाह वाग्भिः समध्यमइति निरुच्यतेऽथैषएवभवति नभन्तामन्यकेसमे माभूवन्नन्यकेसर्वे येनोद्विषन्तिदुर्धियः पापधियः पापसंकल्पाइतिं ॥ २ ॥

२. योग्य स्तुति के द्वारा मैं उन वरुण की स्तुति करता हूँ। स्तोत्रों के द्वारा पितरों की स्तुति करता हूँ। नाभाक ऋषि की स्तुतियों के द्वारा स्तुति करता हूँ। वे नदियों के पास उद्गत होते हैं। उनकी सात बहनें हैं। वे मध्यम हैं। वे सारे शत्रुओं को मारें।

सक्षपःपरिषस्वजेन्यु[१]स्रोमायर्यादधेसविश्वंपरिदर्शतः ।
तस्यवेनीरनुव्रतमुषस्तिस्रोअवर्धयन्नभन्तामन्यकेसमे ॥ ३ ॥

---

१ नि० १०.५.

सः । क्षपः । परि । सस्वजे । नि । उस्रः । मायया । दधे ।
सः । विश्वम् । परि । दर्शतः । तस्य । वेनीः । अनु । व्रतम् ।
उषः । तिस्रः । अवर्धयन् । नभन्ताम् । अन्यके । समे ॥ ३ ॥

सवरुणः क्षपोरात्रीः परिषस्वजे परिष्वजते अपिच दर्शतो दर्शनीयः सवरुणः उस्रःउत्सरणशीलःसन् विश्वं मायया कमर्णा परि परितः निदधे निदधाति । किञ्च तस्य वरुणस्य व्रतं कर्म वेनीः कामयमानाः प्रजास्तिस्रउषस्त्रिषु प्रातर्माध्यन्दिनं सायञ्च अन्ववर्धयन् अनुवर्धयन्ति । सिद्धमन्यत् ॥ ३ ॥

३. वरुण रात्रियों का आलिङ्गन करते हैं। वे दर्शनीय हैं। वे ऊपर गमन करते हुए माया वा कर्म के द्वारा सारे संसार को धारण करते हैं। उनके कर्माभिलाषी मनुष्य तीन उषाओं (प्रातः, माध्यन्दिन और सायम्) को वर्द्धित करते हैं। वे सारे शत्रुओं को मारें।

यःककुभोनिधारयःपृथिव्यामधिदर्शतः ।
समातापूर्व्यंपदंतद्वरुणस्यसस्यंसहिगोपाइवे
र्योनभन्तामन्यकेसमे ॥ ४ ॥

यः । ककुभः । निऽधारयः । पृथिव्याम् । अधि । दर्शतः ।
सः । माता । पूर्व्यम् । पदम् । तत् । वरुणस्य । सस्यम् । सः ।
हि । गोपाःऽइव । इर्यः । नभन्ताम् । अन्यके । समे ॥ ४ ॥

योवरुणः पृथिव्यामधि पृथिव्याउपरि दर्शतो दर्शनीयः सन् ककुभो दिशो निधारयः निधारयति सवरुणोमाता निर्माता पूर्व्यं प्रत्नं पदं स्वर्गाख्यं स्थानं सस्यं अस्माभिश्चसर्पणीयं तद्वरुणस्यस्वकृतम् । अपिच सहि सएव इर्यईश्वरः सन् गोपाइव गोपालइव पशूनामस्माकं रक्षिता । सिद्धमन्यत् ॥ ४ ॥

४. जो वरुण पृथिवी के ऊपर दिशाओं को धारण करते हैं, वे दर्शनीय निर्माता हैं। प्राचीन स्थान (स्वर्ग) और जहाँ हम विचरण करते हैं— इन दोनों स्थानों के स्वामी वरुण हैं। वही ईश्वर होकर हमारी गौओं की रक्षा करते हैं। वे सारे शत्रुओं को मारें।

योधर्ताभुवनानांयउस्राणामपीच्याऽवेदनामानिगुह्या ।
सकविःकाव्यापुरुरूपंद्यौरिवपुष्यतिनभन्तामन्यकेसमे ॥ ५ ॥ २६ ॥

यः । धर्ता । भुवनानाम् । यः । उस्राणाम् । अपीच्या । वेद ।
नामानि । गुह्या । सः । कविः । काव्या । पुरु । रूपम् ।
द्यौःऽइव । पुष्यति । नभन्ताम् । अन्यके । समे ॥ ५ ॥ २६ ॥

योवरुणोभुवनानां धर्ता धारयिता यश्चोस्राणां देवाधिष्ठानभूतानां रश्मीनामपीच्यापीच्यान्यन्तर्हितानि गुह्या गुह्यानि गुहायां निहितानि नामानि वेद जानाति सवरुणः कविः प्राज्ञःसन् काव्या काव्यानि कविकर्माणि पुरु बहूनि रूपं द्यौरिव पुष्यति । सिद्धमन्यत् ॥ ५ ॥

५. जो वरुण भुवनों के धारक और रश्मियों के अन्तर्हित तथा गुहा में निहित नामों को जानते हैं, वे ही वरुण प्राज्ञ होकर अनेक कवि-कर्मों (काव्यों) का, द्युलोक के समान, पोषण करते हैं। वे सारे शत्रुओं को मारें। ॥ इति षष्ठस्य तृतीये षड्विंशोवर्गः ॥ २६ ॥

यस्मिन्विश्वानिकाव्याचक्रेनाभिरिवश्रिता ।
त्रितंजूतीसंपर्यतव्रजेगावोनसंयुजेयुजेअश्वाँअयु
क्षतनभन्तामन्यकेसमे ॥ ६ ॥

यस्मिन् । विश्वानि । काव्या । चक्रे । नाभिःऽइव । श्रिता ।
त्रितम् । जूती । सपर्यत । व्रजे । गावः । न । सम्ऽयुजे ।
युजे । अश्वान् । अयुक्षत । नभन्ताम् । अन्यके । समे ॥ ६ ॥

यस्मिन्वरुणे विश्वानि सर्वाणि काव्या काव्यानि कविकर्माणि चक्रे नाभिरिव यथा रथस्य चक्रेनाभिस्तथा श्रिता श्रितानि तं त्रितं त्रिस्थानं वरुणं जूती जूत्या क्षिप्रं सपर्यत हे मदीयाजनाः परिचरत । किमर्थमित्यतआह व्रजे गोष्ठे गावोन यथा गाः संयुजे संयोगार्थं सहस्थापयितुं युजे युञ्जन्ति तथास्माकमभियोगायाश्वानयुक्षत सपत्नायुञ्जन्ति अतस्तदुपद्रवपरिहाराय वरुणं परिचरेतेत्यर्थः ॥ ६ ॥

६. सारे कवि-कर्म, चक्र की नाभि के समान, जिन वरुण का आश्रय किये हुए हैं, उन्हीं स्थान-त्रयवाले वरुण की शीघ्र परिचर्या करो। जैसे गोशाला में गौ जाती है, वैसे ही हमें हराने के लिए, युद्ध के निमित्त, शत्रु लोग अश्व को जोतते हैं। वे सारे शत्रुओं को मारें।

यआस्वत्कआशयेविश्वाजातान्येषाम् ।
परिधामानिमर्मृशद्वरुणस्यपुरोगयेविश्वेदेवाअनु
व्रतंनभन्तामन्यकेसमे ॥ ७ ॥

यः । आसु । अत्कः । आऽशये । विश्वा । जातानि । एषाम् ।
परि । धामानि । मर्मृशत् । वरुणस्य । पुरः । गये । विश्वे ।
देवाः । अनु । व्रतम् । नभन्ताम् । अन्यके । समे ॥ ७ ॥

यः वरुणः आसुदिक्षु अक्तः व्याप्तःसन् आशये जागृतोवर्तते यः वरुणः एषां शत्रूणां विश्वा सर्वाणि परिजातानि परितोभूतानि धामानि पुराणि मर्म्मृशत् परिमृशतोवरुणस्य पुरोगये रथस्यपुरस्ताद्भवति तस्य वरुणस्य पुरस्ताद्विश्वे सर्वेदेवा व्रतं कर्मानुगच्छन्तीत्यर्थः। सिद्धमन्यत् ॥ ७ ॥

७. वरुण सारी दिशाओं को व्याप्त किये हुए हैं। वे शत्रुओं के चारों ओर फैले हुए नगरों का विनाश करते हैं। वरुण के रथ के सम्मुख सारे देवता कर्मानुष्ठान करते हैं। वे सारे शत्रुओं को मारें।

ससमुद्रोअपीच्यस्तुरोद्यामिवरोहतिनियदासुयजुर्दधे।
समायाअर्चिनापदास्तृणान्नाकमारुहन्नभ
न्तामन्यकेसमे ॥ ८ ॥

सः । समुद्रः । अपीच्यः । तुरः । द्याम्ऽइव । रोहति । नि ।
यत् । आसु । यजुः । दधे । सः । मायाः । अर्चिना । पदा ।
अस्तृणात् । नाकम् । आ । अरुहत् । नभन्ताम् । अन्यके । समे ॥ ८ ॥

यस्मादापः समुद्रवन्ति सवरुणः समुद्रोपीच्योन्तर्हितः तुरः क्षिप्रः द्यामिव यथा आदित्योद्यां रोहति तथा नाकं रोहति। अपिच यत् योवरुणः आसु दिक्षु यजुः प्रजाभ्योदानं निदधे निदधाति सवरुणः मायाः असुराणां माया अर्चिना अर्चिष्मता पदा स्थानेन तेजसेत्यर्थः अस्तृणात् समंताद्धिनस्ति नाकं स्वर्गमारुहदारोहति। सिद्धमन्यत् ॥ ८ ॥

८. समुद्र-स्वरूप वह वरुण अन्तर्हित होकर शीघ्र ही आदित्य के समान स्वर्गारोहण करते और चारों दिशाओं में प्रजा को दान देते हैं। वे द्युतिमान् पद के द्वारा माया का विनाश करते और स्वर्ग-गमन करते हैं। वे सारे शत्रुओं को मारें। अथ नवमी—

यस्यश्वेताविचक्षणातिस्रोभूमीरधिक्षितः।
त्रिरुत्तराणिपप्रतुर्वरुणस्यध्रुवंसदःससप्ताना
मिरज्यतिनभन्तामन्यकेसमे ॥ ९ ॥

यस्य । श्वेता । विऽचक्षणा । तिस्रः । भूमीः । अधिऽक्षितः ।
त्रिः । उत्ऽतराणि । पप्रतुः । वरुणस्य । ध्रुवम् । सदः । सः ।
सप्तानाम् । इरज्यति । नभन्ताम् । अन्यके । समे ॥ ९ ॥

यस्य वरुणस्याधिक्षितोंतरिक्षेधिवसतः श्वेता श्वेतानि विचक्षणा तेजांसि तिस्रोभूमीः त्रिरुत्तराणि तिसृणां अधिस्थितानि भुवनानि पप्रतुः प्रथयन्ति । तथाचमन्त्रवर्णः—तिस्रोभूमीर्धारयन्त्रीँरुतद्यूनिति । तस्य वरुणस्य सदः स्थानं ध्रुवमचलमिति । किञ्च सवरुणः सप्तानां सिन्नामिरज्यतीश्वरोभवति । सिद्धमन्यत् ॥ ९ ॥

९. अन्तरिक्ष में रहनेवाले जिन वरुण के शुभ्रवर्ण और विलक्षण तीन तेज तीनों भुवनों में प्रसिद्ध हैं, उन वरुण का स्थान अविचल है। वे सातों सिन्धु आदि नदियों के अधीश्वर हैं। वे सारे शत्रुओं को मारें।

यःश्वेताँअधिनिर्णिजश्चक्रेकृष्णाँअनुव्रता ।
सधामपूर्व्यंममेयःस्कंभेनविरोदसीअजोनद्याम
धारयन्नभन्तामन्यकेसमे ॥ १० ॥ २७ ॥

यः । श्वेतान् । अधिऽनिर्निजः । चक्रे । कृष्णान् । अनु । व्रता ।
सः । धाम । पूर्व्यम् । ममे । यः । स्कम्भेन । वि । रोदसी इति ।
अजः । न । द्याम् । अधारयत् । नभन्ताम् । अन्यके । समे ॥ १० ॥ २७ ॥

योवरुणः निर्निजः आत्मीयान्रश्मीन् दिवा श्वेतानधिचक्रेधिकरोति तथा रात्रौ कृष्णान् चक्रे सवरुणोनुव्रता कर्माणि लक्षीकृत्योभयविधकर्मानुगुणं पूर्व्यं धामान्तरिक्षं दिवं च ममे निर्ममे । अपिच यः स्कंभेनान्तरिक्षेण अजोन यथा आदित्योद्यां धारयति तथा रोदसी द्यावापृथिव्यौ व्यधारयत् विधारयति सवरुणइत्यर्थः । सिद्धमन्यत् ॥ १० ॥

१०. जो दिन में अपनी किरणों को शुभ्र वर्ण और रात में कृष्ण-वर्ण करते हैं, उन्हीं वरुण ने अपने कर्म के लिए द्युलोक और अन्तरिक्ष लोक का निर्माण किया है। जैसे आदित्य द्युलोक को धारण करते हैं, वैसे ही वरुण ने अन्तरिक्ष के द्वारा द्यावापृथिवी को धारण किया है। वे सारे शत्रुओं को मारें। ॥ इति पञ्चमस्य तृतीये सप्तविंशोवर्गः ॥ २७ ॥

अस्तभ्नादिति षळृचं द्वादशं सूक्तं अर्चनानाऋषिः काण्वोनाभाकोवाऋषिः उत्तरेत्वर्चनानाः आद्यस्तृचस्त्रैष्टुभोवरुणदेवत्यः द्वितीयस्तृचआनुष्टुभोश्विदेवताकः । तथाचानुक्रान्तम्—अस्तभ्नात्षळर्चनानावा त्रैष्टुभमन्त्यंवा तृचमाश्विनमानुष्टुभमपश्यदिति । सूक्तविनियोगोलैंगिकः । वारुणेपशौ हविषोयाज्या अस्तभ्नादिति । सूत्रितश्च—अस्तभ्नाद्द्यामसुरोविश्ववेदाइत्येकादशिन इति । अग्नीषोमप्रणयनेप्येषोत्तरा परिधानीया । तथासूत्रितं—अस्तभ्नाद्द्यामसुरोविश्ववेदाइति परिदध्यादुत्तरयावेति । एवावन्दस्वेत्येषा वारुणेपशौ हविषोनुवाक्या । सूत्रितश्च—एवावन्दस्ववरुणं बृहन्तं तत्त्वायामिब्रह्मणावन्दमानइति द्वे । सोमप्रवहणेइमांधियमित्येषा परिधानीया । सूत्रितश्च—इमांधियंशिक्षमाणस्यदेवेति विहितेपरिदध्यादिति ।

१ ऋ० सं० २.७.७.।

तत्र प्रथमा—

अस्तंभ्नाद्द्यामसुरोविश्ववेदाअमिमीतवरिमाणंपृथिव्याः ।
आसीदद्विश्वाभुवनानिसम्राड्विश्वेत्तानिवरुणस्यव्रतानि ॥ १ ॥

अस्तंभ्नात् । द्याम् । असुरः । विश्वऽवेदाः । अमिमीत । वरिमाणम् । पृथिव्याः । आ । असीदत् । विश्वा । भुवनानि । सम्ऽराट् । विश्वा । इत् । तानि । वरुणस्य । व्रतानि ॥ १ ॥

विश्ववेदा विश्वधनोऽसुरोबलवान् वरुणोद्यामस्तभ्नात् तथा पृथिव्याः च वरिमाणं परिमाणममिमीत चक्रे। एवं निर्मितानि विश्वा सर्वाणि भुवनानि सम्राड्भूत्वा सीदच्चाध्यतिष्ठच्च । वरुणस्य तान्येतानि व्रतानि कर्माणि विश्वेव विश्वान्येव अतोवर्णयितुमशक्यानीत्यर्थः ॥ १ ॥

१. सर्वज्ञ और बली (असुर) वरुण ने द्युलोक को रोक रक्खा था, पृथिवी के विस्तार का परिमाण किया था और सारे भुवनों के सम्राट् होकर आसीन हुए थे। वरुण के ऐसे अनेक कार्य हैं।

एवावन्दस्ववरुणंबृहन्तंनमस्याधीरममृतस्यगोपाम् ।
सनःशर्मत्रिवरूथंवियंसत्पातंनोद्यावापृथिवीउपस्थे ॥ २ ॥

एव । वन्दस्व । वरुणम् । बृहन्तम् । नमस्य । धीरम् । अमृतस्य । गोपाम् । सः । नः । शर्म । त्रिऽवरूथम् । वि । यंसत् । पातम् । नः । द्यावापृथिवी इति । उपऽस्थे ॥ २ ॥

हे स्तोतः बृहन्तं महान्तं वरुणमेवैवं वन्दस्व स्तुहि अमृतस्य गोपां गोपायितारं धीरं प्राज्ञं वरुणं नमस्य नमस्कुरुच। सवरुणो नोऽस्मभ्यं त्रिवरूथं त्रिस्थानं शर्म गृहं वियंसत् प्रयच्छतु उपस्थे उपस्थाने वर्तमानान् नोऽस्मान् द्यावापृथिवी द्यावापृथिव्यौ पातं रक्षतम् ॥ २ ॥

२. स्तोता, इस प्रकार बृहत् वरुण की वन्दना करो। अमृत के रक्षण और प्राज्ञ (धीर) वरुण को नमस्कार करो। वरुण हमें तीन तल्लों का मकान दें। हम उनकी गोद में वर्त्तमान हैं। द्यावा-पृथिवी हमारी रक्षा करें।

अथ तृतीया—

इमांधियंशिक्षमाणस्यदेवक्रतुंदक्षंवरुणसंशिशाधि ।
ययातिविश्वादुरितातरेमसुतर्माणमधिनावंरुहेम ॥ ३ ॥

इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् ।
वरुण । सम् । शिशाधि । यया । अति । विश्वा । दुःऽइता ।
तरेम । सुऽतर्माणम् । अधि । नावम् । रुहेम ॥ ३ ॥

हे देव द्योतमान वरुण इमां धियमिदंकर्म शिक्षमाणस्यानुतिष्ठतोमम क्रतुं प्रज्ञानं दक्षं बलंच संशिशाधि तीक्ष्णीकुरु यया नावा यज्ञरूपया विश्वा सर्वाणि दुरिता दुरितान्यतितरेम तां सुतर्माणं सुष्ठुतारयित्रीं यज्ञरूपां नावमधिरुहेम वयमारुहेम दुःखसागरतरणे हेतुत्वाद्यज्ञो-नौरिति अत्रव्यपदिश्यते ॥ ३ ॥

३. दिव्य वरुण, कर्मानुष्ठान करनेवाले मेरे कर्म, प्रज्ञान और बल को तीक्ष्ण करो। जिसके द्वारा हम सारे दुष्कर्मों को लाँघ सकें, ऐसी सरलता से पार जानेवाली नौका पर हम चढ़ेंगे।

आवांग्रावाणोअश्विनाधीभिर्विप्राअचुच्यवुः ।
नासत्यासोमपीतयेनभन्तामन्यकेसमे ॥ ४ ॥

आ । वाम् । ग्रावाणः । अश्विना । धीभिः । विप्राः । अचुच्यवुः ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ४ ॥

हे नासत्या सत्यौ सत्यप्रणेतारौवा । तथाचयास्कः—सत्यावेवनासत्यावित्यौर्णवाभःसत्य-स्य प्रणेताराविति[1] । अश्विनाश्विनौ वां युवां सोमपीतये सोमस्य पानाय विप्राः प्राज्ञा ऋत्वि-जोग्रावाणः सोमाभिषवपाषाणाश्च धीभिः कर्मभिः स्वस्वव्यापारैराचुच्यवुरभिगच्छन्ति । सि-द्धमन्यत् ॥ ४ ॥

४. सत्यस्वरूप अश्विद्वय, प्राज्ञ ऋत्विक् (विप्र) और अभिषव के समस्त पाषाण, सोमपान के लिए, अपने-अपने कार्यों-द्वारा तुम्हारे अभिमुख जाते हैं। अश्विद्वय सारे शत्रुओं की हिंसा करें।

यथावामत्रिरश्विनागीर्भिर्विप्रोअजोहवीत् ।
नासत्यासोमपीतयेनभन्तामन्यकेसमे ॥ ५ ॥

यथा । वाम् । अत्रिः । अश्विना । गीःऽभिः । विप्रः । अजोहवीत् ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ५ ॥

हे नासत्यावश्विनौ वां युवां विप्रः प्राज्ञोत्रिर्यथा गीर्भिः स्तुतिभिः सोमपीतये अजोहवीत् तथाहमपि जोहवीमि ॥ ५ ॥

५. नासत्य अश्विद्वय, प्राज्ञ अत्रि ने जैसे स्तुति-द्वारा, सोमपान के लिए, तुम्हें बुलाया था, वैसे ही मैं बुलाता हूँ। अश्विद्वय सारे शत्रुओं को मारें।

1 नि० ६. १३.

अथ षष्ठी—

एवावांमह्वऊतयेयथाहुवन्तमेधिराः ।
नासत्यासोमपीतयेनभन्तामन्यकेसमे ॥ ६ ॥ २८ ॥

एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त । मेधिराः ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके ॥ समे ॥ ६ ॥ २८ ॥

इयं व्याख्यातचरा ॥ ६ ॥

६. नासत्यद्वय, मेधावियों ने जैसे सोमपान के लिए तुम्हें बुलाया था, वैसे ही मैं भी, रक्षा के लिए, बुलाता हूं। अश्विद्वय सारे शत्रुओं को मारें।

॥ इतिषष्ठस्यतृतीयेऽष्टाविंशोवर्गः ॥ २८ ॥

॥ इत्यष्टमे मंडले पञ्चमोनुवाकः ॥ ५ ॥

षष्ठेनुवाके षट् सूक्तानि तत्रेमेविप्रस्येति त्रयस्त्रिंशदृचं प्रथमं सूक्तम् आंगिरसस्य विरूपस्यार्षं गायत्रमग्निदेवताकम् । तथाचानुक्रान्तम्—इमे त्रयस्त्रिंशद्विरूपआंगिरसआग्नेयंत्विति । प्रातरनुवाकेआग्नेयेक्रतौ गायत्रेछन्दसि आश्विनशस्त्रे चैतदादिके द्वे सूक्ते । सूत्रितश्च—इमेविप्रस्येति सूक्तेइति । कारीर्यांवभृथेष्ट्याः प्रथमाज्यभागस्याप्स्वग्नइति अनुवाक्या । तथाचसूत्रितम्—अप्सुमन्तावाज्यभागावप्स्वग्नेसधिष्टवेति । आग्नीध्रस्य प्रातःसवने प्रस्थितयाज्या । श्रूयतेच—उक्षान्नायवशान्नायेत्याग्नीध्रोयजतीति । अग्निवतीष्टौ त्वंह्यग्नइत्येषा याज्या सूत्रितश्च—त्वंह्यग्नेअग्निना अग्नेत्वमस्मद्युयोध्यमीवाइति । अग्निमन्थनेप्येषा । सूत्रितश्च—त्वंह्यग्नेअग्निना तंमर्जयन्तसुक्रतुमिति । अग्नयेकामायाष्टाकपालेष्टौ तुभ्यंताअंगिरस्तमेत्येषानुवाक्या । सूत्रितश्च—तुभ्यंताअंगिरस्तमाश्यामतंकाममग्नेतवोतीति कामयेति । अन्वाहिताग्नेः प्रयाणे समारोपणपक्षे अनयैकाहुतिः कर्तव्या । तथाचसूत्रितम्—तुभ्यंताअंगिरस्तमेति वाज्याहुतिंहुत्वा समारोपयेदिति । वैद्युताग्निनाग्नीनां संसर्गे अग्नयेप्सुमतीष्टिः तत्र यदग्नेदिविजाइतियाज्या । सूत्रितंच—यदग्नेदिविजाअस्याग्निर्होतान्यसीदद्यजीयानिति ।

तत्र प्रथमा

इमेविप्रस्यवेधसोअग्नेरस्तृतयज्वनः । गिरःस्तोमासईरते ॥ १ ॥

इमे । विप्रस्य । वेधसः । अग्नेः । अस्तृतऽयज्वनः ।
गिरः । स्तोमासः । ईरते ॥ १ ॥

६

---

१ ऐ० ब्रा० ६. १०.

इमेस्मदीयाः स्तोमासः स्तोतारोविप्रस्य मेधाविनः वेधसोविधातुरस्तृतयज्वनोहिंसितयजमानस्याग्नेर्गिरः स्तुतीरीरते प्रेरयन्ति ॥ १ ॥

१. हमारे ये स्तोता अग्नि के लिए स्तुति करते हैं। अग्नि मेधावी और विधाता हैं। वे कभी यजमान की हिंसा नहीं करते।

अस्मैतेप्रतिहर्यतेजातवेदोविचर्षणे । अग्नेजनामिसुष्टुतिम् ॥ २ ॥

अस्मै । ते । प्रतिऽहर्यते । जातऽवेदः । विऽचर्षणे ।
अग्ने । जनामि । सुऽस्तुतिम् ॥ २ ॥

हे जातवेदः जातधन विचर्षणे विद्रष्टरग्ने अस्मै प्रतिहर्यते प्रयच्छते ते तुभ्यं सुष्टुतिं शोभनां स्तुतिं जनामि अंगिरसोहं जनयामि ॥ २ ॥

२. जातधन और विशेष दर्शक अग्नि तुम दान देनेवाले हो; इसलिए तुम्हारे लिए सुन्दर स्तुति उत्पन्न करता हूँ।

आरोकाइवघेदहतिग्माअग्नेतवत्विषः । दद्भिर्वनानिबप्सति ॥ ३ ॥

आरोकाःऽइव । घ । इत् । अह । तिग्माः । अग्ने ।
तव । त्विषः । दत्ऽभिः । वनानि । बप्सति ॥ ३ ॥

हे अग्ने तव तिग्मास्तीक्ष्णास्त्विषोदीप्तयः आरोकाइव आरोचमानाः पशवइव दद्भिर्दन्तैर्वनान्यरण्यानि बप्सति भक्षयन्ति घेदहेति त्रयं पूरकम् ॥ ३ ॥

३. अग्नि तुम्हारी तीखी ज्वालायें आरोचमान पशुओं के समान दाँतों के द्वारा अरण्य का भक्षण करती हैं।

अथ चतुर्थी—

हरयोधूमकेतवोवातजूताउपद्यवि । यतन्तेवृथगग्नयः ॥ ४ ॥

हरयः । धूमऽकेतवः । वातऽजूताः । उप । द्यवि ।
यतन्ते । वृथक् । अग्नयः ॥ ४ ॥

हरयोहरणशीला वातजूता वातप्रेरिता धूमकेतवो धूमध्वजा अग्नयः उपद्यव्यन्तरिक्षे वृथक् पृथग्यतन्ते गच्छन्ति । पृथगित्यनेन सममन्वयं वृथगिति । पृथगित्येव वाजसनेयिनः पठन्ति ॥ ४ ॥

हरणशील, वायु-प्रेरित और धूम-ध्वज सारे अग्नि अन्तरिक्ष में अलग अलग जाते हैं। ४.

अथ पञ्चमी—

एतेत्येवृथगग्नयइद्धासःसमदृक्षत। उषसामिवकेतवः ॥ ५॥ २९ ॥

एते। त्ये। वृथक्। अग्नयः। इद्धासः। सम्। अदृक्षत।
उषसाम्ऽइव। केतवः ॥ ५ ॥ २९ ॥

एते त्ये एते अग्नयः वृथक्पृथगिद्धासोग्निहोत्रिभिः समिद्धाःसन्तः उषसामिव केतवः उषसां प्रज्ञापकाइव समदृक्षत सम्यक्दृश्यन्ते ॥ ५ ॥

५. पृथक्-पृथक् समिद्ध ये अग्नि, होताओं के द्वारा, उषा के केतु के समान दिखाई दे रहे हैं।

॥ इति षष्ठस्य तृतीये एकोनत्रिंशोवर्गः ॥ २९ ॥

कृष्णारजांसिपत्सुतःप्रयाणेजातवेदसः। अग्निर्यद्रोधतिक्षमि ॥६॥

कृष्णा। रजांसि। पत्सुतः। प्रऽयाने। जातऽवेदसः।
अग्निः। यत्। रोधति। क्षमि ॥ ६ ॥

जातवेदसोग्नेः प्रयाणे पत्सुतः पत्तोरजांसि पांसवः कृष्णा कृष्णानि भवन्ति। कदेत्यतआह क्षमि क्षमाया यद्यदाग्निः रोधति शुष्कान्वनस्पतीन्निरुणद्धि ॥ ६ ॥

६. जातप्रज्ञ अग्नि जिस समय पृथिवी पर शुष्क काष्ठ का आश्रय करते हैं, उस समय अग्नि के प्रस्थान-काल में धूलियां काली हो जाती हैं।

अथ सप्तमी—

धासिंकृण्वानओषधीर्बप्सदग्निर्नवायति। पुनर्यन्तरुणीरपि ॥ ७ ॥

धासिम्। कृण्वानः। ओषधीः। बप्सत्। अग्निः। न।
वायति। पुनः। यन्। तरुणीः। अपि ॥ ७ ॥

अग्निरोषधीर्धासिमन्नं। क्षु धासिरित्यन्ननामसुपाठात्। कृण्वानः कुर्वन् बप्सत् भक्षयन् वायति नशाम्यति। पुनश्च तरुणीरोषधीरपि यन् गच्छन् भवति। भक्षयितुमिति शेषः ॥ ७ ॥

७. अग्नि ओषधियों को अन्न समझकर और उन्हें खाकर शान्त नहीं होते वे तरुण ओषधियों के प्रति जाते हैं।

अथाष्टमी—

जिह्वाभिरहनंनमदर्चिषाजञ्जणाभवन्। अग्निर्वनेषुरोचते ॥ ८ ॥

जिह्वाभिः । अहं । नंनमत् । अर्चिषा । जञ्जणाऽभवंन् ।
अग्निः । वनेषु । रोचते ॥ ८ ॥

अग्निर्जिह्वाभिरह ज्वालाभिरेव । नंनमवँ अन्नवद्वनस्पतीनत्यन्तं भक्षयन्। अर्चिषा तेजसा जंजणाभवन् ज्वलन् जञ्जणाभवन् मल्मलाभन्निति ज्वलतिकर्मसुपाठात् वनेष्वरण्येषु रोचते प्रकाशते ॥ ८ ॥

८. अग्नि जिह्वा के द्वारा वनस्पतियों को नवाकर अथवा भक्षण कर तेज के द्वारा प्रज्वलित होकर वन में शोभा पाते हैं।

अप्स्वंग्नेसधिष्टवसौषधीरनुंरुध्यसे । गर्भेसञ्जांयसेपुनः ॥ ९ ॥

अप्ऽसु । अग्ने । सधिः । तवं । सः । ओषंधीः । अनुं ।
रुध्यसे । गर्भे । सन् । जायसे । पुनरितिं ॥ ९ ॥

हे अग्ने यस्य तवाप्सु सधिः प्रवेशस्थानं सत्वमोषधीरनुरुध्यसे अनुरुणत्सि पुनश्च तासां भूमिष्ठानां गर्भेसन् भवन् जायसे प्रादुर्भवसि ॥ ९ ॥

९. अग्नि जल के बीच में तुम्हारे प्रवेश का स्थान है। तुम ओषधियों को रोकते और पुनः उन्हीं के गर्भ में जन्म ग्रहण करते हो।

उदंग्नेतवतद्घृतादर्चीरोंचतआहुंतम् । निंसांनंजुह्वोमुखें ॥ १० ॥ ३० ॥

उत् । अग्ने । तवं । तत् । घृतात् । अर्चिः । रोचते ।
आऽहुंतम् । निंसांनम् । जुह्वः । मुखें ॥ १० ॥ ३० ॥

हे अग्ने तव घृतादाहुतं घृतेनाहुतं जुह्वोहोमसाधनभूतायाः स्रुचोमुखे निंसानं लिहानं तदर्चिः उद्रोचते प्रकाशते ॥ १० ॥

१०. अग्नि, घृत-द्वारा आहूत जुहू (स्रुक्) के मुंह को तुम चाटते हो। तुम्हारी शिखा शोभा पाती है।

॥ इति षष्ठस्य तृतीये त्रिंशोवर्गः ॥ ३० ॥

अथैकादशी—

उक्षान्नांयवशान्नांयसोमंपृष्ठायवेधसें । स्तोमैर्विधेमाग्नये ॥ ११ ॥

उक्षऽअंन्नाय । वशाऽअंन्नाय । सोमंऽपृष्ठाय । वेधसें ।
स्तोमैः । विधेम । अग्नये ॥ ११ ॥

* नंनमत्—वनस्पतीन् अत्यन्तं नमयन् इति पुस्तकान्तरे.

उक्षान्नाय उक्षा अन्नं अदनीयं हविर्यस्यासावुक्षान्नस्तस्मै वशान्नाय वशा अन्नं यस्यासौ वशान्नस्तस्मै सोमपृष्ठाय सोमघृतपृष्ठाय वेधसे विधात्रे कामानामग्नये स्तोमैर्विधेम परिचरेम ॥ ११ ॥

११. जो हव्य भक्षणीय हैं और जिनका अन्न अभिलषणीय हैं, उन्हीं सोम-पृष्ठ और अभीष्ट-विधाता अग्नि की हम, स्तोत्र-द्वारा, परिचर्या करते हैं।

अथ द्वादशी—

उतत्वानमंसावयंहोतर्वरेण्यक्रतो। अग्नेसमिद्भिरीमहे ॥ १२ ॥

उत। त्वा। नमसा। वयम्। होतः। वरेण्यक्रतो इति वरेण्यऽक्रतो। अग्ने। समित्ऽभिः। ईमहे ॥ १२ ॥

उतापिच हे होतर्देवानांह्वातर्वरेण्यक्रतो वरणीयप्रज्ञाग्ने त्वा त्वां वयमाङ्गिरसाः नमसानेन हविषा समिद्भिश्चेमहे याचामहे ॥ १२ ॥

१२. देवों को बुलानेवाले और वरणीय-प्रज्ञ अग्नि, नमस्कार और समिधा प्रदान करके तुमसे हम याचना करते हैं।

उतत्वांभृगुवच्छुचेमनुष्वदंग्नआहुत। अङ्गिरस्वद्धवामहे ॥ १३ ॥

उत। त्वा। भृगुऽवत्। शुचे। मनुष्वत्। अग्ने। आऽहुत। अङ्गिरस्वत्। हवामहे ॥ १३ ॥

हे शुचे स्वभावतः शुद्धाहुताग्ने त्वा त्वां भृगुवत् यथा भृगुस्तथा। मनुष्वत् यथा च मनुस्तथा अङ्गिरस्वदङ्गिरोवच्च हवामहे ॥ १३ ॥

१३. शुद्ध और आहूत अग्नि, हम तुम्हें भृगु और मनु के समान बुलाते हैं।

अथ चतुर्दशी—

त्वंह्यग्नेअग्निनाविप्रोविप्रेणसन्त्सता। सखासख्यासमिध्यसे ॥ १४ ॥

त्वम्। हि। अग्ने। अग्निना। विप्रः। विप्रेण। सन्। सता। सखा। सख्या। समऽइध्यसे ॥ १४ ॥

हे अग्ने विप्रोमेधावी सन् विद्यमानः सखाच त्वं विप्रेण सता सख्या अग्निना समिध्यसे। तथाच ब्राह्मणम्—त्वंह्यग्नेअग्निना विप्रोविप्रेणसन्त्सतेति विप्रइतरोविप्रइतरः सन्नितरः सन्नितरः सखासख्यासमिध्यसइत्येषहवा अस्यस्वः सखेति[1] ॥ १४ ॥

१४. अग्नि, तुम विप्र, साधु और सखा हो। तुम विप्र, साधु और सखा अग्नि की सहायता से दीप्त होते हो।

---

1 ऐं० ब्रा० १, १६।

अथ पञ्चदशी–

सत्वंविप्रा॑यदा॒शुषे॑र॒यिंदे॑हिसह॒स्रिण॑म्। अग्ने॒वी॒रव॑ती॒मिष॑म्॥१५॥३१॥

सः। त्वम्। विप्रा॑य। दा॒शुषे॑। र॒यिम्। दे॒हि॒। स॒ह॒स्रिण॑म्।
अग्ने॑। वी॒रऽव॑तीम्। इष॑म्॥ १५॥ ३१

हे अग्ने सः प्रसिद्धस्त्वं विप्राय मेधाविने दाशुषे हविषां प्रदात्रे यजमानाय सहस्रिणं सहस्रसंख्याकमपरिमितं रयिं धनं वीरवतीं पुत्रपौत्रादिसहितमिषमन्नंच देहि ॥ १५ ॥

१५. अग्नि, तुम हव्यदाता मेधावी को सहस्र-संख्यक धन और वीर पुत्रादि से युक्त अन्न दो। ॥ इति षष्ठस्य तृतीये एकत्रिंशोवर्गः ॥ ३१ ॥

अग्ने॒भ्रात॒:सह॑स्कृत॒रोहि॑दश्व॒शुचि॑व्रत। इ॒मंस्तोमं॑जुषस्वमे॥ १६॥

अग्ने॑। भ्रात॒रिति॑। सह॑ःऽकृत। रोहि॑त्ऽअश्व। शुचि॑ऽव्रत।
इ॒मम्। स्तोम॑म्। जु॒षस्व॒। मे॒॥ १६॥

हे अग्ने भ्रातः भ्रातृवद्यजमानानां मित्रभूत सहस्कृत सहसा बलेनकृत रोहिदश्व लोहितवर्णाश्व शुचिव्रत शुद्धकर्मन्नग्ने आङ्गिरसस्य मे मम इमं स्तोमं जुषस्व सेवस्व ॥ १६ ॥

१६. यजमानों के भ्रातृ-भूत, बल के द्वारा उत्पादित, रोहित नामक अश्ववाले और शुद्ध-कर्मा अग्नि, हमारे स्तोत्र का आश्रय करो।

उ॒तत्वा॑ग्ने॒मम॒स्तुतो॑वा॒श्राय॑प्रति॒हर्य॑ते। गो॒ष्ठंगाव॑इवाशत॥ १७॥

उ॒त। त्वा॒। अ॒ग्ने॒। मम॑। स्तुत॑ः। वा॒श्राय॑। प्र॒ति॒ऽहर्य॑ते।
गो॒ऽस्थम्। गाव॑ःऽइव। आ॒श॒त॥ १७॥

उतापिच हे अग्ने त्वा त्वां ममाङ्गिरसस्य स्तुतः स्तुतयः वाश्राय वाशनशीलाय वत्साय प्रतिहर्यते पयःकामयमानाय दोग्धुं गोष्ठं गावइव यथा गावःप्रविशन्ति तथा आशत प्राप्नुवन्ति॥१७॥

१७. अग्नि, हमारी स्तुतियाँ तुम्हारे पास जा रही हैं। इसी प्रकार गायें उत्सुक होकर और बोलते हुए, बछड़ों के लिए, गोशाला में जाती हैं।

अथाष्टादशी–

तुभ्यं॑ताअ॑ङ्गिरस्तम॒विश्वा॑:सुक्षि॒तय॒:पृथ॑क्। अग्ने॒कामा॑ययेमिरे॥ १८॥

तुभ्य॑म् । ताः । अ॒ङ्गि॒रः॒ऽत॒म॒ । विश्वाः॑ । सु॒ऽक्षि॒तयः॑ ।
पृथ॑क् । अग्ने॑ । कामा॑य । ये॒मि॒रे ॥ १८ ॥

हे अङ्गिरस्तम अङ्गिरसां श्रेष्ठाग्ने तुभ्यं विश्वाः सर्वास्ताः प्रसिद्धाः सुक्षितयः प्रजाः कामायात्मनः कामसिद्ध्यर्थं पृथग्येमिरे नियच्छन्ति ॥ १८ ॥

१८. अग्नि, तुम अङ्गिरा लोगों में श्रेष्ठ हो। सारी प्रजायें अभिलषित सिद्धि के लिए तुम्हारे प्रति आसक्त होती हैं।

अ॒ग्निं धी॒भिर्म॑नी॒षिणो॒ मेधि॑रासो विप॒श्चितः॑ ।
अ॒द्म॒सद्या॑य हिन्विरे ॥ १९ ॥

अ॒ग्निम् । धी॒भिः । म॒नी॒षिणः॑ । मेधि॑रासः । वि॒पः॒ऽचितः॑ ।
अ॒द्म॒ऽसद्या॑य । हि॒न्वि॒रे ॥ १९ ॥

मनीषिणो मनसईश्वराः मेधिरासो मेधाविनो विपश्चितः प्राज्ञाः यजमाना धीभिः कर्मभिरद्मसद्यायान्नस्य भजनायाग्निं हिन्विरे प्रीणयन्ति ॥ १९ ॥

१९. मनीषी, प्राज्ञ और मेधावी लोग, अन्न-प्राप्ति के लिए, अग्नि को प्रसन्न करते हैं।　　अथ विंशी—

तं त्वा॒मज्मे॑षु वा॒जिनं॑ तन्वा॒ना अ॑ग्ने अध्व॒रम् ।
वह्निं॒ होता॑रमीळते ॥ २० ॥ ३२ ॥

तम् । त्वा॒म् । अज्मे॑षु । वा॒जिन॑म् । त॒न्वा॒नाः । अ॒ग्ने॒ ।
अ॒ध्व॒रम् । वह्नि॑म् । होता॑रम् । ई॒ळ॒ते॒ ॥ २० ॥ ३२ ॥

हे अग्ने वाजिनं बलिनं वह्निं हविषांवोढारं होतारं देवानां ह्वातारं तं प्रसिद्धं त्वामज्मेषु गृहेषु अध्वरं यज्ञं तन्वानाविस्तरयन्तो यजमाना ईळते स्तुवन्ति ॥ २० ॥

२०. अग्नि, तुम बलवान्, हव्यवाहक, होता और प्रसिद्ध हो। जो स्तोता गृह में यज्ञ का विस्तार करते हैं, वे तुम्हारा स्तव करते हैं।

॥ इति षष्ठस्य तृतीये द्वात्रिंशोवर्गः ॥ ३२ ॥

अथैकविंशी—

पु॒रु॒त्रा हि स॒दृङ्ङसि॑ वि॒शो॒ विश्वा॒ अनु॑ प्र॒भुः ।
स॒मत्सु॑ त्वा हवामहे ॥ २१ ॥

पुरु॒ऽत्रा । हि । स॒ऽदृङ् । असि॑ । विशः॑ । विश्वाः॑ । अनु॑ ।

प्र॒ऽभुः । स॒मत्ऽसु॑ । त्वा॒ । ह॒वा॒म॒हे॒ ॥ २१ ॥

हे अग्ने त्वं हि यतः प्रभुं[1] प्रभुः सुलोपश्छान्दसः पुरुत्रा बहुषु प्रदेशेषु विश्वाः सर्वाविशः प्रजाः अनु सदृङ् समानदर्श्यस्यतस्त्वा त्वां समत्सु संग्रामेषु हवामहे ह्वयामः ॥ २१ ॥

२१. अग्नि, तुम प्रभु और सर्वत्र सभी प्रजा के लिए समदर्शी हो; इसलिए हम तुम्हें संग्राम में बुलाते हैं।

तमी॑ळिष्व॒यआहु॑तो॒ग्निर्वि॒भ्राज॑तेघृ॒तैः ।

इ॒मंनः॑शृणव॒द्धव॑म् ॥ २२ ॥

तम् । ई॒ळि॒ष्व॒ । यः । आऽहु॑तः । अ॒ग्निः । वि॒ऽभ्राज॑ते ।

घृ॒तैः । इ॒मम् । नः॒ । शृ॒ण॒व॒त् । हव॑म् ॥ २२ ॥

योग्निः घृतैः सहआहुतो विभ्राजते यश्च नोस्माकं इमं हवमाह्वानं शृणवच्छृणोति तमग्निमीळिष्व स्तुहि ॥ २२ ॥

२२. घृत-द्वारा आहूत होकर अग्नि शोभा पाते हैं। जो अग्नि हमारे आह्वान को सुनते हैं, उनकी स्तुति करो।

तंत्वा॑व॒यंह॑वामहेशृ॒ण्वन्तं॑जा॒तवे॑दसम् ।

अग्ने॒घ्नन्त॒मप॒द्विषः॑ ॥ २३ ॥

तम् । त्वा॒ । व॒यम् । ह॒वा॒म॒हे॒ । शृ॒ण्वन्त॑म् । जा॒तऽवे॑दसम् ।

अग्ने॑ । घ्नन्त॑म् । अप॑ । द्विषः॑ ॥ २३ ॥

हे अग्ने जातवेदसं जातधनं जातप्रज्ञं वा द्विषः शत्रूनपघ्नन्तं हिंसन्तं शृण्वन्तमस्मदीयमाह्वानं शृण्वन्तंच त्वा त्वां वयमाङ्गिरसा हवामहे ॥ २३ ॥

२३. अग्नि, तुम जातधन, शत्रु-हिंसक और हमारा आह्वान सुननेवाले हो; इसलिए तुम्हें हम बुलाते हैं।

अथ चतुर्विंशी—

वि॒शांराजा॑न॒मद्भु॑त॒मध्य॑क्षं॒धर्म॑णामि॒मम् ।

अ॒ग्निमी॑ळे॒सउ॑श्रवत् ॥ २४ ॥

---

[1] संहितायां पदकाले च प्रभुशब्दं सविसर्गं पठंति वैदिकाः । भाष्यकारेण तु सुलोपश्छान्दसइत्युक्तं इदं विचारणीयम्.

विशाम् । राजानम् । अद्भुतम् । अधिऽअक्षम् । धर्मणाम् ।
इमम् । अग्निम् । ईळे । सः । ऊँ इति । श्रवत् ॥ २४ ॥

विशां प्रजानां राजानमीश्वरं अद्भुतं महान्तं धर्मणां कर्मणामध्यक्षमनुसंधातारं इममग्निं ईळे स्तौमि । सउ सएवाग्निः श्रवदस्मदीयां स्तुतिं शृणोतु ॥ २४ ॥

२४. मनुष्यों के ईश्वर, महान् और कर्मों के अध्यक्ष इन अग्नि की मैं स्तुति करता हूँ। वे सुनें।

अग्निंविश्वायुवेपसंमर्यंनवाजिनंहितम् ।
सप्तिंनवाजयामसि ॥ २५ ॥ ३३ ॥

अग्निम् । विश्वायुऽवेपसम् । मर्यम् । न । वाजिनम् । हितम् ।
सप्तिम् । न । वाजयामसि ॥ २५ ॥ ३३ ॥

विश्वायुवेपसं सर्वगतबलमग्निं वाजिनं बलिनं मर्यं न मनुष्यमिव । हितं सप्तिं न अश्वमिव वाजयामसि स्तुतिभिर्हविर्भिश्च बलिनं कुर्मः ॥ २५ ॥

२५. सर्वत्रगामी बलवाले, शक्तिशाली और मनुष्यों के समान हितकर अग्नि को, अश्व के समान, हम बली करेंगे।

॥ इति षष्ठस्य तृतीये त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

अथ षड्विंशी—

घ्नन्मृध्राण्यपद्विषोदहन्रक्षांसिविश्वहा ।
अग्नेतिग्मेनदीदिहि ॥ २६ ॥

घ्नन् । मृध्राणि । अप । द्विषः । दहन् । रक्षांसि । विश्वहा ।
अग्ने । तिग्मेन । दीदिहि ॥ २६ ॥

हे अग्ने त्वं मृध्राणि हिंसकान् द्विषोद्वेष्टॄनपघ्नन् हिंसन् विश्वहा सर्वदा रक्षांसि च दहन् तिग्मेन तीक्ष्णेन तेजसा दीदिहि दीप्यस्व ॥ २६ ॥

२६. अग्नि, तुम हिंसकों को मारकर और राक्षसों को जलाकर तीक्ष्ण तेज के द्वारा दीप्त होओ। अथ सप्तविंशी—

यंत्वाजनासइन्धतेमनुष्वदङ्गिरस्तम ।
अग्नेसबोधिमेवचः ॥ २७ ॥

यम् । त्वा । जनासः । इन्धते । मनुष्वत् । अङ्गिरःऽतम ।
अग्ने । सः । बोधि । मे । वचः ॥ २७ ॥

हे अङ्गिरस्तमाग्ने यं त्वा त्वां जनासो जनाः मनुष्वत् यथामनुस्तथा इन्धते दीपयन्ति सत्वं मे मदीयं वचः स्तुतिं बोधि बुध्यस्व ॥ २७ ॥

२७. अङ्गिरा लोगों में श्रेष्ठ अग्नि, मनुष्य लोग तुम्हें मनु के समान दीप्त करते हैं। तुम मनुष्य के समान मेरी स्तुति को समझो।

यदग्नेदिविजाअस्यप्सुजावासहस्कृत ।
तंत्वागीर्भिर्हवामहे ॥ २८ ॥

यत् । अग्ने । दिविऽजाः । असि । अप्सुऽजाः । वा ।
सहःऽकृत । तम् । त्वा । गीःऽभिः । हवामहे ॥ २८ ॥

हे अग्ने यद्यस्त्वं दिविजा दिविभवोसि भवसि अप्सुजा वान्तरिक्षजातश्च भवसि सहस्कृत सहसा बलेन कृतश्चासि तं त्वा त्वामग्निं गीर्भिः स्तुतिभिर्हवामहे ह्वयामः ॥ २८ ॥

२८. अग्नि, तुम स्वर्गीय और अन्तरिक्षजन्य बल के द्वारा सहसा उत्पन्न किये गये हो। तुम्हें स्तुति-द्वारा हम बुलाते हैं।

तुभ्यंघेत्तेजनाइमेविश्वाःसुक्षितयःपृथक् ।
धासिंहिन्वन्त्यत्तवे ॥ २९ ॥

तुभ्यम् । घ । इत् । ते । जनाः । इमे । विश्वाः । सुऽक्षितयः ।
पृथक् । धासिम् । हिन्वन्ति । अत्तवे ॥ २९ ॥

हे अग्ने तुभ्यं घ इत् त्वदर्थमेव ते इमे मया दृश्यमाना जना विश्वाः सर्वाः सुक्षितयः प्रजाश्च धासिमन्नं हविरत्तवे अदनाय पृथक्हिन्वन्ति प्रेरयन्ति ॥ २९ ॥

२९. ये सब लोग और सारी प्रजा तुम्हें खाने के लिए पृथक्-पृथक् हवीरूप अन्न देते हैं।

अथ त्रिंशी—

तेघेदग्नेस्वाध्योहाविश्वानृचक्षसः ।
तरन्तःस्यामदुर्गहा ॥ ३० ॥ ३४ ॥

ने । घ । इत् । अग्ने । सुऽआध्यः । अहा । विश्वा ।
नृऽचक्षसः । तरन्तः । स्याम । दुःऽगहा ॥ ३० ॥ ३४ ॥

हे अग्ने तेघेत् त्वदर्थमेव खलु वयं स्वाध्यः सुकर्माणः सन्तः विश्वा विश्वान्यहा अहानि नृचक्षसोद्रष्टारश्च दुर्गहा दुःखेन गाहयितव्यानि तरन्तः स्याम भवेम ॥ ३० ॥

३०. अग्नि, तुम्हारे ही लिए हम सुकृती और सर्वदर्शी होकर सारे दुर्गम स्थानों को पार करेंगे।

॥ इति षष्ठस्य तृतीये चतुस्त्रिंशोवर्गः ॥ ३४ ॥

अथैकत्रिंशी—

अग्निमन्द्रंपुरुप्रियंशीरंपावकशोचिषम् ।
हृद्भिर्मन्द्रेभिरीमहे ॥ ३१ ॥

अग्निम् । मन्द्रम् । पुरुऽप्रियम् । शीरम् । पावकऽशोचिषम् ।
हृत्ऽभिः । मन्द्रेभिः । ईमहे ॥ ३१ ॥

मन्द्रं मादनं पुरुप्रियं बहुप्रियं शीरं यज्ञेषु शयनशीलं पावकशोचिषं पावकदीप्तिं अग्निं हृद्भिर्मनोहरैर्मन्द्रेभिर्मादनैः स्तोत्रैः ईमहे याचामहे ॥ ३१ ॥

३१. अग्नि प्रसन्न, बहु-प्रिय, यज्ञ में शयनशील और पवित्र दीप्ति से युक्त हैं। हम हर्षयुक्त स्तोत्र से उनसे याचना करते हैं।

सत्वमग्नेविभावसुःसृजन्त्सूर्योनरश्मिभिः ।
शर्धन्तमांसिजिघ्नसे ॥ ३२ ॥

सः । त्वम् । अग्ने । विभाऽवसुः । सृजन् । सूर्यः । न ।
रश्मिऽभिः । शर्धन् । तमांसि । जिघ्नसे ॥ ३२ ॥

हे अग्ने विभावसुर्दीप्तिरोचनः सः प्रसिद्धस्त्वं सृजन्नुद्यन् सूर्योन यथा सूर्यस्तथा रश्मिभिः शर्धन् बलं कुर्वन् तमांसि जिघ्नसे नाशयसि ॥ ३२ ॥

३२. अग्नि, तुम दीप्ति-रोचक हो। सूर्य के समान तुम किरणों के द्वारा बल का विस्तार करते हुए अन्धकार का विनाश करते हो।

तत्तेसहस्वईमहेदात्रंयन्नोपदस्यति ।
त्वदग्नेवार्यंवसु ॥ ३३ ॥ ३५ ॥

तत् । ते । सहस्वः । ईमहे । दात्रम् । यत् । न । उपऽदस्यति ।
त्वत् । अग्ने । वार्यम् । वसु ॥ ३३ ॥ ३५ ॥

हे सहस्वोबलवन्नग्ने ते तव यद्वसु नोपदस्यति नोपक्षीयते तद्दात्रं दातव्यं वार्यं वरणीयंच वसु धनं त्वत् त्वत्तईमहे याचामहे ॥ ३३ ॥

३३. बली अग्नि, तुम्हारा जो दान-योग्य और वरणीय धन है, वह क्षीण नहीं होता। उसे हम तुमसे माँगते हैं।

॥ इति षष्ठस्य तृतीये पञ्चत्रिंशोवर्गः ॥ ३५ ॥

समिधाग्निमिति त्रिंशदृचं द्वितीयं सूक्तं आङ्गिरसस्य विरूपस्यार्षं प्राग्वत्समपरिभाषया गायत्रमाग्नेयम् । तथाचानुक्रम्यते—समिधाग्निंत्रिंशदिति । प्रातरनुवाके गायत्रेछन्दस्याश्विनशस्त्रे चेदं विनियुक्तम् । महाव्रते समिधाग्निमित्याद्याश्चतस्रःसामिधेन्यः । तथाच पञ्चमारण्यकेसूत्रितम्—समिधाग्निमिति चतस्रोवैश्वकर्मणऋषभइति । आतिथ्यायां समिधाग्निमित्येषा प्रथमाज्यभागस्यानुवाक्या । सूत्रितश्च—समिधाग्निंदुवस्यताप्यायस्वसमेतुतइति । अमावास्यायां प्रथमाज्यभागस्यानुवाक्या । सूत्रितश्च—वृधन्वन्तावमावास्यायामग्निःप्रत्नेनमन्मनेति । दर्शपूर्णमासयोराग्नेयस्यानुवाक्या अग्निर्मूर्धेत्येषा सूत्रितश्च—अग्निर्मूर्धाभुवोयज्ञस्येति । मूर्धन्वद्गुणस्याग्नेरप्येषैवानुवाक्या सूत्रितश्च—नित्येमूर्धन्वइति । पवमानेष्टिषु द्वितीयस्यामिष्टौ अग्नेःशुचेरनुवाक्या अग्निःशुचिव्रततमइत्येषा । सूत्रितश्च अग्निःशुचिव्रततमउदग्नेशुचयस्तवेति ।

तत्र प्रथमा—

समिधाग्निंदुवस्यतघृतैर्बोधयतातिथिम् ।
आस्मिन्हव्याजुहोतन ॥ १ ॥

सम्ऽइधा । अग्निम् । दुवस्यत । घृतैः । बोधयत ।
अतिथिम् । आ । अस्मिन् । हव्या । जुहोतन ॥ १ ॥

हे ऋत्विजोतिथिमतिथिवत्प्रियमग्निं समिधा दुवस्यत परिचरत । घृतैर्दीप्तिसाधनैराज्यैर्बोधयतच । अस्मिन्समिद्धेग्नौ हव्या हवींष्याजुहोतनाजुहुतच ॥ १ ॥

१. ऋत्विको, अतिथि के समान अग्नि की, हव्य-द्वारा, परिचर्या करो। हव्य-द्वारा जगाओ, अग्नि में आहुति गिराओ।

अथ द्वितीया—

अग्नेस्तोमंजुषस्वमेवर्धस्वानेनमन्मना ।
प्रतिसूक्तानिहर्यनः ॥ २ ॥

अग्ने । स्तोम॑म् । जु॒षस्व॒ । मे॒ । वर्ध॑स्व । अ॒नेन॑ ।
मन्म॑ना । प्रति॑ । सु॒ऽउ॒क्तानि॑ । ह॒र्य॒ । न॒ः ॥ २ ॥

हे अग्ने मे आङ्गिरसस्य मम स्तोमं स्तोत्रं जुषस्व सेवस्व अनेन मन्मना मननीयेन स्तोत्रेण वर्धस्व च । नोस्माकं सूक्तानि प्रतिहर्य कामय च ॥ २ ॥

२. अग्नि, हमारे स्तोत्र का सेवन करो। इस मनोहर स्तोत्र-द्वारा बढ़ो। हमारे सूक्त की कामना करो।

अ॒ग्निंदू॒तंपु॒रोद॑धेहव्य॒वाह॒मुप॑ब्रुवे ।
दे॒वाँआसा॑दया॒दि॒ह ॥ ३ ॥

अ॒ग्निम् । दू॒तम् । पु॒रः । द॒धे॒ । ह॒व्य॒ऽवाह॑म् ।
उप॑ । ब्रु॒वे॒ । दे॒वान् । आ । सा॒द॒या॒त् । इ॒ह ॥ ३ ॥

दूतं देवानां हव्यवाहं हविषां वोढारं चाग्निं पुरोदधे पुरस्करोमि उपब्रुवे उपस्तौमि च । सोग्निरिहयज्ञे देवानासादयादासादयतु ॥ ३ ॥

३. देवों के दूत और हव्यवाहक अग्नि को मैं सम्मुख स्थापित करता हूँ। उनकी स्तुति करता हूँ। वे यज्ञ में देवों को बुलावें।

अथ चतुर्थी—

उत्ते॑बृ॒हन्तो॑अ॒र्चय॑ःसमिधा॒नस्य॑दीदिवः ।
अग्ने॑शु॒क्रास॑ईरते ॥ ४ ॥

उत् । ते॒ । बृ॒हन्त॑ः । अ॒र्चय॑ः । स॒म्ऽइ॒धा॒नस्य॑ ।
दी॒दि॒ऽव॒ः । अग्ने॑ । शु॒क्रास॑ः । ई॒र॒ते॒ ॥ ४ ॥

हे दीदिवोदीप्ताग्ने समिधानस्य समिध्यमानस्य ते तव बृहन्तोमहान्तः शुक्रासोज्वलन्तोर्चयः दीप्तयः उदीरयते उद्गच्छन्ति ॥ ४ ॥

४. दीप्त अग्नि, तुम्हारे प्रज्वलित होने पर तुम्हारी महती और उज्ज्वल ज्वालायें ऊपर उठती हैं।

अथ पञ्चमी—

उप॑त्वाजु॒ह्वो॒३॑मम॑घृ॒ताची॑र्यन्तुहर्यत ।
अग्ने॑ह॒व्याजु॑षस्वनः ॥ ५ ॥ २६ ॥

उप॑ । त्वा॒ । जु॒ह्वः॑ । मम॑ । घृ॒ताचीः॑ । य॒न्तु॒ । ह॒र्य॒त॒ ।

अग्ने॑ । ह॒व्या । जु॒ष॒स्व॒ । नः॒ ॥ ५ ॥ ३६

हे हर्यत कामयमानाग्ने मम मदीया घृताचीर्घृतमश्चन्त्योजुह्वः स्रुचस्त्वा त्वामुपयन्तु नो-स्माकं हव्या हव्यानि जुषस्व सेवस्व च ॥ ५ ॥

५. अभिलाषी अग्नि, हमारी घी देनेवाली स्रुक् तुम्हारे पास जायँ। तुम हमारे हव्य का सेवन करो।

॥ इति षष्ठस्य तृतीये षट्त्रिंशोवर्गः ॥ ३६ ॥

अथ षष्ठी—

म॒न्द्रंहोता॑रमृ॒त्विजं॑चि॒त्रभा॑नुंवि॒भाव॑सुम् ।

अ॒ग्निमी॑ळे॒सउ॑श्रवत् ॥ ६ ॥

म॒न्द्रम् । होता॑रम् । ऋ॒त्विज॑म् । चि॒त्रऽभा॑नुम् । वि॒भाऽव॑सुम् ।

अ॒ग्निम् । ई॒ळे॒ । सः । ऊँ इति॑ । श्र॒व॒त् ॥ ६ ॥

मन्द्रं मादनं होतारं देवानामाह्वातारमृत्विजमृतौ यष्टव्यं चित्रभानुं चित्रदीप्तिं विभावसुं दीप्तिधनमग्निमीळे स्तौमि । सोग्निः श्रवदस्मदीयां स्तुतिं शृणोत्वेव ॥ ६ ॥

६. मैं प्रसन्न होता, ऋत्विक्, विलक्षण-दीप्ति और दीप्ति धन (विभावसु) अग्नि की स्तुति करता हूँ। वे मेरी स्तुति को सुनें।

प्र॒त्नंहोता॑र॒मीड्यं॒जुष्ट॑म॒ग्निंक॒विक्र॑तुम् ।

अ॒ध्व॒राणा॑मभि॒श्रिय॑म् ॥ ७ ॥

प्र॒त्नम् । होता॑रम् । ईड्य॑म् । जुष्ट॑म् । अ॒ग्निम् ।

क॒विऽक्र॑तुम् । अ॒ध्व॒राणा॑म् । अ॒भि॒ऽश्रिय॑म् ॥ ७ ॥

प्रत्नं पुराणं होतारं देवानामाह्वातारं ईड्यं स्तुत्यं जुष्टं प्रीतं सेवितं वा कविक्रतुं क्रांतकर्माणं अध्वराणां यज्ञानामभिश्रियमभिश्रयितारं अग्निमीळे स्तौमि ॥ ७ ॥

७. अग्नि प्राचीन, होता, स्तुतियोग्य, प्रीत, कवि, कार्यकर्त्ता और यज्ञ में आश्रित हैं। उनकी मैं स्तुति करता हूँ।

अथाष्टमी—

जु॒षा॒णोअ॑ङ्गिरस्तमे॒माह॒व्यान्या॑नु॒षक् । अग्ने॑य॒ज्ञंन॑यक्र॒तुथा॑ ॥ ८ ॥

जुषाणः । अङ्गिरःऽतम । इमा । हव्यानि । आनुषक् ।
अग्ने । यज्ञम् । नय । ऋतुऽथा ॥ ८ ॥

हे अङ्गिरस्तमांगिरसांश्रेष्ठाग्ने इमा इमान्यस्मदीयानि हव्यानि हवींष्यानुषगनुषक्तं यथाभवति तथा जुषाणः सेवमानोभव । ऋतुथा कालेकाले यज्ञं च नय ॥ ८ ॥

८. अङ्गिरा लोगों में श्रेष्ठ अग्नि, क्रमशः इन हव्यों का सेवन करो। समय-समय पर यज्ञ को सुसम्पन्न करो।

समिधानउंसन्त्यशुक्रशोचइहावह । चिकित्वान्दैव्यंजनम् ॥ ९ ॥

सम्ऽइधानः । ॐ इति । सन्त्य । शुक्रऽशोचे । इह ।
आ । वह । चिकित्वान् । दैव्यम् । जनम् ॥ ९ ॥

हे सन्त्य भजनशील शुक्रशोचे ज्वलद्दीप्ते त्वं समिधानउ समिध्यमानएव दैव्यं देवसम्बन्धिनं जनं चिकित्वान् जानन्निह यज्ञे आवह ॥ ९॥

९. भजनशील और उज्ज्वल दीप्तिवाले अग्नि, तुम समिद्ध (प्रज्वलित) होते ही देव जन को जानकर इस यज्ञ में ले आओ।

विप्रंहोतारमद्रुहंधूमकेतुंविभावसुम् । यज्ञानांकेतुमीमहे ॥१०॥ ३७ ॥

विप्रम् । होतारम् । अद्रुहम् । धूमऽकेतुम् ।
विभाऽवसुम् । यज्ञानाम् । केतुम् । ईमहे ॥ १० ॥ ३७ ॥

विप्रं मेधाविनं होतारं ह्वातारं अद्रुहमद्रोग्धारं धूमकेतुं धूमध्वजं विभावसुं दीप्तिधनं यज्ञानां केतुं पताकस्थानीयमग्निमीमहे अभीष्टं याचामहे ॥ १० ॥

१०. अग्नि, मेधावी, होता, द्रोह-शून्य, धूम-ध्वज, विभावसु और यज्ञ के पताका-रूप हैं। उनसे हम अभीष्ट माँगते हैं।

॥ इति षष्ठस्य तृतीये सप्तत्रिंशोवर्गः ॥ ३७ ॥

अग्नेनिपाहिनस्त्वंप्रतिष्मदेवरीषतः । भिन्धिद्वेषःसहस्कृत ॥ ११ ॥

अग्ने । नि । पाहि । नः । त्वम् । प्रति । स्म । देव ।
रिषतः । भिन्धि । द्वेषः । सहःऽकृत ॥ ११ ॥

हे सहस्कृत बलेनकृत देव दीप्ताग्ने रिषतोहिंसकान् नोस्मान्प्रति निपाहि प्रतिरक्ष । स्मेति पूरणः द्वेषोद्विषः शत्रूंश्च भिन्धि विदारय ॥ ११ ॥

११. बल के द्वारा उत्पादित अग्निदेव, हम हिंसकों की रक्षा करो। शत्रुओं को फाड़ो।

अथ द्वादशी—

अ॒ग्निः प्र॒त्नेन॒ मन्म॑ना॒ शुम्भा॑नस्त॒न्वं१॒॑ स्वाम्। क॒विर्विप्रे॑ण वावृधे ॥ १२ ॥

अ॒ग्निः। प्र॒त्नेन॑। मन्म॑ना। शुम्भा॑नः। त॒न्व॑म्।
स्वाम्। क॒विः। विप्रे॑ण। व॒वृ॒धे॒ ॥ १२ ॥

कविः क्रान्तकर्माग्निः प्रत्नेन पुराणेन मन्मना मननीयेन स्तोत्रेण स्वां स्वकीयां तन्वं तनुमंगं शुंभानः शोभयन् विप्रेण मेधाविना स्तोत्रा ववृधे प्रवृद्धोभवति ॥ १२ ॥

१२. क्रान्तकर्मा अग्नि प्राचीन और मनोरम स्तोत्र के द्वारा अपने शरीर को सुशोभित करके विप्र के साथ बढ़ते हैं।

ऊ॒र्जो नपा॑त॒मा हु॑वे॒ऽग्निं पा॑व॒कशो॑चिषम्। अ॒स्मिन्य॒ज्ञे स्व॑ध्व॒रे ॥ १३ ॥

ऊ॒र्जः। नपा॑तम्। आ। हु॒वे॒। अ॒ग्निम्। पा॒व॒कऽशो॑चिषम्।
अ॒स्मिन्। य॒ज्ञे। सु॒ऽअ॒ध्व॒रे ॥ १३ ॥

ऊर्जोन्नस्य नपातं पुत्रं पावकशोचिषं शोधकदीप्तिमग्निं स्वध्वरे असुरैरत्यन्तमहिंस्येस्मिन्यज्ञे आहुवे आह्वयामि ॥ १३ ॥

१३. अन्न के पुत्र और पवित्र दीप्तिवाले अग्नि को इस हिंसा-शून्य यज्ञ में बुलाता हूँ।

अथ चतुर्दशी—

स नो॑ मित्रमहस्त्वमग्ने॑ शु॒क्रेण॑ शो॒चिषा॑। दे॒वैरा स॑त्सि ब॒र्हिषि॑ ॥ १४ ॥

सः। न॒ः। मि॒त्र॒ऽम॒ह॒ः। त्वम्। अग्ने॑। शु॒क्रेण॑।
शो॒चिषा॑। दे॒वैः। आ। स॒त्सि॒। ब॒र्हिषि॑ ॥ १४ ॥

हे मित्रमहोमित्राणां पूजनीयाग्ने सत्वं शुक्रेण ज्वलता शोचिषा तेजसा देवैःसह बर्हिषि यज्ञे आसत्स्यासीद ॥ १४ ॥

१४. मित्रों के पूजनीय अग्नि, तुम देवों के सङ्ग उज्ज्वल तेज के साथ, यज्ञ में बैठो।

अथ पंचदशी—

यो अ॒ग्निं त॒न्वो॒३॒॑ दमे॑ दे॒वं मर्तः॑ सप॒र्यति॑। तस्मा॒ इद्दी॑दय॒द्वसु॑ ॥ १५ ॥ ३८ ॥

यः। अ॒ग्निम्। त॒न्वः॑। दमे॑। दे॒वम्। मर्तः॑। स॒प॒र्यति॑।
तस्मै॑। इत्। दी॒द॒य॒त्। वसु॑ ॥ १५ ॥ ३८ ॥

योमर्तोमनुष्यो दमे गृहे अग्निं देवं तन्वोधनस्यप्राप्त्यर्थमितिशेषः। भोजनं तनाइति धन-नामसुपाठात्। सपर्यति परिचरति तस्माइत् तस्माएव वसु धनं दीदयत् सोग्निः प्रयच्छति॥१५॥

१५. जो मनुष्य अपने गृह में, धन-प्राप्ति के लिए, अग्नि की परि-चर्या करता है, उसे अग्नि धन देते हैं।

॥ इति षष्ठस्य तृतीयेऽष्टत्रिंशोवर्गः॥ ३८ ॥

अथ षोडशी—

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत्पतिः॑ पृथि॒व्या अ॒यम्। अ॒पां रेतां॑सि जिन्वति ॥ १६॥

अ॒ग्निः। मू॒र्धा। दि॒वः। क॒कुत्। पतिः॑। पृ॒थि॒व्याः।
अ॒यम्। अ॒पाम्। रेतां॑सि। जि॒न्व॒ति॒ ॥ १६ ॥

मूर्धा देवानां श्रेष्ठो दिवोद्युलोकस्य ककुदुच्छ्रितः पृथिव्याश्च पतिरयमग्निः अपांरेतांसि स्थावरजंगमात्मकानि भूतानि जिन्वति प्रीणयति॥ १६॥

१६. देवों के मस्तक, द्युलोक के ककुद् (वृषस्कन्ध की खूंटी) और पृथिवी के पति थे। अग्नि जल के वीर्यस्वरूप प्राणियों को प्रसन्न करते हैं।

उद॑ग्ने॒ शुच॑य॒स्तव॑ शु॒क्रा भ्राज॑न्त ईरते। तव॒ ज्योतीं॑ष्य॒र्चयः॑ ॥ १७ ॥

उत्। अ॒ग्ने॒। शुच॑यः। तव॑। शु॒क्राः। भ्राज॑न्तः। ई॒र॒ते॒।
तव॑। ज्योतीं॑षि। अ॒र्चयः॑ ॥ १७ ॥

हे अग्ने तव शुचयो निर्मलाः शुक्राः शुक्लवर्णा भ्राजन्तोदीप्यमानाः अर्चयः प्रभास्तव ज्योतींषि तेजांस्युदीरते प्रेरयन्ति॥ १७॥

१७. अग्नि, तुम्हारी निर्मल, शुभ्रवर्ण और दीप्त प्रभायें तुम्हारे तेज को प्रेरित करती हैं।

अथाष्टादशी—

ईशि॑षे॒ वार्य॑स्य॒ हि दा॒त्रस्या॑ग्ने॒ स्वः॑पतिः। स्तो॒ता स्यां॒ तव॒ शर्म॑णि ॥ १८ ॥

ईशि॑षे। वार्य॑स्य। हि। दा॒त्रस्य॑। अ॒ग्ने॒। स्वः॑ऽपतिः। स्तो॒ता।
स्या॒म्। तव॑। शर्म॑णि॥ १८ ॥

हे अग्ने स्वःपतिः स्वर्गस्य स्वामी त्वं वार्यस्य वरणीयस्य दात्रस्य दातव्यस्य धनस्य ई-शिषे ईश्वरोसि। शर्मणि सुखे निमित्ते तव स्तोता स्यां भवेयम्॥ १८॥

१८. अग्नि, तुम स्वर्ग के स्वामी हो; वरणीय और दान-योग्य धन के ईश्वर हो। मैं तुम्हारा स्तोता हूँ। सुख के लिए मैं तुम्हारा स्तोता बनूं।

अथैकोनविंशी–

त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः। त्वां वर्धन्तु नो गिरः ॥ १९॥

त्वाम्। अग्ने। मनीषिणः। त्वाम्। हिन्वन्ति। चित्तिऽभिः।
त्वाम्। वर्धन्तु। नः। गिरः ॥ १९ ॥

हे अग्ने त्वां मनीषिणो मनसईश्वराः स्तोतारः स्तुतिभिः स्तुवन्तीतिशेषः। किञ्च त्वामेव चित्तिभिः कर्मभिर्हिन्वन्ति प्रीणयन्ति नोस्माकं गिरः स्तुतयः त्वामेव वर्धन्तु वर्धयन्तु॥ १९ ॥

१९. अग्नि, मनीषी लोग तुम्हारी स्तुति करते हैं। तुम्हें ही कर्म के द्वारा प्रसन्न करते हैं। हमारी स्तुतियाँ तुम्हें वर्द्धित करें।

अदब्धस्य स्वधावतो दूतस्य रेभतः सदा। अग्नेः सख्यं वृणीमहे ॥२०॥३९॥

अदब्धस्य। स्वधाऽवतः। दूतस्य। रेभतः। सदा। अग्नेः।
सख्यम्। वृणीमहे ॥ २० ॥ ३९ ॥

हे अग्ने अदब्धस्य केनाप्यहिंसितस्य स्वधावतोबलवतो दूतस्य देवानां रेभतोदेवान् स्तुवतः अग्नेः तव सख्यं सदा वयं वृणीमहे ॥ २० ॥

२०. अग्नि, तुम हिंसा-शून्य, बली, देवों के दूत और स्तोता हो। हम सदा तुम्हारी मैत्री के लिए प्रार्थना करते हैं।

॥ इति षष्ठस्य तृतीये एकोनचत्वारिंशोवर्गः ॥ ३९ ॥

अथैकविंशी–

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुची रोचत आहुतः ॥२१॥

अग्निः। शुचिव्रतऽतमः। शुचिः। विप्रः। शुचिः। कविः।
शुचिः। रोचते। आऽहुतः ॥ २१ ॥

शुचिव्रततमः अतिशयेनशुद्धकर्मा शुचिः शुद्धएव विप्रोमेधावी शुचिः शुद्धःसन्नेव कविः क्रान्तकर्मा शुचिरेवाहुतोग्निः रोचते प्रकाशते ॥ २१ ॥

२१. अग्नि अतीव शुद्ध-कर्मा, पवित्र, मेधावी और कवि हैं। वे पवित्र और आहूत होकर शोभा पाते हैं।

अथ द्वाविंशी–

उत त्वा धीतयो मम गिरो वर्धन्तु विश्वहा। अग्ने सख्यस्य बोधि नः ॥२२॥

उत । त्वा । धीतयः । मम । गिरः । वर्धन्तु । विश्वहा ।
अग्ने । सख्यस्य । बोधि । नः ॥ २२ ॥

उतापिच हे अग्ने त्वा त्वां मम धीतयः कर्माणि गिरः स्तुतयश्च विश्वहा सर्वदा वर्धन्तु वर्धयन्तु । नोस्माकं सख्यस्य सख्यं सखिकर्म स्तुत्यादिकं बोधि बुध्यस्व ॥ २२ ॥

२२. अग्नि, मेरे कर्म और स्तुतियाँ सदा तुम्हें वर्द्धित करें। हमारे बन्धुत्व-कर्म को तुम सदा समझो।

यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम् । स्युष्टे सत्या इहाशिषः ॥ २३ ॥

यत् । अग्ने । स्याम् । अहम् । त्वम् । त्वम् । वा । घ स्याः ।
अहम् । स्युः । ते । सत्याः । इह । आऽशिषः ॥ २३ ॥

हे अग्ने यद्यदि अहं त्वं बहुधनः स्यां भवेयं । त्वं वा घ त्वं वाखलु अहं दरिद्रः स्तोता स्याः भवेः ततः ते तव आशिषः आशासनानि इहास्मद्विषये सत्याः सत्यानि स्युर्भवेयुः ॥ २३ ॥

२३. अग्नि, यदि मैं बहुधन हो जाऊँ; तो भी तुम तुम ही रहोगे और मैं मैं ही रहूँगा । तुम्हारे आशीर्वाद सत्य हों।

वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥ २४ ॥

वसुः । वसुऽपतिः । हि । कम् । असि । अग्ने । विभाऽवसुः ।
स्याम । ते । सुऽमतौ । अपि । ॥ २४ ॥

हे अग्ने त्वं विभावसुर्दीप्तिधनो वसुपतिर्धनपतिः वसुर्वासयिताचासि भवसि । हि यस्मादतोवयमपि ते तव सुमतावनुग्रहबुद्धौ सुष्टुतौ स्याम भवेम ॥ २४ ॥

२४. अग्नि, तुम वासप्रद, धनपति और दीप्तिधन हो। हम तुम्हारा अनुग्रह पावें।　　　　अथ पञ्चविंशी—

अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः । गिरो वाश्रास ईरते ॥ २५ ॥ ४० ॥

अग्ने । धृतऽव्रताय । ते । समुद्रायऽइव । सिन्धवः । गिरः ।
वाश्रासः । ईरते ॥ २५ ॥ ४० ॥

हे अग्ने धृतव्रताय धृतकर्मणे ते तुभ्यं वाश्रासो वाशनशीलागिरो मम स्तुतयः सिन्धवो-नद्यः समुद्रायेव यथा समुद्राय तथा ईरते प्रवर्तन्ते ॥ २५ ॥

२५. अग्नि, तुम धृतकर्मा हो। मेरी शब्दवाली स्तुतियाँ उसी प्रकार तुम्हारे लिए गमन करती हैं, जिस प्रकार नदियाँ समुद्र की ओर जाती हैं। ॥ इति षष्ठस्य तृतीये चत्वारिंशोवर्गः ॥ ४० ॥

युवानंविश्पतिंकविंविश्वादंपुरुवेपसम् । अग्निंशुम्भामिमन्मभिः ॥२६॥

युवानम् । विश्पतिम् । कविम् । विश्वऽअदम् । पुरुऽवेपसम् ।
अग्निम् । शुम्भामि । मन्मऽभिः ॥ २६ ॥

युवानं नित्यतरुणं विश्पतिं विशांपतिं कविं क्रान्तकर्माणं विश्वादं सर्वस्य हविषोत्तारं पुरुवेपसं बहुकर्माणं वेषः वेपइति कर्मनामसुपाठात् अग्निं मन्मभिः मननीयैः स्तोत्रैः शुंभामि शोभयामि ॥ २६ ॥

२६. अग्नि तरुण, लोकपति, कवि, सर्वभक्षक और बहुकर्मा हैं। उन्हें स्तोत्र के द्वारा मैं सुशोभित करता हूँ।

यज्ञानांरथ्येवयंतिग्मजंम्भायवीळवे । स्तोमैरिषेमाग्नये ॥ २७ ॥

यज्ञानाम् । रथ्ये । वयम् । तिग्मऽजंम्भाय । वीळवे ।
स्तोमैः । इषेम । अग्नये ॥ २७ ॥

यज्ञानां रथ्ये नेत्रे तिग्मजंभाय तीक्ष्णज्वालाय वीळवे बलवते अग्नये स्तोमैः स्तोत्रैः वयमाङ्गिरसा इषेम स्तुतिं कर्तुमिच्छेम ॥ २७ ॥

२७. यज्ञ के नेता, तीखी ज्वालावाले और बलवान् अग्नि के लिए हम स्तोत्रों के द्वारा स्तुति करने की इच्छा करते हैं।

अथाष्टाविंशी—

अयमग्नेत्वेअपिजरिताभूतुसन्त्य । तस्मैपावकमृळय ॥ २८ ॥

अयम् । अग्ने । त्वे इति । अपि । जरिता । भूतु । सन्त्य ।
तस्मै । पावक । मृळय ॥ २८ ॥

हे पावक शोधक सन्त्य संभजनीयाग्ने त्वे अपि त्वय्यपि अस्मदीयोजनो जरिता स्तोता भूतु भवतु । तस्मै जरित्रे मृळय सुखमुत्पादय तं सुखय वा ॥ २८ ॥

२८. शोधक और भजनीय अग्नि, हमारा स्तोता तुममें आसक्त हो। अग्नि, उसे सुखी करो।

अथैकोनत्रिंशी—

धीरो॒ ह्यस्य॑द्म॒सद्विप्रो॒ न जागृ॑विः॒ सदा॑ । अग्ने॑ दी॒दय॑सि॒ द्यवि॑ ॥ २९ ॥

धीरः॑ । हि । असि॑ । अ॒द्म॒ऽसत् । विप्रः॑ । न । जागृ॑विः ।
सदा॑ । अग्ने॑ । दी॒दय॑सि । द्यवि॑ ॥ २९ ॥

हे अग्ने त्वं धीरोसिहि भवसि खलु । अद्मसद्धविषिसीदन् विप्रोन मेधावीव जागृविः प्रजानां हितकरणे जागरणशीलोसि सदा द्यव्यन्तरिक्षे दीदयसि दीप्यसि च ॥ २९ ॥

२९. अग्नि, तुम धीर हो, हव्यदान के लिए बैठे हुए मेधावी के समान तुम सदा जागरूक होकर अन्तरिक्ष में प्रदीप्त होते हो।

पु॒राग्ने॑ दु॒रि॒तेभ्यः॑ पु॒रा मृ॒ध्रेभ्यः॑ कवे । प्र ण॒ आयु॑र्वसो तिर ॥ ३० ॥ ४१ ॥

पु॒रा । अ॒ग्ने॒ । दुः॒ऽइ॒तेभ्यः॑ । पु॒रा । मृ॒ध्रेभ्यः॑ । क॒वे॒ ।
प्र । नः॒ । आयुः॑ । व॒सो॒ इति॑ । ति॒र॒ ॥ ३० ॥ ४१ ॥

हे वसो वासक कवे क्रान्तकर्मन्नग्ने दुरितेभ्यः पापेभ्यः पुरा मृध्रेभ्योहिंसकेभ्यश्च पुरा यदा दुरितानि शत्रवश्चास्मान्हिंसितुमुद्युंजते ततः प्रागेवेत्यर्थः नोस्माकमायुः प्रतिर वर्धय ॥ ३० ॥

३०. वासदाता और कवि अग्नि, पापियों और हिंसकों के हाथों से हमें बचाकर हमारी आयु को बढ़ाओ।

॥ इति षष्ठस्य तृतीये एकचत्वारिंशोवर्गः ॥ ४१ ॥

आघायइति द्विचत्वारिंशदृचंतृतीयं सूक्तम् । अत्रेयमनुक्रमणिका—आघद्विचत्वारिंशत्त्रिशोक आद्याग्नेन्द्री । अनुक्तगोत्रत्वात्काण्वोत्रिशोकऋषिः परंगायत्रं प्रागवत्सप्रेरितिपरिभाषया गायत्रीछन्दः । अनुक्तत्वादिन्द्रोदेवता । आघायाअग्निश्चेन्द्रश्च । महाव्रते निष्केवल्ये गायत्रतृचाशीतावेतत्सूक्तम् । तथैवपञ्चमारण्यकेसूत्रितम्—आघायेअग्निमिन्धत आतूनइन्द्रक्षुमन्तमिति सूक्तेइति । तृतीयेपर्यायेच्छावाकशस्त्रे आदितः सप्तदशर्चः । तथैवातिरात्रइतिखडेसूत्र्यते—आघायेअग्निमिन्धतइति सप्तदशेति । आग्रयणे आग्नेन्द्रस्य हविषआघायइत्येषानुवाक्या । सूत्रितश्च—आघायेअग्निमिन्धतेस्तुकर्माणःसुरुचोदेवयन्तइतिस्तोत्रमिति । मैत्रावरुणातिरिक्तोक्थ्ये स्तोत्रमिन्द्रायेत्याद्याः षळृचोविकल्पेन स्तोत्रियानुरूपाः । सूत्रितश्च—तद्वोगायसुतेसचा स्तोत्रमिन्द्रायगायतेति । द्वितीये पर्याये ब्राह्मणाच्छंसिनः अभित्वावृषभेतिस्तोत्रियःस्तृचः । सूत्रितश्च—अभित्वावृषभासुतेभिप्रगोपतिंगिरेति । चातुर्विंशिकेहनि प्रातःसवने भिन्धिविश्वाइति ब्राह्मणाच्छसिनः षळहस्तोत्रियः । तथाचसूत्रितम्—भिन्धिविश्वाअपद्विषइति ब्राह्मणाच्छंसिनइति ।

तत्र प्रथमा—

आघायेअग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्। येषामिन्द्रोयुवासखा ॥१॥

आ। घ। ये। अग्निम्। इन्धते। स्तृणन्ति। बर्हिः।
आनुषक्। येषाम्। इन्द्रः। युवा। सखा ॥ १ ॥

ये ऋषयः आघ आभिमुख्येन खल्वग्निमिन्धते दीपयन्ति येषांच युवा नित्यतरुणइन्द्रः सखा भवति तेषां आनुषगानुपूर्व्येण बर्हिः स्तृणन्ति ॥ १ ॥

१. जो ऋषि भली भाँति अग्नि को प्रदीप्त करते हैं, जिनके मित्र तरुण इन्द्र हैं, वे परस्पर मिलकर कुश बिछाते हैं।

बृहन्निदिध्मएषांभूरिशस्तंपृथुःस्वरुः। येषामिन्द्रोयुवासखा ॥२॥

बृहन्। इत्। इध्मः। एषाम्। भूरि। शस्तम्। पृथुः।
स्वरुः। येषाम्। इन्द्रः। युवा। सखा ॥ २ ॥

एषामृषीणां इध्मोबृहन्निद् महान् खलु। भूरि बहुच शस्तं स्तोत्रं स्वरुश्च पृथुर्महान्। सिद्धमन्यद् ॥ २ ॥

२. इन ऋषियों की समिधा महती है। इनका स्तोत्र प्रचुर है। इनका स्वरूप (यज्ञ) महान् है। युवा इन्द्र इनके सखा हैं।

अयुद्धइद्युधावृतंशूरआजतिसत्वभिः। येषामिन्द्रोयुवासखा॥३॥

अयुद्धः। इत्। युधा। वृतम्। शूरः। आ। अजति।
सत्वऽभिः। येषाम्। इन्द्रः। युवा। सखा ॥ ३ ॥

तेष्वन्तर्भूतः कश्चिदयुद्धइत्यागयोद्धैवसन् युधावृतं योद्धृभिर्भटैरावृतं शत्रुं सत्वभिरात्मीयैर्बलैः शूरः सन् आजति नमयति ॥ ३ ॥

३. कौन अयोद्धा व्यक्ति शत्रुओं के द्वारा वेष्टित होकर और अपने बल से बलवान् होकर शत्रुओं को नीचा दिखाता है ?

अथ चतुर्थी—

आबुन्दंवृत्रहाददेजातःपृच्छद्विमातरम्। कउग्राःकेहश्रृण्विरे ॥४॥

आ । बुन्दम् । वृत्रऽहा । दुदे । जातः । पृच्छत् । वि ।
मातरम् । के । उग्राः । के । ह । शृण्विरे ॥ ४ ॥

जातउत्पन्नोवृत्रहेन्द्रोबुन्दमिषुं तथाचयास्कः--बुन्दइषुर्भवतीति[1] । आददे आदाय चेषुं उग्राः उद्गूर्णबलाः के केच शृण्विरे वीर्येण विश्रुताइति स्वमातरं विपृच्छव अप्राक्षीत् ॥ ४ ॥

४. उत्पन्न होकर इन्द्र ने वाण धारण किया और अपनी माता से पूछा कि "संसार में कौन कौन उग्र बलवाले हैं ?"

प्रतित्वाशवसीवंदद्गिरावप्सोनयोधिषत् । यस्तेशत्रुत्वमाचके ॥५॥४२॥

प्रति । त्वा । शवसी । वदत् । गिरौ । अप्सः । न । योधिषत् ।
यः । ते । शत्रुऽत्वम् । आऽचके ॥ ५ ॥ ४२ ॥

हे इन्द्र त्वा त्वां शवसी बलवती माता प्रतिवदत्प्रत्यवोचत् । यः ते शत्रुत्वमाचके कामयते सगिरौ पर्वते अप्सोन दर्शनीयोगजइव योधिषत् योधयति ॥ ५ ॥

५. बलवती माता ने उत्तर दिया, "जो तुमसे शत्रुता करना चाहता है, वह पर्वत में दर्शनीय गज के समान युद्ध करता है।"

॥ इति षष्ठस्य तृतीये द्विचत्वारिंशोवर्गः ॥ ४२ ॥

अथ षष्ठी--

उतत्वंमघवञ्छृणुयस्तेवष्टिववक्षितत् । यद्वीळयासिवीळुतत् ॥६॥

उत । त्वम् । मघऽवन् । शृणु । यः । ते । वष्टि । ववक्षि ।
तत् । यत् । वीळयासि । वीळु । तत् ॥ ६ ॥

उतापिच हे मघवन् त्वं शृणु अस्मदीयां स्तुतिं । ते त्वत्तोयद्वष्टि कामयते स्तोता तद्ववक्षि तस्मै तद्वहसि । किञ्च त्वं यद्वीळयासि दृढीकरोषि तद्वीळु तव दृढमेव सर्वत्र भवति ॥ ६ ॥

६. धनी इन्द्र, तुम हमारी स्तुति को सुनो। स्तोता तुम्हारे पास जो चाहता है, उसे वह देते हो। तुम जिसे दृढ़ करते हो, वह दृढ़ होता है।

अथ सप्तमी--

यदाजिंयात्याजिकृदिन्द्रःस्वश्वयुरुप । रथीतमोरथीनाम् ॥ ७ ॥

यत् । आजिम् । याति । आजिऽकृत् । इन्द्रः । स्वश्वऽयुः ।
उप । रथिऽतमः । रथिनाम् ॥ ७ ॥

---

1 नि० ६. ३२.।

यद्यदा आजिकृत् युद्धकृदिन्द्रः स्वश्वयुः कल्याणमश्वमिच्छन् आजिं युद्धमुपयाति तदा रथीतमोतिशयेनरथी भवति। रथीनां सर्वान्त्रथिनश्च जयतीतिशेषः ॥ ७ ॥

७. युद्धकर्त्ता इन्द्र जिस समय सुन्दर अश्व की इच्छा से युद्ध में जाते हैं, उस समय वे रथियों में प्रधान रथी होते हैं।

**विषुविश्वाअभियुजोवज्रिन्विष्वग्यथावृह। भवांनःसुश्रवस्तमः ॥८॥**

**वि। सु। विश्वाः। अभियुजः। वज्रिन्। विष्वक्। यथा। वृह। भव। नः। सुश्रवःऽतमः ॥ ८ ॥**

हे वज्रिन् त्वं विश्वाः सर्वाः अभियुजोभियोक्त्रीः प्रजाः यथा विष्वग्भवति तथा सु सुष्ठु विवृह नोस्माकं सुश्रवस्तमः शोभनान्नवत्तमश्च भव ॥ ८ ॥

८. वज्रधर इन्द्र, जिससे सारी अभिकांक्षिणी प्रजा वृद्धि को प्राप्त हो, इस प्रकार तुम प्रवृद्ध होओ। हमारे लिए सबसे अधिक अन्नवाले बनो।

**अस्माकंसुरथंपुरइन्द्रःकृणोतुसातये। नयंधूर्वन्तिधूर्तयः ॥ ९ ॥**

**अस्माकम्। सु। रथम्। पुरः। इन्द्रः। कृणोतु। सातये। न। यम्। धूर्वन्ति। धूर्तयः ॥ ९ ॥**

यमिन्द्रं धूर्तयोहिंसकाः न धूर्वन्ति न हिंसन्ति सइन्द्रोस्माकं सातयेभीष्टलाभाय सुरथं कल्याणं रथं पुरः कृणोतु पुरस्करोतु ॥ ९ ॥

९. जिन इन्द्र की हिंसा हिंसक (धूर्त्त) नहीं कर सकते, वे ही इन्द्र हमें अभीष्ट देने के लिए सामने सुन्दर रथ स्थापित करें।

**वृज्यामतेपरिद्विषोरंन्तेशक्रदावने। गमेमेदिन्द्रगोमतः ॥१०॥४३॥**

**वृज्याम। ते। परि। द्विषः। अरम्। ते। शक्र। दावने। गमेम। इत्। इन्द्र। गोऽमतः ॥ १० ॥ ४३ ॥**

हे शक्रेन्द्र याचमानावयं ते तव द्विषोद्वेष्टॄन् परिवृज्याम नोपगच्छेम। किन्तु ते तव गोमतः पशुमतोदावनेभीष्टदानाय अरं पर्याप्तं गमेमेत् गच्छेमैव ॥ १० ॥

१०. इन्द्र, हम तुम्हारे शत्रुओं के निकट उपस्थित नहीं हों। जिस समय तुम प्रचुर गौवाले होओ, उस समय अभीष्ट प्रदान करनेवाले तुम्हारे ही पास हम उपस्थित हों।

॥ इति षष्ठस्य तृतीये त्रिचत्वारिंशोवर्गः ॥ ४३ ॥

अथैकादशी–

शनैश्चिद्यन्तोअद्रिवोश्वावन्तःशतग्विनः । विवक्षणाअनेहसः ॥११॥

शनैः । चित् । यन्तः । अद्रिऽवः । अश्वऽवन्तः । शतऽग्विनः ।
विवक्षणाः । अनेहसः ॥ ११ ॥

हे अद्रिवोवज्रिन् वयं शनैर्मन्दंमन्दं यन्तोगच्छन्तोश्वावन्तोश्ववन्तः शतग्विनोबहुधना विवक्षणाः वोढव्यं वहन्तोनेहसः उपद्रवरहिताश्च सन्तोगमेमेदिति संबन्धः ॥ ११ ॥

११. वज्रधर इन्द्र, धीरे-धीरे जाते हुए हम अश्ववाले, बहुत धन से युक्त, विलक्षण और उपद्रववाले होंगे।

ऊर्ध्वाहितेदिवेदिवेसहस्रासूनृताशता । जरितृभ्योविमंहते ॥ १२ ॥

ऊर्ध्वा । हि । ते । दिवेऽदिवे । सहस्रा । सूनृता । शता ।
जरितृऽभ्यः । विऽमंहते ॥ १२ ॥

हे इन्द्र ते तव जरितृभ्यः स्तोतृभ्यः सहस्रा सहस्राणि शता शतानि चोर्ध्वा ऊर्ध्वानि मुख्यानि सूनृता सूनृतानि साधनानि दिवेदिवेन्वहं विमंहते यजमानः प्रयच्छति । मंहतिर्दान-कर्मा ॥ १२ ॥

१२. इन्द्र, यजमान तुम्हारे स्तोताओं के लिए प्रतिदिन सौ और सहस्र, उत्तम और प्रिय वस्तु देता है।

अथ त्रयोदशी–

विद्माहित्वाधनंजयमिन्द्रदृळ्हाचिदारुजम् । आदारिणंयथागयम् ॥१३॥

विद्म । हि । त्वा । धनम्ऽजयम् । इन्द्र । दृळ्हा । चित् ।
आऽरुजम् । आऽदारिणम् । यथा । गयम् ॥ १३ ॥

हे इन्द्र त्वा त्वां धनञ्जयं धनानां जेतारं दृढाचित् दृढानामपि शत्रूणामारुजं आभिमुख्येन भंक्तारं आदारिणमादर्तारञ्च यथा गयं गृहमिवोपद्रवेभ्योरक्षकञ्च विद्म जानीम ॥ १३ ॥

१३. इन्द्र, तुम्हें हम धनञ्जय, पराक्रमशाली शत्रुओं के मंथनकर्त्ता, धनापहारक और गृह के समान उपद्रव से रक्षक जानते हैं।

अथ चतुर्दशी–

ककुहंचित्त्वाकवेमंदन्तुधृष्णविन्दवः । आत्वांपणिंयदीमहे ॥१४॥

ककुहम् । चित् । त्वा । कवे । मन्दन्तु । धृष्णो इति । इन्दवः ।
आ । त्वा । पणिम् । यत् । ईमहे ॥ १४ ॥

हे कवे क्रान्तकर्मन् धृष्णो धर्षकेन्द्र यद्यदा पणिं पणमानं त्वा त्वां आ आभिमुख्येने-महेभीष्टं याचामहे। तदा ककुहं उच्छ्रितं त्वा त्वामिन्दवश्चित् सोमाअपि मन्दन्तु मादयन्तु॥१४॥

१४. कवि और धर्षक इन्द्र, तुम वणिक् हो। तुम्हारे पास जिस समय हम अभीष्ट की प्रार्थना करते हैं, उस समय सोम तुम्हें मत्त करे। तुम ककुद् (वृषभस्कन्ध का ऊपरी भाग) वा उत्तम हो।

यस्तेरेवाँअदाशुरिःप्रममर्षमघत्तये। तस्यनोवेदआभर ॥ १५ ॥ ४४॥

यः । ते । रेवान् । अदाशुरिः । प्रऽममर्ष । मघत्तये ।
तस्य । नः । वेदः । आ । भर ॥ १५ ॥ ४४ ॥

हे इन्द्र मघत्तये धनदानाय ते तुभ्यं यः पुमान् रेवान् धनवान् सन् अदाशुरिरदान-शीलः प्रममर्षाभ्यसूयति तस्य पुंसोवेदोधनं नोस्मभ्यमाभराहर ॥ १५ ॥

१५. इन्द्र, जो मनुष्य धनी होकर दान नहीं करता और धनदाता तुमसे ईर्ष्या करता है, उसका धन हमारे लिए ले आओ।

॥ इति षष्ठस्य तृतीये चतुश्चत्वारिंशोवर्गः॥ ४४ ॥

अथ षोडशी—

इमउत्वाविचक्षतेसखायइन्द्रसोमिनः पुष्टावन्तोयथापशुम् ॥ १६ ॥

इमे । ऊँ इति । त्वा । वि । चक्षते । सखायः । इन्द्र ।
सोमिनः । पुष्टऽवन्तः । यथा । पशुम् ॥ १६ ॥

हे इन्द्र त्वा त्वां सोमिनोभिषुतसोमसखायः इमउ इमेएव खल्वस्मदीयाजनाः पुष्टावन्तः संभृतघासाः यथा पशुं पशुमिव विचक्षते विपश्यन्ति ॥ १६ ॥

१६. इन्द्र, जैसे लोग घास लाकर पशु को देखते हैं, वैसे ही हमारे ये सखा सोमाभिषव करके तुम्हें देखते हैं।

अथ सप्तदशी—

उतत्वाबधिरंवयंश्रुत्कर्णंसन्तमूतये। दूरादिहहवामहे ॥ १७ ॥

उत । त्वा । अबधिरम् । वयम् । श्रुत्ऽकर्णम् । सन्तम् ।
ऊतये । दूरात् । इह । हवामहे ॥ १७ ॥

उतापिच हे इन्द्र अवधिरं अनुपहतश्रोत्रेन्द्रियं अतएव श्रुतकर्णं श्रवणपरकर्णं सन्तं त्वा त्वां वयं निशोकाइह यज्ञे ऊतये रक्षणाय दूराद्धवामहे ह्वयामः ॥१७॥

१७. इन्द्र, तुम बहरे नहीं हो। तुम्हारा कान सुननेवाला है; इसलिए रक्षण के लिए हम इस यज्ञ में तुम्हें दूर से बुलाते हैं।

यच्छुश्रूयाइमंहवंदुर्मर्षंचक्रियाउत । भवेरापिर्नोअन्तमः ॥१८॥

यत् । शुश्रुयाः । इमम् । हवम् । दुःऽमर्षम् । चक्रियाः ।
उत । भवेः । आपिः । नः । अन्तमः ॥ १८ ॥

हे इन्द्र यद्यदीममस्मदीयं हवमाह्वानं शुश्रुयाः शृणुयाः तर्हि दुर्मर्षं शत्रूणां दुःसहं बलं चक्रियाः कुर्याः । उतापिच नोस्माकमन्तमः अन्तिकतम आपिर्बन्धुः भवेः ॥ १८ ॥

१८. इन्द्र, हमारे इस आह्वान को सुनो और अपने बल को शत्रुओं के लिए दुःसह करो। तुम हमारे समीपतम बन्धु बनो।

यच्चिद्धितेअपिव्यथिर्जगन्वांसोअमन्महि । गोदाइदिन्द्रबोधिनः ॥१९॥

यत् । चित् । हि । ते । अपि । व्यथिः । जगन्वांसः । अमन्महि ।
गोऽदाः । इत् । इन्द्र । बोधि । नः ॥ १९ ॥

अपिचिदपिच हे इन्द्र ते तुभ्यं यद्यदाहि व्यथिर्दारिद्र्येण व्यथिताः जगन्वांसोगन्तारो-वयममन्महि विश्रुमः तदा नोस्माकं गोदाइत् गवांदातैव भवामीति बोधि बुध्यस्व ॥ १९ ॥

१९. इन्द्र, जब हम दरिद्रता के द्वारा पीड़ित होकर तुम्हारे पास जायेंगे और तुम्हारी स्तुति करेंगे, तब हमें गोदान करने के लिए जागना।

अथ विंशी—

आत्वारम्भंनजिव्रयोररभ्माशवसस्पते । उश्मसित्वासधस्थआ ॥२०॥४५

आ । त्वा । रम्भम् । न । जिव्रयः । ररभ्म । शवसः । पते ।
उश्मसि । त्वा । सधऽस्थे । आ ॥ २० ॥ ४५ ॥

हे शवसस्पते बलस्यपते त्वा त्वां वयं जिव्रयःक्षीणावृद्धारम्भं दंडमिव ररभ्म आरभामहे । तथाचयास्कः—आरभामहे त्वाजीर्णाइव दण्डमिति[1] । अपिच त्वा त्वां सधस्थे यज्ञे उश्मसि कामयामहे ॥ २० ॥

२०. बलपति, हम क्षीण होकर, दण्ड के समान, तुम्हें प्राप्त करेंगे। यज्ञ में हम तुम्हारी कामना करेंगे।

॥ इति षष्ठस्य तृतीये पञ्चचत्वारिंशोवर्गः ॥ ४५ ॥

---

1 नि० ३. २१ ।

अथैकविंशी—

स्तोत्रमिन्द्रायगायतपुरुनृम्णायसत्वने। नकिर्यंवृण्वतेयुधि ॥ २१ ॥

स्तोत्रम्। इन्द्राय। गायत। पुरुऽनृम्णाय। सत्वने।
नकिः। यम्। वृण्वते। युधि॥ २१ ॥

यमिन्द्रं युधि युद्धे नकिर्वृण्वते केपिनवारयन्ति तस्मै सत्वने दानशीलाय पुरुनृम्णाय बहुधनायेन्द्राय स्तोत्रं गायत पठत ॥ २१ ॥

२१. प्रचुर-धनी और दानशील इन्द्र के लिए स्तोत्र पाठ करो। युद्ध में उन्हें कोई नहीं हरा सकता।

अभित्वावृषभासुतेसुतंसृजामिपीतये। तृंपाव्यंश्नुहीमदम् ॥२२॥

अभि। त्वा। वृषभ। सुते। सुतम्। सृजामि। पीतये।
तृम्प। वि। अश्नुहि। मदम् ॥ २२ ॥

हे वृषभेन्द्र त्वा त्वां सुते सोमेभिषुतेसति सुतमभिषुतंसोमं पीतये पानायाभिसृजामि तृंप तृप्य मदं मदकरं सोमं व्यश्नुहिच ॥ २२ ॥

२२. बली इन्द्र, सोम के अभिषुत होने पर उसी अभिषुत सोम को, पान के लिए, तुम्हें देता हूँ। तृप्त होओ। मदकर सोम का पान करो।

मात्वांमूराअविष्यवोमोपहस्वानआदभन्। माकींब्रह्मद्विषोवनः॥२३॥

मा। त्वा। मूराः। अविष्यवः। मा। उपऽहस्वानः। आ।
दभन्। माकीम्। ब्रह्मऽद्विषः। वनः॥ २३ ॥

हे इन्द्र त्वा त्वां मूराः मूरका मूढा मनुष्या अविष्यवः पालनकामा मादभन् माहिंसंतु। उपहस्वानः उपहसनपराश्च माभवन्तु। ब्रह्मद्विषो ब्राह्मणानां द्वेष्टॄन् माकीं वनः मा भजेथाः ॥२३॥

२३. इन्द्र, मूढ़ मनुष्य, रक्षाभिलाषी होकर, तुम्हें न मारें। वे तुम्हें हँसें नहीं। ब्राह्मणद्वेषियों का कभी आश्रय नहीं करना।

अथ चतुर्विंशी—

इहत्वागोपरीणसामहेमंन्दन्तुराधसे। सरोगौरोयथापिब ॥ २४ ॥

इह। त्वा। गोऽपरीणसा। महे। मन्दन्तु। राधसे।
सरः। गौरः। यथा। पिब ॥ २४ ॥

हे इन्द्र त्वा त्वामिहयज्ञे गोपरीणसा गव्येनपयसा संमिश्रितेन सोमेन महे महते राधसे धनाय मन्दन्तु मनुष्यामादयन्तु । त्वञ्च तं सोमं यथा गौरोमृगः सरः पिबति तथा पिब ॥ २४ ॥

२४. इन्द्र, इस यज्ञ में महाधन की प्राप्ति के लिए मनुष्य दुग्धादि से मिले सोमपान से मत्त हों। गौरमृग जैसे सरोवर में जल पीता है, वैसे ही तुम सोमपान करो।

यावृत्रहापरावतिसनानवाचचुच्युवे । तासंसत्सुप्रवोचत॥२५॥४६॥

या । वृत्रऽहा । पराऽवति । सना । नवा । च । चुच्युवे ।
ता । संसत्ऽसु । प्र । वोचत ॥ २५ ॥ ४६ ॥

वृत्रहेन्द्रः परावति दूरे या यानि सना सनातनानि नवा नवानि नूतनानि च धनानि चुच्युवे प्रेरितवान् तानि धनानि संसत्सु यज्ञेषु सभासुवा प्रवोचत प्रब्रूते विद्वज्जनः ॥ २५ ॥

२५. वृत्रघ्न इन्द्र, तुमने दूर देश में जो नया और पुराना धन प्रेरित किया है, उसे यज्ञ में बताओ।

॥ इति षष्ठस्य तृतीये षट्चत्वारिंशोवर्गः ॥ ४६ ॥

अपिबत्कद्रुवःसुतमिन्द्रःसहस्रबाह्वे । अत्रादेदिष्टपौंस्यम् ॥ २६॥

अपिबत् । कद्रुवः । सुतम् । इन्द्रः । सहस्रऽबाह्वे ।
अत्र । अदेदिष्ट । पौंस्यम् ॥ २६ ॥

इन्द्रः कद्रुवः कद्रुनामकस्यऋषेः संबंधिनं सुतमभिषुतं सोममपिबत् पीतवान् । सहस्रबाह्वे सहस्रबाहोः शत्रूंश्चाहन्निितिशेषः । अत्रास्मिन्नवसरे पौंस्यं इन्द्रस्य वीर्यमदेदिष्टादीप्यत ॥ २६ ॥

२६. इन्द्र, तुमने रुद्र ऋषि के अभिषुत सोम का पान किया है और सहस्रबाहु नामक शत्रु का नाश भी किया है। उस समय इन्द्र का वीर्य अतीव दीप्त हुआ था।

सत्यंतत्तुर्वशेयदौविदानोअह्नवाय्यम् । व्यानट्तुर्वणेशमि ॥ २७॥

सत्यम् । तत् । तुर्वशे । यदौ । विदानः । अह्नवाय्यम् ।
वि । आनट् । तुर्वणे । शमि ॥ २७ ॥

तुर्वशेराज्ञि यदौच यदुनामके च राज्ञि तत्प्रसिद्धं यागादिलक्षणं शमि कर्म। शचो शमीति कर्मनामसुपाठात्। सत्यं परमार्थं विदानोजानन् तयोः प्रीत्यर्थमह्नवाय्यं अह्नवाय्यनामकं तयोः शत्रुं तुर्वणे संग्रामे व्यानट् व्याप्तवान् ॥ २७ ॥

२७. तुर्वश और यदु नामक राजाओं के प्रसिद्ध कर्म को तुमने सच्चा समझकर उनके लिए युद्ध में अह्नवाय्य को व्याप्त किया था।

अथाष्टाविंशी–

तरणिंवोजनानांत्रदंवाजस्यगोमतः । समानमुप्रशंसिषम् ॥ २८॥

तरणिम् । वः । जनानाम् । त्रदम् । वाजस्य । गोऽमतः ।
समानम् । ऊँ इति । प्र । शंसिषम् ॥ २८ ॥

हे अस्मदीयाः पुरुषा वोयुष्माकं जनानां पुत्रपौत्रादीनां तरणिं तारकं त्रदं शत्रूणां तर्दयितारं गोमतः पशुमतोवाजस्यान्नस्य दातारं चेन्द्रं समानमु साधारणमेव प्रशंसिषं स्तौमि ॥२८॥

२८. स्तोताओ, तुम्हारे पुत्रादि के तारक, शत्रु-विमर्दक, गोविशिष्ट, अन्नदाता और साधारण इन्द्र की मैं स्तुति करता हूँ।

ऋभुक्षणंनवर्तवउक्थेषुंतुग्र्यावृधम् । इन्द्रंसोमेसचासुते ॥ २९ ॥

ऋभुक्षणम् । न । वर्तवे । उक्थेषु । तुग्र्यऽवृधम् ।
इन्द्रम् । सोमे । सचा । सुते ॥ २९ ॥

ऋभुक्षणं महान्तं तुग्र्यावृधं उदकस्यवर्धयितारं तुग्र्या बर्बुरमित्युदकनामसुपाठाव् इन्द्रं सोमे सचा स्तोत्रेणसह सुतेभिषुते सत्युक्थेषु शस्त्रेषु वर्तवे धनं वरितुं प्रशंसामीतिशेषः नेतिसम्प्रत्यर्थे ॥ २९ ॥

२९. जल-वर्द्धक और महान् इन्द्र की, धन देने के लिए, सोमाभिषव होने पर, उक्थों के उच्चारणकाल में, स्तुति करता हूँ।

यःकृन्तदिद्वियोन्यंत्रिशोकायगिरिंपृथुम् । गोभ्योगातुंनिरेतवे॥ ३०॥४७।

यः । कृन्तत् । इत् । वि । योन्यम् । त्रिऽशोकाय ।
गिरिम् । पृथुम् । गोभ्यः । गातुम् । निःऽएतवे ॥ ३० ॥ ४७ ॥

यइद्यएवेन्द्रोयोन्यमुदकनिर्गमनद्वारं पृथुं विस्तीर्णं गिरिंमेघं गिरिः व्रजइति मेघनामसु पाठाव् त्रिशोकाय त्रिशोकनामऋष्यर्थं विकृन्तद्व्यच्छिनव् सगोभ्योगमनवद्भ्यउदकेभ्यो निरेतवे निर्गमनाय गातुं भूमिं भूमिः गातुरिति तन्नामसुपाठाव् मार्गमित्यर्थः करोतीतिशेषः ॥ ३० ॥

३०. जिन इन्द्र ने जल-निर्गमन के लिए द्वार-रूप और विस्तृत मेघ को, त्रिशोक ऋषि के लिए, विच्छिन्न किया था, उन्होंने ही जल-गति के लिए मार्ग बनाया था।

॥ इति षष्ठस्य तृतीये सप्तचत्वारिंशोवर्गः ॥४७॥

अथैकत्रिंशी–

यद्दंधिषेमंनस्यसिंमन्दानःप्रेदियंक्षसि । मातत्करिन्द्रमृळय॥३१॥

यत् । दधिषे । मनस्यसिं । मन्दानः । प्र । इत् ।
इयंक्षसि । मा । तत् । कः । इन्द्र । मृळयं ॥ ३१ ॥

हे इन्द्र मन्दानोमोदमानस्त्वं यच्छुभं वस्तु दधिषे धारयसि यच्च मनस्यसि पूजयसि यदपि प्रेदियक्षसि प्रयच्छस्येव तत्सर्वं माकः किं नाकार्षीरस्माकं कृतवानेव। किञ्चास्मान्मृळय सुखय ॥ ३१ ॥

३१. इन्द्र, प्रसन्न होकर जो तुम धारण करते हो, जो पूजते हो, जो दान करते हो, सो सब हमारे लिए क्यों नहीं करते ? हमें सुखी करो।

दभ्रंचिद्धित्वावंतःकृतंशृण्वेअधिक्षमिं । जिगांत्विन्द्रतेमनंः॥३२॥

दभ्रम् । चित् । हि । त्वाऽवंतः । कृतम् । शृण्वे । अधिं ।
क्षमिं । जिगांतु । इन्द्र । ते । मनंः ॥ ३२ ॥

हे इन्द्र त्वावतः त्वत्सदृशस्य दभ्रंचिदल्पमपि कृतं कर्माधिक्षमि क्षमायां अधीति सप्तम्यर्थानुवादः शृण्वे विश्रुतं भवतिहि। तथासति ते तव मनोजिगातु मयिगच्छतु ॥ ३२ ॥

३२. इन्द्र, तुम्हारे समान थोड़ा भी कर्म करने पर मनुष्य पृथिवी में प्रसिद्ध हो जाता है। तुम्हारा मन मेरे प्रति गमन करे ।

तवेदुताःसुकीर्तयोसंन्नुतप्रशंस्तयः । यदिन्द्रमृळयांसिनः ॥३३॥

तवं । इत् । ऊँ इतिं । ताः । सुऽकीर्तयः । असंन् । उत ।
प्रऽशंस्तयः । यत् । इन्द्र । मृळयांसि । नः ॥ ३३ ॥

हे इन्द्र त्वं नोस्मान् यद्याभिर्मृळयासि सुखयसि ताः सुकीर्तयः शोभनाख्यातयः तवेत्तवैवासन् भवेयुः। उतापिच ताः प्रशस्तयः स्तुतयश्च तवैव भवेयुः ॥३३॥

३३. इन्द्र, तुम जिनके द्वारा हमें सुखी करते हो, वे तुम्हारी प्रसिद्धियां और स्तुतियां तुम्हारी हों।

अथ चतुस्त्रिंशी–

मानएकंस्मिन्नागंसिमाद्वयोरुतत्रिषु । वधीर्माशूरभूरिषु ॥ ३४ ॥

मा । नः । एकस्मिन् । आगसि । मा । द्वयोः । उत ।

त्रिषु । वधीः । मा । शूर । भूरिषु ॥ ३४ ॥

हे शूरेन्द्र नोस्मानेकस्मिन्नागस्यपराधे मावधीर्माहिंसीः द्वयोरागसोरपि मावधीरुतापिच त्रिष्वागः स्वपि माहिंसीर्भूरिष्वप्यसंख्यातेष्वप्यागःसु माच वधीः ॥ ३४ ॥

३४. इन्द्र, एक अपराध करने पर हमें नहीं मारना, दो-तीन अथवा बहुत अपराध करने पर भी हमें नहीं मारना।

बिभयाहित्वावतउग्रादभिप्रभङ्गिणः । दस्मादहमृतीषहः ॥ ३५॥४८॥

बिभय । हि । त्वाऽवतः । उग्रात् । अभिऽप्रभङ्गिनः ।

दस्मात् । अहम् । ऋतिऽसहः ॥ ३५ ॥ ४८ ॥

हे इन्द्र त्वावतः त्वत्सदृशादुग्रादुद्गूर्णादभिप्रभंगिणः शत्रूणामभिप्रहर्तुर्दस्मात्पापानामुपक्षपयितुः ऋतीषहः शत्रुकृतां हिंसां सहतः अहं निशोकः बिभयहि बिभेमि खलु ॥३५॥

३५. इन्द्र, तुम्हारे समान उग्र, शत्रुओं को मारनेवाले, पापियों के विनाशक और शत्रुओं की हिंसा को सहनेवाले देवता से मैं निर्भय होऊँ।

॥ इति षष्ठस्य तृतीयेष्टचत्वारिंशोवर्गः ॥ ४८ ॥

अथ षट्त्रिंशी—

मासख्युःशूनमाविदेमापुत्रस्यप्रभूवसो । आवृत्वद्भूतुतेमनः॥३६॥

मा । सख्युः । शूनम् । आ । विदे । मा । पुत्रस्य ।

प्रभुवसो इति प्रभुऽवसो । आऽवृत्वत् । भूतु । ते । मनः ॥ ३६ ॥

हे प्रभूवसो प्रभूतधनेन्द्र ते तव सख्युः शूनं वृद्धं माविदे मावेदयामि पुत्रस्यापि शूनं माविदे तव मनः अस्मासु आवृत्वदावर्तनवद्भूतु भवतु पुनःपुनः सुखं करोत्वित्यर्थः ॥ ३६ ॥

३६. प्रचुर धनवाले इन्द्र, तुम्हारे सखा की समृद्धि की बात को निवेदित करता हूँ, उसके पुत्र की कथा को निवेदित करता हूँ। तुम्हारा मन मुझसे फिर न जाय।

अथ सप्तत्रिंशी—

कोनुमर्याअमिथितःसखासखायमब्रवीत् । जहाकोअस्मदीषते॥३७॥

कः । नु । मर्याः । अमिथितः । सखा । सखायम् । अब्रवीत् ।

जहा । कः । अस्मत् । ईषते ॥ ३७ ॥

कोनु कःखलु हे मर्याः मनुष्या अभिथितो मेथतिराक्रोशकर्मा अनाकृष्टः इन्द्रादन्यः सखा सखायं प्रति जहा अहं कं जघान कः कोवास्मदस्मत्तोभीतः ईषते पलायतइत्यब्रवीद्वदति इन्द्रएवैतादृशस्य वचनस्य वक्तेत्यभिप्रायः । तथाचयास्कः—मेथतिराक्रोशकर्मा पापकं जघानकमहं जातु कोस्मद्भीतः पलायतइति । मानएकस्मिन्नागसीत्यादिकयाश्रुत्या नूनमृषिमिन्द्रआजहारेत्यत्रऋषिर्विस्मयतइति ॥ ३७ ॥

३७. मनुष्यो, इन्द्र के अतिरिक्त कौन अद्वेष्टा सखा, प्रश्न करने के पूर्व ही, सखा को कह सकता है कि मैंने किसको मारा है ? कौन हमसे डरकर भागेगा ?

एवारेंवृषभासुतेसिन्वन्भूर्यावयः । श्वघ्नीवंनिवताचरन् ॥ ३८ ॥

एवारे । वृषभ । सुते । असिन्वन् । भूरि । आवयः ।
श्वघ्नीऽइंव । निऽवता । चरन् ॥ ३८ ॥

हे वृषभ कामानांवर्षकेन्द्र एवारे एवारोनामकश्चित्तस्मिन् सुतेभिषुतेसोमेसति भूरि बहूनि धनान्यसिन्वन् नवध्नन् श्वघ्नीव श्वघ्नी कितवः । तथाचयास्कः—श्वघ्नीकितवोभवतिस्वंहन्ति स्वंपुनराश्रितंभवतीति । सइवससोमः त्वामेवप्राप्तः आवयः दृश्यमानाः सर्वेदेवाः निवताअधोमुखाः सन्तः आचरन् निर्गताः ॥ ३८ ॥

३८. अभीष्टदाता इन्द्र, अभिषुत होने पर सोम, एवार नामक व्यक्ति को बहुधन न देकर, धूर्त्त के समान, तुम्हारे पास आता है। नीचे मुंह करके देवता लोग निकल गये।

आतंएतावंचोयुजाहरींगृभ्णेसुमद्रथा । यदींब्रह्मभ्यइद्ददः ॥३९॥

आ । ते । एता । वचःऽयुजा । हरी इति । गृभ्णे ।
सुमत्ऽरथा । यत् । ईम् । ब्रह्मऽभ्यः । इत् । ददः ॥ ३९ ॥

हे इन्द्र ते तव सुमद्रथा कल्याणरथौ वचोयुजा मन्त्रेणयुज्यमानौ एता एतौ हरी अश्वौ आगृभ्णे अस्मदभिमुखं यातुं हस्ताभ्यां आकर्षामीत्यर्थः । यद्यस्मात्त्वं ब्रह्मभ्यइद्ब्राह्मणेभ्यएव ईमिदं धनं ददः ददासि ॥ ३९ ॥

३९. सुन्दर रथवाले और मंत्र के द्वारा जोते जानेवाले इन दोनों हरि नामक अश्वों को मैं आकृष्ट करता हूं। तुम ब्राह्मणों को ही यह धन देते हो।

अथ चत्वारिंशी--

भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः । वसुस्पार्हंतदाभर ॥४०॥

---

१ नि० ४.२. । २ नि० ५.२२. ।

भिन्धि । विश्वाः । अप । द्विषः । परि । बाधः । जहि ।
मृधः । वसु । स्पार्हम् । तत् । आ । भर ॥ ४० ॥

हे इन्द्र त्वं विश्वाः सर्वाद्विषोद्वेष्ट्रीः शत्रुसेनाः अपभिन्धि विदारय । बाधोहिंसित्रीः मृधः संग्रामान् स्पृधः मृधः इति संग्रामनामसुपाठाद् परिजहि हिंसच । तासां स्पार्हं स्पृहणीयं तत्प्रसिद्धं वस्वाभरास्मभ्यमाहर ॥ ४० ॥

४०. इन्द्र, तुम सारे शत्रुओं को फाड़ो, हिंसा करो, संग्राम को बन्द करो और अभिलषणीय धन ले आओ।

यद्वीळाविन्द्रयत्स्थिरेयत्पर्शानेपराभृतम् । वसुस्पार्हंतदाभर ॥ ४१ ॥

यत् । वीळौ । इन्द्र । यत् । स्थिरे । यत् । पर्शाने ।
पराऽभृतम् । वसु । स्पार्हम् । तत् । आ । भर ॥ ४१ ॥

हे इन्द्र त्वयाच वीळौ दृढे परैः कम्पयितुमशक्ये यद्धनं पराभृतं विन्यस्तं यच्च स्थिरे स्वयमचले पराभृतं यच्चापि पर्शाने विमर्शनक्षमे पराभृतं तत्स्पार्हं वस्वाभर ॥ ४१ ॥

४१. इन्द्र, दृढ़ स्थान पर तुमने जो धन रक्खा है, स्थिर स्थान में जो धन रक्खा है और सन्दिग्ध स्थान में जो धन रक्खा है, वह अभिलषणीय धन ले आओ। अथ द्विचत्वारिंशी--

यस्यतेविश्वमानुषोभूरेर्दत्तस्यवेदति । वसुस्पार्हंतदाभर ॥ ४२ ॥ ४९ ॥

यस्य । ते । विश्वऽमानुषः । भूरेः । दत्तस्य ।
वेदति । वसु । स्पार्हम् । तत् । आ । भर ॥ ४२ ॥ ४९ ॥

हे इन्द्र ते त्वया विभक्तिव्यत्ययः दत्तस्य दत्तं भूरेर्बहु यस्य यद्धनं कर्मणिषष्ठी विश्वमानुषः सर्वोमनुष्योवेदति जानाति तत्स्पार्हं स्पृहणीयं वस्वाभर ॥ ४२ ॥

४२. इन्द्र, लोगों को अभिज्ञता में तुम्हारे द्वारा दिया गया जो धन है, उस अभिलषणीय धन को ले आओ।

॥ इति षष्ठस्य तृतीये एकोनपञ्चाशोवर्गः ॥ ४९ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके तृतीयोध्यायः ॥ ३ ॥

# ॥श्रीगणेशायनमः॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थंमहेश्वरम् ॥ १ ॥

षष्ठेतृतीयमध्यायं व्याख्यायश्रीमतीसुतः । श्रीसायणार्यःसंगृह्य चतुर्थंव्याकरोत्यथ ॥२॥

त्वावतइतित्रयस्त्रिंशदृचं चतुर्थसूक्तम् अश्वपुत्रस्य वशाख्यस्यार्षं प्राग्वत्समपरिभाषया आद्याश्चतस्रोगायत्र्यः तत्राद्या पादनिचृत् त्रयःसप्तकाःपादनिचृत् इत्युक्तलक्षणोपेतत्वात् । दधानोगोमदश्ववदित्येषा पञ्चमीककुप् अष्टकद्वादशाष्टकैःपादैरुपेतत्वात् मध्यमश्चेत्ककुबिति हि तल्लक्षणं ' तमिन्द्रमितिषष्ठी गायत्री । तस्मिन्नृहिसन्तीतिसप्तमी बृहती यस्तेमदइत्यष्टम्यनुष्टुप् योदुष्टरइतिनवमी सतोबृहती अयुजौजागतौसतोबृहतीतिह्युक्तम् गव्योषुणइतिदशमी गायत्री नहितेशूरेत्येकादशी बृहती यऋष्वइतिद्वादशी विपरीतासतोबृहती प्रथमतृतीययोरष्टाक्षरवती द्वितीयचतुर्थयोर्द्वादशाक्षराच युजौचेद्विपरीतेत्युक्तत्वात् । सनोवाजेष्वितित्रयोदशी चतुर्विंशत्यक्षराद्विपदा । अभिवोवीरमितिचतुर्दशी पिपीलिकमध्या बृहती त्रयोदशिनोर्मध्येष्टकः पिपीलिकमध्येत्युक्तत्वात् । ददीरेक्णइतिपञ्चदशी ककुम्न्यंकुशिरा त्रैष्टुभजागतचतुष्काः ककुम्न्यंकुशिरेत्युक्तत्वात् । विश्वेषामितिषोडशीविराट् महःसुवइति सप्तदशी जगती येपातयन्तइत्यष्टादशी उपरिष्टाद्बृहती चतुर्थपादस्यद्वादशाक्षरत्वात् प्रभङ्गमित्येकोनविंशी बृहती सनितःसुसनितरितिविंशी विषमपदाबृहती नवकाष्टचेकादश्यष्टिनोविषमपदेत्युक्तत्वात् आसएतु षष्टिंसहस्रेत्येकविंशीद्वाविंश्यौ पंक्ती दशश्यावाइति त्रयोविंशीगायत्री दानासइतिचतुर्विंशीपंक्तिः पञ्चविंशीसप्तविंश्यौबृहत्यौ षड्विंश्यष्टाविंश्यौसतोबृहत्यौ । एकोनत्रिंशीगायत्री गावोनयूथमितित्रिंशी विंशत्यक्षरा द्विपदा विराट् एकत्रिंश्युष्णिक् द्वात्रिंशीपंक्तिः त्रयस्त्रिंशीगायत्री । आसएत्वित्यादिभिश्चतसृभिः कनीतपुत्रस्य पृथुश्रवसोदानंस्तूयते अतस्तद्देवताकाः । आनोवायवित्यादीनां चतसृणां द्वात्रिंश्याश्च वायुर्देवता । शिष्टाअनादेशपरिभाषयेन्द्रदेवताकाः । एतत्सर्वमनुक्रमण्यामुक्तम्— त्वावतस्त्रयस्त्रिंशद्वशोऽश्व्य आसआदि कानीतस्य पृथुश्रवसोदानस्तुतिराद्यापादनिचृत् पञ्चम्यादि ककुप् गायत्री बृहत्यनुष्टुप् सतोबृहती गायत्री विपरीतोत्तरः प्रगाथो द्विपदाचतुर्विंशिका बृहती पिपीलिकमध्या ककुम्न्यंकुशिरा विराट् जगत्युपरिष्टाद्बृहतीबृहत्यौ विषमपदोत्तरे पङ्क्तीगायत्रीपङ्क्तिप्रगाथौ च वायव्यौ गायत्रीद्विपदोष्णिक्पंक्तिर्वायव्यगायत्रीति । महाव्रते

निष्केवल्ये सनितःसुसनितरित्यन्तमेवसूक्तं। तथाच पञ्चमारण्यकेशौनकेनसूत्रितम्—त्वावतः पुरूवसवितिवशः सनितःसुसनितरित्येतदन्तइति।

तत्र प्रथमा—

ॐम् त्वावंतःपुरूवसोवयमिन्द्रप्रणेतः। स्मसिस्थातर्हरीणाम्॥१॥

त्वाऽवंतः। पुरुवसो इति पुरुऽवसो। वयम्। इन्द्र।

प्रनेतरिति प्रऽनेतः। स्मसि। स्थातः। हरीणाम्॥ १॥

हे पुरूवसो बहुधनेन्द्र प्रणेतः कर्मणांपारं प्रकर्षेण प्रापयितरिन्द्र त्वावतः त्वत्सदृशस्य इन्द्रसमानस्यान्यस्याभावात्त्वेत्यर्थः तव स्वभूतावयं स्मसि स्मः हे हरीणां एतत्संज्ञकानामश्वानां स्थातरधिष्ठातः॥ १॥

१: बहु-धनी और कर्म-प्रापक इन्द्र, तुम्हारे समान पुरुष के ही हम आत्मीय हैं। तुम हरि नाम के अश्वों के अधिष्ठाता हो।

त्वांहिसत्यमद्रिवोविद्मदातारमिषाम्। विद्मदातारंरयीणाम्॥ २॥

त्वाम्। हि। सत्यम्। अद्रिऽवः। विद्म। दातारम्।

इषाम्। विद्म। दातारम्। रयीणाम्॥ २॥

हे अद्रिवः अत्ति शत्रुमित्यद्रिः वज्रः तद्वन्निन्द्र त्वां सत्यं निश्चयं इषामन्नानां दातारं विद्म जानीमः। तथा रयीणां धनानां दातारं विद्म॥ २॥

२. वज्र इन्द्र, तुम्हें हम अन्नदाता जानते हैं। धनदाता भी जानते हैं।

अथ तृतीया—

आयस्यंतेमहिमानंशतमूतेशतक्रतो। गीर्भिर्गृणन्तिकारवः॥ ३॥

आ। यस्य। ते। महिमानम्। शतम्ऽऊते।

शतक्रतो इति शतऽक्रतो। गीःऽभिः। गृणन्ति। कारवः॥ ३॥

हे शतमूते अपरिमितरक्षण हे शतक्रतो बहुकर्मयुक्तेन्द्र यस्य ते महिमानं माहात्म्यं कारवः स्तोतारोगीर्भिः स्तुतिभिर्गृणन्ति स्तुवन्ति स्वाभीष्टाय। ३॥

३. असीम रक्षणों और बहु कर्मोंवाले इन्द्र, तुम्हारी महिमा को स्तोता लोग स्तुति-द्वारा गाते हैं।

अथ चतुर्थी—

सुनीथोघासमर्त्योयंमरुतोयमर्यमा। मित्रःपांत्यद्रुहः॥ ४॥

सुऽनीथः । घ । सः । मर्त्यः । यम् । मरुतः । यम् ।
अर्यमा । मित्रः । पान्ति । अद्रुहः ॥ ४ ॥

समर्त्योमनुष्यो यजमानः सुनीथः सुयज्ञः सुनयनोवा भवति । घेति प्रसिद्धौ । सइत्युक्तं कमित्याह यं यजमानं मरुतोदेवाः पान्ति रक्षन्ति । अद्रुहः अद्रोहकर्तारः तथा यमर्यमा पाति यंचमित्रः पाति सएवं भवतीति ॥ ४ ॥

४. द्रोह-शून्य मरुद्गण जिसकी रक्षा करते हैं और अर्यमा तथा मित्र जिसकी रक्षा करते हैं, वही मनुष्य सुन्दर यज्ञवाला होता है।

दधानोगोमदश्ववत्सुवीर्यमादित्यजूतएधते । सदारायापुरुस्पृहा ॥ ५ ॥ १ ॥

दधानः । गोऽमत् । अश्वऽवत् । सुऽवीर्यम् । आदित्यऽजूतः ।
एधते । सदा । राया । पुरुऽस्पृहा ॥ ५ ॥ १ ॥

आदित्यजूतः आदित्यप्रेरितः आदित्यानुगृहीतो यजमानो गोमद्गोभिरुपेतं अश्ववदश्वैरुपेतं सुवीर्यं शोभनवीर्योपेतं पुत्रं दधानो धारयन्नेधते वर्धते सदा सर्वदा । किञ्च पुरुस्पृहा बहुभिः स्पृहणीयेन राया धनेन सदैधते ॥ ५ ॥

५. आदित्य-द्वारा अनुगृहीत यजमान गौ और अश्ववाला होकर तथा सुन्दर वीर्य से युक्त सदा बढ़ता है। यह बहु-संख्यक और अभिलषणीय धन के द्वारा बढ़ता है।

॥ इति षष्ठस्य चतुर्थे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी--

तमिन्द्रंदानमीमहेशवसानमभीर्वम् । ईशानंरायईमहे ॥ ६ ॥

तम् । इन्द्रम् । दानम् । ईमहे । शवसानम् । अभीर्वम् ।
ईशानम् । रायः । ईमहे ॥ ६ ॥

तं प्रसिद्धमिन्द्रं दानं देयं रायोधनं ईमहे याचामहे । कीदृशमिन्द्रं शवसानं बलमाचरन्तं अभीर्वं अभीरुं ईशानं सर्वस्य स्वामिनं ॥ ६ ॥

६. बल का प्रयोग करनेवाले, निर्भय तथा सबके स्वामी उन प्रख्यात इन्द्र के पास हम धन की याचना करते हैं।

तस्मिन्हिसन्त्यूतयोविश्वाअभीरवःसचा ।
तमावहन्तुसप्तयःपुरूवसुंमदायहरयःसुतम् ॥ ७ ॥

तस्मि॑न् । हि । सन्ति॑ । ऊ॒तयः॑ । विश्वाः॑ । अभी॑रवः । सचा॑ ।
तम् । आ । व॒ह॒न्तु॒ । सप्त॑यः । पु॒रु॒ऽवसु॑म् । मदा॑य ।
हर॑यः । सु॒तम् ॥ ७ ॥

तस्मिन्निन्द्रे ऊतयोगंत्र्यो विश्वाः सर्वा अभीरवोकातराः सचा सहायभूता मरुद्रूपाः सेनाः सन्ति भवन्ति अथवा तस्मिन्सर्वारक्षणाः सह संभवन्ति तमिन्द्रं सप्तयः सर्पणशीला-हरयोश्वाः पुरूवसुं बहुधनं बहुधनप्रदमित्यर्थः तं मदाय सुतमभिषुतसोमं प्रत्यावहन्तु आगमयन्तु ॥ ७ ॥

७. सर्वत्रगामी, निर्भय और सहायक मरुद्रूप सेना इन्द्र की ही है। गतिपरायण हरि अश्व हर्ष के लिए बहुधन-दाता इन्द्र को अभिषुत सोम के निकट ले आवें।

यस्ते॒मदो॒वरे॑ण्यो॒यइ॑न्द्रवृत्र॒हन्त॑मः ।
यआ॑द॒दिः॒स्व१र्नृभि॒र्यः॒पृत॑नासुदु॒ष्टरः॑ ॥ ८ ॥

यः । ते॒ । मदः॑ । वरे॑ण्यः । यः । इ॒न्द्र॒ । वृ॒त्र॒ह॒न्ऽत॑मः । यः ।
आ॒ऽद॒दिः । स्वः॑ । नृऽभिः॑ । यः । पृत॑नासु । दु॒स्तरः॑ ॥ ८ ॥

पूर्वमन्त्रे मदाय हरय इत्युक्तम् समदः स्तूयते । हे इन्द्र ते तव योमदो वरेण्यो वरणीयः यश्च मदः संग्रामे वृत्रहन्तमः शत्रूणामतिशयेन हन्ता यश्चाददिरादाता स्वः सु अरणं धनं नृभिर्नृभ्यः शत्रुभ्यः यश्च पृतनासु संग्रामेषु दुष्टरोनभिभाव्यस्तस्मै मदाय हरयो वहन्त्विति ॥ ८ ॥ ८. इन्द्र, तुम्हारा जो मद वरणीय है, जिसके द्वारा संग्राम में तुम शत्रुओं का अतीव वध करते हो, जिसके द्वारा शत्रु के पास से धन ग्रहण करते हो और संग्राम में जिसके द्वारा पार हुआ जाता है--

अथ नवमी–

योदु॒ष्टरो॑विश्ववार॒श्र॒वाय्यो॒वाजे॒ष्वस्ति॑तरु॒ता ।
सनः॑शविष्ठ॒सव॒नाव॑सोगहि॒ग॒मेम॒गोम॑तिव्र॒जे॥ ९ ॥

यः । दु॒स्तरः॑ । वि॒श्व॒ऽवा॒र॒ । श्र॒वाय्यः॑ । वाजे॑षु । अस्ति॑ ।
त॒रु॒ता । सः । नः॒ । श॒वि॒ष्ठ॒ । सव॑ना । आ । व॒सो॒ इति॑ ।
ग॒हि॒ । ग॒मेम॑ । गोऽम॑ति । व्र॒जे ॥ ९ ॥

हे विश्ववार विश्वैर्वरणीयेन्द्र वाजेषु युद्धेषु यस्त्वदुष्टरो दुःखेनतरीतुंशक्यः तरुता शत्रूणां तारकोस्ति भवति। हे वसो वासक हे शविष्ठातिशयेनबलवन्निन्द्र सत्वं नः अस्माकं सवना सवनानि आगहि आगच्छ। वयंच गोमति व्रजे गोमन्तं व्रजं गमेम गच्छेम॥ ९॥

९. सर्व-वरेण्य, युद्ध में दुर्धर्ष शत्रुओं के पारगामी, सर्वत्र विख्यात, सर्वापेक्षा बली और वास-प्रदाता इन्द्र, अपने उसी मद (हर्ष के साथ) हमारे यज्ञ में आओ। हम गोयुक्त गोष्ठ में जायेंगे।

गव्योषुणोयथापुराश्वयोतरथया।
वरिवस्यमहामह॥ १०॥ २॥

गव्यो इति। सु। नः। यथा। पुरा। अश्वऽया। उत।
रथऽया। वरिवस्य। महाऽमह॥ १०॥ २॥

हे महामह महाधनेन्द्र गव्या। गव्या उ इति निपाताऽनिपातद्वयसमुदायस्य आदिवद्भावेन निपातवद्भावात् प्रकृतिभावः। अस्माकं गवामिच्छया अस्माकं गादातुं यथा पुरा पूर्वं यथास्माकं गवादिदानाय वरिवस्यसि तद्वदद्यापि सु सुष्ठु वरिवस्य परिचर आगच्छेत्यर्थः। न केवलं गवेच्छया किंतु अश्वया अश्वप्रदानेच्छया उतापिच रथया रथेच्छयाच वरिवस्येति॥ १०॥

१०. महाधनी इन्द्र, गोप्राप्ति, अश्वलाभ और रथ-संप्राप्ति की हमारी इच्छा होने पर पहले की ही तरह हमें वह सब देना।

॥ इति षष्ठस्य चतुर्थे द्वितीयोवर्गः॥ २॥

नहितेशूरराधसोन्तंविन्दामिसत्रा।
दशस्यानोमघवन्नूचिदद्रिवोधियोवाजेभिराविथ॥ ११॥

नहि। ते। शूर। राधसः। अन्तम्। विन्दामि। सत्रा।
दशस्य। नः। मघऽवन्। नु। चित्। अद्रिऽवः।
धियः। वाजेभिः। आविथ॥ ११॥

हे शूर विक्रान्तेन्द्र ते तव राधसो धनस्यान्तं इयत्तां सत्रा सत्यं नहि विन्दामि न लभे। यस्मादेवं तस्मात् हे मघवन् धनवन् हे अद्रिवो वज्रवन्निन्द्र नोस्माकं नूचित् क्षिप्रमेव दशस्य देहि तद्धनं। किञ्च वाजेभिर्वाजैरन्नैर्धियोस्मदीयानि कर्माण्याविथ रक्ष॥ ११॥

११. शूर इन्द्र, सचमुच में तुम्हारे धन की सीमा नहीं जानता। धनी और वज्री इन्द्र, हमें शीघ्र धन दो। अन्न-द्वारा हमारे कर्म की रक्षा करो।

अथ द्वादशी–

यऋष्वःश्रावयत्सखाविश्वेत्सवेदजनिमापुरुष्टुतः।
तंविश्वेमानुषायुगेन्द्रंहवन्तेतविषंयतस्रुचः ॥ १२ ॥

यः। ऋष्वः। श्रवयत्ऽसखा। विश्वा। इत्। सः। वेद। जनिम।
पुरुऽस्तुतः। तम्। विश्वे। मानुषा। युगा। इन्द्रम्।
हवन्ते। तविषम्। यतऽस्रुचः ॥ १२ ॥

यइन्द्रः ऋष्वोदर्शनीयः श्रावयत्सखा श्रावयन्तः सखायऋत्विजो यस्य सतादृशः श्रावयत्सखा पुरुष्टुतो बहुभिर्यजमानैःस्तुतो यइन्द्रः सविश्वेत् सर्वाण्यपि जनिम जन्मानि प्राणिनां वेद जानाति तं तविषं बलवन्तमिन्द्रं विश्वे सर्वेपि अध्वर्य्वादयो यतस्रुचः स्वीकृतहविष्काः सन्तो मानुषा मनुष्यसंबन्धिनो युगा युगानि कालान् सर्वेषुकालेषु हवन्ते आह्वयन्ति स्तुवन्ति ॥ १२ ॥

१२. जो इन्द्र दर्शनीय हैं, जिनके मित्र ऋत्विक् लोग हैं, जो बहुतों के द्वारा स्तुत हैं, वे संसार के सारे प्राणियों को जानते हैं, सारे मनुष्य हव्य ग्रहण करके सदा उन्हीं बलवान् इन्द्र को बुलाते हैं।

सनोवाजेष्ववितापुरूवसुःपुरःस्थातामघवावृत्रहाभुवत्॥१३॥

सः। नः। वाजेषु। अविता। पुरुऽवसुः। पुरःऽस्थाता।
मघऽवा। वृत्रऽहा। भुवत् ॥ १३ ॥

एषा द्विपदा जगती। सपुरूवसुर्बहुधनो मघवा धनवान् वृत्रहा शत्रूणां हन्तेन्द्रो नोस्माकं वाजेषु सङ्ग्रामेषु अविता रक्षिता पुरःस्थाता तदर्थं पुरतोवर्तमानो भुवद्भवतु ॥ १३ ॥

१३. वे ही प्रचुर धनवाले, मघवा और वृत्रहन्ता इन्द्र युद्धक्षेत्र में हमारे रक्षक और अग्रवर्ती हों।

अथ चतुर्दशी–

अभिवोवीरमन्धसोमदेषुगायगिरामहाविचेतसम्।
इन्द्रंनामश्रुत्यंशाकिनंवचोयथा ॥ १४ ॥

अभि। वः। वीरम्। अन्धसः। मदेषु। गाय। गिरा। महा।
विऽचेतसम्। इन्द्रम्। नाम। श्रुत्यम्। शाकिनम्।
वचः। यथा ॥ १४ ॥

हे उद्गात्रादयो वोयूयमित्यर्थः। अथवा हे यजमानाःवोयुष्माकं हिताय अन्धसः सोमस्य मदेषु उत्पाद्यमानेषु सत्सु वीरं शत्रूणामीरयितारं नाम शत्रूणां नामकं विचेतसं विशिष्टप्रज्ञं श्रुत्यं सर्वत्रश्रोतव्यं शाकिनं शक्तं ईदृशमिन्द्रं महा महत्या गिरा स्तुत्या वचो वाग्युष्मदीया यथा येनप्रकारेण प्रवर्तते गायत्र्यात्रिष्टुभावा तथा अभिगाय गायत स्तुतिं कुरुत ॥१४॥

१४. स्तोताओ, तुम लोगों के हित के लिए सोम-जात मत्तता उत्पन्न होने पर वीर, शत्रुओं की अवनति करनेवाले, विशिष्ट प्रज्ञावाले, सर्वत्र प्रसिद्ध और शक्तिशाली इन्द्र की, तुम्हारी जैसी वाक्य-स्फूर्ति हो, उसके अनुकूल, महती स्तुति-द्वारा, स्तुति करो।

द॒दी रेक्ण॒स्त॒न्वे॑द॒दिर्वसु॑द॒दिर्वाजे॑षुपुरुहूतवा॒जिन॑म्। नूनमथ॑॥१५॥२।

द॒दिः। रेक्णः॑। त॒न्वे॑। द॒दिः। वसु॑। द॒दिः। वाजे॑षु। पु॒रु॒ऽहू॒त। वा॒जिन॑म्। नूनम्। अथ॑॥ १५॥ २॥

हे पुरुहूत बहुभिराहूतेन्द्र त्वं तन्वे मत्यं शरीराय रेक्णोधनं ददिर्दाताभव। कदेत्युच्यते नूनं क्षिप्रमथेदानीमेव एवं प्रतिवाक्यं योज्यम्। तथा वसु धनं पुत्रादिभ्यो ददिर्दाताभव तथा वाजेषु संग्रामेषु वाजिनमन्नवन्तं रयिं ददिर्दाताभवेति। अत्रसर्वेष्वपि वाक्येषु ददिरित्यस्य लिङ्भावान्नलोकाव्ययेति षष्ठीप्रतिषेधः॥ १५॥

१५. इन्द्र, तुम मेरे शरीर के लिए इसी समय धनदाता बनो। संग्रामों में अन्नवान् धन के दाता बनो। बहुतों द्वारा आहूत इन्द्र, पुत्रों को धन दो।

॥ इति षष्ठस्य चतुर्थे तृतीयोवर्गः ॥३॥

विश्वे॑षामि॒र॒ज्यन्तं॒वसू॑नांसासह्वांसं॑चिद॒स्यवर्प॑सः।
कृ॒प॒य॒तोनूनमत्यथ॑॥ १६॥

विश्वे॑षाम्। इ॒र॒ज्यन्त॑म्। वसू॑नाम्। स॒स॒ह्वांस॑म्। चि॒त्। अ॒स्य। वर्प॑सः। कृ॒प॒ऽय॒तः। नूनम्। अति॑। अथ॑॥ १६॥

हे इन्द्र त्वां विश्वेषां सर्वेषां वसूनां धनानामिरज्यन्तं ईशानं अस्य वर्पसः वारकस्य कृपयतो युद्धं कल्पयतः शत्रोः सासह्वांसं अभिभवितारं स्तुवन्तइतिशेषः। सत्वं नूनं क्षिप्रं अथातिचिद् इदानीमपि धनं प्रयच्छेत्यर्थः॥ १६॥

१६. सारे धनों के अधिपति और बाधक तथा युद्ध-कम्पन-कर्त्ता शत्रुओं को हरानेवाले इन्द्र की स्तुति करो। वह शीघ्र धन-दान करेंगे।

अथ सप्तदशी—

महःसुवोअरमिषेस्तवामहेमीळ्हुषेअरङ्गमायजग्मये।
यज्ञेभिर्गीर्भिर्विश्वमनुषांमरुतामियक्षसिगायेत्वानमसागिरा॥१७॥

महः। सु। वः। अरम्। इषे। स्तवामहे। मीळ्हुषे।
अरम्ऽगमाय। जग्मये। यज्ञेभिः। गीःऽभिः। विश्वऽमनुषाम्।
मरुताम्। इयक्षसि। गाये। त्वा। नमसा। गिरा॥१७॥

हे इन्द्र महो महतो वः तवेत्यर्थः व्यत्ययेन बहुवचनं अरंगमनमस्मद्विषयं इषे इच्छामि अर्तेररमितिरूपम्। तदर्थं मीळ्हुषे सेक्के अरंगमाय अरंगमनाय संपूर्णगमनाय जग्मये गमनशीलाय यज्ञं प्रति एवंभूताय देवाय सुष्ठु स्तवामहे त्वां स्तुमइत्यर्थः। केन साधनेनेति तदुच्यते— यज्ञेभिर्यजमानसाधनैर्हविर्भिर्यज्ञैरेववा गीर्भिः स्तुतिभिः हे देव विश्वमनुषां विश्वेषां मनुष्याणां यष्टॄणां इयक्षसि एतैरिज्यसे मरुतां संबन्धी त्वं। किञ्च त्वा त्वां नमसा नमस्कारेण गिरा स्तुत्याच गाये स्तुवे॥१७॥

१७. इन्द्र, तुम महान् हो। मैं तुम्हारे आगमन की कामना करता हूँ। तुम गमनशील हो, सम्पूर्णगामी और सेचक हो। यज्ञ और स्तुति-द्वारा हम तुम्हारा स्तव करते हैं। तुम मरुतों के नेता हो। सारे मनुष्यों के ईश्वर हो। नमस्कार और स्तुति-द्वारा तुम्हारा गुण-गान करता हूँ।

येपातयन्तेअज्मभिर्गिरीणांस्नुभिरेषाम्।
यज्ञंमहिष्वणीनांसुम्नंतुविष्वणीनांप्राध्वरे॥१८॥

ये। पातयन्ते। अज्मऽभिः। गिरीणाम्। स्नुऽभिः। एषाम्।
यज्ञम्। महिऽस्वनीनाम्। सुम्नम्। तुविऽस्वनीनाम्। प्र। अध्वरे॥१८॥

ये मरुतो गिरीणां मेघानां स्नुभिः प्रस्रवद्भिः अज्मभिः बलैर्बलकरैरुदकैः सह पातयन्ते पतन्ति गच्छन्ति। एषां मरुतां महिष्वणीनां प्रभूतध्वनीनां यज्ञं कुर्मइतिशेषः। कृत्वाच तुविष्वणीनां बहुध्वनीनां सुम्नं सुखं तैःकृतं अध्वरे यज्ञे प्र प्राप्नुयाम। अथवा चतुर्थ्यर्थेषष्ठी प्रभूतस्वनेभ्यः सुम्नं उक्तलक्षणं हविः प्र प्राप्नुयामाध्वरे यज्ञे॥१८॥

१८. जो मरुत् मेघों के प्राचीन और बलकर जल के साथ जाते हैं, उन्हीं बहुत ध्वनिवाले मरुतों के लिए हम यज्ञ करेंगे और उस यज्ञ में महाध्वनिवाले मरुद्गण जो सुख दे सकेंगे, उसे हम प्राप्त करेंगे।

प्रभङ्गंदुर्मतीनामिन्द्रशविष्ठाभर।
रयिमस्मभ्यंयुज्यंचोदयन्मतेज्येष्ठंचोदयन्मते॥१९॥

प्रऽभुङ्गम् । दुःऽमतीनाम् । इन्द्र । शविष्ठ । आ । भर । रयिम् ।
अस्मभ्यम् । युज्यम् । चोदयत्ऽमते । ज्येष्ठम् । चोदयत्ऽमते ॥ १९ ॥

दुर्मतीनां दुष्टमनस्कानां वृत्रादीनां प्रभङ्गं प्रकर्षेण भञ्जकं त्वां याचामहइतिशेषः । हे इन्द्र शविष्ठातिशयेनबलवन् स्तुतस्त्वमस्मभ्यं रयिं धनं युज्यं योग्यमस्माकमुचितं धनमाभराहर । हे चोदयन्मते चोदयन्ती धनं प्रेरयन्तीमतिर्यस्य सतथोक्तः हे तादृशदेव किञ्च हे चोदयन्मते उक्तार्थं ज्येष्ठं धनमाभर ॥ १९ ॥

१९. तुम दुष्टबुद्धियों के विनाशक हो। तुम्हारे समीप हम याचना करते हैं। अतीव बली इन्द्र, हमारे लिए योग्य धन ले आओ। तुम्हारी बुद्धि सदा धन-प्रेरण में तत्पर रहती है। देव, उत्तम धन ले आओ।

सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत ।
प्रासहा सम्राट् सहुरिं सहन्तं भुज्युं वाजेषु पूर्व्यम् ॥ २० ॥ ४ ॥

सनितरिति । सुऽसनितः । उग्र । चित्र । चेतिष्ठ । सूनृत । प्रऽसहा ।
सम्ऽराट् । सहुरिम् । सहन्तम् । भुज्युम् ।
वाजेषु । पूर्व्यम् ॥ २० ॥ ४ ॥

हे सनितः संभक्तः सुसनितः दातर्वा उग्र उद्गूर्णबल चित्र चायनीय चेतिष्ठात्यन्तं चेतयितः सूनृत सुसत्य प्रासहा प्रसह्य हे सम्राट् सर्वस्य स्वामिन् सम्यग्राजमान वा त्वं सहुरिं सहनशीलं सहन्तं भुज्युं भोजयितारं पूर्व्यं प्रवृद्धं मुख्यमित्यर्थः । ईदृशं धनं वाजेषु संग्रामेषु आभरेतिशेषः ॥ २० ॥

२०. दाता, उग्र, विचित्र, प्रिय, सत्यवक्ता, शत्रु-पराभवकर्त्ता और सबके स्वामी इन्द्र, शत्रु को हरानेवाले, भोग योग्य तथा प्रवृद्ध धन संग्राम में हमें देना। ॥ इति षष्ठस्य चतुर्थे चतुर्थोवर्गः ॥ ४ ॥

अथैकविंशी—

आ स एतु य ईवदाँ अदेवः पूर्तमाददे ।
यथा चिद्वशो अश्व्यः पृथुश्रवसि कानीतेऽस्या व्युष्याददे ॥ २१ ॥

आ । सः । एतु । यः । ईवत् । आ । अदेवः । पूर्तम् ।
आऽददे । यथा । चित् । वशः । अश्व्यः । पृथुऽश्रवसि ।
कानीते । अस्याः । विऽउषि । आऽददे ॥ २१ ॥

अत्रशौनकः—वशायाश्व्यायययमादात्कानीतस्तुपृथुश्रवाः । तदत्रस्तूयतेदानमासएत्वेवमादिभिः ॥ १ ॥ ऐतु आगच्छतु सः यः अदेवः देवादन्यो मनुष्यो वशइवत गमनवत् गवादिलक्षणं पूर्तं पूर्णं आददे आदत्ते स्वीकृतवानित्यर्थः । देवश्चेन्मायायाप्यागन्तुमर्हति अतः प्रकाशेनैवागच्छत्वित्यर्थः । कथमस्याधनावाप्तिप्रसङ्ग आगमनप्रसङ्गश्चेति । तदुच्यते—यथाचित् चिदितिपूरणः येन कारणेन यस्माद्वा वश एतत्संज्ञकः अश्व्यः अश्वपुत्रः पृथुश्रदसि एतन्नामकेराज्ञि कानीते कानीतपुत्रे कन्यायाः पुत्रे अस्या उषसो व्युषि व्युष्टौ आददे आदत्ते तेन प्रकारेणन तस्माद्वा कारणादायात्विति एवमश्वो बन्धुवर्गोवाब्रूते ॥ २१ ॥

२१. अश्व के पुत्र जिन वश ने कन्या के पुत्र (कानीत) पृथुश्रवा राजा से प्रातःकाल धन प्राप्त किया था; इसलिए देव-रहित वश के पूर्ण धन ग्रहण कर लेने के कारण, वश यहाँ आवें।

षष्टिंसहस्राश्व्यस्यायुतासनमुष्ट्रानांविंशतिंशता ।
दशश्यावीनांशतादशत्र्यरुषीणांदशगवांसहस्रा ॥ २२ ॥

षष्टिम् । सहस्रा । अश्व्यस्य । अयुता । असनम् ।
उष्ट्रानाम् । विंशतिम् । शता । दश । श्यावीनाम् । शता । दश ।
त्रिऽअरुषीणाम् । दश । गवाम् । सहस्रा ॥ २२ ॥

सवश आगत्यब्रूते अश्व्यस्याश्वसम्बन्धिनः षष्टिं सहस्रा सहस्राणि अयुता अयुतानि वासनमभजं उष्ट्राणां विंशतिं शता शतानि चासनं श्यावीनां श्याववर्णानां वडवानां दशशता शतानि चासनम् त्र्यरुषीणां त्रीण्यारोचमानानि शुभ्राणि ककुपृष्ठपार्श्वादिस्थानानि यासां तादृशीनां गवां दशसहस्रा दशसहस्राण्यभजम् ॥ २२ ॥

२२. (आकर वश ने कहा) "मैंने साठ सहस्र और अयुत (दश सहस्र) अश्वों को प्राप्त किया है। बीस सौ ऊँटों को पाया है। काले रंग की दस सौ घोड़ियों को पाया है। तीन स्थानों में शुभ्र रङ्गवाली दस सहस्र गायों को पाया है।"

अथ त्रयोविंशी—

दशश्यावाऋधद्रयोवीतवारासआशवः ।
मथ्रानेमिंनिवावृतुः ॥ २३ ॥

दश । श्यावाः । ऋधत्ऽरयः । वीतऽवारासः ।
आशवः । मथ्राः । नेमिम् । नि । ववृतुः ॥ २३ ॥

दश दशसंख्याकाः श्यावाः श्याववर्णाः आशवोश्वाः नेमिं रथनेमिं निवावृतुः निवर्तयन्ति रथंवहन्तीत्यर्थः । कीदृशास्ते ऋधद्रयः प्रवृद्धवेगाः वीतवारासः क्रान्तबलाः प्राप्तबलावा आशवः मथ्राः मथनशीलाः ॥ २३ ॥

२३. दस कृष्णवर्ण अश्व रथ-नेमि (रथ-चक्र का प्रान्त वा परिधि) वहन करते हैं। वे अतीव वेग और बलवाले तथा मन्थन-कर्त्ता हैं।

दानांसःपृथुश्रवंसःकानीतस्यंसुराधंसः ।
रथंहिरण्ययंददन्मंहिष्ठःसूरिरंभूद्वर्षिष्ठमकृतश्रवंः ॥ २४ ॥

दानांसः । पृथुऽश्रवंसः । कानीतस्यं । सुऽराधंसः । रथम् ।
हिरण्ययंम् । ददंत् । मंहिष्ठः । सूरिः । अभूत् । वर्षिष्ठम् ।
अकृत । श्रवंः । २४ ॥

पूर्वमन्त्रैः प्रतिपादितानि धनानि बंधूनां पितुर्वा पुरस्तान्निर्दिशन्नाशास्ते। पृथुश्रवसः कानीतस्य सुराधसः शोभनधनस्य यतस्तस्य धनं दानाय कल्पितं अतः ससुराधाः तस्य दानासोदानाः दत्तानि धनानीमानि सच पृथुश्रवाः पूर्वमुक्तानि हिरण्ययं हिरणमयं रथञ्च ददत् प्रयच्छन् मंहिष्ठोतिशयेन दाता सूरिः सर्वस्य प्रेरकः प्राज्ञोवा भूव भवति भवतु वा। वर्षिष्ठं अतिशयेन प्रवृद्धां श्रवः कीर्तिमकृत करोति करोतु वा ॥ २४ ॥

२४. उत्कृष्ट धनवाले कन्यापुत्र पृथुश्रवा का यही दान है। उन्होंने सोने का रथ दिया है; वे अतीव दाता और प्राज्ञ हैं। उन्होंने अत्यन्त प्रवृद्ध कीर्त्ति प्राप्त की है।

आनोवायवित्येषा पञ्चमेहनि प्रउगशस्त्रे वायव्येतृचे तृतीया। आनोवायोमहेतनइत्येका रथेनपृथुपाजसेतिहि सूत्रितम्। तत्पाठस्तु--

अथ पञ्चविंशी--

आनोंवायोमहेतनेंयाहिमखायपाजंसे ।
वयंहितेंचकृमाभूरिंदावनेंसद्यश्चिन्महिंदावनें ॥ २५ ॥५॥

आ । नः । वायो इतिं । महे । तनें । याहि । मखायं ।
पाजंसे । वयम् । हि । ते । चकृम । भूरिं । दावनें ।
सद्यः । चित् । महिं । दावनें ॥ २५ ॥ ५ ॥

हे वायो त्वं नोस्मान्प्रत्यायाह्यागच्छ। किमर्थं महे महते तने धनाय मखाय महनीयाय पाजसे बलाय च उभयं प्रदातुमित्यर्थः। किमत्रास्तीति चेदुच्यते वयं हि वयं खलु ते भूरिदावने प्रभूतधनदात्रे चकृम स्तुतिं हविर्वा सद्यश्चित्तदानीमेव तवागमनानन्तरमेव चकृम। महिमहतो धनस्य दावने दात्रे ॥ २५ ॥

२५. वायु, महान् धन और पूजनीय बल के लिए हमारे समीप आओ। तुम प्रचुर धन देनेवाले हो। हम तुम्हारी स्तुति करते हैं। तुम महान् धन के दाता हो। तुम्हारे आने के साथ ही हम तुम्हारी स्तुति करते हैं।

॥ इति षष्ठस्य चतुर्थे पञ्चमोवर्गः ॥ ५ ॥

योअश्वेभिर्वहतेवस्तउस्रास्त्रिःसप्तसप्ततीनाम् ।
एभिःसोमेभिःसोमसुद्भिःसोमपादानायशुक्रपूतपाः ॥२६॥

यः । अश्वेभिः । वहते । वस्ते । उस्राः । त्रिः । सप्त । सप्ततीनाम् ।
एभिः । सोमेभिः । सोमसुत्ऽभिः । सोमऽपाः ।
दानाय । शुक्रपूतऽपाः ॥ २६ ॥

यः पृथुश्रवा अश्वेभिरश्वैर्वहते गृहं वस्ते वसति चोस्रागाः ताभिश्च गच्छतीत्यर्थः। त्रिः सप्तेति तासां गवां संख्योक्ताच। सा संख्या विशेष्यते सप्ततीनां त्रिःसप्त उक्तसंख्याकाभिर्गोभिरश्वैश्च योगच्छति सपृथुश्रवाः एभिः सोमेभिः सोमैः सोमसुद्भिः सोममभिषुण्वद्भिश्च हेसोमपाः सोमस्यपातरिति वायोः संबोधनं हे शक्रपूतपाः दीप्तपूतस्यच सोमस्य पातर्वायो दानाय तुभ्यं सोमं दातुं सोमैर्युक्तो भवतीतिशेषः ॥ २६ ॥

२६. सोमपाता, दीप्त और पवित्र सोम के पानकर्त्ता वायु जो पृथुश्रवा अश्वों के साथ आते हैं, गृह में निवास करते हैं और त्रिगुणित सप्तसप्तति गायों के साथ जाते हैं, वे ही तुम्हें सोम देने के लिए सोम संयुक्त हुए हैं और अभिषव-कर्त्ताओं के साथ मिले हैं।

अथ सप्तविंशी—

योमइमंचिदुत्मनामन्दच्चित्रंदावने ।
अरट्वेअक्षेनहुषेसुकृत्वनिसुकृत्तरायसुक्रतुः ॥ २७ ॥

यः । मे । इमम् । चित् । ऊँ इति त्मना । अमन्दत् ।
चित्रम् । दावने । अरट्वे । अक्षे । नहुषे । सुऽकृत्वनि ।
सुकृत्ऽतराय । सुऽक्रतुः ॥ २७ ॥

यः पृथुश्रवाः मे मह्यं इमं पुरतोवर्तमानं चित्रं चायनीयं गवाश्वादिकं दावने दानाय त्मना आत्मना स्वबुध्यैव अमदत् अमंदत अमाद्यत । सच सुक्रतुः शोभनकर्मा राजा सुकृत्तराय सुकृतकर्तृत्वाय अरट्वे अक्षे नहुषे सुकृत्वनिच एते तस्य राज्ञोध्यक्षाः तेष्वन्वशात् अस्मै गवादिकान्संयोजयतेति । यद्वा अरट्वादयोन्येराजानः तेषु मध्ये सुकृत्तरायामन्ददिति ॥ २७ ॥

२७. जो पृथुश्रवा "मेरे लिए ये गौ, अश्व आदि देने के लिए हैं" ऐसा विचार कर प्रसन्न हुए थे, उन शोभनकर्मा राजा पृथुश्रवा ने अपने कर्माध्यक्ष अरट्व, अक्ष, नहुष और सुकृत्व को आज्ञा दी।

उचथ्येऽवपुंषियःस्वराळुतवांयोघृतस्नाः ।
अश्वैषितंरजेषितंशुनेषितंप्राज्मतदिदंनुतत् ॥ २८ ॥

उचथ्ये । वपुंषि । यः । स्वऽराट् । उत । वायो इति । घृतऽस्नाः ।
अश्वंऽइषितम् । रजंःऽइषितम् । शुनांऽइषितम् । प्र ।
अज्मं । तत् । इदम् । नु । तत् ॥ २८ ॥

उचथ्ये वक्तव्ये स्तुत्ये वपुषि शरीरे यः स्वराट् स्वयं राजते यद्वा उचथ्यो वपुश्चोभौराजानौ तयोरपि यः स्वराट् स्वाराज्यं करोति अतिशयेन वर्तते । उतापिच हे वायो यश्च घृतस्नाः घृतवच्छुद्धः सराजा अश्वेषितं अश्वैःप्रापितं । रजेषितं रजःशब्देनोष्ट्रो गर्दभोवोच्यते । तेनाप्यानीतं शुनेषितंचाज्मान्नं प्रादात् तदन्नमश्वाद्यानीतं इदं पुरतो दृश्यते तत् तवैवानुग्रहादित्यर्थः । अथवैकस्तच्छब्दः पूरणः अश्वाद्यानीतं यदस्ति तदिदं खल्विति ॥ २८ ॥

२८. वायु, जो उचथ्य और वपु नाम के राजाओं से भी अधिक साम्राज्य करते हैं, उन घृत के समान शुद्ध राजा ने घोड़ों, ऊँटों और कुत्तों की पीठ से जो अन्न प्रेरित किया है, वह यही है। यह तुम्हारा ही अनुग्रह है। अथैकोनत्रिंशी—

अधप्रियमिषिरायषष्टिंसहस्रासनम् । अश्वानामिन्नवृष्णाम् ॥ २९ ॥

अध । प्रियम् । इषिराय । षष्टिम् । सहस्रा । असनम् ।
अश्वानाम् । इत् । न । वृष्णाम् ॥ २९ ॥

अधाधुना इषिराय धनादिप्रेरयित्रे राज्ञे प्रियं श्रद्धेयं अश्वानामिन्न अश्वानामिव वृष्णां सेक्तृणां गवां सहस्रा सहस्राणां षष्टिं षष्टिसहस्रसंख्याकं प्रियभूतं असनं अभजम् ॥ २९ ॥

२९. इस समय धनादि का प्रेरण करनेवाले उन राजा के अनुग्रह से सेचन करनेवाले अश्व के समान साठ हजार प्रिय गायों को भी मैंने पाया।

गावोनयूथमुपयंतिवध्रयउपमायन्तिवध्रयः ॥ ३० ॥

गावः। न। यूथम्। उप। यन्ति। वध्रयः। उप।
मा। आ। यन्ति। वध्रयः॥ ३०॥

गावोन गावइव ता यथा संगवेयूथमुपयन्ति उपगच्छन्तितद्वद्वध्रयः छिन्नमुष्काः वृषभाः पृथुश्रवसा दत्ताः मा मामुपयन्ति समीपं प्राप्नुवन्ति। मा मां वध्रय उपायन्तीति पुनरुक्तिरादरार्था॥ ३०॥

३०. जैसे गायें अपने झुण्ड में जाती हैं, वैसे ही पृथुश्रवा के दिये हुए बैल मेरे समीप आते हैं।

अधयच्चारथेगणेशतमुष्ट्राँअचिक्रदत्।
अधश्वित्नेषुविंशतिंशता॥ ३१॥

अध। यत्। चारथे। गणे। शतम्। उष्ट्रान्। अचिक्रदत्।
अध। श्वित्नेषु। विंशतिम्। शता॥ ३१॥

अधाथ यद्यदा चारथे चरथं चरणं गमनं तत्संबन्धिनि चार्यमाणे वनाय चार्यमाणइत्यर्थः तादृशे गणे उष्ट्रसंघे उष्ट्रान् शतं उष्ट्राणां शतं अचिक्रदत् अस्मभ्यं प्रदानाय जुहाव। अधापिचास्मदर्थमेव श्वित्नेषु श्वेतवर्णेषु गोयूथेषु विंशतिं शता च शतानि च अथवा शतानां विंशतिं अचिक्रदत्॥ ३१॥

३१. जिस समय ऊँट वन के लिए भेजे गये थे, उस समय वे एक सौ ऊँट हमारे लिए लाये थे। श्वेतवर्ण गायों के बीच बीस सौ गायें लाये।

अथ द्वात्रिंशी—

शतंदासेबल्बूथेविप्रस्तरुक्षआददे।
तेतेवायविमेजनामदन्तीन्द्रगोपामदन्तिदेवगोपाः॥ ३२॥

शतम्। दासे। बल्बूथे। विप्रः। तरुक्षे। आ। ददे।
ते। ते। वायो इति। इमे। जनाः। मदन्ति।
इन्द्रऽगोपाः। मदन्ति। देवऽगोपाः॥ ३२॥

अयं विप्रोमेधावी वशो जनोहं बल्बूथे एतन्नामके दासे तरुक्षे गवाश्वादीनां तारके गवाद्यधिकृते राज्ञास्माकं प्रदिष्टधनदातरि आददे। किं दानं गवाश्वादीनां शतं शतशब्दोपरिमितवचनः हे वायो ते तव स्वभूताः ते स्तोतारः इमे जनावयमित्यर्थः आत्मनएव परोक्षत्वेन वादः त्वयानुगृहीतत्वादिन्द्रगोपा इन्द्रो गोपायिता येषां ते तथोक्ताः इन्द्रेण रक्षिता मदन्ति तथा देवगोपा मदन्ति इन्द्रं देवांश्च राज्ञोलब्धेन धनेन यजन्तो मदन्तीत्यर्थः॥ ३२॥

३२. मैं विप्र हूं। मैं गौ और अश्व का रक्षक हूं। बल्बूथ नामक दास के समीप से मैंने सौ गौ और अश्व पाये थे। वायु, ये सब लोग तुम्हारे ही हैं। ये इन्द्र और देवों के द्वारा रक्षित होकर आनन्दित होते हैं। अथ त्रयस्त्रिंशी—

अधस्यायोषंणामहीप्रतीचीवशंमश्व्यम् ।
अधिरुक्माविनीयते ॥ ३३ ॥ ६ ॥

अधं । स्या । योषंणा । मही । प्रतीची । वशंम् । अश्व्यम् ।
अधिऽरुक्मा । वि । नीयते ॥ ३३ ॥ ६ ॥

अधाधुना स्या सा योषणा योषा राज्ञा प्रदत्ता मही महती पूज्या प्रतीची अस्मदभिमुखी अश्व्यमश्वपुत्रं वशं मां प्रति सा अधिरुक्माभरणा सती विनीयते तां कन्यां मां प्रत्यानयन्तीत्यर्थः। अत्र वायव्यास्वृक्षु यत्र वायुर्नस्तूयते परं दानप्रशंसैव तासु सर्वासु हे वायो त्वदनुग्रहादेवमितियोज्य वायुपरत्वमवगन्तव्यम् ॥ ३३ ॥

३३. इस समय वह स्वर्ण के आभरणों से विभूषित, पूजनीय और राजा पृथुश्रवा के दान के साथ दी गई कन्या को अश्व के पुत्र वश के सामने ले आ रहे हैं।

॥ इति षष्ठस्य चतुर्थे षष्ठोवर्गः ॥ ६ ॥

महिवइत्यष्टादशर्चं पञ्चमं सूक्तं आप्त्यस्य त्रितस्यार्षं षडष्टकामहापङ्क्तिश्छन्दः आद्यास्त्रयोदशर्चः आदित्यदेवताकाः यच्चगोष्वित्याद्याः पञ्चर्चं उषोदेवताकाः आदित्यदेवताकाश्च। तथाचानुक्रमणिका—महिवोष्टोना त्रितआप्त्यआदित्येभ्योन्त्याः पञ्चोषसेपि महापाङ्क्तमिति। सूक्तविनियोगोलैङ्गिकः।

तत्र प्रथमा—

महिंवोमहतामवोवरुंणमित्रंदाशुषे ।
यमांदित्याअभिद्रुहोरक्षंथानेमघंनंशदनेहसों
वऊतयंःसुऊतयोंवऊतयंः ॥ १ ॥

महिं । वः । महताम् । अवंः । वरुंण । मित्रं । दाशुषें । यम् ।
आदित्याः । अभि । द्रुहः । रक्षंथ । न । ईम् । अघम् । नशत् ।
अनेहसः । वः । ऊतयंः । सुऽऊतयंः । वः । ऊतयंः ॥ १ ॥

हे वरुण हे मित्र एतद्द्वयमर्यम्णोप्युपलक्षणं हे वरुणादयो महतां वो युष्माकं अवः रक्षणं महि महत् कस्मै दाशुषे हविर्दात्रे यजमानाय क्रियमाणं। किञ्च हे आदित्याः यं यजमानं द्रुहो द्रोग्धुः सकाशादभिरक्षथ ईमेनं यजमानं अघं पापं ननशत् नप्राप्नोति।कुतएवमिति तत्रोच्यते—वो युष्माकमूतयो रक्षणानि अनेहसः अपापानि अनुपद्रवाणिच ऊतयो वो युष्माकं रक्षणानि सऊतयः शोभनलक्षणानि। पुनरुक्तिरादरार्था ॥ १ ॥

१. मित्र और वरुण, हवि देनेवाले यजमान के लिए जो तुम्हारा रक्षण है, वह महान् है। शत्रु के हाथ से जिस यजमान को बचाते हो, उसे पाप नहीं छू सकता। तुम लोगों की रक्षा करने पर उपद्रव नहीं रहता। तुम्हारा रक्षण शोभन है।

विदादेवाअघानामादित्यासोअपाकृतिम्।
पक्षावयोयथोपरिव्य१स्मेशर्मयच्छतानेहसोवऊतयः
सुऊतयोवऊतयः ॥ २ ॥

विद। देवाः। अघानाम्। आदित्यासः। अपऽआकृतिम्। पक्षा।
वयः। यथा। उपरि। वि। अस्मे इति। शर्म। यच्छत।
अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः ॥ २ ॥

हे देवा आदित्यास आदित्याः यूयं अघानां दुःखानामपाकृतिमपाकरणं परिहारप्रकारं विद जानीथ। यस्मादेवं तस्माद्वयः पक्षिणः यथा पक्षा स्वपक्षौ उपरि स्वशिशुकानामुपरि कुर्वन्ति सुखाय तद्वदस्मे अधि अस्मासु शर्म सुखं यच्छत कुरुत। अधीति सप्तम्यर्थानुवादी। अस्मे अस्माकमुपरीतिवा ॥ २ ॥

२. आदित्यो, तुम लोग दुःख-निवारण को जानते हो। जैसे चिड़ियाँ अपने बच्चों पर पंख फैलाती हैं, वैसे ही तुम हमें सुख दो। तुम लोगों की रक्षा होने पर उपद्रव नहीं रहता। तुम्हारा रक्षण शोभन रक्षण है।

व्य१स्मेअधिशर्मतत्पक्षावयोनयन्तन।
विश्वानिविश्ववेदसोवरूथ्यामनामहेनेहसोवऊतयःसुऊतयोवऊतयः॥३॥

वि। अस्मे इति। अधि। शर्म। तत्। पक्षा। वयः। न। यन्तन।
विश्वानि। विश्वऽवेदसः। वरूथ्या। मनामहे। अनेहसः। वः।
ऊतयः। सुऽऊतयः। वः। ऊतयः ॥ ३ ॥

हे आदित्या यूयं अस्मे अधि अस्मासु तत् युष्मास्वेवासाधारणं यच्छर्मास्ति तदित्यर्थः। तत् वयोन पक्षा पक्षिणः शिशुकानां पक्षोपरि यथा तथा वियन्तन विशेषेण प्रापयत हे विश्ववेदसः सर्वधना युष्मान्विश्वानि सर्वाणि वरूथ्या वरूथं गृहं तदुचितानि धनानि मनामहे याचामहे ॥ ३ ॥

३. पक्षियों के पक्ष के समान तुम लोगों के पास जो सुख है, उसे हमें प्रदान करो। सर्वधनी आदित्यो, समस्त गृह के उपयुक्त धन तुमसे हम माँगते हैं। तुम्हारे रक्षण करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा सुरक्षा है। अथ चतुर्थी—

यस्मा॒अरा॑सत॒क्षयं॒जी॒वातुं॒च॒प्रचे॑तसः।
मनो॒र्विश्व॑स्य॒घेदि॒मआ॑दि॒त्याराय॒ईशते॒ने॒हसो॑वऊ॒तयः॑
सुऊ॒तयो॑वऊ॒तयः॑ ॥ ४ ॥

यस्मै॑। अरा॑सत। क्षय॑म्। जी॒वातु॑म्। च॒। प्रऽचे॑तसः। मनोः॑। विश्व॑स्य। घ॒। इत्। इ॒मे। आ॒दि॒त्याः। रा॒यः। ई॒श॒ते॒। अ॒ने॒हसः॑। वः॒। ऊ॒तयः॑। सु॒ऽऊ॒तयः॑। वः॒। ऊ॒तयः॑ ॥ ४ ॥

यस्मै मनुष्याय क्षयं निवासं जीवातुं जीवनसाधनमन्नञ्च प्रचेतसः प्रकृष्टमतयः अरासत प्रयच्छन्ति तस्मै यजमानाय तदर्थं इमे आदित्याः विश्वस्य घेव सर्वस्याप्ययष्टुर्मनोर्मनुष्यस्य धनिकस्य रायो धनस्य ईशते स्वामिनो भवन्त्यपहृत्य यजमानाय प्रदातुम् ॥ ४ ॥

४. उत्तम-चेता आदित्यगण जिसके लिए गृह और जीवन के उपयुक्त अन्न प्रदान करते हैं, उसके लिए ये सारे मनुष्यों के धन के स्वामी हो जाते हैं। तुम्हारी रक्षा में उपद्रव नहीं रहता। तुम्हारी रक्षा शोभन-रक्षा है।

परि॑णोवृणजन्न॒घादु॒र्गाणि॑र॒थ्यो॑यथा।
स्यामेदिन्द्र॑स्य॒शर्म॑ण्यादि॒त्याना॑मु॒ताव॑
स्यने॒हसो॑वऊ॒तयः॑सुऊ॒तयो॑वऊ॒तयः॑ ॥ ५ ॥ ७॥

परि॑। नः॒। वृ॒ण॒ज॒न्। अ॒घा। दुः॒ऽगानि॑। र॒थ्यः॑। य॒था॒। स्याम॑। इत्। इन्द्र॑स्य। शर्म॑णि। आ॒दि॒त्याना॑म्। उ॒त। अव॑सि। अ॒ने॒हसः॑। वः॒। ऊ॒तयः॑। सु॒ऽऊ॒तयः॑। वः॒। ऊ॒तयः॑ ॥ ५ ॥ ७ ॥

परिवृणजन् परिवर्जयन्तु नोस्माकं अघा अघानि पापानि। तत्र दृष्टान्तः—दुर्गाणि दुर्गमनान् प्रदेशान् अवटधिष्ण्यादिकान् यथा रथ्यः रथस्य वोढारोश्वाः परिवर्जयन्ति तद्वत् इन्द्रस्य शर्मणि स्याम भवेम वयं उतापिच आदित्यानामवसि रक्षणेच स्याम ॥ ५ ॥

५. रथ ढोनेवाले अश्व जैसे दुर्गम प्रदेशों का परित्याग कर देते हैं, वैसे ही हम पाप का परित्याग कर देंगे। हम इन्द्र का सुख और आदित्य का रक्षण प्राप्त करेंगे। तुम्हारी रक्षा होने पर उपद्रव नहीं रहता। तुम्हारी रक्षा सुरक्षा है। ॥ इति षष्ठस्य चतुर्थे सप्तमोवर्गः ॥ ७ ॥

परिह्वृतेदनाजनोयुष्मादत्तस्यवायति ।
देवाअदभ्रमाशवोयमादित्याअहेतना
नेहसोवऊतयःसुऊतयोवऊतयः ॥ ६ ॥

परिऽह्वृता । इत् । अना । जनः । युष्माऽदत्तस्य । वायति । देवाः ।
अदभ्रम् । आशवः । यम् । आदित्याः । अहेतन । अनेहसः ।
वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ६ ॥

परिह्वृतेव परिपीडितेनैव तपोनियमादिना अना शकटेनयुक्तो जनो युष्मादत्तस्य युष्माभिर्दत्तंधनं कर्मणिषष्ठी वायति गच्छति । हे देवाः हे आदित्याः हे आशवः शीघ्रगमना-युयं यं यजमानं अहेतन प्राप्नुथः सजनो दभ्रमनल्पं धनं वायति प्राप्नोतीति संबन्धः ॥ ६ ॥

६. क्लेश के द्वारा ही मनुष्य तुम्हारा धन प्राप्त करते हैं। देवो, तुम लोग शीघ्र गमनवाले हो। तुम लोग जिस यजमान को प्राप्त करते हो, वह अधिक धन प्राप्त करता है। तुम्हारी रक्षा होने पर उपद्रव नहीं रहता। तुम्हारी रक्षा सुरक्षा है।

नतंतिग्मंचनत्यजोनद्रासदभितंगुरु ।
यस्माउशर्मसप्रथआदित्यासोअराध्व
मनेहसोवऊतयःसुऊतयोवऊतयः ॥ ७ ॥

न । तम् । तिग्मम् । चन । त्यजः । न । द्रासत् । अभि । तम् । गुरु ।
यस्मै । ऊँ इति । शर्म । सऽप्रथः । आदित्यासः । अराध्वम् ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ७ ॥

तं मनुष्यं तिग्मं चन तीक्ष्णमेव सन्तं त्यजः क्रोधनमेतद् अत्र क्रोधात्प्रयुज्यमानमायुधमुच्यते न द्रासद् द्रा कुत्सायां गतौ कुत्सितं नागच्छति नहिनस्तीत्यर्थः । तथा तं जनं गुरु प्रवृद्धं अपरिहारार्हं दुःखं न द्रासद न गच्छति । हे आदित्यासः आदित्याः सप्रथः समानप्रथनाः सर्वतः पृथुभूतावा यूयं यस्माउ यस्मै यजमानाय उशब्दः पूरणः शर्म सुखं अराध्वं अदत्त तं न द्रासदिति ॥ ७ ॥

७. आदित्यो, जिसे तुम विस्तृत सुख प्रदान करते हो, वह व्यक्ति टेढ़ा होने पर भी क्रोध से निर्विघ्न रहता है। उसके पास अपरिहार्य दुःख भी नहीं जाता। तुम्हारी रक्षा होने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

युष्मेदेवाअपिष्मसियुध्यन्तइववर्मसु।
यूयंमहोनएनसोयूयमर्भादुरुष्यतानेह
सोवऊतयःसुऊतयोवऊतयः ॥ ८ ॥

युष्मे इति। देवाः। अपि। स्मसि। युध्यन्तःऽइव। वर्मऽसु।
यूयम्। महः। नः। एनसः। यूयम्। अर्भात्। उरुष्यत।
अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः ॥ ८ ॥

हे देवाः आदित्या युष्मे युष्मासु वयं अपिष्मसि अपि भवेम युष्माभिरपिहिताःस्मेत्यर्थः। तत्र दृष्टान्तः—युध्यन्तः इव शूरा वर्मसु कवचेषु यथा भवन्ति तद्वत् यूयं नोस्मान्महोमहतः एनसः पापात् उरुष्यत रक्षत। तथा यूयं अस्मानर्भादल्पादप्येनस उरुष्यत ॥ ८ ॥

८. आदित्यो, हम तुम्हारे आश्रय में ही रहेंगे। इसी प्रकार योद्धा लोग कवच के आश्रय में रहते हैं। तुम हमें महान् अनिष्ट और अल्प अनिष्ट से बचाओ। तुम्हारी रक्षा होने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

अदितिर्नउरुष्यत्वदितिःशर्मयच्छतु।
मातामित्रस्यरेवतोर्यम्णोवरुणस्यचाने
हसोवऊतयःसुऊतयोवऊतयः ॥ ९ ॥

अदितिः। नः। उरुष्यतु। अदितिः। शर्म। यच्छतु।
माता। मित्रस्य। रेवतः। अर्यम्णः। वरुणस्य।
च। अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः ॥ ९ ॥

नोस्मानदितिरखण्डनीया देवमाता उरुष्यतु रक्षतु तथा अदितिः शर्म सुखं यच्छतु। अदितिर्विशेष्यते या माता निर्मात्री कस्य मित्रस्य रेवतो धनवतोर्यम्णो वरुणस्यच। सा न उरुष्यत्विति ॥ ९ ॥ अदिति हमारी रक्षा करें; अदिति हमें सुख प्रदान करें। वे धनवती हैं और मित्र, वरुण तथा अर्यमा की माता हैं। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

यद्देवाःशर्मशरणंयद्भद्रंयदनातुरम्।
त्रिधातुयद्वरूथ्यं१तदस्मासुवियन्तनानेहसो
वऊतयःसुऊतयोवऊतयः ॥ १० ॥ ८ ॥

यत् । देवाः । शर्म । शरणम् । यत् । भद्रम् । यत् । अनातुरम् ।
त्रिऽधातु । यत् । वरूथ्यम् । तत् । अस्मासु । वि । यन्तन ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १० ॥ ८ ॥

हे देवा आदित्याः यच्छर्म सुखं शरणं शरणीयं यद्भद्रं सर्वैर्भजनीयं यदनातुरं रोगरहितं यत्त्रिधातु त्रिगुणं यद्वरूथ्यं वरूथं गृहं तदर्हं यदुक्तगुणकं शर्मास्मासु वियन्तन वियच्छत ॥१०॥ आदित्यो, तुम लोग हमें शरण के योग्य, सेवन के योग्य, रोगशून्य, त्रिगुण-युक्त और गृह के योग्य सुख प्रदान करो। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

॥ इति षष्ठस्य चतुर्थेऽष्टमोवर्गः ॥ ८ ॥

आदित्याअवहिख्यताधिकूलादिवस्पशः ।
सुतीर्थमर्वतोयथानुनोनेषथासुगमनेह
सोवऊतयःसुऊतयोवऊतयः ॥ ११ ॥

आदित्याः । अव । हि । ख्यत । अधि । कूलात्ऽइव । स्पशः ।
सुऽतीर्थम् । अर्वतः । यथा । अनु । नः । नेषथ । सुऽगम् ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ११ ॥

हे आदित्या यूयं अवहिख्यत अवहि पश्यताधस्तास्थितानस्मान् । तत्रदृष्टान्तः—कूलादिवाधि कूले स्पशः स्पष्टाः स्थिताइत्यर्थः यथा कूलस्थः पुरुषोधोगतमुदकं जिज्ञासुः तत्रस्थं मनुष्यं वा विलोकयितुमवाक्पश्यति तद्वत् । तथा कृत्वा सुतीर्थं शोभनावतरप्रदेशं अर्वतोश्वान्यथा प्रापयन्त्यश्वरक्षकास्तद्वन्नोस्मान् सुगं सुपन्थानमनुनेषथानुनयथ ॥११॥

११. आदित्यो, जैसे मनुष्य तट से नीचे के पदार्थों को देखता है, वैसे ही तुम ऊपर से नीचे स्थित हमें देखो। जैसे अश्व को अच्छे घाट पर ले जाया जाता है, वैसे ही हमें सन्मार्ग से ले जाओ। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

अथ द्वादशी—

नेहभद्रंरक्षस्विनेनावयैनोपयाउत ।
गवेचभद्रंधेनवेवीरायचश्रवस्यतेनेहसो
वऊतयःसुऊतयोवऊतयः ॥ १२ ॥

न । इह । भद्रम् । रक्षस्विने । न । अवऽयै । न । उपऽयै । उत ।
गवे । च । भद्रम् । धेनवे । वीराय । च । श्रवस्यते ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १२ ॥

हे आदित्याः इह भूमौ भद्रं कल्याणं सुखं रक्षस्विने रक्षोबलं बलवतेस्मद्वेष्ट्रे नभवत्विति विशेषः । अवयै अस्मान् हिंसितुमवगच्छते नभवतु भद्रं तथोपयै उपगच्छते नभवतु । तर्हि कस्य भवत्विति उच्यते गवेच भद्रं युष्मदीयं भवतु चशब्दो वक्ष्यमाणधेन्वाद्यपेक्षः । किञ्च धेनवे नवप्रसूतिकायै भद्रं भवतु । वीरायास्मत्पुत्रादिकाय भद्रं भवतु । कीदृशाय वीराय श्रवस्यतेन्नमिच्छते अथवा उत्तरार्धेपि नेत्यनुवर्तते अस्मद्विरोधिनो गवादिकाय भद्रं न भवत्विति तस्यार्थः ॥ १२ ॥

१२. आदित्यो, इस संसार में हमारे हिंसक और बली व्यक्ति को सुख न हो। गौओं, गायों और अन्नाभिलाषी वीर को सुख प्राप्त हो। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

यदाविर्यदपीच्यं१ देवासोअस्तिदुष्कृतम् ।
त्रितेतद्विश्वमाप्त्यआरेअस्मद्दधातनाने
हसोवऊतयःसुऊतयोवऊतयः ॥ १३ ॥

यत् । आविः । यत् । अपीच्यम् । देवासः । अस्ति । दुःऽकृतम् ।
त्रिते । तत् । विश्वम् । आप्त्ये । आरे । अस्मत् ।
दधातन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१३॥

हे देवासो देवाः आदित्याः यदाविः यत्पापमाविर्भूतमस्ति दुष्कृतं यच्चापीच्यं अन्तर्हितमस्ति अपीच्यमित्यंतर्हितनाम तत् विश्वं तदुभयं आप्त्ये त्रिते मयि माभूत् किंतु अस्मदारे दूरे दधातन स्थापयत ॥ १३ ॥

१३. आदित्यदेवो, जो पाप प्रकट हुआ है और जो पाप छिपा हुआ है, उनमें से मुझ आप्त्यत्रित को एक भी न हो। इन पापों को दूर रक्खो। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

यच्चगोष्वित्यादि सूक्तशेषेण दुःस्वप्नं दृष्ट्वादित्यमुपतिष्ठेत तथाच स्वप्नममनोज्ञंदृष्ट्वेत्युपक्रम्य यच्चगोषुदुःष्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत इतिसूत्रितम् ।

तत्र प्रथमा सूक्ते चतुर्दशी—

यच्चगोषुदुष्वप्न्यंयच्चास्मेदुहितर्दिवः।
त्रितायतद्विभावर्याप्त्यायपरावहानेहसो
वऊतयःसुऊतयोवऊतयः॥ १४॥

यत्। च। गोषु। दुःऽस्वप्न्यम्। यत्। च। अस्मे इति।
दुहितः। दिवः। त्रिताय। तत्। विभाऽवरि। आप्त्याय। परा।
वह। अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः॥ १४॥

हे दिवोदुहितरुषः उषोदेवते यच्च गोषु अस्मदीयासु दुःष्वप्न्यं अनर्थसूचकं दृष्टं स्वार्थिकोयत् किञ्च यच्च दुःष्वप्न्यं अस्मेस्मासु दृष्टं गोपीडानिमित्तकमस्माकं पीडानिमित्तकं त्र यत् दुःष्वप्नं पश्यामइत्यर्थः। तत्सर्वं हे विभावरि उषोनामैतत् हे व्युच्छनवति देवि आप्त्याय त्रिताय परावह दूरे परिहर॥ १४॥

१४. स्वर्ग की पुत्री उषा, हमारी गायों में जो दुष्ट स्वप्न (पीड़ा) है और हमारा जो दुःस्वप्न है, हे विभावरी, वह सब आप्त्यत्रित के लिए दूर कर दो। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

निष्कंवाघाकृणवतेस्रजंवादुहितर्दिवः।
त्रितेदुष्वप्न्यंसर्वमाप्त्येपरिदद्मस्यनेहसो
वऊतयःसुऊतयोवऊतयः॥ १५॥ ९॥

निष्कम्। वा। घ। कृणवते। स्रजम्। वा। दुहितः। दिवः। त्रिते।
दुःऽस्वप्न्यम्। सर्वम्। आप्त्ये। परि। दद्मसि। अनेहसः।
वः। ऊतयः। सुऽऊतयः। वः। ऊतयः॥ १५॥ ९॥

हे दिवोदुहितरुषो निष्कंवा घ आभरणविशेषं वा कृणवते कुर्वते स्वर्णकाराय यत् दुःष्वप्न्यं दृष्टं स्वर्णकारेणनिर्माणसमये दृष्टमित्यर्थः। घेतिपूरणः वाशब्दश्चार्थे वा अथवा स्रजं माल्यं कृणवते कुर्वाणेइत्यर्थः तस्मिन्नपि मालाकारे मालानिर्माणसमये यत् दुःष्वप्न्यं दृष्टं तदुभयविषयं स्वप्नं आप्त्ये अपां पुत्रे त्रिते वर्तमानं परिदद्मसि परिदद्मोवयं त्रिताः परित्यजामेत्यर्थः। अथवा त्रिते मयि यद्दुःष्वप्न्यं दृष्टं तत्स्वर्णकाराय मालाकारायवा परिदद्मसि अस्मत्तोपि निष्कृष्य तयोरुपरि स्थापयामः॥ १५॥

१५. स्वर्ग की पुत्री उषा, स्वर्णकार अथवा मालाकार में जो दुःस्वप्न है, वह आप्त्यत्रित के पास से दूर हो। तुम्हारी रक्षा करने पर दुःस्वप्न नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

॥ इति षष्ठस्य चतुर्थे नवमोवर्गः॥ ९॥

अथ षोडशी—

तदन्नायतदपसेतंभागमुपसेदुषे ।
त्रितायचद्वितायचोषोदुष्वप्न्यंवहानेहसो
वऊतयःसुऊतयोवऊतयः ॥ १६ ॥

तत्ऽअन्नाय । तत्ऽअपसे । तम् । भागम् । उपऽसेदुषे । त्रिताय ।
च । द्विताय । च । उषः । दुःऽस्वप्न्यम् । वह । अनेहसः ।
वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १६ ॥

तदन्नाय यदेव जागरावस्थायां भोज्यत्वेन प्रसिद्धं मधुपायसादि स्वप्नेपि तदेवान्नं यस्य सः तादृशाय प्रत्यक्षभोजनवत् स्वप्नेपि भोक्ते इत्यर्थः । तथा तदपसे यदेवापः कर्मनिन्दितं जाग्रदवस्थायां क्रियते तदेव कर्म स्वप्ने यस्य सतत्कर्मा तादृशाय देवाय तं भागं दुःस्वप्नस्यांशमुपसेदुषे प्राप्नुवते त्रिताय द्वितायच हे उषोदेवि दुःष्वप्न्यं अन्नकर्मविषयं वह अन्यत्र प्रापय स्वप्नेदृष्टं मधुभोजनादिकं जाग्रदवस्थानुरूपवत्सुखकरं भवत्वित्यर्थः ॥ १६ ॥

१६. स्वप्न में अन्न (मधु, पायस आदि भोज्य) पाने पर आप्त्यत्रित से, दुःस्वप्न से उत्पन्न कष्ट को दूर करो। तुम्हारी रक्षा होने पर उपद्रव नहीं होता। तुम्हारी रक्षा ही सुरक्षा है ।

यथाकलांयथाशफंयथर्णंसंनयामसि ।
एवादुष्वप्न्यंसर्वमाप्त्येसंनयामस्यनेहसो
वऊतयःसुऊतयोवऊतयः ॥ १७ ॥

यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयामसि ।
एव । दुःऽस्वप्न्यम् । सर्वम् । आप्त्ये । सम् । नयामसि । अनेहसः ।
वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १७ ॥

संज्ञापितं पशुं दानार्थं संस्कुर्वन्तो यथा येनप्रकारेण कलां शफमिति सन्दायान्यत्र सन्नयन्ति अथापरो यथा शब्दःपूरणः अथवा यथा कलां हृदयाद्यवयवमवदानार्हं सन्नयन्ति यथाच शफं शफोपलक्षितमवदानार्हं शफास्थ्यादिकं सन्नयन्ति यथा वा ऋणं शनैः सन्नयन्ति एव एवं दुःष्वप्न्यं सर्वं आप्त्ये वर्तमानं सन्नयामसि सन्नयामः अपसारयामः ॥ १७ ॥

१७. जैसे यज्ञ में दान के लिए पशु के हृदय, खुर, सींग आदि सब क्रमानुसार विलुप्त अथवा दत्त होते हैं, जैसे ऋण को क्रमशः दिया जाता है, वैसे ही हम आप्त्यत्रित के सारे दुःस्वप्न क्रमशः दूर करेंगे।

अथाष्टादशी—

अजैष्माद्यासंनामचाभूमानागसोवयम् ।
उषोयस्माद्दुःष्वप्न्यादभैष्मापतदुच्छत्वनेहसो
वऊतयःसुऊतयोवऊतयः ॥ १८ ॥ १० ॥

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् । उषः ।
यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १८ ॥ १० ॥

वयं त्रिताः अद्याजैष्म जयेम असनामच संभजेमच सुष्वप्न्यं सुखंवा अनागसोपापा-अभूम भवेम । हे उषः यस्माद्दुष्वप्न्यादभैष्म भीताः स्म तत्पापं अपोच्छतु अपगच्छतु ॥१८॥

१८. आज हम जीतेंगे, आज हम सुख प्राप्त करेंगे, आज हम पाप-शून्य होंगे। उषादेवी, हम दुःस्वप्न से डर गये हैं; इसलिए वह भय दूर हो। तुम्हारी रक्षा करने पर उपद्रव नहीं रहता। तुम्हारी रक्षा ही सुरक्षा है।

॥ इति षष्ठस्य चतुर्थे दशमोवर्गः ॥ १० ॥

स्वादोरभक्षीति पञ्चदशर्चं षष्ठंसूक्तं काण्वस्य प्रगाथस्यार्षं सोमदेवताकं त्रैष्टुभं पञ्चमी-जगती । तथाचानुक्रान्तम्—स्वादोःपञ्चोना प्रगाथः सौम्यं त्रैष्टुभं पञ्चमीजगतीति । सूक्तविनियोगोलैङ्गिकः ।

तत्र प्रथमा—

स्वादोरभक्षिवयसःसुमेधाःस्वाध्योवरिवोवित्तरस्य ।
विश्वेयंदेवाउतमर्त्यासोमधुब्रुवन्तोअभिसंचरन्ति ॥ १ ॥

स्वादोः । अभक्षि । वयसः । सुऽमेधाः । सुऽआध्यः । वरिवोवित्ऽतरस्य ।
विश्वे । यम् । देवाः । उत । मर्त्यासः । मधु । ब्रुवन्तः ।
अभि । सम्ऽचरन्ति ॥ १ ॥

अहं प्रगाथः सुमेधाः शोभनप्रज्ञः स्वाध्यः स्वाध्ययनः सुकर्मा वरिवोवित्तरस्य अति-शयेन पूजां लभमानस्य स्वादोः सुष्ठु अदनीयस्य स्वादुभूतस्य वयसोन्नस्य एताः कर्मणिषष्ठ्यः उक्तलक्षणं वयोन्नं सोमाख्यं आभक्षि भक्षयेय । यं यदन्नं विश्वेदेवाः सर्वेपीन्द्रादयः उतापिच

मर्त्यासोमर्त्या मनुष्या मधुब्रुवन्तः मनोहरमेतदिति शब्दायन्तोभिसञ्चरन्ति अभिसंगच्छन्ते प्राप्नुवन्ति तदन्नमभक्षीति ॥ १ ॥

१. मैं सुन्दर प्रज्ञा, अध्ययन और कर्म से युक्त हूँ। मैं अतीव पूजित और स्वादु अन्न का आस्वाद ग्रहण कर सकूँ। विश्वदेवगण और मनुष्य इस अन्न को मनोहर कहकर इसको प्राप्त करते हैं।

अग्नीषोमप्रणयनेन्तश्चेत्येषा । तथाचसूत्रितम्—अन्तश्चप्रागाअदितिर्भवासि श्येनोनयोनिंसदनं धियाकृतमिति ।

अन्तश्चप्रागाअदितिर्भवास्यवयाताहरसोदैव्यस्य ।
इन्दविन्द्रस्यसख्यंजुषाणःश्रौष्टीवधुरमनुरायऋध्याः ॥ २ ॥

अन्तरिति । च । प्र । अगाः । अदितिः । भवासि । अवऽयाता ।
हरसः । दैव्यस्य । इन्दो इति । इन्द्रस्य । सख्यम् । जुषाणः ।
श्रौष्टीऽइव । धुरम् । अनु । राये । ऋध्याः ॥ २ ॥

हे सोम त्वं अन्तश्च प्रागाः हृदयस्य यागागारस्य वान्तर्गच्छसि गत्वाचादितिः अदीनस्त्वं दैव्यस्य हरसः क्रोधस्यावयाता पृथक्कर्ता भवासि भवसि। हरइति क्रोधनाम हे इन्दो सोम त्वं इन्द्रस्य सख्यं जुषाणः सेवमानः श्रौष्टीश्रुष्टीति क्षिप्रनाम तत्संबन्धी श्रौष्टी क्षिप्रगाम्यश्वो धुरमिव रायेस्माकं धनलाभाय अनुऋध्याः अनुगच्छसि । अथवाश्वोयथा धुरं वृत्वाभिमतदेशं प्रापयति तद्वदस्मान्प्रापय अनुपूर्वोऋधिर्गत्यर्थः ॥ २ ॥

२. सोम, तुम हृदय वा यज्ञागार के बीच में गमन करते हो। तुम अदिति हो। तुम देवों के क्रोध को अलग करते हो। इन्दु (सोम), इन्द्र की मैत्री प्राप्त करके तुम उसी प्रकार शीघ्र आकर हमारे धन का वहन करो, जिस प्रकार अश्व भार वहन करता है।

अपामसोममित्यादिके द्वे सोमपानोत्तरकालीनास्याभिमर्शने हृदयाभिमर्शनेच क्रमेणविनियुक्ते । तथाचसूत्रितम्—अपामसोमममृताअभूम शंनोभवहृदआपीतइन्दविति मुखहृदये अभिमृशेरन्निति ।

अनयोर्मध्ये प्रथमा सूक्ते तृतीया—

अपामसोमममृताअभूमागन्मज्योतिरविदामदेवान् ।
किंनूनमस्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य ॥ ३ ॥

अपाम । सोमम् । अमृताः । अभूम । अगन्म । ज्योतिः । अविदाम ।
देवान् । किम् । नूनम् । अस्मान् । कृणवत् । अरातिः । किम् ।
ऊँ इति । धूर्तिः । अमृत । मर्त्यस्य ॥ ३ ॥

हे अमृत अमरण सोम त्वामपाम पानं करवाम कुर्मः। ततः अमृताअभूम भवेम। यस्मा-त्त्वममृतः अतस्त्वपानाद्वयमप्यमृताः स्याम। पश्चात् ज्योतिः द्योतमानं स्वर्गमगन्म अविदाम ज्ञातवन्तो देवान्वयं। तथाभूतानस्मान्नूनमिदानीं अरातिः शत्रुः किं कृणवत् कुर्यात् किमु किं-वा मर्त्यस्येदानीं मनुष्यभूतस्य मम धूर्तिर्हिंसकः किं कृणवत् कुर्यात् ॥ ३ ॥

३. अमर सोम, हम तुम्हें पीकर अमर होंगे। पश्चात् द्युतिमान् स्वर्ग में जायँगे और देवों को जानेंगे। हमारा शत्रु क्या करेगा? मैं मनुष्य हूँ; मेरा हिंसक क्या करेगा?

शंनोभवहृदआपीतइंन्दोपितेवंसोमसूनवेंसुशेवः।
सखेवसख्यंउरुशंसधीरःप्रणआयुर्जीवसेंसोमतारीः ॥ ४ ॥

शम्। नः। भव। हृदे। आ। पीतः। इन्दो इति। पिताऽइव। सोम। सूनवे। सुऽशेवः। सखाऽइव। सख्ये। उरुऽशंस। धीरः। प्र। नः। आयुः। जीवसे। सोम। तारीः ॥ ४ ॥

हे इन्दो सोम अस्माभिः पीतस्त्वं नोस्माकं हृदे हृदयाय शं सुखं आभव। सुखभवने दृ-ष्टान्तद्वयम्—पितेव सूनवे स्वात्मजाय यथा सुखाय भवति। यथा वा सखाऽहितान्निवर्त्य हिते स्थापयिता सखायं स्वसख्ये यथा सुशेवः सु सुखोभवति शेवमिति सुखनाम तद्वत्त्वमपि भव। किञ्च हे उरुशंस बहुभिर्बहुधावा शंसनीय बहुकीर्ते सोम धीरो धीमांस्त्वं नोस्माकं जीवसे जीवनाय आयुरायुष्यं प्रतारीः प्रवर्धय ॥ ४ ॥

४. सोम, जैसे पिता पुत्र के लिए सुखकर होता है, वैसे ही पीने पर तुम हृदय के लिए सुखकर होओ। अनेकों द्वारा प्रशंसित सोम, तुम बुद्धि-मान् हो। हम लोगों के जीवन के लिए आयु को बढ़ाओ।

अथ पञ्चमी—

इमेमांपीतायशसंउरुष्यवोरथंनगावःसमंनाहपर्वसु।
तेमांरक्षंतुविस्रसंश्चरित्रादुतमास्रामांद्यवयन्त्विन्दंवः ॥ ५ ॥ ११॥

इमे। मा। पीताः। यशसः। उरुष्यवः। रथम्। न। गावः। सम्। अनाह। पर्वऽसु। ते। मा। रक्षन्तु। विऽस्रसः। चरित्रात्। उत। मा। स्रामात्। यवयन्तु। इन्दवः ॥ ५ ॥ ११॥

इमे पीताः यशसो यशस्कराः उरुष्यवोस्माकं रक्षाकामाः सोमाः गावो गोविकारभूता वध्वः रथंन रथमिव ताः यथा रथं विस्रस्तं पर्वसु समनाह सन्दधते तद्वन्मां पीताः सोमाः पर्वसु संनह्यन्तु । किञ्च ते सोमाः मा मां विस्रसो विस्रस्ताच्चरित्राच्चरणादनुष्ठानाद्रक्षन्तु सोमः पीतश्चेत्कर्मस्वविस्रस्तं भवति । उतापिच मा मां स्रामाद्व्याधेः सकाशादिन्दवः पीता यवयन्तु पृथक्कुर्वन्तु ॥ ५ ॥

५. पिये जाने पर, कीर्त्तिकर और रक्षणेच्छु सोम मुझे वैसे ही प्रत्येक अङ्ग से कर्म में बाँधे, जैसे पशु रथ की गाँठों में जूतते हैं। सोम मुझे चरित्र-भ्रष्टता से बचावे। मुझे व्याधि से अलग करे।

॥ इति षष्ठस्य चतुर्थे एकादशोवर्गः ॥ ११ ॥

अ॒ग्निनमा॑मथि॒तंसंदि॑दीपः॒प्रच॑क्षयकृणु॒हिवस्य॑सोनः ।
अथा॒हि॒ते॒मद॒आसो॑म॒मन्ये॑रे॒वाँइ॑व॒प्रच॑रापु॒ष्टिमच्छ॑ ॥ ६ ॥

अ॒ग्निम् । न । मा॒ । म॒थि॒तम् । सम् । दि॒दी॒पः॒ । प्र । च॒क्ष॒य॒ । कृ॒णु॒हि । वस्य॑सः । न॒ः । अथ॑ । हि । ते॒ । मदे॑ । आ । सो॒म॒ । मन्ये॑ । रे॒वान्ऽइ॑व । प्र । च॒र॒ । पु॒ष्टिम् । अच्छ॑ ॥ ६ ॥

हे सोम पीतस्त्वं मा मां मथितमग्निं न अग्निमिव सन्दिदीपः सन्दीपय प्रचक्षयच चक्षुषः सन्धुक्षणेन नोस्मान् वस्यसोतिशयेन वसुमतः कृणुहि कुरु । अथाधुनाहि खलु ते त्वां हे सोम मदे मदाय मन्ये स्तौमि । तथासति रेवानिव धनवान् । इहइवेति संप्रत्यर्थे । पुष्टिमस्मत्पोषमच्छ प्रचराभिगच्छ ॥ ६ ॥

६. सोम, पिये जाने पर, मथित अग्नि के समान, मुझे दीप्त करो, मुझे विशेष रूप से देखो और मुझे अत्यन्त धनी करो। सोम, इस समय में तुम्हारे हर्ष के लिए स्तुति करता हूँ; इसलिए तुम धनी होकर पुष्टि प्राप्त करो।

अथ सप्तमी—

इ॒षि॒रेण॑ते॒मन॑सासु॒तस्य॑भक्षी॒महि॒पित्र्य॑स्येव॒रा॒यः ।
सोम॑राज॒न्प्रण॒आयूं॑षितारी॒रहा॑नीव॒सूर्यो॒वास॒राणि ॥ ७ ॥

इ॒षि॒रेण॑ । ते॒ । मन॑सा । सु॒तस्य॑ । भ॒क्षी॒महि॑ । पित्र्य॑स्यऽइव । रा॒यः । सोम॑ । रा॒ज॒न् । प्र । न॒ः । आयूं॑षि । ता॒री॒ः । अहा॑निऽइव । सूर्यः॑ । वा॒स॒राणि॑ ॥ ७ ॥

इषिरेण इच्छावता मनसा सुतस्य सुतमभिषुतं ते त्वां भक्षीमहि पित्र्यस्य पितृसंबन्धिनो रायो धनस्येव धनमिव पित्र्यं धनं यथैषणेन मनसोपभुञ्जते तद्वत् भक्षीमहि । हे सोमराजन् स्वामिन् नोस्माकमायूंषि प्रतारीः प्रवर्धय वासराणि जगद्वासकानि अहानि सूर्यइव । अन्नैषणेन वैषणेन वार्षणेन वेत्यादिनिरुक्तं ज्ञातव्यं ॥ ७ ॥

७. इच्छुक मन से पैतृक धन के समान अभिषुत सोम का हम पान करेंगे। राजा सोम, तुम हमारी आयु बढ़ाओ। इसी प्रकार सूर्य दिनों को बढ़ाते हैं।

सोमराजन्मृळयानःस्वस्तितवस्मसिव्रत्याउस्तस्यंविद्धि ।
अलर्तिदक्षउतमन्युरिन्दोमानोअर्योअनुकामंपरादाः ॥ ८ ॥

सोम । राजन् । मृळयं । नः । स्वस्ति । तव । स्मसि । व्रत्याः ।
तस्यं । विद्धि । अलर्ति । दक्षः । उत । मन्युः । इन्दो इति । मा ।
नः । अर्यः । अनुऽकामम् । परा । दाः ॥ ८ ॥

हे सोमराजन्नोस्मान् स्वस्त्यविनाशाय मृळय सुखयच व्रत्याः व्रतिनोवयं तवस्मसि स्वभूताः स्म तस्य तं स्वकीयं तव विद्धि जानीहि।अथवा तव त्वमित्यर्थः त्वं जानीहि । किञ्च हे इन्दो दक्षः प्रवृद्धोस्मच्छत्रुरलर्ति गच्छति । उतापिच मन्युः क्रोधः क्रुद्धोवालर्ति तादृशस्योभयविधस्यार्यः अरेः अनुकामं यथाकामं नोस्मान्मापरादाः परादेहि ॥ ८ ॥

८. राजा सोम, अविनाश के लिए हमें सुखी करो। हम व्रतवाले हैं; हम तुम्हारे ही हैं। तुम हमें जानो। इन्द्र, हमारा शत्रु वर्द्धित होकर जा रहा है। क्रोध भी जा रहा है। इन दोनों के दण्ड से हमारा उद्धार करो।

त्वंहिनस्तन्वःसोमगोपागात्रेगात्रेनिषसत्थानृचक्षाः ।
यत्तेवयंप्रमिनामव्रतानिसनोमृळसुषखादेववस्यः ॥ ९ ॥

त्वम् । हि । नः । तन्वः । सोम । गोपाः । गात्रेऽगात्रे । निऽससत्थं ।
नृऽचक्षाः । यत् । ते । वयम् । प्रऽमिनाम । व्रतानि । सः ।
नः । मृळ । सुऽसखा । देव । वस्यः ॥ ९ ॥

हे सोम देव त्वं नोस्माकं तन्वस्तनोरंगस्य गोपाहि रक्षिताखलु अतो गात्रेगात्रे सर्वेष्वंगेषु नृचक्षाः नृणां कर्मनेतृणां द्रष्टा त्वं निषसत्थ निषीदसि । यद्यपि ते तव व्रतानि कर्माणि वयं प्रमिनाम हिंस्मः तथापि हे देव सत्वं वस्यः श्रेष्ठान्नोस्मान्सुषखा शोभनसखासन् मृळ सुखय ॥९॥

९. सोम, तुम हमारे शरीर के रक्षक हो। तुम कर्म के नेताओं के द्रष्टा हो। इसी लिए तुम सब अङ्गों में बैठते हो। यद्यपि हम तुम्हारे कर्मों में विघ्न करते हैं, तो भी, हे देव, तुम उत्कृष्ट अन्नवाले और उत्तम सखा होकर हमें सुखी करो।

---

१ नि० ४. ७.

ऋदूदरेणसख्यासचेययोमानरिष्येद्धर्यश्वपीतः ।
अयंयःसोमोन्यधाय्यस्मेतस्माइन्द्रंप्रतिरमेम्यायुः ॥ १० ॥ १२ ॥

ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हरिऽअश्व । पीतः । अयम् । यः । सोमः । नि ।अधायि । अस्मे इति । तस्मै । इन्द्रम् । प्रऽतिरम् । एमि । आयुः ॥ १० ॥ १२ ॥

अहंप्रगाथो ऋदूदरेण उदराबाधकेन सोमेन सख्या सचेय संगच्छेय संगतोभवामि । ऋदूदरः सोमोमृदूदरइतियास्कः । यःसोमः पीतःसन् मा मां नरिष्येत् नहिंस्येत् । हे हर्यश्वेन्द्र । सौम्ये सूक्ते इन्द्रस्यकीर्तनं सोमस्येन्द्रस्वामिकत्वान्नविरुद्धम् । योयं सोमोस्मेस्मासु न्यधायि निहितोभूत्तस्मै सोमाय प्रतिरमायुर्जठरे चिरकालावस्थानं इन्द्रमेमि याचे ॥ १० ॥

१०. सोम, तुम उदर में व्यथा नहीं उत्पन्न करना। तुम सखा हो। मैं तुम्हारे सङ्ग मिलूंगा। पिये जाने पर सोम मुझे नहीं मारे। हरि अश्वोंवाले इन्द्र, यह जो सोम मुझमें निहित हुआ है; उसी के लिए चिरकाल तक जठर में रहने की प्रार्थना करता हूँ।

॥ इति षष्ठस्य चतुर्थे द्वादशोवर्गः ॥ १२ ॥

अपत्याअस्थुरनिराअमीवानिरत्रसन्तमिषीचीरभैषुः ।
आसोमोअस्माँअरुहद्विहायाअगन्मयत्रप्रतिरन्तआयुः ॥ ११ ॥

अप । त्याः । अस्थुः । अनिराः । अमीवाः । निः । अत्रसन् । तमिषीचीः । अभैषुः । आ । सोमः । अस्मान् । अरुहत् । विऽहायाः । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥ ११ ॥

त्यास्ता अनिराः प्रेरयितुमशक्याः अमीवाः बलवत्यः पीडाः अपास्थुः अपगच्छन्तु यास्तमिषीचीर्बलवत्योस्मान् निः नितरामत्रसन् प्राप्नुवन् कंपयंति तथा अभैषुः । अपगमे कारणमाह—यस्मात्सोमोविहायामहान् सन् अस्माना अरुहत् आगमत् प्राप्तवान् अतोपास्थुरितिभावः । यत्र यस्मिन् सोमे पीते आयुरायुष्यं प्रतिरन्ते वर्धयन्ति मनुष्यास्तंसोममगन्मेति ॥ ११ ॥

११. असाध्य और सुदृढ़ पीड़ायें दूर हों। ये सब पीड़ायें बलवती होकर हमें भली भाँति कम्पित करती हैं। महान् सोम हमारे पास आया है। इसका पान करने से आयु बढ़ती है। हम मानव हैं। हम इसके पास जायेंगे।

---

१ नि० ६. ४.

अथ द्वादशी–

योनइन्दुःपितरोहृत्सुपीतोमर्त्यौंमर्त्यांआविवेश ।
तस्मैसोमायहविषाविधेममृळीकेअस्यसुमतौस्याम ॥ १२ ॥

यः । नः । इन्दुः । पितरः । हृत्ऽसु । पीतः । अमर्त्यः । मर्त्यान् ।
आऽविवेश । तस्मै । सोमाय । हविषा । विधेम । मृळीके ।
अस्य । सुऽमतौ । स्याम ॥ १२ ॥

हे पितरो यइन्दुः हृत्सुपीतःसन् अमर्त्यो मृतिरहितः सन्नाविवेश मर्त्यान्नोस्मान् तस्मै सोमाय हविषाविधेम परिचरेम । अस्य सोमस्य मृळीके सुखे सुमतौ चानुग्रहबुद्धौच स्याम भवेम॥१२॥

१२. पितरो, पिये जाने पर जो सोम अमर होकर हम मर्त्यों के हृदय में पैठा है, हव्य-द्वारा हम उसी सोम की सेवा करेंगे । इस सोम की सुबुद्धि और कृपा में हम रहेंगे ।

महापितृयज्ञे सोमायपितृमतेपुरोडाशमित्यत्र त्वंसोममितियाज्या सूत्रितश्च–त्वंसोमपितृभिःसंविदानो बर्हिषदःपितरऊत्यर्वागिति । तृतीयसवने सौम्यस्यचरोरपीयमेवयाज्या । त्वंसोमपितृभिः संविदानइतिसौम्यस्येतिहिसूत्रितम् ।

त्वंसोमपितृभिःसंविदानोनुद्यावापृथिवीआततंथ ।
तस्मैतइन्दोहविषाविधेमवयंस्यामपतयोरयीणाम् ॥ १३ ॥

त्वम् । सोम । पितृऽभिः । सम्ऽविदानः । अनु ।
द्यावापृथिवी इति । आ । ततन्थ । तस्मै । ते । इन्दो इति ।
हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् ॥ १३ ॥

हे सोम त्वं पितृभिः सह संविदानः संगच्छमानो द्यावापृथिवी द्यावापृथिव्यौ अन्वाततन्थ क्रमेण विस्तारयसि । हे इन्दो सोम तस्मै ते तुभ्यं हविषा विधेम परिचरेम वयं रयीणां धनानां पतयः स्याम भवेम ॥ १३ ॥

१३. सोम, तुम पितरों के साथ मिलकर द्यावापृथिवी को विस्तृत करते हो। सोम हवि के द्वारा हम तुम्हारी सेवा करेंगे। हम धनपति होंगे।

अथ चतुर्दशी–

त्रातारोदेवाअधिवोचतानोमानोनिद्राईशतमोतजल्पिः ।
वयंसोमस्यविश्वहप्रियासःसुवीरासोविदथमावदेम ॥ १४ ॥

त्रातारः । देवाः । अधि । वोचत । नः । मा । नः । निऽद्रा ।
ईशत । मा । उत । जल्पिः । वयम् । सोमस्य । विश्वहं ।
प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १४ ॥

हे त्रातारो रक्षितारो हे देवाः नोस्मानधिवोचत अधिवचनं कुरुत । किञ्च नोस्मान्निद्रा स्वप्नाः मेशत ईश्वरामाभूवन् बाधितुम् । उतापिच जल्पिः निन्दकोस्मान्मानिन्दतु । वयं सोमस्य प्रियासः प्रियाः स्याम । विश्वह सर्वेष्वहःसु सर्वदेत्यर्थः सुवीरासः शोभनपुत्राः सन्तो-विदथं स्तोत्रमावदेम आभिमुख्येन वदेम । अथवा सुपुत्राविदथं गृहमावदेम । आवदनं पुत्रपौत्राणां धनेनोपच्छन्दनम् ॥ १४ ॥

१४. त्राता देवो, हमसे मीठे वचन बोलो। स्वप्न हमें वशीभूत नहीं करे। निन्दक हमारी निन्दा न करें। हम सदा सोम के प्रिय हों, ताकि सुन्दर स्तोत्रवाले होकर स्तोत्र का उच्चारण करें।

त्वंनःसोमविश्वतइति सौम्येपशौ हविषोनुवाक्या । सूत्रितश्च—त्वंनःसोमविश्वतोवयोधा-यातेधामानिदिवियापृथिव्यामिति ।

त्वंनःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः ।
त्वंनइन्दऊतिभिःसजोषाःपाहिपश्चातादुतवापुरस्तात् ॥ १५ ॥ १३ ॥

त्वम् । नः । सोम । विश्वतः । वयःऽधाः । त्वम् । स्वःऽवित् ।
आ । विश । नृऽचक्षाः । त्वम् । नः । इन्दो इति । ऊतिऽभिः ।
सऽजोषाः । पाहि । पश्चातात् । उत । वा । पुरस्तात् ॥ १५ ॥ १३ ॥

हे सोम त्वं नोस्माकं विश्वतः सर्वाभ्योदिग्भ्यो वयोधा अन्नदाता तथा त्वं स्वर्विव स्वर्गलंभकः नृचक्षाः सर्वमनुष्यद्रष्टा त्वं आविश । हे इन्दो त्वं सजोषाः सहमीयमाणः सन् ऊतिभिः सह अथवोतयोगन्तारोमरुतः तैः सहितः सन्पश्चातात् पश्चात् उतवा पुरस्ताच्च पाहि ॥ १५ ॥

१५. सोम, तुम चारों ओर से हमारे अन्नदाता हो । तुम स्वर्णदाता और सबदर्शी हो। तुम प्रवेश करो। सोम, तुम प्रसन्नता के साथ, रक्षण को लेकर, पीछे और सामने हमें बचाओ।

॥ इति षष्ठस्य चतुर्थे त्रयोदशोवर्गः ॥ १३ ॥

॥ इत्यष्टमे मंडले षष्ठोनुवाकः ॥ ६ ॥

सप्तमेनुवाके दशसूक्तानि तत्राग्नआयाहीति विंशत्यृचं प्रथमं सूक्तं प्रगाथपुत्रस्यं भर्गस्यार्षं आग्नेयं प्रथमातृतीयाद्ययुजोबृहत्यः द्वितीयाचतुर्थ्यादि युजः सतोबृहत्यः । तथाचानुक्रान्तम्— अग्नआ विंशतिर्भर्गः प्रागाथआग्नेयं प्रागाथंत्विति । प्रातरनुवाके आग्नेयेक्रतौ बार्हतेछन्दसि आश्विनशस्त्रेचेदं सूक्तम् । तथाचसूत्रितम्—अयमग्निरग्नआयाहीति ।

तत्र प्रथमा—

अग्नआयाह्यग्निभिर्होतारंत्वावृणीमहे ।
आत्वामनक्तुप्रयताहविष्मतीयजिष्ठंबर्हिरासदे ॥ १ ॥

अग्ने । आ । याहि । अग्निऽभिः । होतारम् । त्वा ।
वृणीमहे । आ । त्वाम् । अनक्तु । प्रऽयता । हविष्मती ।
यजिष्ठम् । बर्हिः । आऽसदे ॥ १ ॥

हे अग्ने अग्निभिर्यष्टव्यैः सहायाह्यागच्छ । तदर्थं होतारं देवानामाह्वातारं त्वा त्वां वृणीमहे त्वां आगतं प्रयताध्वर्युहस्ताभ्यां नियता हविष्मती घृतवती यजिष्ठं त्वां बर्हिः बर्हिष्यासदे आसद्य आसर्वतोनक्तु ॥ १ ॥

१. अग्नि, अन्य अग्निगण के साथ आओ। तुम्हें होता जानकर हम वरण करते हैं। अध्वर्युओं के द्वारा नियता और हविवाली यजनीय श्रेष्ठ तुम्हें कुश पर बैठाकर अलंकृत करे।

अच्छाहित्वासहसःसूनोअङ्गिरःस्रुचश्चरन्त्यध्वरे ।
ऊर्जोनपातंघृतकेशमीमहेग्निंयज्ञेषुपूर्व्यम् ॥ २ ॥

अच्छ । हि । त्वा । सहसः । सूनो इति । अङ्गिरः । स्रुचः ।
चरन्ति । अध्वरे । ऊर्जः । नपातम् । घृतऽकेशम् ।
ईमहे । अग्निम् । यज्ञेषु । पूर्व्यम् ॥ २ ॥

हे सहसःसूनो बलस्यपुत्र बलेन मथ्यमानत्वात् हे अंगिरः अंगिरसां मध्ये एक अथवांगतिर्गतिकर्मा सर्वत्र संगतस्त्वा त्वां अध्वरे यागे अच्छाभिप्राप्तुं स्रुचश्चरन्ति गच्छन्ति अत ऊर्जोन्नस्य नपातं न पातयितारं रक्षकं बलस्य नप्तारं वा घृतकेशं प्रदीप्तकेशस्थानीयज्वालं पूर्व्यं पुरातनं पूरकं वाग्निं यज्ञेषु अस्मदीयेषु ईमहे स्तौमि ॥ २ ॥

२. बल के पुत्र और अङ्गिरा लोगों में अन्यतम अग्नि, यज्ञ में तुम्हें प्राप्त करने के लिए स्रुक् जाती है। अन्न-रक्षक बल के पुत्र, प्रदीप्त ज्वालावाले और प्राचीन अग्नि की हम यज्ञ में स्तुति करते हैं।

अथ तृतीया—

अग्ने॑कुविर्वे॒धाअ॑सि॒होता॑पावक॒यक्ष्यः॑ ।
म॒न्द्रोयजि॑ष्ठोअध्व॒रेष्वीड्यो॒विप्रे॑भिःशुक्र॒मन्म॑भिः ॥ ३ ॥

अग्ने॑ । क॒विः । वे॒धाः । अ॒सि॒ । होता॑ । पा॒व॒क॒ । यक्ष्यः॑ । म॒न्द्रः ।
यजि॑ष्ठः । अ॒ध्व॒रेषु॑ । ईड्यः॑ । विप्रे॑भिः । शु॒क्र॒ । मन्म॑ऽभिः ॥ ३ ॥

हे अग्ने कविर्मेधावी त्वं वेधाः विधातासि फलानां । हे पावक होता देवानामाह्वाता होमनिष्पादकोवा यक्ष्योयष्टव्योसि । हे शुक्र दीप्त मन्द्रो मोदनीयो यजिष्ठो यष्टृतमस्त्वं अध्वरेषु यज्ञेषु विप्रेभिर्मेधाविभिर्ऋत्विग्भिर्मन्मभिर्मननीयैः स्तोत्रैरीड्यः स्तुत्योसि ॥ ३ ॥

३. अग्नि, तुम कवि (मेधावी), फलों के विधाता, पावक, होता और होम-सम्पादक हो। दीप्त अग्नि, तुम आमोदनीय और सर्वोच्च यजनीय हो। यज्ञ में विप्र लोग मनन-मन्त्र-द्वारा तुम्हारा स्तोत्र करते हैं।

अद्रो॑घ॒मावहो॒श॒तोय॑विष्ठ्यदे॒वाँअ॑जस्रवी॒तये॑ ।
अ॒भिप्रयां॑सि॒सुधि॒तावसोगहि॒मन्द॑स्वधी॒तिभि॑र्हि॒तः ॥ ४ ॥

अद्रो॑घम् । आ । व॒ह॒ । उ॒श॒तः । य॒वि॒ष्ठ्य॒ । दे॒वान् ।
अ॒ज॒स्र॒ । वी॒तये॑ । अ॒भि । प्रयां॑सि । सु॒ऽधि॑ता । आ ।
व॒सो॒ इति॑ । ग॒हि॒ । मन्द॑स्व । धी॒तिऽभिः॑ । हि॒तः ॥ ४ ॥

अद्रोघमद्रोग्धारं मां प्रति हे यविष्ठ्य युवतम अजस्र नित्य आवहानय । कान् उशतोस्मदर्थं कामयमानान् देवान् । किमर्थं वीतये हविर्भक्षणाय । हे वसो वासकाग्ने सुधिता सुनिहितानि प्रयांस्यन्नानि अभिगहि अभिगच्छ। आगत्यच धीतिभिः स्तुतिभिर्निहितो निहितःसन् मन्दस्व। यद्वा धीतिभिः मन्दस्वेति संबन्धः ॥ ४ ॥

४. युवतम और नित्य अग्नि, मैं द्रोह-शून्य हूँ। देवता लोग मेरी कामना करते हैं। हवि भक्षण के लिए उन्हें यहाँ ले आओ। वासदाता अग्नि, सुन्दर रीति से निहित अन्न के समीप आओ। स्तुति-द्वारा निहित होकर प्रसन्न होओ।

त्वमित्स॒प्रथा॑अ॒स्यग्ने॑त्रातर्ऋ॒तस्क॒विः ।
त्वांविप्रा॑सःसमिधानदीदिव॒आवि॑वासन्तिवे॒धसः॑ ॥ ५ ॥ १४ ॥

त्वम् । इत् । स॒ऽप्रथाः॑ । अ॒सि॒ । अग्ने॑ । त्रा॒तः॒ ।
ऋ॒तः । क॒विः । त्वाम् । विप्रा॑सः । स॒म्ऽइ॒धा॒न॒ । दी॒दि॒ऽवः॒ ।
आ । वि॒वा॒स॒न्ति॒ । वे॒धसः॑ ॥ ५ ॥ १४ ॥

हे अग्ने त्रातः रक्षक ऋतः सत्यभूतः कविः क्रान्तप्रज्ञस्त्वमित् त्वमेव सप्रथाः सर्वतः पृथुरसि भवसि। हे समिधान समिध्यमान हे दीदिवः दीप्तवां विप्रासो विप्राः मेधाविनो वेधसो विधातारः स्तोतारो विवासन्ति परिचरन्ति ॥ ५ ॥

५. अग्नि, तुम रक्षक, सत्य-स्वरूप, कवि और सर्वतः विस्तृत हो। समिध्यमान और दीप्त अग्नि, विप्र स्तोता लोग तुम्हारी परिचर्या करते हैं।

॥ इति षष्ठस्य चतुर्थे चतुर्दशोवर्गः ॥ १४ ॥

शोचा॑शोचिष्ठदीदि॒हि॒वि॒शेमयो॒राख्वं॑स्तो॒त्रेम॒हाँअ॑सि।
दे॒वानां॒शर्म॒न्ममसन्तुसू॒रयः॑शत्रू॒षाहः॑स्व॒ग्नयः॑ ॥ ६ ॥

शोच॑। शो॒चि॒ष्ठ॒। दी॒दि॒हि। वि॒शे। मयः॑। रास्व॑।
स्तो॒त्रे। म॒हान्। अ॒सि॒। दे॒वाना॑म्। शर्म॑न्। मम॑। स॒न्तु॒।
सू॒रयः॑। श॒त्रु॒ऽसहः॑। सु॒ऽअ॒ग्नयः॑ ॥ ६ ॥

हे शोचिष्ठ अतिशयेन शोचयितरग्ने शोच दीप्यस्व। दीदिहि दीपयास्मान्। विशे प्रजायै स्तोत्रे मयः सुखं रास्व देहि। त्वं महानसि त्वं देवानां संबन्धिनि शर्मन् शर्मणि सुखे मम सूरयः स्तोतारो मेधाविनोस्माकं पुत्रादयोवा सन्तु भवन्तु। शत्रूषाहः शत्रूणामभिभवितारः स्वग्नयः शोभनाग्नयश्च सन्तु ॥ ६ ॥

६. अतीव पवित्र अग्नि, दीप्त होओ और प्रदीप्त करो। प्रजा और स्तोता के लिए सुख प्रदान करो। तुम महान् हो। मेरे स्तोता लोग देव-प्रदत्त सुख प्राप्त करें। वे शत्रु-जेता और सुन्दर अग्नि से युक्त हों।

यथा॑चिद्वृ॒द्धम॑त॒सम॑ग्ने॒सं॒जूर्व॑सि॒क्षमि॑।
ए॒वाद॑ह॒मित्रमहो॒योअ॑स्म॒ध्रुग्दु॒र्मन्मा॒कश्च॒वेन॑ति ॥ ७ ॥

यथा॑। चि॒त्। वृ॒द्धम्। अ॒त॒सम्। अग्ने॑। स॒म्ऽजूर्व॑सि।
क्षमि॑। ए॒व। द॒ह॒। मि॒त्र॒ऽम॒हः॒। यः। अ॒स्म॒ऽध्रुक्।
दुः॒ऽमन्मा॑। कः। च॒। वेन॑ति ॥ ७ ॥

हे अग्ने क्षमि क्षमायां वर्तमानं वृद्धमतसम् शुष्कं काष्ठं यथाचित् येन प्रकारेणैव संजूर्वसि जूर्वतिर्हिंसाकर्मा सम्यग्दहसीत्यर्थः एव एवं दह। हे मित्रमहः मित्राणामस्माकं पूजक तेजोवा। कं योअस्मध्रुक् अस्माकं द्रोग्धा कश्च कश्चिद्दुर्मन्मा दुर्मतिर्वेनति कामयतेस्मान् द्रोग्धुं तं दहेति ॥ ७ ॥

७. अग्नि और मित्रों के पूजक, पृथिवी के सूखे काठ को तुम जैसे जलाते हो, वैसे ही हमारे द्रोही और हमारी दुर्बुद्धि चाहनेवाले को जलाओ।

अथाष्टमी—

मानोमर्तायरिपवेरक्षस्विनेमाघशंसायरीरधः ।
अस्रेधद्भिस्तरणिभिर्यविष्ठ्यशिवेभिःपाहिपायुभिः ॥ ८ ॥

मा । नः । मर्ताय । रिपवे । रक्षस्विने । मा । अघऽशंसाय ।
रीरधः । अस्रेधत्ऽभिः । तरणिऽभिः । यविष्ठ्य ।
शिवेभिः । पाहि । पायुऽभिः ॥ ८ ॥

नोस्मान् मर्ताय मनुष्याय रिपवे शत्रवे हिंसित्रे रक्षस्विने बलवते मारीरधो वशमानय तथाघशंसाय पापशंसकाय मारीरधः । हे यविष्ठ्य युवतम अस्रेधद्भिः अहिंसकैस्तरणिभिस्तारकैः शिवेभिः सुखकरैः पायुभिः पालनैः नोस्मान्पाहि रक्ष ॥ ८ ॥

८. अग्नि, हमें हिंसक और बली मनुष्य के वश में मत करना। हमारे अनिष्ट चाहनेवाले के वश में हमें नहीं करना। युवतम अग्नि, अहिंसक, उद्धारक और सुखकर रक्षणों से हमारी रक्षा करो।

पाहिनोअग्नएकयापाह्युतद्वितीयया ।
पाहिगीर्भिस्तिसृभिरूर्जांपतेपाहिचतसृभिर्वसो ॥ ९ ॥

पाहि । नः । अग्ने । एकया । पाहि । उत । द्वितीयया ।
पाहि । गीःऽभिः । तिसृऽभिः । ऊर्जाम् । पते । पाहि ।
चतसृऽभिः । वसो इति ॥ ९ ॥

हे अग्ने नोस्मानेकया ऋचा गिरा पाहि रक्ष । उतापिच द्वितीयया ऋचा पाहि पालय पाहि तिसृभिर्गीर्भिरूर्जामन्नानां बलानां वा पते स्वामिन् । तथा पाहि चतसृभिः गीर्भिः हे वसो-वासकाग्ने ॥ ९ ॥

९. अग्नि, हमें एक ऋक् के द्वारा बचाओ। हमें द्वितीय ऋक् के द्वारा बचाओ। बली अग्नि, हमें तीन ऋकों के द्वारा बचाओ। वासदाता अग्नि, हमें चार वाक्यों के द्वारा बचाओ।

अथ दशमी—

पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजेषुनोव ।
त्वामिद्धिनेदिष्ठंदेवतातयआपिंनक्षामहेवृधे ॥ १० ॥ १५ ॥

पाहि। विश्वस्मात्। रक्षसः। अराव्णः। प्र। स्म।
वाजेषु। नः। अव। त्वाम्। इत्। हि। नेदिष्ठम्।
देवऽतातये। आपिम्। नक्षामहे। वृधे॥ १०॥ १५॥

हे अग्ने विश्वस्मात्सर्वस्माद्रक्षसः अराव्णोदातुः सकाशात्पाहि रक्षास्मान् वाजेषु संग्रामेषु नोस्मान्प्राव प्रकर्षेण रक्ष। स्मेति पूरणः। हियस्मान्नेदिष्ठमासन्नं आपिं बन्धुभूतं त्वामित् त्वामेव देवतातये यज्ञाय यज्ञसिध्यर्थं वृधे वर्धनाय नक्षामहे व्याप्नुमः। नक्षतिर्व्याप्तिकर्मा॥१०॥

१०. सारे राक्षसों और अदाता से हमें बचाओ। युद्ध में हमारी रक्षा करो। तुम निकटवर्त्ती और बन्धु हो। यज्ञ और समृद्धि के लिए हम तुम्हें प्राप्त करेंगे।

॥ इति षष्ठस्य चतुर्थे पञ्चदशोवर्गः॥ १५॥

अथैकादशी–

आनोअग्नेवयोवृधंरयिंपावकशंस्यम्।
रास्वाचनउपमातेपुरुस्पृहंसुनीतीस्वयशस्तरम्॥ ११॥

आ। नः। अग्ने। वयःऽवृधम्। रयिम्। पावक। शंस्यम्। रास्व।
च। नः। उपऽमाते। पुरुऽस्पृहम्। सुऽनीती। स्वयशःऽतरम्॥११॥

हे अग्ने पावक शोधक वयोवृधमन्नस्य वर्धकं शंस्यं शंसनीयं रयिं धनं नोस्मभ्यमाहरेतिशेषः। आहृत्य च हे उपमाते उपास्मत्समीपे माति नो धनमित्युपमातिः। हे तादृशाग्ने नोस्मभ्यं सुनीती सुनीत्या शोभननयनेन पुरुस्पृहं बहुभिः स्पृहणीयं स्वयशस्तरं अत्यन्तं स्वभूतकीर्तिधनं रास्व च देहि॥ ११॥

११. शोधक अग्नि, हमें अन्न-वर्द्धक और प्रशंसनीय धन प्रदान करो। समीपवर्त्ती और धनदाता अग्नि, हमें सुनीति के द्वारा अनेकों-द्वारा स्पृहणीय और अतीव कीर्त्तिकर धन दो।

अथ द्वादशी–

येनवंसामपृतनासुशर्धतस्तरन्तोअर्यआदिशः।
सत्वंनोवर्धप्रयसाशचीवसोजिन्वाधियोवसुविदः॥ १२॥

येन। वंसाम। पृतनासु। शर्धतः। तरन्तः। अर्यः।
आऽदिशः। सः। त्वम्। नः। वर्ध। प्रयसा। शचीवसो
इति शचीऽवसो। जिन्व। धियः। वसुऽविदः॥ १२॥

येन धनेन पृतनासु संग्रामेषु शर्धतः वेगं कुर्वतः अर्यौरीन् शत्रून् आदिशः आदेष्टॄन् शस्त्रप्रक्षेप्तॄन् तरन्तो वंसाम हिंसाम तद्धनं देहि। हे शचीवसो प्रज्ञया वासयितः कर्मधनवा स प्रसिद्धस्त्वंनोस्मान्वर्ध वर्धय प्रीणय प्रयसान्नेन। त्वं वा वर्धास्मदीयेन प्रयसा। हविषावसुविदो वसूनां लंभकानि धियः कर्माण्यस्मदीयानि जिन्व प्रीणय॥ १२॥

१२. जिस धन के द्वारा हम युद्ध में क्षिप्रकारी शत्रु और अस्त्र-क्षेपकों के हाथों से उद्धार पाकर उन्हें मारेंगे, उसे हमें दो। तुम प्रज्ञा-द्वारा धासदाता हो। हमें वर्द्धित करो। अन्न के द्वारा वर्द्धित करो। हमारे धन देनेवाले कर्मों को सुसम्पन्न करो।

शिशानोवृषभोयथाग्निःशृङ्गेदविध्वत्।
तिग्माअस्यहनवोनप्रतिधृषेसुजम्भःसहसोयहुः॥ १३॥

शिशानः। वृषभः। यथा। अग्निः। शृङ्गे इति। दविध्वत्। तिग्माः। अस्य। हनवः। न। प्रतिऽधृषे। सुऽजम्भः। सहसः। यहुः॥ १३॥

अयमग्निः शृंगे शिशानः तीक्ष्णीकुर्वन् वृषभोयथा दविध्वत् कंपयति शिरः एवं शृङ्गस्थानीया ज्वालाः शिशानस्तीक्ष्णीकुर्वन् दविध्वत् कम्पयति शिरः। अस्याग्नेर्हनवोन हनव-इव हनुस्थानीयाज्वालाः तिग्माः तीक्ष्णा नप्रतिधृषे प्रतिधर्षितुमशक्याः। योग्निः सुजम्भः सुदंष्ट्रः सहसोयहुः सहसस्पुत्रः अस्य हनवइत्यर्थः॥ १३॥

१३. वृषभ के समान अपने शृंग (ज्वाला) को वर्द्धित करते हुए अग्नि मस्तक कँपा रहे हैं। अग्नि के हनु (ज्वाला) तीक्ष्ण हैं; कोई उनका निवारण नहीं कर सकता। अग्नि के दाँत उत्तम हैं। वे बल के पुत्र हैं।

नहितेअग्नेवृषभप्रतिधृषेजम्भासोयद्वितिष्ठसे।
सत्वंनोहोतःसुहुतंहविष्कृधिवंस्वानोवार्यापुरु॥ १४॥

नहि। ते। अग्ने। वृषभ। प्रतिऽधृषे। जम्भासः। यत्।
विऽतिष्ठसे। सः। त्वम्। नः। होतरिति। सुऽहुतम्।
हविः। कृधि। वंस्व। नः। वार्या। पुरु॥ १४॥

हे वृषभ वर्षक हे अग्ने ते तव जंभासो जंभा दन्तस्थानीयाज्वालाः नहि प्रतिधृषे प्रतिधर्षितुं न शक्याः यद्यस्माद्वितिष्ठसे विविधं गच्छसि प्रवर्धसइत्यर्थः। हे होतर्होमनिष्पादक सत्वं हविरस्मद्दत्तं सुहुतं कृधि कुरु नोस्मभ्यं वार्या वरणीयानि पुरु बहूनि वंस्व देहि॥ १४॥

१४. वृष्टिदाता अग्नि, तुम बढ़ते हो; इसलिए तुम्हारे दांत (ज्वाला) का कोई निवारण नहीं कर सकता। अग्नि, तुम होता हो। तुम हमारे हव्य का भली भाँति हवन करो। हमें वरणीय बहुधन दान करो।

शेषे॒वने॑षुमा॒त्रोः॒संत्वा॒मर्ता॑सइन्धते।

अत॑न्द्रोह॒व्यावह॑सिह॒वि॒ष्कृत॒आदिद्दे॒वेषु॑राजसि॥ १५॥ १६॥

शेषे॑। वने॑षु। मा॒त्रोः। सम्। त्वा॒। मर्ता॑सः। इ॒न्ध॒ते। अत॑न्द्रः। ह॒व्या। व॒ह॒सि॒। ह॒विः॒ऽकृतः॑। आत्। इत्। दे॒वेषु॑। रा॒ज॒सि॒ १५॥१६॥

हे अग्ने वनेषु वर्तमानयोर्मात्रोररण्योः शेषे स्वपिषि वर्तसे। त्वा त्वां तथाभूतं मर्तासोमनुष्याः अध्वर्य्वादयोमथनेनोत्पाद्य समिन्धते पश्चात्प्रवृद्धः त्वमतन्द्रोऽनलसः सन् हविष्कृतोयजमानस्य हव्या हवींषि वहसि देवान् प्रति। आदिदनन्तरमेव देवेषु मध्ये राजसि दीप्यसे॥ १५॥ अग्नि, मातृरूप वन में वर्त्तमान अरणि-द्वय में तुम रहते हो। मनुष्य तुम्हें भली भाँति वर्द्धित करते हैं। पीछे तुम आलस्यशून्य होकर हव्यदाता के हव्य को देवों के निकट ले जाओ। अनन्तर देवों के बीच शोभा पाओ। ॥ इति षष्ठस्य चतुर्थे षोडशोवर्गः॥ १६॥

स॒प्तहोता॑र॒स्तमिदी॑ळते॒त्वाग्ने॑सु॒त्यज॒मह्र॑यम्।

भि॒नत्स्यद्रिं॒तप॑सा॒विशो॒चिषा॒प्राग्ने॑तिष्ठ॒जनाँ॒अति॑॥ १६॥

स॒प्त। होता॑रः। तम्। इत्। ई॒ळ॒ते॒। त्वा॒। अग्ने॑। सु॒ऽत्यज॑म्। अह्र॑यम्। भि॒नत्सि॑। अद्रि॑म्। तप॑सा। वि। शो॒चिषा॑। प्र। अग्ने॒। ति॒ष्ठ॒। जना॑न्। अति॑॥ १६॥

हे अग्ने तमित् तमेव त्वा त्वां सप्तहोतारो सप्तहोत्रकाः ईळते स्तुवन्ति। कीदृशंत्वां सुत्यजं सुत्यागं अभिमतप्रदमित्यर्थः अह्रयमक्षीणं प्रवृद्धम्। किञ्च अद्रिं मेघं तपसा तापकेन शोचिषा तेजसा तपसा शोचिषा चेति वा योज्यं विभिनत्सि। हे अग्ने जनानस्मानति अतीत्य प्रतिष्ठ प्रगच्छ हविरादाय देवान्प्रति अथवा अस्मद्विरोधिजनानतिक्रम्य प्रतिष्ठ॥ १६॥

१६. अग्नि, तुम्हारी स्तुति सात होता करते हैं। तुम अभिमतदाता और प्रवृद्ध हो। तुम तापक तेज के द्वारा मेघ को फाड़ते हो। अग्नि, हमें अतिक्रम करके आगे जाओ।

अथ सप्तदशी—

अ॒ग्निम॑ग्निंवो॒अध्रि॑गुंहु॒वेम॑वृ॒क्तब॑र्हिषः।

अ॒ग्निंहि॒तप्र॑यसः॒शश्व॑तीष्वाहोता॑रंचर्षणी॒नाम्॥ १७॥

अग्निम्ऽअग्निम् । वः । अध्रिऽगुम् । हुवेम । वृक्तऽबर्हिषः ।
अग्निम् । हितऽप्रयसः । शश्वतीषु । आ । होतारम् ।
चर्षणीनाम् ॥ १७ ॥

अग्निमग्निं वीप्सा आदरार्था अग्निमेव हे यजमानाः वोयुष्मदर्थं हुवेम आह्वयाम । अथवा हे देवा वो युष्मदर्थमिविवा व्याख्येयं । कीदृशावयं वृक्तबर्हिषः छिन्नदर्भाः कीदृशमग्निं अध्रिगुमधृतकर्माणं सर्वदा गृहेवर्वमानं अग्निं हितप्रयसः निहितहविष्कावयं आहुवेमेति शेषः । कीदृशमग्निं शश्वतीषु बह्वीषु भूमिषु वर्तमानं होतारं होमनिष्पादकं । किमर्थं चर्षणीनां मनुष्याणामर्थाय । अग्नौ तृप्तेसति वृष्टिलाभात्प्राण्युपकारसिद्धंप्राण्यर्थत्वं । अथवा मनुष्याणां यजमानानां होतारं होमसाधकम् ॥ १७ ॥

१७. स्तोताओ, तुम्हारे लिए हम अग्नि का ही आह्वान करते हैं। हमने कुश को छिन्न किया है और हव्य का विधान किया है। अग्नि कर्मधारक अनेक लोकों में वर्तमान और सारे यजमानों के होता हैं।

केतेनशर्मन्त्सचतेसुषामण्यग्नेतुभ्यंचिकित्वनां ।
इषण्ययानःपुरुरूपमाभरवाजंनेदिष्ठमूतये ॥ १८ ॥

केतेन । शर्मन् । सचते । सुऽसामनि । अग्ने । तुभ्यम् ।
चिकित्वना । इषण्यया । नः । पुरुऽरूपम् । आ ।
भर । वाजम् । नेदिष्ठम् । ऊतये ॥ १८ ॥

हे अग्ने तुभ्यं चिकित्वना चिकितुषा जनेन होत्रादिना सह यजमानः केतेन प्रज्ञापकेन स्तोत्रेण यजतइतिशेषः । कुत्रेति तदुच्यते—सुषामणि शोभनरथन्तरादिसामोपेते शर्मन् शर्मणि सुखसाधने यज्ञे । अतः हे अग्ने इषण्यया इच्छया स्वीयया नोस्मभ्यं पुरुरूपं नानारूपं नेदिष्ठं अन्तिके सर्वदा वर्तमानं वाजमन्नं ऊतये रक्षणायाभराहर ॥ १८ ॥

१८. अग्नि, उत्तम साम (रथन्तर आदि से युक्त) और सुखवाले यज्ञ में यजमान, प्रज्ञा से युक्त मनुष्य के साथ, तुम्हारी स्तुति करता है। अग्नि, हमारी रक्षा के लिए, अपनी इच्छा से, निकटवर्त्ती और नानारूपधारी अन्न ले आओ।

अथैकोनविंशी—

अग्नेजरितर्विश्पतिस्तेपानोदेवरक्षसः ।
अप्रोषिवान्गृहपतिर्महाँअसिदिवस्पायुर्दुरोणयुः ॥ १९ ॥

अग्ने । जरितः । विश्पतिः । तेपानः । देव । रक्षसः ।
अप्रोषिऽवान् । गृहऽपतिः । महान् । असि ।
दिवः । पायुः । दुरोणऽयुः ॥ १९ ॥

हे अग्ने देव जरितः स्तोतः स्तुत्येत्यर्थः विश्पतिः प्रजानां पालकः रक्षसोराक्षसानां तेपानः सन्तापकोसि अप्रोषिवान्यजमानगृहमत्यजन् । तदेवाह—गृहपतिर्यजमानगृहस्यपालकश्च त्वं महानतिशयेन पूज्योसि दिवो द्युलोकस्य पायुः पाता दुरोणयुर्यजमानगृहस्य मिश्रयिता सर्वदा वर्तमानइत्यर्थः तादृशस्त्वं महानसीत्यन्वयः ॥ १९ ॥

१९. देव और स्तुत्य अग्नि, तुम प्रजा के पालक और राक्षसों के सन्तापक हो। तुम यजमान के गृह-रक्षक हो। उसे तुम कभी नहीं छोड़ते। तुम महान् हो। तुम द्युलोक के पाता हो। तुम यजमान के गृह में सदा वर्तमान हो।

मानोरक्षआवेशीदाघृणीवसोमायातुर्यातुमावताम् ।
परोगव्यूत्यनिरामपक्षुधमग्नेसेधरक्षस्विनः ॥ २० ॥ १७ ॥

मा । नः । रक्षः । आ । वेशीत् । आघृणिवसो इत्याघृणिऽवसो ।
मा । यातुः । यातुऽमावताम् । परःऽगव्यूति । अनिराम् । अप ।
क्षुधम् । अग्ने । सेध । रक्षस्विनः ॥ २० ॥ १७ ॥

हे आघृणीवसो दीप्तधनाग्ने नोस्मान्रक्षोराक्षसादिः । रक्षोरक्षितव्यमस्मादितियास्कः । मा आवेशीत् सर्वतो न प्रविशतु । तथा यातुमावतां यातुर्यातना पीडा तद्वतां यातुधानानां यातुः पीडामावेशीत् । हे अग्ने अनिरां इराम्नं अन्नाभावं दारिद्र्यं क्षुधं क्षपयितारं रक्षस्विनो बलवन्ति रक्षांसिच परोगव्यूति क्रोशद्वयाद्देशात्परस्तात् एतदुपलक्षणं अत्यन्तं दूरदेशे अपसेध परिहर अनिराक्षुत् बाह्यानि रक्षांसिच नपीडयन्त्विति ॥ २० ॥

२०. दीप्तधन अग्नि, हमारे अन्दर राक्षस आदि प्रविष्ट न हों। यातुधान लोगों की न प्रविष्ट हो। दरिद्रता, हिंसक और बली राक्षसों को बहुत दूर रखना।

॥ इति षष्ठस्य चतुर्थे सप्तदशोवर्गः ॥ १७ ॥

उभयंशृणवदित्यष्टादशर्चं द्वितीयं सूक्तं प्रागाथस्य भर्गस्यार्षं । अत्रानुक्रमणिका—उभयंभूनेति । पूर्वसूक्ते प्रागाथंत्वित्युक्तत्वादिदमपि प्रागाथं । अत्रायुजोबृहत्यः युजःसतोबृहत्यः अनुक्तत्वादिन्द्रोदेवता । महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तं सप्तम्यष्टमीवर्जं तथैवपञ्चमारण्यके सूत्रितं शौनकेन—उभयंश्रृणवच्चनइति सप्तमींचाष्टमीं चोद्धरतीति। चातुर्विंशिकेहनि निष्केवल्ये उभयमिति बृहत्सामप्रगाथः । तथाचसूत्रितम्—उभयंश्रृणवच्चनइति । चातु-

विंशिकेहनि माध्यन्दिनेसवनेच्छावाकस्यायमेव स्तोत्रियःप्रगाथः। तथाचसूत्रितं—उभयंशृणवच्चनआवृषस्वपुरूवसोइति। एवमन्यत्रापि यस्मिन्नहनि पृष्ठस्तोत्रे बृहत्सामक्रियते तस्मिन्नहनि निष्केवल्येयंप्रगाथः।

तत्र प्रथमा—

उभयंशृणवच्चनइन्द्रोअर्वागिदंवचः।
सत्राच्यांमघवासोमपीतयेधियाशविष्ठआगमत्॥ १॥

उभयंम्। शृणवत्। च। नः। इन्द्रः। अर्वाक्। इदम्। वचः।
सत्राच्या। मघऽवा। सोमऽपीतये। धिया।
शविष्ठः। आ। गमत्॥ १॥

उभयं स्तोत्रात्मकं शस्त्रात्मकं चोभयविधं नोस्माकमिदं वचोर्वागस्मदभिमुखं इन्द्रः शृणवत् शृणोतु श्रुत्वाच सत्राच्या अस्माकं सहांचत्या धिया युक्तःसन् मघवा शविष्ठोतिशयेन बलवानागमदागच्छतु सोमपीतये सोमपानाय॥ १॥

१. इन्द्र, हमारे स्तोत्र-रूप और शस्त्रात्मक वाक्यों को सुनें। हमारे सहगामी कर्म से युक्त होकर धनी और बली इन्द्र सोमपान के लिए आवें।

अथ द्वितीया—

तंहिस्वराजंवृषभंतमोजसेधिषणेनिष्टतक्षतुः।
उतोपमानांप्रथमोनिषीदसिसोमकामंहितेमनः॥ २॥

तम्। हि। स्वऽराजम्। वृषभम्। तम्। ओजसे। धिषणे इति।
निःऽततक्षतुः। उत। उपऽमानाम्। प्रथमः। नि। सीदसि।
सोमऽकामम्। हि। ते। मनः॥ २॥

तं हि तं खल्विन्द्रं स्वराजं स्वयमेवराजमानं धिषणे द्यावापृथिव्यौ वृषभं जगदुपकारकस्य वृष्णेर्वर्षकं निष्टतक्षतुः संघस्करतुः। तं तमेवेन्द्रं ओजसे बलाय निष्टतक्षतुः उत यस्मादेवं तस्माद्धे इन्द्रोपमानां उपमानभूतानांअन्येषां देवानां मध्ये प्रथमो मुख्यः सन् निषीदसि वेद्यां सोमकामं हिखलु ते मनः॥ २॥

२. द्यावापृथिवी ने उन शोभन और वृष्टिदाता इन्द्र का संस्कार किया था। उन इन्द्र का बल के लिए संस्कार किया था। इसी लिए, हे इन्द्र, तुम उपमान देवों में मुख्य होकर वेदी पर बैठो। तुम्हारा मन सोमाभिलाषी है।

पूर्वोक्ते अच्छावाकशस्त्रे आवृषस्वेति प्रगाथोवैकल्पिकोनुरूपः सूत्रमुक्तम्।

सैषा तृतीया-

आवृषस्वपुरूवसोसुतस्येन्द्रान्धसः ।
विद्माहित्वाहरिवःपृत्सुसासहिमधृष्टंचिद्दधृष्वणिम् ॥ ३ ॥

आ । वृषस्व । पुरुवसो इति पुरुऽवसो । सुतस्य । इन्द्र । अन्धसः ।
विद्म । हि । त्वा । हरिऽवः । पृत्ऽसु । ससहिम् ।
अधृष्टम् । चित् । दधृष्वणिम् ॥ ३ ॥

हे पुरूवसो बहुधनेन्द्र त्वमावृषस्व आसिञ्चस्व । किं सुतस्यान्धसः सुतमन्धः सोमं जठरे । हे हरिवो हरिभ्यां तद्वन्निन्द्र त्वा त्वां विद्महि जानीमः खलु । कीदृशं पृत्सु संग्रामेषु सासहिं अभिभवितारं शत्रूणां अधृष्टंचित् कैरप्यधर्षणीयं दधृष्वणिमन्येषां धर्षकं ॥ ३ ॥

३. प्रचुर-धनी इन्द्र, तुम जठर में अभिषुत सोम का सिंचन करो। हरि अश्वोंवाले इन्द्र, तुम्हें हम युद्ध में शत्रुओं का पराजेता, न दबाने योग्य और दूसरों को दबानेवाला जानते हैं।

अप्रामिसत्यमघवन्तथेदसदिन्द्रक्रत्वायथावशः ।
सनेमवाजंतवशिप्रिन्नवसामक्षूचिद्यन्तोअद्रिवः ॥ ४ ॥

अप्रामिऽसत्य । मघऽवन् । तथा । इत् । असत् । इन्द्र । क्रत्वा ।
यथा । वशः । सनेम । वाजम् । तव । शिप्रिन् । अवसा ।
मक्षु । चित् । यन्तः । अद्रिऽवः ॥ ४ ॥

हे अप्रामिसत्य आहिंसितसत्य हे मघवन्निन्द्र तथेदसत्तथैवभवति । हे इन्द्र क्रत्वा कर्मणा प्रज्ञानेन यथा येनप्रकारेण वशः कामयेः । हे शिप्रिन् अवसा रक्षणेन निमित्तेन वाजमन्नं सनेम संभजेम वयं तव त्वदनुग्रहात् । कीदृशावयं मक्षु चित् शीघ्रमेव यन्तः शत्रून्गच्छन्तोभि-भवन्तः हे अद्रिवः अद्रिर्वज्रस्तद्वन्निन्द्रेति ॥ ४ ॥

४. धनी इन्द्र, तुम वस्तुतः अहिंसित हो। जिस प्रकार हम कर्म के द्वारा फल की कामना कर सकें, वैसा ही हो। शिरस्त्राणवाले वज्रधर इन्द्र, तुम्हारे रक्षण में हम अन्न का सेवन करेंगे और शीघ्र ही शत्रुओं को पराजित करेंगे।

अथ पञ्चमी-

शग्ध्यूषुशचीपतइन्द्रविश्वाभिरूतिभिः ।
भगंनहित्वायशसंवसुविदमनुशूरचरामसि ॥ ५ ॥ १८ ॥

शग्धि । ऊँ इति । सु । शचीऽपते । इन्द्र । विश्वाभिः ।
ऊतिऽभिः । भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् ।
अनु । शूर । चरामसि ॥ ५ ॥ १८ ॥

हे शचीपते इन्द्र शग्धि देहि सु सुष्ठु अभिमतं विश्वाभिः सर्वाभिः ऊतिभिः रक्षकैः मरुद्भिः सह । हे शूर भगंन भाग्यमिव यशसं यशस्विनं वसुविदं धनस्यलंभकं त्वा त्वां अनुचरामसि अनुचरामः परिचरामेत्यर्थः ॥ ५ ॥

५. यज्ञपति इन्द्र, सारी रक्षाओं के साथ अभिमत फल प्रदान करो। शूर, तुम यशस्वी और धन-प्रापक हो। भाग्य के समान हम तुम्हारी सेवा करते हैं। ॥ इति षष्ठस्य चतुर्थेष्टादशोवर्गः ॥ १८ ॥

पौरोअश्वस्यपुरुकृद्गवामस्युत्सोदेवहिरण्ययः ।
नकिर्हिदानंपरिमर्धिषत्त्वेयद्यद्यामितदाभर ॥ ६ ॥

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव ।
हिरण्ययः । नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति ।
यत्ऽयत् । यामि । तत् । आ । भर ॥ ६ ॥

हे इन्द्र त्वं अश्वस्य पौरः पूरयिता भवसि ।तथा गवां पुरुकृत् बहुकर्तासि । हेदेव हिरण्ययः हिरणमयशरीरस्त्वं उत्सः उत्ससदृशोसि । हे इन्द्र त्वे त्वयि वर्तमानं दानमस्मद्विषयं देयं धनं वा नकिर्हि परिमर्धिषत् नकश्चिदपि हिनस्ति अतो यद्यद्यामि याचे तदाभराहर मह्यम् ॥६॥

६. इन्द्र, तुम अश्वों के पोषक, गौओं की संख्या बढ़ानेवाले, सोने के शरीरवाले और निर्झर स्वरूप हो। हम लोगों के लिए तुम जो दान करने की कामना करते हो, उसकी कोई हिंसा नहीं कर सकता। फलतः मैं जो याचना करता हूँ, उसे ले आओ।

यद्यग्निष्टोमेबृहत्साम तदानीं निष्केवल्ये प्रगाथोनुरूपः ।सूत्रितश्च—त्वंह्येहिचेरवइति प्रगाथाएते भवन्तीति । महाव्रते निष्केवल्ये उत्तरपक्षेयंप्रगाथः तथैव पंचमारण्यकेसूत्रितम्—त्वामिद्धिहवामहे त्वंह्येहिचेरवइति बृहत्स्तोत्रियानुरूपौ प्रगाथाविति ।

प्रगाथे प्रथमा सूक्ते सप्तमी—

त्वंह्येहिचेरवेविदाभगंवसुत्तये ।
उद्वावृषस्वमघवन्गविष्टयउदिन्द्राश्वमिष्टये ॥ ७ ॥

त्वम् । हि । आ । इ॒हि॒ । चेर॑वे । वि॒दाः । भग॑म् । वसु॑त्तये ।
उत् । व॒वृ॒षस्व॒ । म॒घ॒ऽव॒न् । गोऽइ॑ष्टये । उत् ।
इ॒न्द्र॒ । अश्व॑म्ऽइष्टये ॥ ७ ॥

हे इन्द्र त्वंहि त्वंखलु चेरवे सामर्थ्याद्दातेति गम्यते अतएह्यागच्छ आगत्यचास्मभ्यं भगं भजनीयं धनं विदाः लभस्व दत्स्व । किमर्थं वसुत्तये अस्माकं वसुदानाय हे मघवन् गविष्टये गाइच्छते मह्यं उद्ववृषस्वोत्सिञ्चस्व गामितिशेषः । तथा हे इन्द्राश्वमिष्टयेश्वैषणवते मह्यं अश्वानुद्ववृषस्वोत्सिञ्चस्व देहि ॥ ७ ॥

७. इन्द्र, तुम आओ। धन-दान के लिए अपने सेवक को भजनीय धन दो। मैं गौ चाहता हूँ। मुझे गौ दो। मैं अश्व चाहता हूँ। मुझे अश्व दो।

त्वंपु॒रू स॒हस्रा॑णिश॒तानि॑चयू॒था दा॒नाय॒मंह॑से ।
आपु॑र॒न्द॒रंच॑कृ॒मविप्र॑वचस॒इन्द्रं॒गाय॒न्तोव॑से ॥ ८ ॥

त्वम् । पु॒रु । स॒हस्रा॑णि । श॒तानि॑ । च॒ । यू॒था । दा॒नाय॑ । मंह॒से ।
आ । पु॒र॒म्ऽद॒रम् । च॒कृ॒म॒ । विप्र॑ऽवचसः ।
इन्द्र॑म् । गाय॑न्तः । अव॑से ॥ ८ ॥

हे इन्द्र त्वं पुरु पुरूणि बहूनि सहस्राणि शतानिच यूथा गवादियूथानि दानाय यजमानविषयाय मंहसे अनुमन्यसे । यद्वा दानाय दात्रे यजमानाय मंहसे प्रयच्छसि मंहतिर्दानकर्मा । अथपरोक्षेण ब्रवीति—पुरन्दरं शत्रुपुराणां दारयितारमिन्द्रं अवसे रक्षणाय प्रीतयेवा गायन्तः स्तुवन्तो विप्रवचसः विविधप्रकृष्टवचनावयं आ आगन्तारमभिमुखंवा चकृम कुर्मः ॥ ८ ॥

८. इन्द्र, तुम अनेक सौ और अनेक सहस्र गौओं का समूह दाता यजमान को देते हो। नगर-भेदक इन्द्र का, रक्षण के लिए स्तव करते हुए विविध वचनों से युक्त होकर हम उन्हें अपनी ओर ले आवेंगे।

अथ नवमी—

अ॒विप्रो॑वा॒यद॑वि॒ध॒द्विप्रो॑वेन्द्र॒ते॒वचः॑ ।
सप्र॒मम॑न्दत्वा॒याश॑तक्रतो॒प्राचा॑मन्यो॒अहं॑सन ॥ ९ ॥

अविप्रः । वा । यत् । अविधत् । विप्रः । वा । इन्द्र । ते । वचः ।
सः । प्र । ममन्दत् । त्वाऽया । शतक्रतो इति शतऽक्रतो ।
प्राचामन्यो इति प्राचाऽमन्यो । अहम्ऽसन ॥ ९॥

हे इन्द्र ते तव वचः स्तोत्रं यद्यः अविप्रोवा अमेधावी अस्तुतिकुशलोवा अविधत् कुर्यात् त्वां स्तौतीत्यर्थः सस्तोता त्वाया त्वयीच्छया साधनेन प्रममन्दत् प्रकर्षेण मोदते । हे शतक्रतो बहुकर्मन् हे प्राचामन्यो प्राचीनक्रोध अप्रतिहतक्रोधेत्यर्थः नहीन्द्रक्रोधं प्रतिहन्ति कश्चित् हे अहंसन संग्रामे अहमित्यात्मनोमहत्त्वं प्रकाशयन् यः शत्रुं संभजते सतथोक्तस्तादृशेन्द्र- ॥ ९ ॥

शतक्रतु, अपराजेय क्रोधवाले और संग्राम में अहंकारी इन्द्र, जो बुद्धि-हीन वा बुद्धिमान् तुम्हारी स्तुति करता है, तुम्हारी कृपा से वह आनन्दित होता है ।

उग्रबाहुर्म्रक्षकृत्वापुरंदरोयदिमेशृणवद्धवम् ।
वसूयवोवसुपतिंशतक्रतुंस्तोमैरिन्द्रंहवामहे ॥ १० ॥ १९ ॥

उग्रऽबाहुः । म्रक्षऽकृत्वा । पुरम्ऽदरः । यदि । मे । शृणवत् ।
हवम् । वसुऽयवः । वसुऽपतिम् । शतऽक्रतुम् ।
स्तोमैः । इन्द्रम् । हवामहे ॥ १० ॥ १९ ॥

उग्रबाहुः उद्गूर्णभुजो म्रक्षकृत्वा वधकर्ता शत्रूणां पुरन्दरः पुराणां दारयितेन्द्रः यदि मे हवं शृणवत् शृणुयात् तर्हि वसूयवो वसुकामावयं वसुपतिं बहुधनस्वामिनं शतक्रतुं अपरिमितप्रज्ञमिन्द्रं स्तोमैः स्तोत्रैः हवामहे आह्वयामः ॥ १० ॥

१०. उग्रबाहु, वधकर्त्ता और पुरी-भेदक इन्द्र यदि मेरा आह्वान सुनें, तो हम धन की अभिलाषा से धनपति और बहुकर्मा इन्द्र को स्तोत्र द्वारा बुलावेंगे । ॥ इति षष्ठस्य चतुर्थे एकोनविंशोवर्गः ॥ १९ ॥

अथैकादशी—

नपापासोमनामहेनारायासोनजल्हवः ।
यदिन्न्विन्द्रंवृषणंसचासुतेसखायंकृणवामहै ॥ ११ ॥

न । पापासः । मनामहे । न । अरायासः । न । जल्हवः ।
यत् । इत् । नु । इन्द्रम् । वृषणम् । सचा । सुते ।
सखायम् । कृणवामहै ॥ ११ ॥

वयमिन्द्रं पापासः पापाः अकृतपुण्याः ब्रह्मचर्यव्रतादिरहिताः न मनामहे न मन्यामहे तथा अरायासोऽराया अधनावा अहविष्कावा नं मनामहे न जल्हवः अज्वलनाः अनग्नयो-न मनामहे कृतव्रतनियमादिपुण्याः दानवन्तोग्निसहितास्तंस्तुमइति ऋषिरात्मानमाह। यदिव् यस्मादेव कारणात् नु इदानीं वृषणं वर्षकमिन्द्रं सुते सोमेभिषुते सचा सहिताः सखायं कृणवा-महै कुर्मः तस्मात्पापादिरहिताः मनामहे पापादिविशिष्टानामिन्द्रसाहाय्यकरणासंभवात्। अत्र नपापामन्यामहइत्यादिनिरुक्तम्।॥ ११ ॥

११. अब्रह्मचारी हम इन्द्र को नहीं मानते। धन-शून्य और अग्नि-रहित हम इन्द्र को नहीं जानते। फलतः इस समय हम, सोमाभिषव होने पर उन वर्षक के लिए इकट्ठे होकर उन्हें अपना मित्र बना लेंगे।

उग्रंयुंयुज्मपृतंनासुसासहिंमृणकांतिमदांभ्यम्।
वेदांभृमंचित्सनितारथीतंमोवाजिनंयमिदूनशंत्॥ १२ ॥

उग्रम्। युयुज्म। पृतंनासु। ससहिम्। ऋणऽकांतिम्।
अदांभ्यम्। वेदं। भृमम्। चित्। सनिता। रथिऽतंमः।
वाजिनंम्। यम्। इत्। ऊँ इति। नशंत्॥ १२ ॥

उग्रमुद्गूर्णबलमिन्द्रं युयुज्म योजयामः। कीदृशमिन्द्रं पृतनासु संग्रामेषु सासहिं शत्रू-णामभिभवितारं ऋणकातिं ऋणभूतस्तुतिं यस्मै स्तुतिर्ऋणवदवश्यंक्रियते तं तादृशं अथवा ऋणवदवश्यफलमदस्तुतिकं अदाभ्यं केनाप्यहिंस्यं। यइन्द्रो भृमंचित् बहुष्वश्वेषु भ्रमणशी-लमेव वाजिनं बलवन्तमश्वं रथीतमः रथस्वामी देवः वेद वेत्ति गृह्णाति तद्वत् सनितेन्द्रो वा-जिनं हविष्मन्तं यमित् यमेव जनं बहूनां यजमानानां मध्ये नशत् व्याप्नोति तमिन्द्रमिति ते वयमितिवा योज्यं। वयं युयुज्मेति पक्षे व्यत्ययेन बहुवचनम्॥ १२ ॥

१२. उग्र और युद्ध में शत्रुओं के विजेता इन्द्र को हम युक्त करेंगे। उनकी स्तुति ऋण के समान अवश्य फल देनेवाली है। वे अहिंसनीय, रथपति इन्द्र अनेक अश्वों में वेगवान् अश्व को पहचानते हैं। वे दाता हैं। वे अनेक यजमानों में हमें प्राप्त हुए हैं।

चातुर्विंशिकेहनि माध्यन्दिनसवनेच्छावाकस्य यतइन्द्रेति वैकल्पिकःस्तोत्रियस्तृचः। सू-त्रितश्च। यतइन्द्रभयामहे यथागौरोअपाकृतमिति। दुःस्वप्नदर्शनेप्येतदादिसूक्तशेषोजप्यः सू-त्रितं च—यतइन्द्रभयामहइतिच सूक्तशेषम्।

तृचे प्रथमा सूक्ते त्रयोदशी—

यतंइन्द्रभयांमहेततोंनोअभंयंकृधि।
मघंवञ्छग्धितवतन्नंऊतिभिर्विद्विषोविमृधोंजहि॥ १३ ॥

---

१ नि० ३. २१।

यतः । इन्द्र । भयामहे । ततः । नः । अभयम् । कृधि ।
मघऽवन् । शग्धि । तव । तत् । नः । ऊतिऽभिः । वि ।
द्विषः । वि । मृधः । जहि ॥ १३ ॥

हे इन्द्र यतोहिंसकात् भयामहे वयं ततोनोस्मभ्यमभयंकृधि कुरु । हे मघवन् शग्धि शक्तोभवसि नोस्मभ्यमभयं कर्तुं तव तत्तैरूतिभीरक्षणैरक्षकैः पुरुषैः । किञ्च विजहि द्विषो-स्मद्द्वेष्टॄन् विजहि मृधोस्मद्धिंसकान् ॥ १३ ॥

१३. जिस हिंसक से हम भय पाते हैं, उससे हमें अभय करो । मघवन्, तुम समर्थ हो । हमें अभय प्रदान करने के लिए रक्षक पुरुषों के द्वारा शत्रुओं और हिंसकों को विनष्ट करो ।

त्वंहिराधस्पतेराधसोमहःक्षयस्यासिविधतः ।
तंत्वावयंमघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे ॥ १४ ॥

त्वम् । हि । राधःपते । राधसः । महः । क्षयस्य ।
असि । विधतः । तम् । त्वा । वयम् । मघऽवन् । इन्द्र ।
गिर्वणः । सुतऽवन्तः । हवामहे ॥ १४ ॥

हे राधस्पते धनस्वामिन् त्वंखलु महो महतो राधसो धनस्य क्षयस्यच गृहस्य च वर्धयितासि खलु सामर्थ्यादेवं लभ्यते । कस्य राधसोगृहस्यच वर्धकइति । उच्यते—विधवः परिचरतो यजमानस्य । तं तादृशं त्वा त्वां वयं हे मघवन्निन्द्र गिर्वणोगीर्भिर्वननीय सुताव-न्तोभिषुतसोमा हवामहे आह्वयाम ॥ १४ ॥

१४. धनस्वामी तुम्हीं मघाधन के, सेवक के गृह के वर्द्धक हो । मघवा और स्तुति-पात्र इन्द्र, ऐसे तुमको हम, सोमाभिषव करके, बुलाते हैं ।        अथ तृचे तृतीया सूक्ते पञ्चदशी—

इन्द्रस्पळुतवृत्रहापरस्पानोवरेण्यः ।
सनोरक्षिषच्चरमंसमध्यमंसपश्चात्पातुनःपुरः ॥ १५ ॥ २० ॥

इन्द्रः । स्पट् । उत । वृत्रऽहा । परःऽपाः । नः । वरेण्यः ।
सः । नः । रक्षिषत् । चरमम् । सः । मध्यमम् । सः ।
पश्चात् । पातु । नः । पुरः ॥ १५ ॥ २० ॥

अयमिन्द्रः स्पट् सर्वस्य ज्ञाता स्पशतिर्ज्ञानकर्मा उतायं वृत्रहा वृत्रहन्ता परस्पाः परस्य पालयिता नोस्माकं वरेण्यः वरणीयः सइन्द्रोनोस्माकं पुत्रमितिशेषः रक्षिषत् रक्षतु चरमं पुत्रं तथा सरक्षिषत्।समध्यमं पुत्रं रक्षिषत् सनोस्मान्पश्चात्पातु रक्षतु नः पुरः पुरस्ता द्रक्षतु ॥१५॥

१५. यह इन्द्र सबके ज्ञाता, वृत्रहन्ता पर पालक और वरणीय हैं। वे इन्द्र हमारे पुत्र की रक्षा करें। वे चरमपुत्र की रक्षा करें और मध्यम पुत्र की रक्षा करें। वे हमारे पीछे और सामने दोनों दिशाओं में रक्षा करें। ॥ इति षष्ठस्य चतुर्थे विंशोवर्गः ॥ २० ॥

त्वंनः॑प॒श्चाद॑ध॒राद॑ुत्त॒रात्पु॒रइ॑न्द्र॒निपा॑हिवि॒श्वतः॑।
आ॒रेअ॒स्मत्कृ॑णुहि॒दैव्यं॑भ॒यमा॒रेहे॒तीरदे॑वीः ॥ १६ ॥

त्वम्। नः॒। प॒श्चात्। अ॒ध॒रात्। उ॒त्त॒रात्। पु॒रः। इ॒न्द्र॒।
नि। पा॒हि॒। वि॒श्वतः॑। आ॒रे। अ॒स्मत्। कृ॒णु॒हि॒।
दैव्य॑म्। भ॒यम्। आ॒रे। हे॒तीः। अदे॑वीः ॥ १६ ॥

हे इन्द्र त्वं नोस्मान्पश्चात् पश्चाद्भागात् पुरः पूर्वभागादधरादधोभागादेतदुपरिभागस्योपलक्षणं उत्तरादुत्तरभागात् एतद्दक्षिणस्याप्युपलक्षणं किंबहुना विश्वतः सर्वस्मात्प्रदेशान्निपाहि। हे इन्द्र दैव्यं भयं अस्मदस्मत्तआरे दूरे कृणुहि कुरु। तथा अदेवीरासुराणि हेतीः आयुधानि आरे कृणुहि ॥ १६ ॥

१६. इन्द्र, तुम हमें आगे, पीछे, नीचे, ऊपर—चारों ओर से रक्षा करो। इन्द्र हमारे यहाँ से दैव-भय दूर करो और असुर आयुध भी दूर करो। अ॒द्याद्या॒श्वश्व॒इन्द्र॒त्रास्व॑प॒रेच॑नः।
विश्वा॑चनोजरि॒तॄन्त्स॑त्पते॒अहा॒दिवा॒नक्तं॑चरक्षिषः ॥ १७॥

अ॒द्यऽअ॑द्य। श्वःऽश्वः॑। इन्द्र॑। त्रास्व॑। प॒रे। च॒। नः॒।
विश्वा॑। च॒। नः॒। ज॒रि॒तॄन्। स॒त्ऽप॒ते॒। अहा॑।
दिवा॑। नक्त॑म्। च॒। र॒क्षि॒षः॒ ॥ १७ ॥

हे इन्द्र नोस्मान् अद्याद्य यदद्यशब्दवाच्यमहरस्ति तत्र। सर्वत्र एवं। श्वश्वः त्रास्व रक्ष। तथा परेच परस्मिंस्तृतीयेहनि च त्रास्व। हे सत्पते सतांपाल विश्वा सर्वाण्यप्यहाहानि सर्वेष्वप्यहःसु नोस्मान् जरितॄन् रक्षिषो रक्षसि। तथा दिवानक्तंच रक्षिषः रक्षसि रक्षवा ॥ १७ ॥

१७. इन्द्र, आज-कल, और परसों हमारी रक्षा करना। साधु-रक्षक इन्द्र, हम तुम्हारे स्तोता हैं। सारा दिन हमारी रक्षा करना।

अथाष्टादशी—

प्रभङ्गीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकम् ।
उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः॥१८॥२१॥

प्रऽभङ्गी । शूरः । मघऽवा । तुविऽमघः । सम्ऽमिश्लः ।
वीर्याय । कम् । उभा । ते । बाहू इति । वृषणा । शतक्रतो
इति शतऽक्रतो । नि । या । वज्रम् । मिमिक्षतुः ॥ १८ ॥ २१ ॥

अयं मघवेन्द्रः प्रभंगी प्रभञ्जनशीलः शूरः तुवीमघः प्रभूतधनः संमिश्लः सम्यग्मिश्रयिता किमर्थं वीर्याय शत्रूणां वीर्यकरणाय कमितिपूरणः एवं महानुभावोभवति । अथ प्रत्यक्षवादः—हे इन्द्र ते उभा उभावपि बाहू वृषणा वर्षकौ कामानां हे शतक्रतो बहुप्रज्ञ या यौ वज्रमायुधं निमिमिक्षतुः परिगृह्णीतः ॥ १८ ॥

१८. ये धनी, वीर और प्रचुरधनी इन्द्र, वीरत्व के लिए, सबके साथ मिलते हैं। शतक्रतु इन्द्र, वह तुम्हारी अभिलाषप्रद दोनों भुजायें वज्र ग्रहण करें। ॥ इति षष्ठस्य चतुर्थे एकविंशोवर्गः ॥ २१ ॥

प्रोअस्माइति द्वादशर्चं तृतीयं सूक्तं काण्वस्य प्रगाथस्यार्षं पञ्चपदापंक्तिः सप्तम्याद्यास्तिस्रोबृहत्यः इन्द्रोदेवता । अत्रानुक्रमणिका—प्रोअस्मैद्वादश प्रगाथः पाङ्क्तं सप्तम्याद्याश्च तिस्रोबृहत्यइति । विनियोगोलैंगिकः ।

प्रोअस्माउपस्तुतिंभरतायज्जुजोषति ।
उक्थैरिन्द्रस्यमाहिनंवयोवर्धन्तिसोमिनोभद्राइन्द्रस्यरातयः ॥ १ ॥

प्रो इति । अस्मै । उपऽस्तुतिम् । भरत । यत् । जुजोषति । उक्थैः ।
इन्द्रस्य । माहिनम् । वयः । वर्धन्ति । सोमिनः । भद्राः ।
इन्द्रस्य । रातयः ॥ १ ॥

अस्माइन्द्रायोपस्तुतिंउपेत्यक्रियमाणांस्तुतिं प्रोभरत प्रकर्षेण संपादयत हे ऋत्विजः । यद्यदि अयमिन्द्रो जुजोषति सेवते तर्हि भरतेति । सोमिनः सोमप्रियस्येन्द्रस्य स्वभूतं माहिनं महत् वयोन्नं सोमलक्षणं उक्थैः शस्त्रैः वर्धन्ति वर्धयन्ति भद्राः स्तुत्यानि खल्विन्द्रस्य रातयो दानानि ॥ १ ॥

१. इन्द्र सेवा करते हैं; इसलिए उनको लक्ष्यकर स्तुति करो। लोग सोम-प्रिय इन्द्र के प्रचुर अन्न को उक्थ मन्त्रों के द्वारा वर्द्धित करते हैं। इन्द्र का दान कल्याणकारक है।

अथ द्वितीया—

अयुजोअसमोनृभिरेकःकृष्टीरयास्यः ।
पूर्वीरतिप्रवावृधेविश्वाजातान्योजसाभद्राइन्द्रस्यरातयः ॥ २ ॥

अयुजः । असमः । नृऽभिः । एकः । कृष्टीः । अयास्यः ।
पूर्वीः । अति । प्र । वव‍ृधे । विश्वा । जातानि ।
ओजसा । भद्राः । इन्द्रस्य । रातयः ॥ २ ॥

अयुजः असहायः असमः असदृशोन्यैर्नृभिर्देवैः एकोमुख्यः अयास्यः उपक्षपयितुमशक्यः पूर्वीः कृष्टीः पूर्वतन्यः प्रजाः अतिप्रववृधे अति प्रवर्धते । किञ्च विश्वा सर्वाणि जातानि इदानीमुत्पन्नानि ओजसा बलेनातिप्रवावृधे भद्राइन्द्रस्यरातयः । अथवा यमृषिरयुजोसहायोन्यैरसदृशएकएव सन् पूर्वीः प्रजाः जातानि सर्वाण्यप्यतिक्रम्य वर्धते । शिष्टं समानम् ॥ २ ॥

२. असहाय, असम देवों में मुख्य और अविनाशी इन्द्र पुरातन प्रजा को अतिक्रम करके बढ़ते हैं। इन्द्र का दान कल्याणवाहक है।

अहितेनचिदर्वताजीरदानुःसिषासति ।
प्रवाच्यमिन्द्रतत्तववीर्याणिकरिष्यतोभद्राइन्द्रस्यरातयः ॥ ३ ॥

अहितेन । चित् । अर्वता । जीरऽदानुः । सिसासति ।
प्रऽवाच्यम् । इन्द्र । तत् । तव । वीर्याणि ।
करिष्यतः । भद्राः । इन्द्रस्य । रातयः ॥ ३ ॥

अयं जीरदानुः क्षिप्रप्रदानंइन्द्रः अहितेनायोजितेनाप्रेरितेनचिदर्वतारणवताश्वेन सिषासति संभक्तुमिच्छति तव तस्माद्धे इन्द्र वीर्याणि सामर्थ्यानि करिष्यतस्तव महत्त्वं प्रवाच्यं स्तुत्यमित्यर्थः ॥ ३ ॥

३. शीघ्रदाता इन्द्र अप्रेरित अश्व की सहायता से भोग करने की इच्छा करते हैं। इन्द्र, तुम सामर्थ्यदाता हो। तुम्हारा महत्त्व स्तुत्य है। इन्द्र का दान कल्याणकर है।

अथ चतुर्थी—

आयाहिकृणवामतइन्द्रब्रह्माणिवर्धना ।
येभिःशविष्ठचाकनोभद्रमिहश्रवस्यतेभद्राइन्द्रस्यरातयः ॥ ४ ॥

आ । याहि । कृणवाम । ते । इन्द्र । ब्रह्माणि । वर्धना ।
येभिः । शविष्ठ । चाकनः । भद्रम् । इह । श्रवस्यते ।
भद्राः । इन्द्रस्य । रातयः ॥ ४ ॥

हे इन्द्र आयात्यागच्छ ते कृणवाम किं ब्रह्माणि परिवृद्धानि स्तुतिलक्षणानि कर्माणि । कीदृशानि वर्धना उत्साहवर्धकानि । येभिर्यैः कर्मभिः हे शविष्ठातिशयेन बलवन्निन्द्र चाकनः कामयसे । किं भद्रं कर्तुं । कस्मै श्रवस्यतेऽन्नमिच्छते स्तोत्रे ॥ ४ ॥

४. इन्द्र, आओ। हम तुम्हारी उत्साहवर्द्धक और उत्कृष्ट स्तुति करते हैं। सबसे बली इन्द्र, इन स्तुति के द्वारा अन्नेच्छु स्तोता का मङ्गल करने की इच्छा करते हो। इन्द्र का दान कल्याणकर है।

धृषतश्चिद्धृषन्मनःकृणोषीन्द्रयत्त्वम् ।
तीव्रैःसोमैःसपर्यतोनमोभिःप्रतिभूषतोभद्राइन्द्रस्यरातयः ॥ ५ ॥

धृषतः । चित् । धृषत् । मनः । कृणोषि । इन्द्र । यत् । त्वम् ।
तीव्रैः । सोमैः । सपर्यतः । नमःऽभिः । प्रतिऽभूषतः ।
भद्राः । इन्द्रस्य । रातयः ॥ ५ ॥

हे इंद्र धृषतश्चिद् धृष्टादपि धृषद् धृष्टं मनः कृणोषि अत्यन्तं धृष्टं करोषि। यद्यस्मात्त्वं तीव्रैः मदजनकैः सोमैः सपर्यतः पूजयतो नमोभिर्नमस्कारैश्च प्रतिभूषतोऽलंकुर्वतो यजमानस्य अभिमतं दित्ससीतिशेषः ॥ ५ ॥

५. इन्द्र, तुम्हारा मन अतीव धृष्ट है। मदकर सोम के प्रदान-द्वारा सेवा करनेवाले और नमस्कार-द्वारा विभूषित करनेवाले यजमान को असीम फल देते हो। इन्द्र का दान कल्याणकर है।

अथ षष्ठी—

अवचष्टऋचीषमोऽवताँइवमानुषः ।
जुष्ट्वीदक्षस्यसोमिनःसखायंकृणुतेयुजंभद्राइन्द्रस्यरातयः ॥६॥ २२॥

अव । चष्टे । ऋचीषमः । अवतान्ऽइव । मानुषः । जुष्ट्वी ।
दक्षस्य । सोमिनः । सखायम् । कृणुते । युजम् ।
भद्राः । इन्द्रस्य । रातयः ॥ ६ ॥ २२ ॥

अयमिन्द्रः ऋचीषमो ऋचा स्तुत्या समः तथापरिच्छिन्नः सन्नवचष्टे पश्यति अनुग्रहेणा-स्मान्। तत्र दृष्टान्तः—मानुषो मनुष्यः अवतानवटान्कूपादिप्रदेशानिव दृष्ट्वाच जुष्ट्वी प्रीतोयं दक्ष

प्रवृद्धस्य सोमिनो यजमानस्य युजं युज्यमात्मानं सखायं कृणुते करोति तस्याभिमतं साधयतीत्यर्थः। अथवा तृषितोमनुष्यो जलपूर्णानवटानिव स्तुतः सन्पश्यति सोमं पातुं। पश्चादवेक्षितं तं युज्यमानं सोमं जुष्ट्वी सेवित्वा दक्षस्य सोमिनः सखायं कृणुते कुरुते ॥ ६ ॥

६. इन्द्र, तुम स्तुति-द्वारा परिच्छिन्न होकर हमें उसी प्रकार देख रहे हो, जिस प्रकार मनुष्य कूप का दर्शन करता है। इन्द्र प्रसन्न होकर सोमवाले यजमान के योग्य बन्धु होते हैं। इन्द्र का दान महाकल्याणकर है। ॥ इति षष्ठस्य चतुर्थे द्वाविंशोवर्गः ॥ २२ ॥

विश्वेतइन्द्रवीर्यंदेवाअनुक्रतुंददुः।
भुवोविश्वस्यगोपतिःपुरुष्टुतभद्राइन्द्रस्यरातयः ॥ ७ ॥

विश्वे। ते। इन्द्र। वीर्यम्। देवाः। अनु। क्रतुम्। ददुः।
भुवः। विश्वस्य। गोऽपतिः। पुरुऽस्तुत।
भद्राः। इन्द्रस्य। रातयः ॥ ७ ॥

हे इन्द्र ते तव वीर्यं सामर्थ्यं क्रतुं प्रज्ञाञ्च अनु अनुसृत्य विश्वे सर्वे देवाः दधुः धारयन्ति वीर्यं प्रज्ञांच तव बलेन प्रज्ञयाच तेपि बलिनः प्रज्ञावन्तश्च भवन्तीत्यर्थः। तादृशस्त्वं गोपतिः प्रसिद्धानां गवामुदकानां स्तुतिवचसोवा पतिर्भुवोभवसि विश्वस्येत्येतत्पदांतर्गतस्यापि गोशब्दस्य विशेषः। हे पुरुष्टुत बहुभिः स्तुतेन्द्र भवसीति समन्वयः ॥ ७ ॥

७. इन्द्र, तुम्हारे वीर्य और तुम्हारी प्रज्ञा का अनुधावन करते हुए सारे देवगण वीर्य और प्रज्ञा को धारण करते हैं। इन्द्र, प्रसिद्ध गायों अथवा वचनों के स्वामी हो। बहुतों द्वारा स्तुत इन्द्र, तुम्हारा दान कल्याणवाहक है।

गृणेतदिन्द्रतेशवउपमंदेवतातये।
यद्धंसिवृत्रमोजसाशचीपतेभद्राइन्द्रस्यरातयः ॥ ८ ॥

गृणे। तत्। इन्द्र। ते। शवः। उपऽमम्। देवऽतातये।
यत्। हंसि। वृत्रम्। ओजसा। शचीऽपते।
भद्राः। इन्द्रस्य। रातयः ॥ ८ ॥

हे इन्द्र ते तव तच्छवोबलं उपमं अन्तिकं देवतातये यजमानाय यज्ञार्थंवा गृणे स्तुवे। यद्यस्माद्धेशचीपते वृत्रं ओजसा बलेन हंसि तस्मात्ते शवोगृणे ॥ ८ ॥

८. इन्द्र, तुम्हारे उस उपमान बल की, यज्ञ के लिए, मैं स्तुति करता हूँ। यज्ञपति, बल के द्वारा तुमने वृत्र का वध किया है। इन्द्र का दान कल्याणकर है।

समनेववपुष्यतःकृणवन्मानुषायुगा।
विदेतदिन्द्रश्चेतनमधश्रुतोभद्राइन्द्रस्यरातयः॥ ९॥

समनाऽइव। वपुष्यतः। कृणवत्। मानुषा। युगा।
विदे। तत्। इन्द्रः। चेतनम्। अधं। श्रुतः। भद्राः।
इन्द्रस्य। रातयः॥ ९॥

समनेव समानमनस्का योषिदिव सायथा वपुष्यतो वपुरिच्छतः पुरुषान् कृणवत्करोति स्ववशान् एवमयमिन्द्रो मानुषा मनुष्यान् युगा युगानि कालान्संवत्सरायनर्तुमासादीन्विदे लंभयति तद्युगनिर्माणात्मकं कर्म इन्द्रश्चेतनं सर्वस्य प्रज्ञापकं कृतवानिति शेषः। अध अथैवं कृत्वा श्रुतः सर्वत्र ख्यातोभूत्॥ ९॥

९. प्रेमवाली रमणी जैसे रूपाभिलाषी पुरुष को वशीभूत करती है, वैसे ही इन्द्र मनुष्यों को वशीभूत करते हैं। मनुष्य संवत्सर आदि के काल को प्राप्त करते हैं। इन्द्र ही उसे बता देते हैं। इन्द्र का दान कल्याणकर है।

उज्जातमिन्द्रतेशवउत्त्वामुत्तवक्रतुम्।
भूरिगोभूरिवावृधुर्मघवन्तवशर्मणिभद्राइन्द्रस्यरातयः॥ १०॥

उत्। जातम्। इन्द्र। ते। शवः। उत्। त्वाम्। उत्। तव। क्रतुम्।
भूरिगो इति भूरिऽगो। भूरि। ववृधुः। मघऽवन्। तव।
शर्मणि। भद्राः। इन्द्रस्य। रातयः॥ १०॥

हे इन्द्र उत्। अयं व्यवहितेनापि ववृधुरित्यनेन संबध्यते। उद्वर्धयन्ति सोमेन। किं ते तवजातमुत्पन्नं शवोबलं। नकेवलं बलं किन्तु त्वा मुद्वर्धयन्ति स्तुत्यादिना पश्चात्तव क्रतुं प्रज्ञां स्वानुकूलां उद्वर्धयन्ति भूरीत्येतत्प्रत्याख्यातं संबध्यते अति प्रभूतमुद्वर्धयन्तीत्यर्थः। कएवंकुर्वन्तीति उच्यते—हे भूरिगो बहुपशो हे मघवन्धनवन्निन्द्र तव शर्मणि त्वदीये सुखे ये वर्तन्ते तेच कुर्वन्तीति॥ १०॥

१०. इन्द्र, अनेक पशुओंवाले जो यजमान तुम्हारे दिये सुख का भोग करते हैं, वे तुम्हारे उत्पन्न बल को प्रभूत रूप से वर्द्धित करते हैं, तुम्हें वर्द्धित करते हैं, तुम्हारी प्रज्ञा को वर्द्धित करते हैं। इन्द्र का दान कल्याणकर है। अथैकादशी—

अहंचत्वंचवृत्रहन्त्संयुज्यावसनिभ्यआ।
अरातीवाचिदद्रिवोनुनौशूरमंसतेभद्राइन्द्रस्यरातयः॥ ११॥

अहम् । च । त्वम् । च । वृत्रऽहन् । सम् । युज्याव । सनिऽभ्यः ।
आ । अरातिऽवा । चित् । अद्रिऽवः । अनु । नौ । शूर ।
मंसते । भद्राः । इन्द्रस्य । रातयः ॥ ११ ॥

हे वृत्रहन्निन्द्र त्वञ्चाहञ्च संयुज्याव संगतौ भवाव। कियदवधीति उच्यते—सनिभ्य आ यावता कालेन धनानि लभ्यन्ते तावत्कालम् । नौ संगतयोश्चावयोः हे अद्रिवो वज्रवन्निन्द्र हेशूर अरातीवा चित् अदानोपि जनस्त्वद्दत्तधनस्य अनुमंसते अनुमतिं करोति ॥ ११ ॥

११. इन्द्र, जब तक धन न मिले, तब तक हम मिलित रहें । वृत्रघ्न, वज्री और शूर इन्द्र, अदाता व्यक्ति भी तुम्हारे दान की प्रशंसा करेगा। इन्द्र का दान कल्याणकर है।

सत्यमिद्वाउतंवयमिन्द्रंस्तवामनानृतम् ।
महाँअसुन्वतोवधोभूरिज्योतींषिसुन्वतोभद्राइन्द्रस्यरातयः॥१२॥२३॥

सत्यम् । इत् । वै । ऊँ इति । तम् । वयम् । इन्द्रम् । स्तवाम । न ।
अनृतम् । महान् । असुन्वतः । वधः । भूरि । ज्योतींषि । सुन्वतः ।
भद्राः । इन्द्रस्य । रातयः ॥ १२ ॥ २३ ॥

वयं प्रगाथास्तमिन्द्रं सत्यमिव सत्यमेव स्तवाम नानृतं। वैइति निश्चयेन। असत्यंन स्तवाम। अस्माभिरुक्तागुणाः सत्याएवसन्तु नानृताइत्यर्थः। स्तुत्यस्येन्द्रस्य सम्बन्धीअसुन्वतोयष्टुर्वधोमहान् प्रभूतोभवति। भूरिज्योतींषि बहून् सोमान् सुन्वतोभिषवंकुर्वतो यजमानस्येन्द्रकृतोनुग्रहो महान्भवतीत्यर्थः ॥ १२ ॥

१२. हम लोग निश्चय ही इन्द्र की सत्य स्तुति करेंगे। असत्य स्तुति नहीं करेंगे। इन्द्र यज्ञ-पराङ्मुख लोगों का वध, बड़ी संख्या में करते हैं। वे अभिषव करनेवाले को प्रभूत ज्योति प्रदान करते हैं। इन्द्र का दान कल्याणकर है।

॥ इति षष्ठस्य चतुर्थे त्रयोविंशोवर्गः ॥ २३ ॥

सपूर्व्यइति द्वादशर्चं चतुर्थं सूक्तं। अत्रानुक्रमणिका—सपूर्व्योगायत्रमाद्याचतुर्थ्यादिद्वे सप्तमीचानुष्टुभो गायत्रेन्त्यादैवी त्रिष्टुबिति। प्रथमा चतुर्थी पञ्चमी सप्तम्यश्चतस्रोनुष्टुभः अस्मेरुद्राइत्यन्त्यात्रिष्टुप् अवशिष्टागायत्र्यः अन्त्यायादेवादेवता शिष्टाऐन्द्र्यः षष्ठेहनिमरुत्वतीयस्याद्यस्तृचःप्रतिपत्। सूत्रितंच—सपूर्व्योमहानांत्र्यइन्द्रस्यसोमाइतिमरुत्वतीयस्यप्रतिपदनुचराविति।

तत्र प्रथमा—

सपूर्व्योमहानांवेनःक्रतुभिरानजे ।
यस्यद्वारामनुष्पितादेवेषुधियआनजे ॥ १ ॥

सः । पूर्व्यः । महानाम् । वेनः । क्रतुऽभिः । आनजे । यस्य । द्वारा । मनुः । पिता । देवेषु । धियः । आनजे ॥ १ ॥

सइन्द्रः पूर्व्योमुख्योमहानां पूज्यानां यजमानानां क्रतुभिः कर्मभिर्निमित्तभूतैः वेनः कान्तस्तेषां हविः कामयमानः आनजे आगच्छति । यस्येन्द्रस्य द्वारा द्वाराणि माप्त्युपायानि धियः कर्माणि देवेष्वेतेषुमध्ये पिता सर्वेषां पालको मनुरानजे माप । आनजिःप्राप्तिकर्मा ॥ १ ॥

१. इन्द्र मुख्य हैं वे पूजनीयों के कर्मों से कान्त हैं। वे आते हैं। देवों के बीच पिता मनु ने ही इन्द्र को पाने के उपायों को प्राप्त किया था।

अथ द्वितीया—

दिवोमानंनोत्सदन्त्सोमपृष्ठासोअद्रयः ।
उक्थाब्रह्मचशंस्या ॥ २ ॥

दिवः । मानम् । न । उत् । सदन् । सोमऽपृष्ठासः । अद्रयः । उक्था । ब्रह्म । च । शंस्या ॥ २ ॥

दिवो द्युलोकस्य मानं निर्मातारमिन्द्रं नोत्सदन् नोत्सृजन्तु । के सोमपृष्ठासः सोमस्प्रष्टारः सोमाभिषवकर्तारः अद्रयोग्रावाणः । किञ्चोक्था उक्थानि शस्त्राणि ब्रह्मच ब्रह्माणि स्तोत्राणि शंस्या शंसनीयानि भवन्तीतिशेषः । यद्वा यानि स्तोत्राणि शस्त्राणि च सन्ति तानीन्द्रं नोत्सृजन्त्विति समन्वयः ॥ २ ॥

२. सोमाभिषव में लगे हुए पत्थरों ने स्वर्ग के निर्माता इन्द्र को नहीं छोड़ा था। उक्थों और स्तोत्रों का उच्चारण करना चाहिए।

अथ तृतीया—

सविद्वाँअङ्गिरोभ्यइन्द्रोगाअवृणोदप ।
स्तुषेतदस्यपौंस्यम् ॥ ३ ॥

सः । विद्वान् । अङ्गिरःऽभ्यः । इन्द्रः । गाः । अवृणोत् । अप । स्तुषे । तत् । अस्य । पौंस्यम् ॥ ३ ॥

सविद्वानुपायज्ञः इन्द्रोङ्गिरोभ्यः तेषामर्थाय गाः पणिभिरपहृताःपिहिता अपावृणोत अपवारितवान् तत्तादृशमस्य पौंस्यं पुंस्त्वं सामर्थ्यं स्तुषे स्तौमि ॥ ३ ॥

३. विद्वान् इन्द्र ने अङ्गिरा लोगों के लिए गौओं को प्रकट किया था। इन्द्र के उस पुरुषत्व की मैं स्तुति करता हूँ।

अथ चतुर्थी—

सप्रत्नथांकविवृधइन्द्रोवाकस्यवक्षणिः ।
शिवोअर्कस्यहोमन्यस्मत्रागन्त्ववसे ॥ ४ ॥

सः । प्रत्नऽथा । कविऽवृधः । इन्द्रः । वाकस्य । वक्षणिः । शिवः । अर्कस्य । होमनि । अस्मऽत्रा । गन्तु । अवसे ॥ ४ ॥

सइन्द्रः प्रत्नथा प्रत्नवत् पूर्वस्मिन्काले यथा तद्वदिदानीमपि कविवृधः मेधाविनां स्तोतॄणां वर्धयिता वाकस्य स्तोतुः वक्षणिः वोढा शिवः सुखकरः अर्कस्य अर्कमर्च्यं अर्चनीयत्वादर्चनसाधनत्वाद्वा तादृशस्य सोमस्य होमनि होमे सअस्मत्रा अस्मासु निमित्तभूतेषु अवसे रक्षणाय गन्तु गच्छतु ॥ ४ ॥

४. पहले की तरह इस समय भी इन्द्र कवियों के वर्द्धक हैं। वे होता के कार्य-निर्वाहक हैं। वे सुखकर और पूजनीय सोम के हवन-समय में हमारी रक्षा के लिए जायें।

आदूनुतेअनुक्रतुंस्वाहावरस्ययज्यवः ।
श्वात्रमर्काअनूषतेन्द्रगोत्रस्यदावने ॥ ५ ॥

आत् । ऊँ इति । नु । ते । अनु । क्रतुम् । स्वाहा । वरस्य । यज्यवः । श्वात्रम् । अर्काः । अनूषत । इन्द्र । गोत्रस्य । दावने ॥ ५ ॥

आदु अनन्तरमेव नु अद्य हे इन्द्र ते तव क्रतुं कर्म अनुक्रमेण अनूषतेति संबंधः ।अनुक्रमेण स्तुवन्ति के स्वाहावरस्य स्वाहादेव्याः पतेरग्नेः यज्यवोयष्टारः तदर्थमग्नौ यागं कुर्वन्तइत्यर्थः। तादृशाअर्काः अर्चयितारः स्तोतारः श्वात्रमिति क्षिप्रनाम अन्यदेवतास्तुतिरूपं विलंबमकृत्वातिशीघ्रमतिदीर्घं स्तुवन्तीत्यभिप्रायः। किमर्थं स्तुवन्तीत्युच्यते—गोत्रस्य दावने धनस्य दानाय ॥ ५ ॥

५. इन्द्र, स्वाहा देवी के पति अग्नि के लिए यज्ञ-कर्त्ता तुम्हारी ही कीर्ति का गान करते हैं। शीघ्र धन-दान के लिए स्तोता लोग इन्द्र की स्तुति करते हैं।

अथ षष्ठी—

इन्द्रेविश्वानिवीर्याकृतानिकर्त्वानिच ।
यमर्काअध्वरंविदुः ॥ ६ ॥ २४ ॥

इन्द्रे॑ । विश्वा॑नि । वी॒र्या॑ । कृ॒तानि॑ । कर्त्वा॑नि । च॒ ।
यम् । अ॒र्काः । अ॒ध्व॒रम् । वि॒दुः ॥ ६ ॥ २४ ॥

अस्मिन्निन्द्रे विश्वानि सर्वाणि वीर्या वीर्याणि सामर्थ्यानि कृतानि कर्त्वानि कर्तव्यानि च वर्तन्तइतिशेषः। यमिन्द्रं अर्काः स्तोतारः अध्वरमहिंसकं विदुर्जानन्ति तस्मिन्निन्द्रइति॥६॥

६. सारे वीर्य और सारे कर्त्तव्य-कर्म्म इन्द्र में वर्त्तमान हैं। स्तोता लोग इन्द्र को अध्वर (अहिंसक) कहते हैं।

॥ इति षष्ठस्य चतुर्थे चतुर्विंशोवर्गः ॥ २४ ॥

पञ्चमेहनि मरुत्वतीये यत्पाञ्चजन्ययेतितृचः प्रतिपत्। सूत्रितंच—यत्पांचजन्ययाविशेन्द्रइत्सोमपाएकइति मरुत्वतीयस्यप्रतिपदनुचराविति।

यत्पाञ्चजन्ययावि॒शेन्द्रे॒घोषा॒असृ॑क्षत ।
अस्तृ॑णाद्ब॒र्हणा॑वि॒पो३॒र्यो॑मान॑स्य॒सक्षयः॑ ॥ ७ ॥

यत् । पाञ्च॑ऽजन्यया । वि॒शा । इन्द्रे॑ । घोषा॑ः । असृ॑क्षत ।
अस्तृ॑णात् । ब॒र्हणा॑ । वि॒पः । अ॒र्यः । मान॑स्य । सः । क्षयः॑ ॥ ७ ॥

यद्यदा पांचजन्यया निषादपंचमाश्चत्वारोवर्णाः पंचजनास्तत्र भवयाविशा प्रजया इन्द्रे घोषाः स्तुतयोसृक्षत सृज्यन्ते तदानीमयमिन्द्रोऽस्तृणात् हिनस्ति शत्रून् बर्हणा स्वमहत्वे नानन्यसहायेनेत्यर्थः। तादृशः सअर्यः स्वामी इन्द्रोविपो मेधाविनः स्तोतुर्मम मानस्य पूजायाः सत्कारस्य क्षयोनिवासो भवति ॥ ७ ॥

७. जिस समय चारो वर्ण और निषाद इन्द्र के लिए स्तुति करते हैं, उस समय इन्द्र अपनी महिमा से शत्रुओं का वध करते हैं। स्वामी (आर्य) इन्द्र स्तोता की पूजा के निवास-स्थान हैं।

अथाष्टमी—

इ॒यमु॑ते॒अनु॑ष्टुतिश्चकृ॒षेतानि॒पौंस्या॑ । प्रावश्च॒क्रस्य॒वर्त॒निम् ॥ ८ ॥

इ॒यम् । ऊँ इति॑ । ते॒ । अनु॑ऽस्तुतिः । च॒कृ॒षे । तानि॑ । पौंस्या॑ ।
प्र । आ॒वः॒ । च॒क्रस्य॑ । व॒र्त॒निम् ॥ ८ ॥

इयमिदानीं क्रियमाणा अनुष्टुतिः अनुकूलास्तुतिः ते तव स्वभूता। कुतस्तवेति तानि प्रसिद्धानि वृत्रवधादीनि पौंस्या पुंस्त्वानि यतश्चकृषे अतस्तइत्यर्थः। हे इन्द्र चक्रस्य रथा-

धारस्य वर्तनिं मार्गं मावः मारक्षः। अथास्मद्यज्ञगमनाय रक्षःकृता चक्रमार्गबाधा यथानभवति तथारक्षसीत्यर्थः॥ ८॥

८. इन्द्र, तुमने उन सब पुरुषत्व-पूर्ण कार्यों को किया है; इसलिए यह तुम्हारी स्तुति की जाती है। चक्र के मार्ग की रक्षा करो।

अस्यवृष्णोव्योदनउरुक्रमिष्टजीवसे। यवंनपश्वआददे॥ ९॥

अस्य। वृष्णः। विऽओदने। उरु। क्रमिष्ट। जीवसे।
यवम्। न। पश्वः। आ। ददे॥ ९॥

अस्यवृष्णो वर्षितुरिन्द्रस्य व्योदने विविधेन्ने लब्धेसति जीवसे जीवनाय उरुविस्तीर्णं क्रमिष्ट पदनिधानं करोति सर्वोलोकः। अथवा इन्द्रस्य स्वभूतेन्नेलब्धव्येवा सति पदंन्यासं करोति तथाकृत्वा यवंन पश्वः यवं पशवइव सर्वोजनः आददे आदत्ते स्तुतादस्मात्॥ ९॥

९. वर्षक इन्द्र के दिये हुए नानाविध अन्न पा जाने पर सब लोग जीवन के लिए नाना प्रकार के कर्म करते हैं। पशुओं की ही तरह वे यव (जौ) ग्रहण करते हैं।

तद्दधानाअवस्यवोयुष्माभिर्दक्षपितरः। स्याममरुत्वतोवृधे॥ १०॥

तत्। दधानाः। अवस्यवः। युष्माभिः। दक्षऽपितरः।
स्याम। मरुत्वतः। वृधे॥ १०॥

तत्स्तोत्रं दधानाः धारयन्तः अवस्यवो रक्षाकामावयं हे ऋत्विजो युष्माभिः सहिता हविर्वापेज्यम् ताहशादक्षपितरः दक्षोन्नं तस्यपितरः पालकाः स्वामिनः स्याम। किमर्थं मरुत्वतोमरुद्भिःतद्वतइन्द्रस्य वृधे वर्धनाय यागाय॥ १०॥

१०. हम स्तोता और रक्षणाभिलाषी हैं। ऋत्विको, तुम्हारे साथ हम मरुतों से युक्त इन्द्र के वर्द्धन के लिए अन्न के स्वामी होंगे।

अथैकादशी—

बळृत्वियायधाम्नऋक्वभिःशूरनोनुमः। जेषामेन्द्रत्वयायुजा॥ ११॥

बट्। ऋत्वियाय। धाम्ने। ऋक्वऽभिः। शूर। नोनुमः।
जेषाम। इन्द्र। त्वया। युजा॥ ११॥

बट् सत्यं ऋत्वियाय ऋतौभवाय ऋतुशब्दोयागकालोपलक्षकः यागकाले प्रादुर्भूताय धाम्ने कल्याणतेजसे तुभ्यं हे सूरेन्द्र ऋक्वभिर्मंत्रैर्नोनुमः अतिशयेन स्तुमः हे इन्द्र स्तुतेन त्वया युजा सहायभूतेन जेषाम जयेम शत्रून्॥ ११॥

११. इन्द्र, तुम यज्ञ के समय में उत्पन्न और तेजस्वी हो। शूर इन्द्र, मन्त्रों के द्वारा हम सचमुच तुम्हारी स्तुति करेंगे। तुम्हारे साहाय्य से हम जय-लाभ करेंगे।

अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः।
यःशंसतेस्तुवतेधायिपज्रइन्द्रज्येष्ठाअस्माँअवन्तुदेवाः ॥ ॥१२ २५॥

अस्मे इति। रुद्राः। मेहना। पर्वतासः। वृत्रऽहत्ये। भरऽहूतौ। सऽजोषाः। यः। शंसते। स्तुवते। धायि। पज्रः। इन्द्रऽज्येष्ठाः। अस्मान्। अवन्तु। देवाः॥ १२ ॥ २५॥

अस्मे अस्मान् रुद्राः मेहना उदकसेचनयुक्ताः पर्वतासो मेघाश्च वृत्रहत्ये वृत्रहननसाधने भरहूतौ संग्रामाह्वाने सजोषाः अस्मत्समानप्रीतिश्च यइन्द्रः शंसते शस्त्रंपठते स्तुवते स्तोत्रं कुर्वतेच यजमानाय पज्रोबलवान्वेगवान् वा धायि गच्छति सइन्द्रश्च इमेइन्द्रज्येष्ठा देवाअस्मानवन्तु रक्षंतु। अस्मानितिपूरणः। अथवैवंयोज्यं रुद्रा रुद्रपुत्रा मेहना सेचनेनयुक्ताः पर्वता पर्वतसदृशाः पूरणवन्तः प्रीणनवन्तोवा। पर्वपुनःपृणातेः प्रीणातेर्वेतिनिरुक्तम्। वृत्रहत्येभरहूतौ सजोषाः सजोषसः सहायभूता मरुतोदेवा इन्द्रज्येष्ठाः उक्तलक्षणइन्द्रश्चास्मानवन्त्विति ॥ १२॥

१२. जल सेचन करनेवाले और भयंकर मेघ अथवा मरुत् तथा युद्ध के आह्वान पर आनन्द से युक्त जो वृत्रघ्न इन्द्र स्तोता और शस्त्र-पाठक यजमान के निकट वेग से आगमन करते हैं, वे भी हमारी रक्षा करें। देवों में इन्द्र ही ज्येष्ठ हैं।

॥ इति षष्ठस्य चतुर्थे पञ्चविंशोवर्गः ॥ २५॥

उत्त्वामन्दन्त्विति द्वादशर्चं पञ्चमं सूक्तं प्रगाथस्यार्षं प्रागवत्समपरिभाषया गायत्रमैन्द्रं। उत्त्वेत्यनुक्रमणिका। विनियोगोलैंगिकः।

उत्त्वामन्दंतुस्तोमाःकृणुष्वराधोअद्रिवः।
अवब्रह्मद्विषोजहि ॥ १॥

उत्। त्वा। मन्दन्तु। स्तोमाः। कृणुष्व। राधः। अद्रिऽवः। अव। ब्रह्मऽद्विषः। जहि ॥ १॥

हे इन्द्र त्वा त्वां स्तोमाः स्तुतय उत् उत्कृष्टं मन्दन्तु मादयन्तु। कृणुष्व कुरु राधोन्नं हे अद्रिवो वज्रवन्निन्द्रास्मभ्यं। किञ्च ब्रह्मद्विषो ब्राह्मणद्वेष्टॄनव जहि ॥ १॥

१. इन्द्र, तुम्हें स्तुतियाँ भली भाँति प्रमत्त करें। वज्री इन्द्र, धन प्रदान करो। स्तुति-विद्वेषियों का विनाश करो।

---

१. नि० १.२०।

अथ द्वितीया—

पदापणीँरराधसोनिबाधस्वमहाँअसि ।
नहित्वाकश्चनप्रति ॥ २ ॥

पदा । पणीन् । अराधसः । नि । बाधस्व । महान् ।
असि । नहि । त्वा । कः । चन । प्रति ॥ २ ॥

पणीन् लुब्धानराधसो यष्टव्यधनरहितान् केवलधनान् पदा पादेनातिक्रम्य नि नितरां बाधस्व । कुतः यतस्त्वं महान् असि भवसि त्वा त्वां तव कश्चन कश्चिदपि देवः असुरो मनुष्योवा प्रति प्रतिनिधिः सदृशः नह्यस्ति खलु ॥ २ ॥

२. लोभी और यज्ञ-धन-शून्य लोगों को पैर से रगड़ डालो। तुम महान् हो। तुम्हारा कोई प्रति-द्वन्द्वी नहीं है।

अथ तृतीया—

त्वमीशिषेसुतानामिंद्रत्वमसुतानाम् ।
त्वंराजाजनानाम् ॥ ३ ॥

त्वम् । ईशिषे । सुतानाम् । इन्द्र । त्वम् । असुतानाम् ।
त्वम् । राजा । जनानाम् ॥ ३ ॥

हे इन्द्र त्वं सुतानामभिषुतानां सोमानामीशिषे ईश्वरोभवसि तथा त्वमसुतानां वल्ल्याकारे वर्तमानानां चेशिषे त्वं जनानां सर्वेषां राजाभवसि ॥ ३ ॥

३. तुम अभिषुत सोम के ईश्वर हो—अनभिषुत सोम के भी तुम ईश्वर हो। जनता के तुम राजा हो।

अथ चतुर्थी—

एहिप्रेहिक्षयोदिव्या३घोषञ्चर्षणीनाम् ।
ओभेपृणासिरोदसी ॥ ४ ॥

आ । इहि । प्र । इहि । क्षयः । दिवि । आऽघोषन् । चर्षणीनाम् ।
आ । उभे इति । पृणासि । रोदसी इति ॥ ४ ॥

हे इन्द्र एहि आगच्छ। तथा प्रेहि प्रगच्छ। दिवि द्युलोकात् किं क्षयोनिवासं।किंकुर्वन् आघोषं शब्दं कुर्वन्। किमर्थं चर्षणीनां मनुष्याणां अर्थाय। अथवा हविः स्वीकृत्य प्रेहि सुखे-

न गच्छ दिवमाघोषन् यजमानं स्तुवन् उभे रोदसी द्यावापृथिव्यौ आपृणासि आपूरयसि तेजसा वृष्ट्या वा ॥ ४ ॥

४. इन्द्र, आओ। मनुष्यों के लिए यज्ञ-गृह को शब्द से पूर्ण करते हुए, स्वर्ग से आओ। तुम वृष्टि-द्वारा द्यावापृथिवी को परिपूर्ण करते हो।

त्वंचित्पर्वतंगिरिंशतवंतंसहस्रिणम्।
वित्स्तोतृभ्योरुरोजिथ ॥ ५ ॥

त्यम्। चित्। पर्वतम्। गिरिम्। शतऽवन्तम्। सहस्रिणम्।
वि। स्तोतृऽभ्यः। रुरोजिथ ॥ ५ ॥

हे इन्द्र त्वं त्यं चित् तं चिदिति पूरणः पर्वतं पर्ववन्तं गिरिं मेघं उभयोर्मेघनामत्वादेको योगरूढोद्रष्टव्यः शतवन्तं शतोदकवन्तं तथा सहस्रिणं अपरिमितवृष्टिं मेघं स्तोतृभ्योर्थाय विरुरोजिथ विरुज वज्रेण ॥ ५ ॥

५. तुमने स्तोताओं के लिए पर्व (टुकड़े) वाले सौ प्रकार के जल-वाले और असीम (सहस्र) जलवाले मेघ को, स्तोताओं के लिए, तुमने विदीर्ण किया है।

वयमुत्वादिवासुतेवयंनक्तंहवामहे।
अस्माकंकाममापृण ॥ ६ ॥ २६ ॥

वयम्। ऊँ इति। त्वा। दिवा। सुते। वयम्। नक्तम्। हवामहे।
अस्माकम्। कामम्। आ। पृण ॥ ६ ॥ २६ ॥

हे इन्द्र वयं त्वा त्वां दिवा अहनि सुते सोमेभिषुते हवामहे आह्वयामः तथा वयं नक्तं हवामहे। आहूतः आगत्यास्माकं काममापृणापूरय ॥ ६ ॥

६. सोम के अभिषुत होने पर हम दिन-रात तुम्हारा आह्वान करते हैं। हमारी अभिलाषा पूर्ण करो।

॥ इति षष्ठस्य चतुर्थे षड्विंशोवर्गः ॥ २६ ॥

अथ सप्तमी—

क्व१स्यवृषभोयुवातुविग्रीवोअनानतः।
ब्रह्माकस्तंसपर्यति ॥ ७ ॥

क्व। स्यः। वृषभः। युवा। तुविऽग्रीवः। अनानतः।
ब्रह्मा। कः। तम्। सपर्यति ॥ ७ ॥

स्यः सवृषभोवार्षिता युवा नित्यतरुणः तुविग्रीवः विस्तीर्णकन्धरः अनानतः कदाचिदप्यनवनतः इन्द्रः क्व कुत्र वर्तते इति कोजानातीत्यर्थः । को ब्रह्मा स्तोता तमिन्द्रं सपर्यति पूजयति ॥ ७ ॥

७. वे वृष्टिदाता, नित्य तरुण, विशाल कंधावाले और किसी से नीचा न देखनेवाले इन्द्र कहाँ हैं ? कौन स्तोता उनकी स्तुति करता है ?

कस्यंस्वित्सवनंवृषाजुजुष्वाँअवंगच्छति ।
इन्द्रंकउंस्विदाचके ॥ ८ ॥

कस्यं । स्वित् । सवनम् । वृषा । जुजुष्वान् । अवं । गच्छति ।
इन्द्रम् । कः । ऊँ इति । स्वित् । आ । चके ॥ ८ ॥

कस्य स्वित्सवनं स्विदिति विचिकित्सायां वृषा वर्षितेन्द्रो जुजुष्वान् प्रीयमाणोवगच्छति कउ कोवा यजमानइन्द्रं आचके जानाति स्तोतुं स्विदितिपूरणः ॥ ८ ॥

८. वृष्टिदाता इन्द्र, प्रसन्न होकर, आते हैं। कौन यजमान इन्द्र की स्तुति करना जानता है ? अथ नवमी—

कंतेदानाअसक्षतवृत्रंहन्कंसुवीर्या ।
उक्थेकउंस्विदन्तमः ॥ ९ ॥

कम् । ते । दानाः । असक्षत । वृत्रंऽहन् । कम् । सुऽवीर्या ।
उक्थे । कः । ऊँ इति । स्वित् । अन्तमः ॥ ९ ॥

ते त्वां दानाः यजमानैर्दत्ताः असक्षत सेवन्ते । हे वृत्रहन् वृत्रस्य हन्तरिन्द्र कं कीदृशं त्वां उक्थे शस्त्रे सुवीर्या शोभनवीर्याणि स्तोत्राणि असक्षत कउस्वित् अन्तमो कोवान्तिकतमो भवति युद्धे ॥ ९ ॥

९. यजमान का दिया हुआ दान तुम्हारी सेवा करता है। वृत्रघ्न इन्द्र, शस्त्र-मन्त्र पढ़ने के समय सुन्दर वीर्यवाले स्तोत्र तुम्हारी सेवा करते हैं। तुम कैसे हो ? युद्ध में तुम्हारा कौन निकटवर्त्ती होता है ?

द्वितीयेपर्याये होतुः शस्त्रे अयंतेमानुषइति तृचोनुरूपः । सूत्रितञ्च । अयंतेमानुषेजनउद्वेदभीति ।

सैषा तृचे प्रथमा सूक्ते दशमी—

अयंतेमानुषेजनेसोमःपूरुषुसूयते ।
तस्येहिप्रद्रवापिब ॥ १० ॥

अयम् । ते । मानुषे । जने । सोमः । पूरुषु । सूयते ।
तस्य । आ । इहि । प्र । द्रव । पिब ॥ १० ॥

अयं सोमस्ते त्वदर्थं तव स्वभूतो वा पूरुषु मनुष्येषु मध्ये मानुषे जन मयि सूयते । अथवा पूरुनामसु राजसु सूयते तस्य तमित्यर्थः तमेहि आगच्छ आगत्यच प्रद्रव ग्रहसमीपं तथा कृत्वा पिब तं सोमम् ॥ १० ॥

१०. मनुष्यों के बीच में तुम्हारे लिए सोमाभिषव करता हूँ । उसके पास आओ । शीघ्रगामी होओ और उसका पान करो ।

अथ तृचे द्वितीया सूक्ते एकादशी—

अयंतेशर्यणावतिसुषोमायामधिप्रियः ।
आर्जीकीयेमदिन्तमः ११ ॥

अयम् । ते । शर्यणाऽवति । सुऽसोमायाम् । अधि ।
प्रियः । आर्जीकीये । मदिन्ऽतमः ॥ ११ ॥

अयमस्माभिरभिषुतः सोमः ते त्वां मदिन्तमोमादयितृतमोयं अधिश्रितः आश्रितः । कुत्रेति तदुच्यते शर्यणावति कुरुक्षेत्रस्य जघनार्धभवे शरतृणोपेते सरसि । तत्सरः कुत्रवर्ततइति उच्यते—सुषोमायां एतन्नामिकायां नद्यां । साच कुत्र वर्ततइति तदुच्यते—आर्जीकीयेएतन्नामके देशे । एवमुक्तप्रकारेणात्यन्तदूरदेशे वर्तते यः सोमः सएवायमभिषुतं पिबेति उत्तरत्रान्वयः ॥११॥

११. यह प्रिय सोम तट तृणवाले पुष्कर (कुरुक्षेत्रस्थ), सुषोमा (सोहान नदी) और आर्जीकीया (पिपाशा = व्यास नदी) के तीर में तुम्हें अधिक प्रमत्त करता है ।

तमद्यराधसेमहेचारुंमदायघृष्वये ।
एहीमिन्द्रद्रवापिब ॥ १२ ॥ २७ ॥

तम् । अद्य । राधसे । महे । चारुम् । मदाय । घृष्वये ।
आ । इहि । ईम् । इन्द्र । द्रव । पिब ॥ १२ ॥ २७ ॥

तं पूर्वमन्त्रे उपवर्णितं चारुं चणरशीलं सोमं महे महते राधसेस्माकं धनाय तव घृष्वये शत्रूणां धर्षणशीलाय मदाय पिब । हे इन्द्र तदर्थं अद्य द्रव गच्छ शीघ्रं सोमपात्रं प्रति यदर्थमी मिदानीमित्यागच्छ ॥ १२ ॥

१२. हमारे धन और शत्रुविनाशिनी मत्तता के लिए आज तुम उसी मनोहर सोम का पान करो । इन्द्र, शीघ्र सोमपात्र की ओर जाओ ।

॥ इति षष्ठस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

यदिन्द्रप्रागिति द्वादशर्चंषष्ठं सूक्तं प्रगाथस्यार्षं गायत्रमैन्द्रं। यदिन्द्रेत्यनुक्रान्तम्। विनियोगोलैङ्गिकः।

तत्र प्रथमा—

यदिन्द्रप्रागपागुदङ्न्यग्वाहूयसेनृभिः।
आयाहितूयमाशुभिः॥ १॥

यत्। इन्द्र। प्राक्। अपाक्। उदक्। न्यक्। वा।
हूयसे। नृऽभिः। आ। याहि। तूयम्। आशुऽभिः॥ १॥

हे इन्द्र त्वं नृभिः कर्मनेतृभिः अस्मदीयैः अध्वर्य्वादिभिः प्राग्वा अपाग्वा उदग्वान्यग्वा यतः कुतश्चिद्धूयसे अतस्तूयं तूर्णमाशुभिराशुगामिभिरश्वैरायाह्यागच्छ॥ १॥

१. इन्द्र, तुम्हें लोग पूर्व, पश्चिम, उत्तर और निम्न दिशाओं में बुलाते हैं; इसलिए अश्वों की सहायता से शीघ्र आओ।

यद्वाप्रस्रवणेदिवोमादयासेस्वर्णरे।
यद्वासमुद्रेअन्धसः॥ २॥

यत्। वा। प्रऽस्रवणे। दिवः। मादयासे। स्वःऽनरे।
यत्। वा। समुद्रे। अन्धसः॥ २॥

यद्वा अथवा दिवो द्युलोकस्य प्रस्रवणे अमृतनिस्पन्दने स्थाने मादयासे माद्यसि यद्वा स्वर्णरे स्वर्गनयनेवा भूलोके अन्यस्य यागदेशे माद्यसि। यद्वा अन्धसः अन्धोन्नं तेन तत्कारणमुदकं लक्ष्यते तस्य समुद्रे समुन्दनापादनभूतेन्तरिक्षे माद्यसि तत्रतत्र वर्तमानमपि हुवइत्युत्तरत्र सम्बन्धः॥ २॥

२. तुम द्युलोक के अमृत चुलानेवाले स्थान पर प्रमत्त होते हो। तुम भूलोक में प्रमत्त होते हो। तुम अन्न के अपादान अन्तरिक्ष में प्रमत्त होते हो।

अथ तृतीया—

आत्वागीर्भिर्महामुरुंहुवेगामिवभोजसे।
इन्द्रसोमस्यपीतये॥ ३॥

आ। त्वा। गीःऽभिः। महाम्। उरुम्। हुवे।
गाम्ऽइव। भोजसे। इन्द्र। सोमस्य। पीतये॥ ३॥

हे इन्द्र त्वा त्वां गीर्भिः स्तुतिभिः आहुवे आह्वयामि कीदृशं त्वां महां महान्तं उरुं प्रभूतं किमर्थं सोमस्यपीतये पानाय । आह्वाने दृष्टान्तः—भोजसे भोगाय गामिव ॥ ३ ॥

३. इन्द्र, तुम्हें मैं स्तुति के द्वारा बुलाता हूँ। तुम महान् और यथेष्ट हो। सोमपान और भोग के लिए तुम्हें मैं गाय की तरह बुलाता हूँ। अथ चतुर्थी—

आतंइन्द्रमहिमानंहरयोदेवतेमहः ।
रथेवहन्तुबिभ्रतः ॥ ४ ॥

आ । ते । इन्द्र । महिमानम् । हरयः । देव । ते ।
महः । रथे । वहन्तु । बिभ्रतः ॥ ४ ॥

हे इन्द्र ते तव महिमानं माहात्म्यं रथे बिभ्रतो धारयन्तो हरयोश्वा आवहन्तु । तथा हे देव ते महस्तेजोरथे बिभ्रतः अश्वा आवहन्तु । अत्र महिम्नो महसश्च पृथगावहनासंभवात् ताभ्यां विशिष्टं वहंत्वित्यर्थः । अथवा महिमानं बिभ्रतस्ते त्वां रथेवहन्तु महोबिभ्रतश्च त्वां वहन्त्विति योज्यम् ॥ ४ ॥

४. रथ में जोते हुए अश्व तुम्हारी महिमा और तुम्हारे तेज को ले आवें। अथ पञ्चमी—

इन्द्रंगृणीषउस्तुषेमहाँउग्रईशानकृत् ।
एहिनःसुतंपिब ॥ ५ ॥

इन्द्रं । गृणीषे । ॐ इति । स्तुषे । महान् । उग्रः ।
ईशानऽकृत् । आ । इहि । नः । सुतम् । पिब ॥ ५ ॥

हे इन्द्र त्वं गृणीषे उच्यसे इदं देहीदंकुर्विति । तथा स्तुषेउ स्तूयसे च । उइति चार्थे । कीदृशस्त्वं महान् गुणैः प्रवृद्धः उग्रउद्गूर्णबलः ईशानकृत् ऐश्वर्यकर्ता तादृशस्त्वं एत्यागच्छ आगत्यच नः सुतं सोमं पिब ॥ ५ ॥

५. इन्द्र, तुम वाक्य और स्तुति-द्वारा स्तुत होते हो। तुम महान् उग्र और ऐश्वर्यकर्त्ता हो। आकर सोम पियो।

अथ षष्ठी—

सुतावन्तस्त्वावयंप्रयस्वन्तोहवामहे ।
इदंनोबर्हिरासदे ॥ ६ ॥ २८ ॥

सुतऽवन्तः । त्वा । वयम् । प्रयस्वन्तः । हवामहे ।
इदम् । नः । बर्हिः । आऽसदे ॥ ६ ॥ २८ ॥

सुतावन्तोभिषुतसोमवन्तः प्रयस्वन्तश्चरुपुरोडाशाद्यन्नवन्तश्च वयं त्वा त्वां हवामहे आह्वयामः किमर्थं इदं नोस्मदीयं बर्हिर्बर्हिषि यज्ञे बर्हिषिवा आसदे आसादनाय ॥ ६ ॥
६. हम अभिषुत सोम और अन्नवाले होकर तुम्हें, अपने कुश पर बैठने के लिए बुलाते हैं ।

॥ इति षष्ठस्य चतुर्थेष्टाविंशोवर्गः ॥ २८ ॥

अथ सप्तमी—

यच्चिद्धिशश्वतामसीन्द्रसाधारणस्त्वम् ।
तंत्वांवयंहवामहे ॥ ७ ॥

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः ।
त्वम् । तम् । त्वा । वयम् । हवामहे ॥ ७ ॥

हे इन्द्र त्वं यच्चिद्धि यस्मात्खलु शश्वतां बहूनां यजमानानां साधारणोसि । चिदितिपूरणः । हीतिप्रसिद्धौ । तं तादृशं साधारणं त्वा त्वां वयं हवामहे आह्वयामः । इतरेभ्यः पूर्वमिति भावः ॥ ७ ॥ ७. इन्द्र, तुम अनेक यजमानों के लिए साधारण हो; इसलिए हम तुम्हें बुलाते हैं ।

प्रातःसवने इदंतेसोम्यमिति होतुः प्रस्थितयाज्या । सूत्रितश्च—इदंतेसोम्यंमधु मित्रंवयंहवामहइति ।

सैषा सूक्तेष्टमी—

इदंतेसोम्यंमध्वधुक्षन्नद्रिभिर्नरः ।
जुषाणइन्द्रतत्पिब ॥ ८ ॥

इदम् । ते । सोम्यम् । मधु । अधुक्षन् । अद्रिऽभिः । नरः ।
जुषाणः । इन्द्र । तत् । पिब ॥ ८ ॥

हे इन्द्र ते त्वदर्थमिदं सोम्यं सोमसम्बन्धि मधु अधुक्षव अद्रिभिः ग्रावभिरभिषवसाधनैर्नरोस्मदीयाअध्वर्य्वादयः । हे इन्द्र तन्मधु जुषाणः प्रीयमाणः पिब ॥ ८ ॥
८. पत्थर से सोमीय मधु को अध्वर्यु लोग अभिषुत करते हैं । प्रसन्न होकर तुम उसे पियो ।

अथ नवमी–

विश्वाँअर्योविपश्चितोतिख्यस्तूयमागहि।
अस्मेधेहिश्रवोबृहत्॥ ९॥

विश्वान्। अर्यः। विपःऽचितः। अति। ख्यः। तूयम्।
आ। गहि। अस्मे इति। धेहि। श्रवः। बृहत्॥ ९॥

हे इन्द्र अर्यः स्वामी त्वं विश्वान्विपश्चितः स्तोतॄन् अतिख्यः अतिक्रम्य पश्य। तदर्थं तूयं क्षिप्रमागहि आगत्य चास्मेस्मासु बृहच्छ्रवोन्नं यशोवा धेहि॥ ९॥

९. इन्द्र, तुम स्वामी हो। तुम सारे स्तोताओं को, अतिक्रम करके, देखो। शीघ्र आओ। हमें महा अन्न प्रदान करो।

दातामेपृषतीनांराजाहिरण्यवीनाम्।
मादेवामघवारिषत्॥ १०॥

दाता। मे। पृषतीनाम्। राजा। हिरण्यऽवीनाम्।
मा। देवाः। मघऽवा। रिषत्॥ १०॥

हिरण्यवीनां हिरण्यवीतानां पृषतीनां राजा इन्द्रोमे दाता भवतु। हे देवाः मघवा इन्द्रोमारिषत् रिष्टोमाभवतु॥ १०॥

१०. इन्द्र हिरण्यवर्ण गौओं के राजा हैं। वे हमारे राजा हों। देवो, इन्द्र हिंसित न हों। अथैकादशी–

सहस्रेपृषतीनामधिश्चन्द्रंबृहत्पृथु।
शुक्रंहिरण्यमाददे॥ ११॥

सहस्रे। पृषतीनाम्। अधि। चन्द्रम्। बृहत्।
पृथु। शुक्रम्। हिरण्यम्। आ। ददे॥ ११॥

अहं पृषतीनां गवां सहस्रे अधि उपरि धारितं बृहत् महत् पृथु विस्तृतं चन्द्रं आह्लादकं शुक्रं निर्मलं हिरण्यं आददे स्वीकरोमि इन्द्रेणानीतम्॥ ११॥

११. मैं गौओं के ऊपर धारित, विशाल, विस्तृत, आह्लादकर और निर्मल हिरण्य को स्वीकृत करता हूं।

अथ द्वादशी—

नपा॑तोदु॒र्गह॑स्यमेस॒हस्रे॑णसु॒राध॑सः ।
श्रवो॑दे॒वेष्व॑क्रत ॥ १२ ॥ २९ ॥

नपा॑तः । दुः॒ऽगह॑स्य । मे॒ । स॒हस्रे॑ण । सु॒ऽराध॑सः ।
श्रवः॑ । दे॒वेषु॑ । अ॒क्र॒त ॥ १२ ॥ २९ ॥

नपातः अरक्षितस्य दुर्गहस्य दुःखं गाहमानस्य मे मम सम्बन्धिनोजनाः सहस्रेण अपरिमितेनेन्द्रदत्तेन गवादिधनेन सुराधसः सुधनाः सन्तोदेवेषु प्रीतेषु इन्द्रः प्रीतइत्यर्थः श्रवोन्नं यशोवा अक्रत अलभन्तेत्यर्थः ॥ १२ ॥

१२. मैं अरक्षित और दुखी हूँ। मेरे मनुष्य असीम धन से धनी हों। देवों के प्रसन्न होने पर यश की प्राप्ति होती है।

॥ इति षष्ठस्य चतुर्थे एकोनत्रिंशोवर्गः ॥ २९ ॥

तरोभिर्वइति पञ्चदशर्चं सप्तमं सूक्तं प्रगाथपुत्रस्य कलेरार्षं प्रथमातृतीयाद्ययुजोबृहत्यः द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः पञ्चदशीत्वनुष्टुप् । तथाचानुक्रमणिका—तरोभिःपञ्चोना कलिः प्रागाथः प्रागाथमन्त्यानुष्टुबिति । महाव्रतेनिष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम्। तथाच पञ्चमारण्यकेसूत्रितम्—तरोभिर्वोविदद्वसुमित्युत्तमामुद्धरेदिति । अग्निष्टोमेच्छावाकशस्त्रे प्रगाथः स्तोत्रियः। तथाचसूत्रितम्—तरोभिर्वोविदद्वसुं तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपाविति। चातुर्विंशिकेहन्ययमेवप्रगाथःस्तोत्रियः। सूत्रितंच—तरोभिर्वोविदद्वसुं तरणिरित्सिषासतीति।

तत्र प्रथमा—

तरो॑भिर्वोवि॒दद्व॑सु॒मिन्द्रं॑स॒बाध॑ऊ॒तये॑ ।
बृ॒हद्गाय॑न्तःसु॒तसो॑मेअध्व॒रेहु॒वेभरं॒नका॒रिण॑म् ॥ १ ॥

तरः॑ऽभिः । वः॒ । वि॒दत्ऽव॑सुम् । इन्द्र॑म् । स॒ऽबाधः॑ । ऊ॒तये॑ । बृ॒हत् । गाय॑न्तः । सु॒तऽसो॑मे । अ॒ध्व॒रे । हु॒वे । भर॑म् । न । का॒रिण॑म् ॥ १ ॥

हे ऋत्विजो वोयूयं तरोभिर्वेगैरश्वैरुपेतं वेगैरेववा विदद्वसुं वेदयद्वसुं धनावेदकमिन्द्रं सबाधो बाधासहिता ऊतये रक्षणाय बृहत्सामैतत्संज्ञं गायन्तः सन्तः परिचरतेति शेषः । कुत्रेति तदुच्यते—सुतसोमे सुतसोमकेध्वरे यज्ञे सोमयागे अहंच तमिन्द्रं हुवे आह्वयामि । कमि-

व भरंन भर्तारं कुटुंबपोषकं कारिणं हितकरणशीलं यथा स्वहितकरणायाह्वयन्ति पुत्रादयस्तद्व-त्तथाभूतमिन्द्रं हुवइति ॥ १ ॥

१. ऋत्विको, वेगशाली अश्वों की सहायता से जो धन-दान करते हैं, उन्हीं इन्द्र के लिए साम-गान करके तुम लोग बाधा-युक्त होकर उनकी परिचर्या करो। जैसे लोग हितैषी और कुटुम्ब-पोषक व्यक्ति को बुलाते हैं, मैं भी अभिषुत सोमवाले यज्ञ में उन इन्द्र को बुलाता हूँ।

नयंदुध्रावरंन्तेनस्थिरामुरोमदेंसुशिप्रमन्धंसः ।
यआदृत्यांशशमानायंसुन्वतेदातांजरित्रउक्थ्यंम् ॥ २ ॥

न । यम् । दुध्राः । वरंन्ते । न । स्थिराः । मुरंः । मदें ।
सुऽशिप्रम् । अन्धंसः । यः । आऽदृत्यं । शशमानायं ।
सुन्वते । दातां । जरित्रे । उक्थ्यंम् ॥ २ ॥

यं सुशिप्रमिन्द्रं दुध्राः दुर्धरा असुरादयो नवरन्ते नवारयन्ति संग्रामे तथा स्थिराः देवा-नवरन्ते किंच मुरो मरणस्वभावा मनुष्याः नवरन्ते अंधसः अन्नस्य मदे मदाय सोमपानज-निताय आदृत्य यः शशमानाय शंसमानाय सुन्वते अभिषवं कुर्वते जरित्रे स्तोत्रेच दाता भ-वति किं उक्थ्यं स्तुत्यं धनं सरेजयतीत्युत्तरत्र संबन्धः ॥ २ ॥

२. दुर्द्धर्ष शत्रु लोग सुन्दर जबड़ेवाले इन्द्र को बाधा नहीं दे सकते। स्थिर देवगण भी इन्द्र का निवारण नहीं कर सकते। मनुष्यगण भी निवारण नहीं कर सकते। इन्द्र सोमोत्पन्न आनन्द की प्राप्ति के लिए प्रशंसक और सोमाभिषवकर्त्ता को दान देते हैं।

यःशक्रोमृक्षोअश्व्योयोवाकीजोहिरण्ययः ।
सऊर्वस्यंरेजयत्यपावृतिमिन्द्रोगव्यंस्यवृत्रहा ॥ ३ ॥

यः । शक्रः । मृक्षः । अश्व्यः । यः । वा । कीजः । हिरण्ययः ।
सः । ऊर्वस्यं । रेजयति । अपऽवृतिम् । इन्द्रंः । गव्यंस्य । वृत्रऽहा ॥ ३ ॥

यः शक्रइन्द्रः स्तोतॄणां मृक्षः शोधकः परिवरणीयोवा यश्च अश्व्यः अश्वकुशलः अश्व्यः । अथवाश्व्यइति स्वार्थिकोयत् मृक्षोश्वः प्रक्षालितोश्वइव वर्तते । योवा कीजः कीजइत्यद्भुतमाह किमस्य कथं जातं इतिच यश्च हिरण्ययः हिरणमयशरीरः सएवमाश्चर्यभूतइन्द्रोवृत्रहा गव्य-स्य गोसमूहस्य कीदृशस्य ऊर्वस्य बहुलस्य अपावृतिं अपवरणीयं रेजयति कम्पयतीत्यर्थः ॥ ३ ॥

३. जो इन्द्र (शक्र) परिचर्या के योग्य, अश्वविद्या-कुशल, अद्भुत, हिरण्मय, आश्चर्यभूत और वृत्रघ्न हैं, इन्द्र अनेक गोसमूहों को अपावृत करके कँपाते हैं—

निखातंचिद्यःपुरुसंभृतंवसूदिद्वपतिदाशुषे।
वज्रीसुशिप्रोहर्यश्वइत्करदिन्द्रःक्रत्वायथावशत् ॥ ४ ॥

निऽखातम् । चित् । यः । पुरुऽसम्भृतम् । वसु । उत् ।
इत् । वपति । दाशुषे । वज्री । सुऽशिप्रः । हरिऽअश्वः ।
इत् । करत् । इन्द्रः । क्रत्वा । यथा । वशत् ॥ ४ ॥

निखातंचिव भूमौखात्वा स्थापितमतिसंभृतं संगृहीतं यागज्ञानादिकं कृत्वा ईदृशं पुरु बहु वसु धनं उदिद्वपति उद्वपत्येव दाशुषे यजमानाय एवं। योदेवःकरत् करोति सवज्री सुशिप्रः सुहनुः हर्यश्वइव हरितवर्णाश्वयुक्त इन्द्रएव करोति केनोपाधिना क्रत्वा कर्मणा यागेनोपाधिना यथावशत् येनप्रकारेण कामयते तथासएव करोति ॥ ४ ॥

४. जो भूमि पर स्थापित और संगृहीत धनों को यजमान के लिए ऊपर उठाते हैं, वही वज्रधर, उत्तम हनु (जबड़े) वाले और हरित वर्ण अश्ववाले इन्द्र जो इच्छा करते हैं, उसे ही कर्म-द्वारा सिद्ध कर डालते हैं। यद्वावन्थपुरुष्टुतपुराचिच्छूरनृणाम्।
वयंतत्तइन्द्रसंभरामसियज्ञमुक्थंतुरंवचः ॥ ५ ॥ ३० ॥

यत् । ववन्थ । पुरुऽस्तुत । पुरा । चित् । शूर । नृणाम् ।
वयम् । तत् । ते । इन्द्र । सम् । भरामसि । यज्ञम् ।
उक्थम् । तुरम् । वचः ॥ ५ ॥ ३० ॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र शूर विक्रान्त नृणां नेतॄणां स्तोतॄणां सकाशात् पुराचिदित्युपमार्थे। तथेदानीमपि यद्ववन्थ अचीकमथ तदेव वयं तुरं तूर्णं ते तुभ्यं हे इन्द्र संभरामसि संभरामः। किन्तदित्युच्यते—यज्ञं यागयोग्यं हविः उक्थं शस्त्रं वचः वाच्यं तव प्रियतमं हविः स्तोत्रंच संभरामेत्यर्थः ॥ ५ ॥

५. बहुतों के द्वारा स्तुत और वीर इन्द्र, पहले के समान स्तोताओं के समीप जो तुमने कामना की थी, उसे हम तुम्हें तुरत प्रदान करते हैं। वह चाहे यज्ञ रहा हो, उक्थ रहा हो अथवा वाक्य रहा हो, तुम्हें हम दे रहे हैं। ॥ इति षष्ठस्य चतुर्थे त्रिंशोवर्गः ॥ ३० ॥

अथ षष्ठी—

सचासोमेषुपुरुहूतवज्रिवोमदायद्युक्षसोमपाः।
त्वमिद्धिब्रह्मकृतेकाम्यंवसुदेष्ठःसुन्वतेभुवः ॥ ६ ॥

सचा॑ । सोमे॑षु । पुरु॒ऽहू॒त॒ । व॒ज्रि॒ऽवः॒ । मदा॑य । द्यु॒क्ष॒ । सो॒म॒ऽपाः॒ ।
त्वम् । इत् । हि । ब्र॒ह्म॒ऽकृते॑ । काम्य॑म् । वसु॑ ।
देष्ठः॑ । सु॒न्व॒ते । भुवः॑ ॥ ६॥

हे पुरुहूत बहुभिराहूत हे वज्रिवः वज्रवन् द्युक्ष द्युमन् सोमपाः सोमस्यपातस्त्वं सोमेष्वभिषुतेषु मदाय सचा सह भवेतिशेषः त्वमित्त्वमेव ब्रह्मकृते स्तोत्रकर्त्रे सुन्वतेच काम्यं कमनीयं वसु धनं देष्ठोदातृतमो भुवोभवसि । हिपूरणः ॥ ६ ॥

६. बहु-स्तुत, वज्रधर, स्वर्ग-सम्पन्न और सोमपाता इन्द्र, सोमाभिषव होने पर मद-युक्त होओ। तुम्हीं सोमाभिषव-कर्त्ता के लिए सबसे अधिक कमनीय धन के दाता बनो।

चातुर्विंशिकेहनि माध्यन्दिनसवनेच्छावाकशस्त्रे वयमेनमिति वैकल्पिकोनुरूपः तथाचसूत्रितम्—वयमेनमिदात्योयोराजाचर्षणीनामिति ।

सैषा प्रगाथे प्रथमा सूक्ते सप्तमी—

व॒यमे॑नमि॒दा ह्योपी॑पेमे॒ह व॒ज्रिण॑म् ।
तस्मा॑उअ॒द्य स॑म॒ना सु॒तं भ॒रा नू॒नं भू॑षत श्रु॒ते ॥ ७ ॥

व॒यम् । ए॒न॒म् । इ॒दा । ह्यः । अपी॑पेम । इ॒ह । व॒ज्रिण॑म् ।
तस्मै॑ । ऊँ॒ इति॑ । अ॒द्य । स॒म॒ना । सु॒तम् । भ॒र॒ ।
आ । नू॒नम् । भू॒ष॒त॒ । श्रु॒ते ॥ ७ ॥

वयं यजमाना एनमिन्द्रं वज्रिणं इदा इदानीं ह्यश्च इह अत्र अपीपेम आप्याययाम सोमेन । तस्माउ तस्माएवाद्यात्र समना समनाय संग्रामार्थं सुतमभिषुतं सोमं भर हरत हे अध्वर्य्वादयः । नूनमिदानीं श्रुते स्तोत्रे श्रुतेसति आभूषत आभवत्वागच्छतु ॥ ७ ॥

७. हम अभी और कल इन्द्र को सोम से प्रसन्न करेंगे। उन्हीं के लिए इस युद्ध में अभिषुत सोम को ले आओ। स्तोत्र सुनने पर वे आवें।

अथ प्रगाथे द्वितीया सूक्तेष्टमी—

वृक॑श्चिदस्य वार॒णउ॑रा॒मथि॒रा व॒युने॑षु भूषति ।
सेमं नः॒ स्तोमं॑ जुजुषा॒णआग॒हीन्द्र॒ प्र चि॒त्रया॑ धि॒या ॥ ८ ॥

वृकः॑ । चि॒त् । अ॒स्य॒ । वा॒र॒णः । उ॒रा॒ऽमथिः॑ । आ । व॒युने॑षु ।
भू॒ष॒ति॒ । सः । इ॒मम् । नः॒ । स्तोम॑म् । जु॒जु॒षा॒णः । आ । ग॒हि॒ ।
इन्द्र॑ । प्र । चि॒त्रया॑ । धि॒या ॥ ८ ॥

वृकश्चिद् स्तेनोपि वारणो वारयिता सर्वस्य सन्नपि उरामथिः शत्रूणां मार्गे गच्छतां मथिता सन्नपि अस्येन्द्रस्य वयुनेषु मार्गेषु प्रज्ञानेषु वा आभूषति आनुकुल्यमेव भजते अतीव हिंस्रोपीन्द्रस्यानुकूलोभवतीत्यर्थः। यद्वा अस्येति कर्मणि षष्ठी अमुमिन्द्रंउक्तरूपः वृकोपि वयुनेषु स्तोत्रेषु आभूषति सत्वमिमं नः स्तोमं जुजुषाणः प्रीयमाणः आगहि आगच्छ। हे इन्द्र चित्रया धिया कर्मणा स्तुतिलक्षणेन निमित्तेन प्र प्रकर्षेणागहि शीघ्रमागच्छ॥ ८॥

८. यद्यपि चोर सबका निवारक और पथिकों का विनाशक है, तो भी इन्द्र के कार्य में व्याघात नहीं कर सकता। इन्द्र, तुम प्रसन्न होकर आओ। इन्द्र विचित्र कर्म के बल से विशेष रूप से आओ।

चातुर्विंशिकेहनि माध्यन्दिनेसवनेच्छावाकशस्त्रे एव कदून्वितिकद्वत्प्रगाथः कदून्वस्याकृतमिति कद्वन्तः प्रगाथाइतिहि सूत्रितं।

सैषा प्रगाथे प्रथमा सूक्ते नवमी—

कदून्व१स्याकृतमिन्द्रस्यास्तिपौंस्यम्।
केनोनुकंश्रोमतेननशुश्रुवेजनुषःपरिवृत्रहा॥ ९॥

कत्। ऊँ इति। नु। अस्य। अकृतम्। इन्द्रस्य। अस्ति।
पौंस्यम्। केनो इति। नु। कम्। श्रोमतेन। न। शुश्रुवे।
जनुषः। परि। वृत्रऽहा॥ ९॥

अस्येन्द्रस्य कदूनु किन्तु खलु पौंस्यं पौरुषं अकृतमनाचारितमस्ति सर्वमपि वृत्रवधादिकमनेन कृतमेव इतःपरं नकिञ्च पौंस्यं कृत्यमस्तीत्यर्थः लोके स्वल्पमपि यःपुंस्त्वं कुर्याद् सतेन स्तूयते अयंतु नस्तुत एतदुच्यते केनोनुकं केनखलु श्रोमतेन श्रवणीयेन पुंस्त्वेन नशुश्रुवे नश्रूयते किं कतिपयैरेवाहोभिः कृतेन नेत्याह—अयं वृत्रहा वृत्रस्यातिप्रबलस्यहन्ता अयं जनुषः परि जन्मप्रभृति क्रियमाणैः सामर्थ्यैः श्रूयते वृत्रहत्यं तत्पुंस्त्वप्रदर्शनाद्योतनाय यथा वृत्रहननं सर्वैः श्रूयते तद्वदन्यान्यपीति भावः॥ ९॥

९. कौन-सा ऐसा पुरुषत्व है, जिसे इन्द्र ने नहीं किया है? ऐसा कौन-सा इन्द्र का पौरुष है, जिसे नहीं सुना गया है? इन्द्र का वृत्रवध तो उनके जन्म आदि से ही सुना जा रहा है।

अथ प्रगाथे द्वितीया सूक्ते दशमी—

कदूमहीरधृष्टाअस्यतविषीःकदुवृत्रघ्नोअस्तृतम्।
इन्द्रोविश्वान्बेकनाटाँअहर्दृशउतक्रत्वापणीँरभि॥ १०॥ ३१॥

कत् । ऊँ इति । महीः । अधृष्टाः । अस्य । तविषीः । कत् । ऊँ इति ।
वृत्रऽघ्नः । अस्तृतम् । इन्द्रः । विश्वान् । बेकनाटान् । अहःऽदृशः ।
उत । क्रत्वा । पणीन् । अभि ॥ १० ॥ ३१ ॥

कदु कदाखल्वस्येन्द्रस्य तविषीर्बलानि महीः महान्ति अधृष्टाः अधृष्टान्यधर्षकान्यासन् कदु कदानु खलु वृत्रघ्नो वृत्रहन्तुरिन्द्रस्य हन्तव्यमस्तृतं अहिंसितं अभवत् नकदाचिदित्यर्थः । अथवास्य महान्ति बलानि सेनालक्षणानि कदाप्यधृष्टानि अन्यबलैरहिंसितानि तथा वृत्रघ्नः शारीरं बलं अस्तृतमन्यैरहिंस्यं ईदृशेन द्विविधेन बलेनेन्द्रोविश्वान् सर्वान् बेकनाटान् अनेन कुसीदिनोवृद्धिजीविनो वार्धुषिकाउच्यन्ते कथंतद्व्युत्पत्तिः वेइति अपभ्रंशोद्विशब्दार्थे एकं कार्षापणमृणिकायप्रयच्छन् द्वौमह्यंदातव्यौ नयेनदर्शयति ततोद्विशब्देनैकशब्देनच नाटयन्तीति बेकनाटाः तानहर्दृशः अहःशब्देन तदुत्पादक आदित्योभिधेयोभवति तंपश्यन्तीत्यहर्दृशः । ननु सर्वे सूर्यं पश्यन्ति कोत्रातिशयइति उच्यते इहैवजन्मनि सूर्यं पश्यन्ति नजन्मान्तरे लुब्धका अयष्टारोन्धे तमसि मज्जन्ति । अथवा लौकिकान्येवाहानि पश्यन्ति पारलौकिकान्यदृष्टानि दृष्टप्रधानाहिनास्तिकाः अतःईदृशान् पणीन् पणिसदृशान् शूद्रकल्पान् उतशब्दएवार्थे क्रत्वोत कर्मणैव ताडनादिव्यापारेणैवाभिभवतीतिशेषः । यद्वा पणीनुत पणीनेवाभिभवति न यष्टारं । पणीनां निन्दास्मर्यते—गोरक्षकानापणिकांस्तथाचकारुशीलकान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान्शूद्रवदाचरेत् इति ॥ १० ॥

१०. इन्द्र का महाबल कब अधर्षक हुआ था । इन्द्र का वध्य कब अवध्य रहा? इन्द्र सारे सूदखोरों, दिन गिननेवालों (पारलौकिक दिनों से शून्यों) और वणिकों को ताड़न आदि के द्वारा दबाते हैं।

॥ इति षष्ठस्य चतुर्थे एकत्रिंशोवर्गः ॥ ३१ ॥

अथैकादशी--

वयंघातेअपूर्व्येन्द्रब्रह्माणिवृत्रहन् ।
पुरूतमासःपुरुहूतवज्रिवोभृतिंनप्रभरामसि ॥ ११ ॥

वयम् । घ । ते । अपूर्व्य । इन्द्र । ब्रह्माणि । वृत्रऽहन् ।
पुरुऽतमासः । पुरुऽहूत । वज्रिऽवः । भृतिम् ।
न । प्र । भरामसि ॥ ११ ॥

हे इन्द्र वयंघ खलु ते तव अपूर्व्या नूतनानि ब्रह्माणि परिवृढानि स्तोत्राणि प्रभरामसि संभरामः पुरुतमासो बहुतमा वयं ऋत्विग्यजमानरूपेण वृत्रहन् वृत्रस्यहन्तः पुरुहूत बहुभिराहूत हे वज्रिवः वज्रयुक्तेन्द्र किमिव भृतिंन भृतिमिव तां यथा नियमेन प्रयच्छन्ति तद्वत् नियमेन प्रदानतात्पर्याद्भृतिदृष्टान्तत्वमविरुद्धम् ॥ ११ ॥

११. वृत्रघ्न, वज्रधर और बहु-स्तुत इन्द्र भृति (वेतन) के समान तुम्हारे ही लिए हम लोग अभिनव स्तोत्र प्रदान करते हैं।

पूर्वीश्चिद्धित्वेतुविकूर्मिन्नाशसोहवंन्तइन्द्रोतयः ।
तिरश्चिदर्यःसवनावसोगहिशविष्ठश्रुधिमेहवंम् ॥ १२ ॥

पूर्वीः । चित् । हि । त्वे इति । तुविऽकूर्मिन् । आऽशसः । हवन्ते । इन्द्र । ऊतयः । तिरः । चित् । अर्यः । सवना । आ । वसो इति । गहि । शविष्ठ । श्रुधि । मे । हवम् ॥ १२ ॥

हे तुविकूर्मिन् बहुकर्मन्निन्द्र त्वे त्वयि पूर्वीः चिद्धीतिपूरणौ बहूनि आशसः आशंसनानि स्थितानि तथा ऊतयो रक्षाश्च त्वयि अवस्थिता लब्धुं हवन्ते आह्वयन्ति स्तोतारोन्ये अतोर्यैरिः सवना सवनानि तिरश्चिव तिरस्कृत्य अरीन्वा तिरस्कृत्यास्मत्सवनान्यभिलक्ष्य हे वसो वासकेन्द्र आगह्यागच्छ अतो हे शविष्ठातिशयेन बलवन् मे हवं श्रुधि श्रृणु ॥ १२ ॥

१२. बहुकर्मा इन्द्र, अनेक आशायें तुममें ही निहित हैं, रक्षायें भी तुममें ही हैं। स्तोता लोग तुम्हें बुलाते हैं। फलतः इन्द्र, शत्रु के सारे सवनों को लांघकर हमारे सवन में आओ। महाबली इन्द्र, हमारे आह्वान को सुनो।

वयंघातेत्वेइद्विन्द्रविप्राअपिष्मसि ।
नहित्वदन्यःपुरुहूतकश्चनमघवन्नस्तिमर्डिता ॥ १३ ॥

वयम् । घ । ते । त्वे इति । इत् । ऊँ इति । इन्द्र । विप्राः । अपि । स्मसि । नहि । त्वत् । अन्यः । पुरुऽहूत । कः । चन । मघऽवन् । अस्ति । मर्डिता ॥ १३ ॥

हे इन्द्र वयंघ वयंखलु तेतव स्वभूता अतस्त्वेइत् त्वय्येव विप्रा मेधाविनः स्तोतारोपि स्मसि अपिः संभावनायां त्वदधीनाः स्मेत्यर्थः। अन्यान्विहायेन्द्रएव वर्तते तस्मिन्कोतिशयइत्याह—हे पुरुहूत त्वदन्यः कश्चन हे मघवन्मर्डिता सुखयिता नह्यस्ति ॥ १३ ॥

१३. इन्द्र, हम तुम्हारे ही हैं, हम तुम्हारे स्तोता हुए हैं। बहु-स्तुत इन्द्र, तुम्हारे अतिरिक्त और कोई सुखप्रद नहीं है।

अथ चतुर्दशी—

त्वंनौअस्याअमंतेरुतक्षुधोऽभिशंस्तेरवंस्पृधि ।
त्वंनंऊतीतवंचित्रयांधियाशिक्षांशचिष्ठगातुवित् ॥ १४ ॥

त्वम् । नः । अस्याः । अमंतेः । उत । क्षुधः । अभिऽशंस्तेः । अवं ।
स्पृधि । त्वम् । नः । ऊती । तवं । चित्रयां । धिया ।
शिक्षं । शचिष्ठ । गातुऽवित् ॥ १४ ॥

हे इन्द्र त्वं नोस्मानस्या अमतेर्दारिद्र्यात्मिकायाः उतापिच क्षुधोभिशस्तेर्निंदायाश्च सकाशादवस्पृधि अवमोचय । किञ्च त्वं नोस्मभ्यं तवोती ऊत्या चित्रया धिया विचित्रेण कर्मणा शिक्ष देह्यभिमतं । हे शचिष्ठ बलवन् गातुविन्मार्गज्ञ उपायज्ञस्त्वम् ॥ १४ ॥

१४. इन्द्र, तुम हमें इस दारिद्र्य, इस क्षुधा और इस निन्दा के हाथ से मुक्त करो। हमारे लिए तुम रक्षण और विचित्र कर्म के द्वारा अभिलषित पदार्थ प्रदान करो ।

सोमइद्वंःसुतोअंस्तुकलंयोमाबिंभीतन ।
अपेदेषध्वस्मायंतिस्वयंघैषोअपांयति ॥ १५ ॥ ३२ ॥

सोमंः । इत् । वः । सुतः । अस्तु । कलंयः । मा । बिभीतन ।
अपं । इत् । एषः । ध्वस्मा । अयति । स्वयम् ।
घ । एषः । अपं । अयति ॥ १५ ॥ ३२ ॥

सोमः सुतोभिषुतः वो युष्माकं सम्बन्धी अस्त्विव् भवत्वेवेन्द्राय हे कलयः कलिमहर्षेर्ज्ञातयः पुत्राश्चात्र संबोध्यन्ते यूयं माबिभीतन भीता माभवत । भीत्यभावे कारणमाह—एषध्वस्मा ध्वंसको राक्षसादिरपेदयति अपगच्छत्येवेन्द्रसामर्थ्यात्स्वयंघ स्वयमेवैषः अपअयति इदितिपूरणः पुनरुक्तिर्दार्ढ्यार्था ॥ १५ ॥

१५. तुम्हारे ही लिए सोम अभिषुत हो। कलि ऋषि के पुत्रो, मत डरो । ये राक्षस आदि दूर जा रहे हैं। ये स्वयं दूर भाग रहे हैं ।

॥ इति षष्ठस्य चतुर्थे द्वात्रिंशोवर्गः ॥ ३२ ॥

त्यान्न्वित्येकविंशर्चमष्टमं सूक्तम् । अत्रानुक्रमणिका—त्यान्नुसैका मत्स्यः सांमदो मैत्रावरुणिर्मान्योवा बहवोवा मत्स्याजालनद्धा आदित्यानस्तुवन् समदाख्यस्य महामीनस्यपुत्रो मत्स्यः यद्वा मित्रावरुणयोः पुत्रोमान्यः अथवा बहवोवा मत्स्याजालनद्धाः सन्तो बन्धनमोक्षायादि-

त्यमस्तुवन् अतस्तएव ऋषयः। परंगायत्रं प्राग्वतसप्रेरिति परिभाषया गायत्रीछन्दः आदित्या देवता सूक्तविनियोगोलैङ्गिकः।

तत्र प्रथमा—

त्यान्नुक्षत्रियाँअवंआदित्यान्याचिषामहे। सुमृळीकाँअभिष्टये॥१॥

त्यान्। नु। क्षत्रियान्। अवः। आदित्यान्।
याचिषामहे। सुऽमृळीकान्। अभिष्टये॥ १॥

त्यान् तानादित्यान् क्षत्रियान् जात्या क्षत्रियान् अवोरक्षणं याचिषामहे याचामहे। कीदृशान्सुमृळीकान् सुष्ठु सुखयितॄन् किमर्थं अभिष्टये अभिगमनाय अभिमतायवा। मत्स्यपक्षे जालनिर्गमनं प्रार्थितम्। इतरपक्षेभिमतमिति विवेकः॥ १॥

१. अभिमत फल की प्राप्ति अथवा जाल से निकलने के लिए सुखदाता और जाति के क्षत्रिय आदित्यों से हम रक्षण की याचना करते हैं।

अथ द्वितीया—

मित्रोनोअत्यंहतिंवरुणःपर्षदर्यमा। आदित्यासोयथाविदुः॥२॥

मित्रः। नः। अति। अंहतिम्। वरुणः। पर्षत्।
अर्यमा। आदित्यासः। यथा। विदुः॥ २॥

मित्रवरुणार्यमादित्यानोस्मानंहतिं अतिपर्षत् अतिनयन्तु ते यथा विदुः येनप्रकारेण दुःसहं जानन्ति तथातिपर्षदिति। इतरपक्षेंहतिं पापमतिपर्षदिति॥ २॥

२. मित्र, वरुण, अर्यमा और आदित्यगण दुःसह कार्य को जानते हैं; इसलिए वे हमें पाप से (रोग से) पार कर दें।

तेषांहिचित्रमुक्थ्यं१वरूथमस्तिदाशुषे। आदित्यानामरंकृते॥३॥

तेषाम्। हि। चित्रम्। उक्थ्यम्। वरूथम्। अस्ति।
दाशुषे। आदित्यानाम्। अरम्ऽकृते॥ ३॥

तेषामादित्यानां हिखलु चित्रं चायनीयमुक्थ्यं स्तुत्यं वरूथं धनमस्ति दाशुषे हविर्दात्रे अरंकृते अलंकर्त्रे पर्याप्तकारिणे यजमानाय दातव्यं धनमस्तीति॥ ३॥

३. आदित्यों के पास विचित्र और स्तुति-योग्य धन है। वह धन हव्यदाता यजमान के लिए है।

अथ चतुर्थी–

महिवोमहतामवोवरुणमित्रार्यमन् । अवांस्यावृणीमहे ॥ ४ ॥

महि । वः । महताम् । अवः । वरुण । मित्र । अर्यमन् ।
अवांसि । आ । वृणीमहे ॥ ४ ॥

हे वरुणादयो महतां वः अवोरक्षणं महि महत् हविर्दात्रे करणीयमस्ति अतोवांसि रक्षणान्यावृणीमहे ॥ ४ ॥

४. वरुण आदि देवो, तुम महान् हो। हव्यदाता के प्रति तुम्हारी रक्षा महती है। फलतः हम तुम्हारी रक्षा की प्रार्थना करते हैं।

जीवान्नोअभिधेतनादित्यासःपुराहथात् । कद्धस्थहवनश्रुतः॥५॥३३॥

जीवान् । नः । अभि । धेतन । आदित्यासः । पुरा ।
हथात् । कत् । ह । स्थ । हवनऽश्रुतः ॥ ५ ॥ ३३ ॥

हे आदित्यासः आदित्याः नोस्मान् जीवान् इदानीं जीवतः सतो अभिधेतन अभिधावत अभिधावनं कुरुत पुरा हथात् हननात् मृतेः पूर्वं। कद्ध क्वनु स्थ भवथ। हे हवनश्रुतः आह्वानश्रोतारः आह्वानं श्रुत्वा शीघ्रमागच्छतेति ॥ ५ ॥

५. आदित्यो, हम (मत्स्य) अभी (जाल-बद्ध होने पर भी) जीवित हैं। इस समय हमारे सामने आओ। आह्वान सुननेवालो, मृत्यु के पहले आना। ॥ इति षष्ठस्य चतुर्थे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

यद्वःश्रान्तायसुन्वतेवरूथमस्तियच्छर्दिः । तेनानोअधिवोचत॥६॥

यत् । वः । श्रान्ताय । सुन्वते । वरूथम् । अस्ति । यत् ।
छर्दिः । तेन । नः । अधि । वोचत ॥ ६ ॥

श्रान्ताय कर्मणः सुन्वतेभिषुण्वतेयजमानाय दातव्यं यद्वरूथं वरणीयं धनं वोयुष्माकं अस्ति यच्च छर्दिः सुखवासयोग्यं गृहमस्ति तेन द्वयेनास्मान्प्रीणयित्वा नोस्मानधिवोचत अधिवचनं कुरुत ॥ ६ ॥

६. श्रान्त अभिषव-कर्त्ता यजमान के लिए तुम्हारे पास जो वरणीय धन है, जो गृह है, उनसे हम लोगों को प्रसन्न करके हमसे अच्छी बातें कहो।

अथ सप्तमी—

अस्तिदेवाअंहोरुर्वस्तिरत्नमनागसः। आदित्याअद्भुतैनसः ॥७॥

अस्ति। देवाः। अंहोः। उरु। अस्ति। रत्नम्। अनागसः।
आदित्याः। अद्भुतऽएनसः ॥ ७ ॥

हे देवाः अंहोः हन्तुः पापशीलस्य उर्वस्ति महत्पापमस्ति अनागसः अपापस्य रत्नं रमणीयं सुकृतं श्रेयोस्ति ततो हे आदित्या अद्भुतैनसः अभूतपापाः अतोस्मदभिमतं कुरुतेति भावः ॥ ७ ॥

७. देवो, पापी के पास महापाप है और पाप-शून्य व्यक्ति के पास रमणीय कल्याण है। पाप-शून्य आदित्यो, हमारा अभिमत सिद्ध करो।

मानःसेतुःसिषेदयंमहेवृणक्तुनस्परि। इन्द्रइद्धिश्रुतोवशी ॥ ८ ॥

मा। नः। सेतुः। सिसेत्। अयम्। महे। वृणक्तु।
नः। परि। इन्द्रः। इत्। हि। श्रुतः। वशी ॥ ८ ॥

अयमिन्द्रः नोस्मान् सेतुः बन्धको जालो मासिषेव मावध्नातु। नोस्मान् महे महते कर्मणे परिवृणक्तु परिवर्जयतु जालाव्। कः इन्द्रइव इन्द्रएव श्रुतो विश्रुतः वशी सर्वस्य वशीकर्ता सपरिवृणक्तु ॥ ८ ॥

८. यह इन्द्र जाल से हमें न बाँधें। महान् कर्म के लिए हमें जाल से छोड़ दें। इन्द्र विश्रुत और सबके वश-कर्त्ता हैं।

अथ नवमी—

मानोमृचारिपूणांवृजिनानामविष्यवः। देवाअभिप्रमृक्षत ॥ ९ ॥

मा। नः। मृचा। रिपूणाम्। वृजिनानाम्। अविष्यवः।
देवाः। अभि। प्र। मृक्षत ॥ ९ ॥

हे अविष्यवो रक्षितुमिच्छन्तो देवाः नोस्मान् वृजिनानां हिंसकानां रिपूणां मृचा मृचिहिंसाकर्मा। यद्क्षुरेण मर्चयता सुपेशसेत्यादिषु तथा दृष्टत्वाव्। हिंसकेन जालेन माभि प्रमृक्षत अभिमर्शनमुपरिजालस्य प्रेरणं माकुरुत। यद्वा मृचाजालेनं प्राप्ताबाधा नोस्माकं माभवतु। हे देवाः यूयं च परिमार्जयत परिहरत ॥ ९ ॥

९. देवो, तुम हमें छोड़ो। हमें बचाने की इच्छा करके हिंसक शत्रुओं के जाल से हमें नहीं बाधा देना।

आधाने पवमानेष्टिषु उतत्वामदित इत्यनुवाक्या सूत्रितश्च—उतत्वामदितेमहिमहीमूषुमातर-मिति। आदित्येपशौ वपायाअनुवाक्येयमेव। सूत्रितच—उतत्वामदितेमह्यनेहोनउरुव्रजेइति।

सैषा दशमी—

उतत्वामंदितेमह्यहंदेव्युपंब्रुवे। सुमृळीकामभिष्टये॥ १०॥३४॥

उत। त्वाम्। अदिते। महि। अहम्। देवि। उप।
ब्रुवे। सुऽमृळीकाम्। अभिष्टये॥ १०॥ ३४॥

उतअपिच हे महि महति अदिते देवमातः देवि त्वा त्वां अहं मत्स्यपक्षे मत्स्यप्रमुखोह-मुपब्रुवे उपेत्यस्तौमि। कीदृशीं सुमृळीकां सुष्टु सुखयित्रीं किमर्थमभिष्टयेभिमताय॥ १०॥

१०. देवी अदिति, तुम महती और सुखदात्री हो। अभिलषित फल की प्राप्ति के लिए मैं तुम्हारी स्तुति करता हूँ।

॥ इति षष्ठस्य चतुर्थे चतुस्त्रिंशोवर्गः॥ ३४॥

अथैकादशी—

पर्षिदीनेगंभीरआँउग्रंपुत्रेजिघांसतः। माकिस्तोकस्यंनोरिषत्॥११॥

पर्षि। दीने। गभीरे। आ। उग्रऽपुत्रे। जिघांसतः।
माकिः। तोकस्य। नः। रिषत्॥ ११॥

हे अदिते आपर्षि सर्वतः पालयसि दीने क्षीणे गभीरे उदके उदकनामैतत् गंभीरं गहनमिति तन्नामसुपाठात् उग्रपुत्रे उद्गूर्णाः पुत्राः यस्मिन् तत्तस्मिन् उदके जिघांसतो हिंसतः जालं तोकस्य नोस्माकं तनयस्य तनयं माकीरिषत् मैवहिंसां करोतु॥ ११॥

११. अदिति, चारों ओर से हमें बचाओ। क्षीण और उग्र पुत्रवाले जल में हिंसक का जाल हमारे पुत्र को नहीं मारे।

आदित्यस्य पशावनेहोनइति पुरोडाशस्यानुवाक्या। सूत्रितंच—अनेहोनउरुव्रजेदितिर्ह-जनिष्टेति।

सैषा द्वादशी—

अनेहोनंउरुव्रजउरूचीविप्रसर्तवे। कृधितोकायजीवसे॥ १२॥

अनेहः। नः। उरुऽव्रजे। उरूचि। वि। प्रऽसर्तवे।
कृधि। तोकाय। जीवसे॥ १२॥

अनेहोऽपापान्नोस्मान् उरुव्रजे विस्तीर्णगमने दूरं इयमदितिर्भूरिरूपा गताभवति अतिविस्तृतत्वात्। अथवा उरुगमने धीरे हे उरूचि उरुत्वं विप्रसर्तवे अभिसरणाय कृधि कुरु। कस्मै तोकाय पुत्राय मत्स्याय जीवसे तस्य जीवनाय यथाजीवनेनापत्यान्त्रक्षितुं तथा उरु त्वंकुर्विति॥१२॥

१२. विस्तृत गमनवाली और गुरुतर अदित, पुत्र के जीवन के लिए तुम हम पाप-शून्यों को जीवित रक्खो।

येमूर्धानःक्षितीनामदब्धासःस्वयंशसः। व्रतारक्षन्तेअद्रुहः ॥१३॥

ये। मूर्धानः। क्षितीनाम्। अदब्धासः। स्वऽयशसः।
व्रता। रक्षन्ते। अद्रुहः॥ १३॥

ये मूर्धानः सर्वेषां मूर्धस्थानीया उच्छ्रिताः क्षितीनां मनुष्याणां अदब्धासः अहिंसकाः स्वयशसः स्वायत्तकीर्तयः व्रता व्रतान्यस्मदीयानि कर्माणि रक्षंते पालयन्ते अद्रुहः अद्रोग्धारः सन्तः॥ १३॥

१३. सबके शिरोमणि, मनुष्यों के लिए अहिंसक, सुन्दर कीर्त्तिवाले और द्रोह-शून्य होकर जो हमारे कर्म की रक्षा करते हैं—

तेनआस्नोवृकाणामादित्यासोमुमोचत। स्तेनंबद्धमिवादिते॥१४॥

ते। नः। आस्नः। वृकाणाम्। आदित्यासः। मुमोचत।
स्तेनम्। बद्धम्ऽइव। अदिते॥ १४॥

हे आदित्यासः आदित्यास्ते यूयं नोस्मान् वृकाणां हिंसकानां अदातॄणां वा आस्नः आस्यात्सकाशान्मुमोचत विमोचनं कुरुत स्तेनं बद्धमिव हे अदिते त्वंच मोचयास्मानिति॥१४॥

१४. आदित्यो, वही तुम हिंसकों के पास से, पकड़े गये चोर के समान, हमारी रक्षा करो।

अपोषुणइयंशरुरादित्याअपदुर्मतिः। अस्मदेत्वजघ्नुषी॥१५॥३५॥

अपो इति। सु। नः। इयम्। शरुः। आदित्याः। अप।
दुःऽमतिः। अस्मत्। एतु। अजघ्नुषी॥ १५॥ ३५॥

हे आदित्या इयं शरारुर्हिंसिका प्रसितिः जालिकप्रेरिता अजघ्नुषी अहिंसन्ती सती अस्मदस्मत्तः सु सुष्ठु अपोएतु अपगच्छत्वेव। तथा नोस्माकं दुर्मतिर्दुष्टामतिरप्यजघ्नुषी अस्मत्तोपगच्छतु॥ १५॥

१५. आदित्यो, यह जाल हमारी हिंसा करने में असमर्थ होकर दूर हो। हमारी दुर्बुद्धि भी दूर हो।

॥ इति षष्ठस्य चतुर्थे पञ्चत्रिंशोवर्गः॥ ३५॥

अथ षोडशी—

शश्वद्धि वः सुदानव आदित्या ऊतिभिर्वयम् । पुरा नूनं बुभुज्महे ॥ १६ ॥

शश्वत् । हि । वः । सुऽदानवः । आदित्याः । ऊतिऽभिः ।
वयम् । पुरा । नूनम् । बुभुज्महे ॥ १६ ॥

हे सुदानवः सुदानाः हे आदित्या वोयुष्माकं ऊतिभीरक्षाभिः वयं पुरा नूनमिदानीमपि शश्वत् सर्वदा बुभुज्महे यद्वा शश्वद्बहून् भोगान् बुभुज्महे ॥ १६ ॥

१६. सुन्दर दानवाले आदित्यो, तुम्हारे रक्षणों से हम पहले के समान इस समय भी नानाविध भोगों का उपभोग करेंगे।

शश्वन्तं हि प्रचेतसः प्रतियन्तं चिदेनसः । देवाः कृणुथ जीवसे ॥ १७ ॥

शश्वन्तम् । हि । प्रऽचेतसः । प्रतिऽयन्तम् । चित् ।
एनसः । देवाः । कृणुथ । जीवसे ॥ १७ ॥

हे प्रचेतसः प्रकृष्टमाया हे देवाः शश्वन्तं बहुमपि प्रतियन्तं चित् प्रतिगच्छन्तमपि शत्रुं एनसः पापस्य कर्तारं अथवा एनसः पापकृतः व्यत्ययेन बहुवचनं पापकर्तारं जीवसेजीवनायास्माकं कृणुत कुरुत अस्मत्तो वियुक्तमिति शेषः ॥ १७ ॥

१७. प्रकृष्ट ज्ञानवाले देवो, जो पापी शत्रु बार-बार हमारी ओर जाता है, हमारे जीवन के लिए उसे अलग करो।

तत्सु नो नव्यं सन्यस आदित्या यन्मुमोचति । बन्धाद्बद्धमिवादिते ॥ १८ ॥

तत् । सु । नः । नव्यम् । सन्यसे । आदित्याः । यत् ।
मुमोचति । बन्धात् । बद्धम्ऽइव । अदिते ॥ १८ ॥

तद्बन्धकं नोस्माकं सु सुष्ठु नव्यं स्तुत्यं सन्यसे संभजनाय भवतु अस्माकं मोचनेन स्तुत्यं भवत्वित्यर्थः। हे आदित्या अदितेः पुत्राः हे अदिते त्वदनुग्रहाद्यन्मुमोचति मुंचत्यस्मान् बन्धाद्बद्धमिव बन्धनसाधनंपूर्वं यत्प्रतिबन्धकत्वादासीत् तदेव युष्मदनुग्रहादस्मान्मुञ्चतु यद्वा युष्माकं यद्रक्षणमस्मान्मुंचति तत् सु सुष्ठु स्तुत्यं संभजनाय भवत्विति योज्यम् ॥ १८ ॥

१८. आदित्यो, बन्धन जैसे बद्ध पुरुष को छोड़ता है, वैसे ही तुम्हारे अनुग्रह से जो जाल हमें छोड़ता है, वह स्तुत्य और भजनीय है।

अथैकोनविंशी—

नास्माकमस्ति तत्तर आदित्यासो अतिष्कदे । यूयमस्मभ्यं मृळत ॥ १९ ॥

न । अ॒स्माक॑म् । अ॒स्ति॒ । तत् । तरः॑ । आदि॑त्यासः ।
अ॒ति॒ऽस्कदे॑ । यू॒यम् । अ॒स्मभ्य॑म् । मृ॒ळत॒ ॥ १९ ॥

हे आदित्यासः आदित्याः युष्मत्कर्तृकस्तत्तरोवेगोस्माकं नास्ति योवेगो बन्धकाज्जालादतिष्कदे अस्माकमतिस्कन्दनाय प्रभवति । अतो यूयमस्मभ्यं मृळत तत्तादृशंतरः कुरुतेत्यर्थः ॥ १९ ॥

१९. आदित्यो, तुम्हारे समान हमारा वेग नहीं है। यह वेग हमें मुक्त करने में समर्थ है। तुम हमें सुखी करो।

**मानो॑हे॒तिर्वि॒वस्व॑त॒आदि॑त्याःकृ॒त्रिमा॒शरुः॑ । पु॒रानुज॒रसो॑वधीत् ॥२०॥**

मा । नः॒ । हे॒तिः । वि॒वस्व॑तः । आदि॑त्याः । कृ॒त्रिमा॑ ।
शरुः॑ । पु॒रा । नु । ज॒रसः॑ । व॒धी॒त् ॥ २० ॥

हे आदित्या नोस्मान्विवस्वतो विवस्वत्पुत्रस्य यमस्य । पुत्रे पितृशब्दः । तस्य हेतिरायुधभूता कृत्रिमा क्रियया निष्पन्ना शरुर्हिंसिका प्रसितिः पुरा पूर्वं नु इदानीं सर्वदेत्यर्थः जरसः इदानीं जीर्णान् मावधीत् माहिंस्यात् ॥ २० ॥

२०. आदित्यो, विवस्वान् के आयुध के समान यह कृत्रिम जाल पहले और इस समय हम जीर्ण व्यक्तियों को न मारे।

**विषु॒द्वेषो॒व्यं॑ह॒तिमादि॑त्यासो॒विसं॑हितम् । विष्व॒ग्विवृ॑हता॒रपः॑ ॥२१॥३६॥**

वि । सु । द्वेषः॑ । वि । अं॒ह॒तिम् । आदि॑त्यासः । वि ।
सम्ऽहि॑तम् । विष्व॑क् । वि । वृ॒ह॒त॒ । रपः॑ ॥ २१ ॥ ३६ ॥

हे आदित्यासः आदित्या द्वेषोद्वेष्टॄन् सु सुष्ठु विवृहत उन्मूलयत नाशयतेत्यर्थः । तथा अंहतिं पावकं पापं विवृहत हन्तेरंहचेत्यतिप्रत्ययः । तथा संहितं जालं विवृहत तथा रपः पापं सर्वं विष्वक् विषूचीनं विवृहत । रपो रिप्रं इतिपापनामनी भवतइतियास्कः ॥ २१ ॥

२१. आदित्यो, द्वेषियों का विनाश करो। पापियों का विनाश करो। जाल का विनाश करो। सर्वव्यापक पाप का विनाश करो।

॥ इति षष्ठस्य चतुर्थे षट्त्रिंशोवर्गः ॥ ३६ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके चतुर्थोध्यायः ॥ ४ ॥

## ॥श्रीगणेशायनमः॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममेतमहंवन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥

षष्ठेचतुर्थमध्यायं श्रीमायणसुतःसुधीः। व्याख्यायसायणाचार्यः पञ्चमंव्याकरोत्यथ ॥ २ ॥

तत्रात्वारथमित्येकोनविंशर्चं नवमंसूक्तं ।अत्रेयमनुक्रमणिका—आत्वैकोना प्रियमेध आदावनुष्टुम्मुखास्तृचाश्चत्वारोन्त्याःषळ्क्षाश्वमेधयोर्दानस्तुतिरिति । आंगिरसःप्रियमेधऋषिः । प्रथमाचतुर्थीसप्तमीदशम्योनुष्टुभः शिष्टाःपरंगायत्रमितिपरिभाषया गायत्र्यः अन्ततःषट्स्वृक्षु ऋक्षाश्वमेधयोर्दानंस्तूयते अतस्तास्तद्देवताकाः । शिष्टाअनुक्तपरिभाषयैन्द्र्यः । सूक्तविनियोगोलैङ्गिकः ।आद्यस्तृचो मरुत्वतीयस्यप्रतिपत् । तथाचसूत्रितम्—आत्वारथंयथोतयइदंवसोसुतमन्धइतिमरुत्वतीयस्यप्रतिपदनुचराविति । महाव्रतादिष्वपि यत्रतृचान्तरंनविधीयते तत्र सर्वत्रायमेव प्रतिपद्भवति ।

तत्र प्रथमा—

ओम् आत्वारथंयथोतयेसुम्नायवर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्रशविष्ठसत्पते ॥ १ ॥

आ । त्वा । रथम् । यथा । ऊतये । सुम्नाय । वर्तयामसि ।
तुविऽकूर्मिम् । ऋतिऽसहम् । इन्द्र । शविष्ठ । सत्ऽपते ॥ १ ॥

हे इन्द्र त्वा त्वां आवर्तयामसि आवर्तयामः । किमर्थं ऊतयेस्माकं रक्षणाय सुम्नाय सुखायच । किमिव रथं यथा ऊतये सुखाय चावर्तयन्ति तद्वत् । कीदृशं त्वां तुविकूर्मिं बहुकर्माणं ऋतीषहं हिंसकानामभिभवितारं हे इन्द्र शविष्ठातिशयेनबलवन् हे सत्पते सतां पालक त्वामिति समन्वयः ॥ १ ॥

१. अतीव बली और सत्पति इन्द्र, तुम बहुकर्मा और हिंसकों के अभिभवकारी हो। रक्षण और सुख के लिए, रथ के समान, हम तुम्हें आवर्तित करते हैं।

अथ द्वितीया—

तुविशुष्मतुविक्रतोशचीवोविश्वयामते ।
आपप्राथमहित्वना ॥ २ ॥

तुविऽशुष्म । तुविक्रतो इति तुविऽक्रतो । शचीऽवः । विश्वया ।
मते । आ । पप्राथ । महिऽत्वना ॥ २ ॥

हे तुविशुष्म प्रभूतबल हे तुविक्रतो बहुकर्मन् अथवा बहुप्रज्ञ कर्मणः पृथगभिधानात् हे शचीवः बहुकर्मोपेत हे मते पूजनीयेन्द्र विश्वया विश्वव्याप्तेन महित्वना महत्त्वेन आपप्राथ आपूरितवानसि । अविशेषाद्विश्वमित्यर्थः ॥ २ ॥

२. प्रचुर बलवाले, अतीव प्राज्ञ, बहुकर्मा और पूजनीय इन्द्र, विश्व-व्यापक महत्त्व के द्वारा तुमने जगत् को आपूरित किया है।

यस्यतेमहिनामहःपरिज्मायन्तमीयतुः ।
हस्तावज्रंहिरण्ययम् ॥ ३ ॥

यस्य । ते । महिना । महः । परि । ज्मायन्तम् । ईयतुः ।
हस्ता । वज्रम् । हिरण्ययम् ॥ ३ ॥

महोमहतो यस्य ते तव यच्छब्दः प्रकृतपरामर्शकः प्रकृतं तूकमृगुद्वयं तत्रत्यतुविकूर्मि-मतीषहमित्याद्युक्तलक्षणस्य तवेत्यर्थः । महिना महत्त्वेन तव हस्ता हस्तौ ज्मायन्तं पृथिव्यां सर्वतोव्याप्नुवन्तं हिरण्ययं हिरणमयं वज्रं परि ईयतुः परिगृह्णीतः । सर्वदास्माकं भयनि-वारणायेतिभावः ॥ ३ ॥

३. तुम महान् हो। तुम्हारी महिमा के द्वारा पृथिवी में व्याप्त हिरण्मय वज्र को तुम्हारे दोनों हाथ ग्रहण करते हैं।

पृष्ठ्याभिप्लवषडहयोः द्वितीयेहनि विश्वानरस्येति मरुत्वतीयस्य प्रतिपत्तृचः सूत्रितश्च—विश्वानरस्य-वस्पतिमिन्द्रइत्सोमपाएकइति मरुत्वतीयस्य प्रतिपदनुचराविति ।

तृचे प्रथमा सूक्ते चतुर्थी—

विश्वानरस्यवस्पतिमनानतस्यशवसः ।
एवैश्चचर्षणीनामूतीहुवेरथानाम् ॥ ४ ॥

विश्वानरस्य । वः । पतिम् । अनानतस्य । शवसः । एवैः ।
च । चर्षणीनाम् । ऊती । हुवे । रथानाम् ॥ ४ ॥

विश्वानरस्य विश्वान् शत्रून् प्रत्यृतस्य अनानतस्य शत्रूणामप्रह्वस्य शवसो बलस्य पतिं स्वामिनमिन्द्रं वा अत्रेन्द्रसंबन्धिनो मरुतोपि संकीर्त्यन्ते हे मरुतो वो युष्माकमित्यर्थः। यद्यपि मरुद् संशब्दनंनास्ति तथापि वइति सामर्थ्याल्लभ्यते। युष्माकं चर्षणीनां सैनिकानां एवैर्गमनैः सह। यद्वा चर्षणीनां इन्द्रस्य सेनारूपाणां वोयुष्माकं गमनैरिति सामानाधिकरण्यं युष्माकं रथानांच ऊती ऊतिभिर्गमनैश्चसह हुवे आह्वयामि। गन्तृभी रथैर्गन्तृभिर्मरुद्भिश्च सहेन्द्रं हुव- इत्यर्थः। यद्वा हे यजमाना युष्मदीयाः सैनिकाः सरथा यदा प्रविशन्ति युद्धाय संग्रामं तदानीं तेषां साहाय्यायेन्द्रं हुवे इत्यर्थः॥ ४ ॥

४. मैं समस्त शत्रुओं के प्रति जानेवाले और दुर्दमनीय बल के पति इन्द्र को, तुम लोगों (मरुतों की) सेनाओं के साथ और रथ के गमन के साथ, बुलाता हूँ।

अथ तृचे द्वितीया सूक्ते पञ्चमी—

अ॒भिष्ट॑येस॒दावृ॑धं॒स्व॑र्मीळ्हेषु॒यंनरः॑।
नाना॒हव॑न्तऊ॒तये॑॥ ५॥ १॥

अ॒भिष्ट॑ये। स॒दाऽवृ॑धम्। स्वः॑ऽमीळ्हेषु। यम्। नरः॑।
नाना॑। हव॑न्ते। ऊ॒तये॑॥ ५॥ १॥

हे यजमाना युष्माकं अभिष्टये साहाय्यार्थं अभिगमनाय अभिष्टये वा सदावृधं सर्वदा वर्धयन्तं सेवकान् स्वयं सर्वदा वर्धमानं वा हुवइतिशेषः। यं स्वर्मीळ्हेषु संग्रामेषु नरोनेतारो मनुष्याः नाना बहुप्रकारं हवन्ते आह्वयन्ति ऊतये रक्षार्थं तं हुवइतिशेषः ॥ ५॥

५. नेता लोग रक्षण के लिए, जिन्हें युद्ध में विविध प्रकार से बुलाते हैं, उन्हीं सर्वदा वर्द्धमान इन्द्र को सहायता के निमित्त आगमन के लिए बुलाता हूँ।　　॥ इति षष्ठस्य पञ्चमे प्रथमोवर्गः॥ १॥

अथ तृचेतृतीया सूक्ते षष्ठचेषा—

प॒रोमा॑त्र॒मृचीष॑म॒मिन्द्र॑मु॒ग्रंसु॒राध॑सम्।
ईशा॑नंचि॒द्वसू॑नाम्॥ ६॥

प॒रः॒ऽमा॑त्रम्। ऋचीष॑मम्। इन्द्र॑म्। उ॒ग्रम्। सु॒ऽराध॑सम्।
ईशा॑नम्। चि॒त्। वसू॑नाम्॥ ६॥

परोमात्रं परामात्रा यस्य तादृशं अथवा मीयतइति मात्रं दूरदेशः ततः परस्ताद्वर्तमानं अपरिमितस्वरूपं तथापि ऋचीषमं ऋचा स्तुत्या समं यद्यप्यपरिच्छिन्नस्तथापि स्तुतिर्यावन्मात्रं

विषयीकरोति तत्समइत्यर्थः । तदेवाह इन्द्रं परमैश्वर्ययोगत्वादिच्छानुकूलस्वरूपं उग्रमुद्गूर्णबलं सुराधसं राधइति धननाम शोभनधनं शोभनान्नं वा ईशानं चित् ईश्वरं च । केषां वसूनां अस्मभ्यं प्रदेयानां गवादिधनानां एवं महानुभावमिन्द्रं हुवइतिशेषः ॥ ६ ॥

६. असीम शरीरवाले, स्तुति-द्वारा परिमित, सुन्दर, धन से सम्पन्न, धन-समुदाय के स्वामी और उग्र इन्द्र को मैं बुलाता हूँ।

तृतीयेहनि मरुत्वतीये तन्तमिदितिप्रतिपत्तृचः । सूत्रितश्च—तन्तमिद्राधसेमहेत्रयइन्द्रस्य-सोमाइति । तंतमिद्राधसेमहइन्द्रंचोदामिपीतये ।
यःपूर्व्यामनुष्टुतिमीशेकृष्टीनांनृतुः ॥ ७ ॥

तम्ऽतंम् । इत् । राधसे । महे । इन्द्रम् । चोदामि । पीतये ।
यः । पूर्व्याम् । अनुऽस्तुतिम् । ईशे । कृष्टीनाम् । नृतुः ॥ ७ ॥

तन्तमित्तमेवेन्द्रं सर्वेष्वपि यागकालेषु तमेवेन्द्रमित्यर्थः । तं प्रतिचोदामि प्रेरयामि स्तुतिं पीतये सोमपानाय । ततः कोलाभइति उच्यते—महे महते राधसे धनाय प्रभूतधनलाभार्थं यो-नृतुः फलस्यनेता देवः पूर्व्यां पूर्वैर्भवां यज्ञमुखस्थां अनुष्टुतिं अनुक्रमेण क्रियमाणां स्तुतिं कृ-ष्टीनां मनुष्याणां ऋत्विजां संबधिनीं ईशे ईष्टे श्रोतुं । तं चोदामीति संबन्धः ॥ ७ ॥

७. जो नेता हैं और जो यज्ञ-मुखस्थित तथा क्रमबद्ध स्तुति सुनने में समर्थ हैं, उन्हीं इन्द्र को मैं, महान् धन की प्राप्ति के लिए, सोमपान के निमित्त, बुलाता हूँ।

अथ तृचे द्वितीया सूक्तेष्टमी—

नयस्यतेशवसानसख्यमानंशमर्त्यः ।
नकिःशवांसितेनशत् ॥ ८ ॥

न । यस्य । ते । शवसान । सख्यम् । आनंश । मर्त्यः ।
नकिः । शवांसि । ते । नशत् ॥ ८ ॥

हेशवसान बलवन् इन्द्र यस्य ते तव सख्यं मर्त्यो मरणधर्मा मनुष्योनानंश नव्यामोति ते शवांसि बलान्यपि नकिर्नैवनशत् न व्यामोति ॥ ८ ॥

८. बली इन्द्र, मनुष्य तुम्हारे सख्य को नहीं व्याप्त कर सकता; वह तुम्हारे बल को भी नहीं व्याप्त कर (घेर) सकता।

अथ तृचे तृतीया सूक्ते नवमी—

त्वोता॑सुस्त्वायुजाप्सुसूर्ये॑मुहद्धनम् ।
जये॑मपृत्सुवंज्रिवः ॥ ९ ॥

त्वाऽऊ॑तासः । त्वा । युजा । अप्ऽसु । सूर्ये॑ । मुहत् । धनम् ।
जये॑म । पृत्ऽसु । वज्रिऽवः ॥ ९ ॥

हे इन्द्र त्वोतासस्त्वया रक्षिताः त्वा त्वया युजा सहायेनाप्सु स्नातुं सूर्यं द्रष्टुंच स्नाना-दिव्यवहारं कर्तुं सूर्ये उदिते सति गमनादि व्यवहारं कर्तुमित्यर्थः तदर्थं पृत्सु संग्रामेषु हे व-ज्रिवोवज्रवन्निन्द्र महद्धनं जयेम । शत्रून् संग्रामेजित्वा तेषां धनं लभेमेत्यर्थः ॥ ९ ॥

९. वज्रधर, हम तुम्हारे द्वारा रक्षित होकर जल में स्नान करने के लिए और सूर्य को देखने के लिए तुम्हारी सहायता से संग्राम में महान् धन प्राप्त करेंगे।

चतुर्थेहनि मरुत्वतीये तंत्वायज्ञेभिरितितृचः प्रतिपद् । सूत्रितश्च—तंत्वायज्ञेभिरीमहइदंव-सोसुतमन्धइति मरुत्वतीयप्रतिपदनुचराविति ।

तृचे प्रथमा सूक्ते दशमी—

तंत्वा॑यज्ञेभि॑रीमहेतंगी॒र्भिर्गि॑र्वणस्तम ।
इन्द्र॒यथा॑चि॒दावि॑थवाजे॑षुपुरु॒माय्य॑म् ॥ १० ॥ २ ॥

तम् । त्वा । य॒ज्ञेभिः॑ । ई॒म॒हे॒ । तम् । गीः॒ऽभिः । गिर्व॒णः॒ऽत॒म । इन्द्र॑ ।
यथा॑ । चि॒त् । आवि॑थ । वाजे॑षु । पु॒रु॒माऽय्य॑म् ॥ १० ॥ २ ॥

तं स्तुत्यत्वेन प्रसिद्धं त्वा त्वां यज्ञेभिर्यागसाधनैः सोमादिभिरीमहे याचामहे तमेवेन्द्रं गीर्भिः स्तुतिभिरीमहे । हे गिर्वणस्तम गीर्भिः स्तुतिभिर्वननीयतमेन्द्र तंत्वामिति समन्वयः । हे इन्द्र त्वं यथाचिदाविथ येनप्रकारेण ररक्षिथ मां चिदितिपूरणः । कुत्रेति उच्यते—वाजेषु संग्रामेषु कीदृशं मां पुरुमाय्यं बहुप्रज्ञं बहुस्तुतिमित्यर्थः ॥ १० ॥

१०. स्तुति-द्वारा अत्यन्त प्रसिद्ध इन्द्र, मैं बहुत स्तुति करनेवाला हूँ। जिस प्रकार तुम हमें युद्ध में बचाओ, उसी प्रकार के यज्ञ के द्वारा हम तुमसे याचना करते हैं—स्तुति-द्वारा तुम्हारी याचना करते हैं।

॥ इति षष्ठस्य पञ्चमे द्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

यस्य॑तेस्वा॒दुस॒ख्यंस्वा॒द्वीप्रणी॑तिरद्रिवः ।
य॒ज्ञोवि॑तंत॒साय्य॑ः ॥ ११ ॥

यस्य॑ । ते॒ । स्वा॒दु । स॒ख्यम् । स्वा॒द्वी । प्रऽनी॑तिः ।
अद्रि॑ऽवः । य॒ज्ञः । वि॒त॒न्त॒साय्यः॑ ॥ ११ ॥

हे अद्रिवो वज्रन्निन्द्र यस्य स्तुत्यत्वेन प्रसिद्धस्य ते तव सख्यं स्वाद्वतीवानुभवार्हं। किञ्च ते प्रणीतिःप्रणयनं धनादीनां स्वाद्वी स्वादु सुहर्षकं तथोभे त्वद्विषयोयज्ञश्च वितन्तसाय्यो विशेषेण तननीयः ॥ ११ ॥

११. वज्रधर इन्द्र, तुम्हारा सख्य स्वादिष्ठ है, तुम्हारा धनादि का सृजन भी स्वादु है और तुम्हारा यज्ञ विस्तार के योग्य है।

उ॒रुणं॑स्त॒न्वे॒३॑तनं॑उ॒रुक्षया॑यनस्कृधि ।
उ॒रुणो॑यन्धिजी॒वसे॑ ॥ १२ ॥

उ॒रु । नः॒ । त॒न्वे॑ । तने॑ । उ॒रु । क्षया॑य । नः॒ । कृ॒धि॒ ।
उ॒रु । नः॒ । य॒न्धि॒ । जी॒वसे॑ ॥ १२ ॥

हे इन्द्र त्वं नोस्माकं तन्वे आत्मजाय उरु प्रभूतं कृधि कुरु। सामर्थ्याद् धनं सुखं वेति गम्यते। तथा तने तत्पुत्राय उरु कृधि। तथा क्षयाय निवासाय उरुकृधि नोस्माकं जीवसे जीवनाय यन्धि प्रयच्छाभिमतम् ॥ १२ ॥

१२. हमारे पुत्र के लिए यथेष्ट धन दो। हमारे पौत्र के लिए यथेष्ट धन दो और हमारे निवास के लिए प्रचुर धन दो तथा हमारे जीवन के लिए अभिलषित पदार्थ प्रदान करो।

उ॒रुंनृभ्य॑उ॒रुंगव॑उ॒रुंरथा॑य॒पन्था॑म् । दे॒ववी॑तिंमनामहे ॥ १३ ॥

उ॒रुम् । नृऽभ्यः॑ । उ॒रुम् । गवे॑ । उ॒रुम् । रथा॑य । पन्था॑म् ।
दे॒वऽवी॑तिम् । म॒ना॒म॒हे॒ ॥ १३ ॥

हे इन्द्र नृभ्योस्मदीयेभ्यो भृत्येभ्यः उरुं हितं मनामहे याचामहे। तथा गवे एतदुपलक्षणं गवाश्वादिकाय तथा रथाय पन्थां पन्थानं मार्गं अथवा नृप्रभृतीनां संचाराय शोभनं मार्गं मनामहे तथा देववीतिं यज्ञं मनामहे ॥ १३ ॥

१३. इन्द्र, हम तुमसे मनुष्य की भलाई के लिए प्रार्थना करते हैं, गाय की भलाई के लिए प्रार्थना करते हैं और रथ के लिए सुन्दर मार्ग की प्रार्थना करते हैं। यज्ञ की प्रार्थना करते हैं।

अथ चतुर्दशी—

उप॑मा॒षड्द्वाद्वा॒नरः॒सोम॑स्य॒हर्ष्या॑ । तिष्ठ॑न्तिस्वादुरा॒तयः॑ ॥ १४ ॥

उप॑ । मा॒ । षट् । द्वाऽद्वा॑ । नरः॑ । सोम॑स्य । हर्ष्या॑ ।
तिष्ठ॑न्ति । स्वा॒दु॒ऽरा॒तयः॑ ॥ १४ ॥

एतदाद्याः षळृचः ऋक्षाश्वमेधयोर्दानस्तुतिरूपाः यद्यपि बृहद्देवतानुक्रमण्यां—ऋक्षाश्वमेधयोरत्र पञ्चदानप्रशंसका इत्युक्तम्। तथाप्युपमाषळित्यस्याः राजदानस्तुतिशेषत्वादविरोधः। अनयैवाशया अनुक्रमण्यांअन्त्याः षळृचः ऋक्षाश्वमेधयोर्दानस्तुतिरित्युक्तम्। मामां प्रियमेधं यज्ञे प्रसर्पन्तः षट् एतत्संख्याका नरोनेतारो राजानः सोमस्य पीतस्य हर्ष्या हर्षेण स्वादुरातयः सुष्ठूपभोगार्हदानाः सन्तो द्वाद्वा द्वौद्वौ पितृपुत्ररूपेण युग्मौ भूत्वा मामुपतिष्ठन्ति तेषां युग्मानां नाम तूत्तरत्र स्पष्टीक्रियते ॥ १४ ॥

१४. सोमोत्पन्न हर्ष के कारण; सुन्दर उपभोग के योग्य धन से युक्त होकर, छः नेताओं में से दो-दो हमारे पास आते हैं।

ऋ॒ज्रावि॑न्द्रो॒त आ द॑दे॒ हरी॒ ऋक्ष॑स्य सू॒नवि॑ । आ॒श्व॒मे॒धस्य॒ रोहि॑ता ॥ १५ ॥ ३ ॥

ऋ॒ज्रौ । इ॒न्द्रो॒ते । आ । द॒दे॒ । हरी॒ इति॑ । ऋक्ष॑स्य । सू॒नवि॑ ।
आ॒श्व॒ऽमे॒धस्य॑ । रोहि॑ता ॥ १५ ॥ ३ ॥

इन्द्रोते एतन्नामके आतिथिग्वे अतिथिग्वनाम्नो राज्ञःपुत्रे। अतिथिग्वायशंबरमिति। अतिथिग्वायेशंस्यमित्यादिष्वतिथिग्वः प्रसिद्धः। तत्पुत्रइन्द्रोतः ऋज्रौ ऋजुगामिनावश्वौ आददे स्वीकृतवानस्मि। तथा ऋक्षस्य सूनवि ऋक्षनाम्नः पुत्रेन्यस्मिन्राजनि हरी हरितवर्णावश्वावाददे। तथा आश्वमेधस्य अश्वमेधपुत्रे राजनि रोहिता रोहितवर्णावश्वौ आददे। नन्वनुक्रमण्यामुभयोरेवदानप्रशंसारूपत्वमुक्तम्। अत्र कथं त्रयाणां दानकीर्तनमिति। नैषदोषः। ऋक्षाश्वमेधपुत्रयोरेव यागेअस्यऋषेः प्रवृत्तेस्तयोरेवदानं प्रस्तुत्य इन्द्रोतस्तु स्वपित्रासह तयोर्यज्ञदिदृक्षयागत्य तयोर्दानं दृष्ट्वा स्वपित्राप्रेरितो दत्तवानश्वौ अतस्तद्दानं प्रासंगिकमिति। एवमृक्षाश्वमेधयोर्दानस्तुतित्वं नव्याहन्यते पितृपुत्रयोरभेदात् तयोः पक्षकर्तृत्वाच्च। इन्द्रोतदानस्य प्रासंगिकत्वं षळश्वानित्यत्र विस्पष्टयिष्यते ॥ १५ ॥

१५. इन्द्रोत नामक राजपुत्र से दो सरल-गामी अश्वों को मैंने पाया है। ऋक्ष के पुत्र से दो हरित-वर्ण अश्वों को मैंने लिया है। अश्वमेध के पुत्र से मैंने रोहित-वर्ण दो अश्वों को पाया है।

॥ इति षष्ठस्य पञ्चमे तृतीयोवर्गः ॥३॥

---

ऋ० सं० १. ४. १०। २ ऋ० सं० ४. ६. २१।

अथ षोडशी–

सुरथाँआतिथिग्वेस्वभीशूँराक्षें । आश्वमेधेसुपेशसः ॥ १६ ॥

सुऽरथान् । आतिथिऽग्वे । सुऽअभीशून् । आर्क्षे ।
आश्वऽमेधे । सुऽपेशसः ॥ १६ ॥

आतिथिग्वे इन्द्रोते सुरथान् शोभनरथोपेतानश्वान् आददे । आर्क्षे ऋक्षपुत्रे स्वभीशून-श्वानाददे आश्वमेधेश्वमेधपुत्रे सुपेशसः सुरूपान् तान् शोभनालंकारान् आददे ॥ १६ ॥

१६. मैंने अतिथिग्व के पुत्र (इन्द्रोत) से सुन्दर रथवाले अश्वों को पाया है। ऋक्ष के पुत्र से मैंने सुन्दर लगामवाले अश्वों को ग्रहण किया है। अश्वमेध के पुत्र से मैंने सुन्दर अश्वों को ग्रहण किया है।

षळश्वाँआतिथिग्वइन्द्रोतेवधूमंतः । सचापूतक्रतौसनम् ॥ १७ ॥

षट् । अश्वान् । आतिथिऽग्वे । इन्द्रोते । वधूऽमंतः ।
सचा । पूतऽक्रतौ । सनम् ॥ १७ ॥

आतिथिग्वे इन्द्रोते पूतक्रतौ शुद्धप्रज्ञे शुद्धकर्मोपेतेवा तस्मिन् वधूमतोवधूभिर्वडवाभि-स्तद्वतः षळश्वान् ऋक्षाश्वमेधयोः पुत्राभ्यां दत्तेनाश्वादिधनेन सचा सह सनं लब्धवानस्मि एतत्साहित्यवचनं इन्द्रोतदानस्य प्रासंगिकत्वे लिंगम् ॥ १७ ॥

१७. अतिथिग्व के पुत्र और शुद्धकर्मा इन्द्रोत से घोड़ियोंवाले छः घोड़ों को, ऋक्षपुत्र और अश्वमेध पुत्रों के दिये हुए अश्वों के साथ, मैंने ग्रहण किया है।

ऐषुचेतद्वृषण्वत्यन्तर्ऋज्रेष्वरुषी । स्वभीशुःकशावती ॥ १८ ॥

आ । एषु । चेतत् । वृषण्ऽवती । अन्तः । ऋज्रेषु । अरुषी
सुऽअभीशुः । कशाऽवती ॥ १८ ॥

एष्वृज्रेषु ऋजुगामिष्वश्वेषु अन्तर्मध्ये आचेतत् आज्ञायते । का वृषण्वतीवर्षकैः पुमश्वै स्तद्वती । अरुषी आरोचमाना स्वभीशुः शोभनप्रग्रहा कशावती दृप्ता वडवा ज्ञायते ॥ १८ ॥

१८. दीप्तिवाली, वर्षक अश्वों से युक्त और सुन्दर लगामोंवाली घोड़ियाँ भी इन घोड़ों में हैं।

अथैकोनविंशी–

नयुष्मेवाजबन्धवोनिनित्सुश्चनमर्त्यः । अवद्यमधिदीधरत् ॥ १९ ॥ ४ ॥

न । युष्मे इति । वाजऽबन्धवः । निनित्सुः । चन । मर्त्यः ।
अवद्यम् । अधि । दीधरत् ॥ १९ ॥ ४ ॥

हे वाजबन्धवः अन्नबन्धवः अन्नप्रदाः एवं पुत्राणां पितृपुत्ररूपाणां षण्णां वा संबोधनं हे राजानः युष्मे युष्मासु निनित्सुश्चन निन्दकोपि मर्त्योमनुष्यः अवद्यं निंदा नाधिदीधरत् नान्वधारयत् नारोपयति युष्मासु । अतःअनिन्द्या यूयमिति दातॄणां स्तुतिः ॥ १९ ॥

१९. हे अन्नदाता छः राजाओ, निन्दक मनुष्य भी तुम्हारे प्रति निन्दा का आरोप नहीं करते।

॥ इति षष्ठस्य पञ्चमे चतुर्थोवर्गः ॥ ४ ॥

प्रप्रवइत्यष्टादशर्चं दशमं सूक्तं प्रियमेधस्याङ्गिरसस्यार्षं द्वितीया नदंवइत्येषा चतुःसप्रकोष्णिक् चतुर्थ्याद्यास्तिस्रोगायत्र्यः एकादशीषोडश्यौ पंक्ती शिष्टादशानुष्टुभः । अपादिन्द्रइत्यर्धर्चःवैश्वदेवः वरुणइदिहेत्याद्यास्त्रयोर्धर्चा वरुणदेवताकाः। शिष्टाऐन्द्र्यः । तथाचानुक्रान्तम्—प्रप्रझूनानुष्टुभं द्विबृहत्यन्तं द्वितीयोष्णिक् चतुर्थ्याद्यास्तिस्रोगायत्र्यः षोळश्येकादश्यौपङ्क्ती अपाद्वैश्वदेवोर्धर्चस्त्रयोवारुणाइति । आद्यस्तृचः षोडशिशस्त्रे आनुष्टुभः सूत्रितश्च—प्रप्रवस्त्रिष्टुभमिषमर्चतप्रार्चतेति ।

प्रप्रवस्त्रिष्टुभमिषंमन्दद्वीरायेन्दवे ।
धियावोमेधसातयेपुरन्ध्याविवासति ॥ १ ॥

प्रऽप्र । वः । त्रिऽस्तुभम् । इषम् । मन्दतऽवीराय । इन्दवे ।
धिया । वः । मेधऽसातये । पुरम्ऽध्या । आ । विवासति ॥ १ ॥

हे अध्वर्य्वादयो वो यूयं प्रथमार्थेद्वितीया त्रिष्टुभं स्तोभत्रयोपेतमिषमन्नं प्रप्र अपरः प्रशब्दः पूरणः प्रभरतेतिशेषः उपसर्गश्रुतेर्योग्यक्रियाध्याहारः।कस्मै मन्दद्वीराय योवीरान् हर्षयति समन्दद्वीरः तस्मै इन्दवे इन्द्राय इन्धतेरैश्वर्यकर्मण इदंरूपं।अथवा फलैर्वृष्टिभिर्वा उनत्तीतीन्दुरिन्द्रस्तस्मै सचेन्द्रो वो युष्मान्मेधसातये यज्ञसंभजनाय पुरन्ध्या बहुप्रज्ञया धिया कर्मणा आविवासति अभिमतफलयोजनेन सत्करोतीत्यर्थः ॥ १ ॥

१. अध्वर्युओ, जो वीरों के लिए हर्ष उत्पन्न करते हैं, उन्हीं इन्द्र के लिए तुम लोग तीन स्तोभों (स्तम्भनों) से युक्त अन्न का संग्रह करो। यज्ञ-भोग के लिए प्रज्ञा से युक्त कर्म के द्वारा इन्द्र तुम्हारा सत्कार करते हैं।

महाव्रते निष्केवल्ये नदंवइत्येषा विहरणीया तथैवपञ्चमारण्यके सूत्रितंच—नदंवओदतीनामित्येतयैतानि व्यतिषजतीति ।

सैषा द्वितीया—

नदंवओदतीनांनदंयोयुवतीनाम्। पतिंवोअघ्न्यानांधेनूनामिषुध्यसि॥२॥

नदम्। वः। ओदतीनाम्। नदम्। योयुवतीनाम्।
पतिम्। वः। अघ्न्यानाम्। धेनूनाम्। इषुध्यसि॥ २॥

ओदतीनां ओदत्यउषसः। ओदती भास्वतीति तन्नामसुपाठात्। उषसां नदं उत्पादकमित्यर्थः इन्द्रेण ह्युषसउत्पद्यन्ते इन्द्रस्यैव सूर्यत्वात् विवस्वदिन्द्र युग्म्यइतिहि द्वादशादित्यमध्ये इन्द्रः पठितः तादृशमिन्द्रं हे यजमाना वो युष्मदर्थं। आह्वयत इत्यर्थः। तथा योयुवतीनां सर्वत्र मिश्रयन्तीनां नदीनां नदं शब्दयितारं वो युष्मदर्थं आह्वयामि। अघ्न्यानां अहन्तव्यानां गवां पतिं आह्वये। अथप्रत्यक्षकृता हे यजमान त्वं धेनूनां क्षीरादिना प्रीणयित्रीणां गवामिषुध्यस्यन्नमिच्छसि॥ २॥

२. उषाओं के उत्पादक, नदियों के शब्द-जनक और अवध्य गौओं के पति इन्द्र को बुलाओ। यजमान दुग्धदात्री गौ से उत्पन्न अन्न की इच्छा करता है।

अग्निहोत्रे पूर्वाहुतौ हुतायां ताअस्येत्यनयोत्तरामाहुतिं कांक्षमाणस्तिष्ठेत्। तथाचसूत्रितम्—ताअस्यसूददोहसइति पूर्वामाहुतिमुपोत्थायोत्तरां कांक्षेतेति। महाव्रते निष्केवल्येप्येषा तथैव पञ्चमारण्यके सूत्रितं—ताअस्यसूददोहइत्येतदादिः सूददोहाः सूददोहाइति।

सैषा तृतीया—

ताअस्यसूददोहसःसोमंश्रीणन्तिपृश्नयः।
जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः॥ ३॥

ताः। अस्य। सूदऽदोहसः। सोमम्। श्रीणन्ति। पृश्नयः।
जन्मन्। देवानाम्। विशः। त्रिषु। आ। रोचने। दिवः॥ ३॥

ताः प्रसिद्धाः सूददोहसः सूदइति कूपनाम तत्सदृशदोहनाः पृश्नयः पृश्निवर्णाः गावोस्येन्द्रस्य सोमं श्रीणन्ति मिश्रयन्त्याशिरेण। कदा त्रिषु त्रिष्वपि सवनेषु। गावो विशेष्यन्ते देवानां जन्मन् जन्मस्थाने दिवीति शेषः दिवआदित्यस्य आरोचने आरोचमाने अनेन द्यौर्विशेष्यते तस्मिन् स्थाने विशोनिविशन्त्यः। यज्ञार्थोपयुक्तानां गवां द्युप्राप्तिः प्रसिद्धा॥ ३॥

३. देवों के जन्मस्थान और आदित्य के रुचिकर प्रदेश (द्युलोक) में जो जा सकती हैं और जिनके दूध से कूप पूर्ण होता है, वे गायें तीनों सवनों में इन्द्र के सोम को मिश्रित करती हैं।

द्वितीयेपर्याये मैत्रावरुणशस्त्रे अभिप्रगोपतिमिति तृचोनुरूपः सूत्रितंच—अभित्वावृषभासुतेभिप्रगोपतिंगिरेति।

अथ चतुर्थी—

अभिप्रगोपतिंगिरेन्द्रमर्चयथाविदे। सूनुंसत्यस्यसत्पतिम् ॥ ४ ॥

अभि। प्र। गोऽपतिम्। गिरा। इन्द्रम्। अर्च। यथा।

विदे। सूनुम्। सत्यस्य। सत्ऽपतिम् ॥ ४ ॥

गोपतिं गवांस्वामिनमिन्द्रं अभिप्रार्च प्रकर्षेण पूजय गिरा स्तुत्या यथा विदे सयथा स्वात्मानं स्तुतप्रकारं जानाति यथावा यागं प्रतिगन्तव्यमिति जानाति तथार्चेति। कीदृशमिन्द्रं सत्यस्य यज्ञस्य सत्यस्यवा सूनुं पुत्रं तत्रानुरक्तत्वात् सूनुरित्युपचर्यते सत्पतिं सतां यजमानानां पालकम् ॥ ४ ॥

४. इन्द्र गौओं के स्वामी, यज्ञ के पुत्र और साधुओं के पालक हैं। इन्द्र जिस प्रकार यज्ञ के गन्तव्य स्थान को जानें, उस प्रकार स्तुति-वन्वनों से उनकी पूजा करो।

अथ तृचे द्वितीया सूक्ते पञ्चमी—

आहरयःससृज्रिरेरुषीरधिबर्हिषि। यत्राभिसंनवामहे ॥ ५ ॥ ५॥

आ। हरयः। ससृज्रिरे। अरुषीः। अधि। बर्हिषि।

यत्र। अभि। सम्ऽनवामहे ॥ ५ ॥ ५ ॥

हरयो हरितवर्णाअश्वाः अरुषीरारोचमानाः अधिबर्हिषि अधीति सप्तम्यर्थानुवादी बर्हिष्यास्तृते आससृज्रिरे आसृजन्तु यत्र यस्मिन्बर्हिषि स्थितमिन्द्रमभिसन्नवामहे अभिसंस्तुमः ॥ ५ ॥

५. हरि नाम के अश्व, दीप्तियुक्त होकर, कुश के ऊपर इन्द्र को छोड़ो। हम कुश-स्थित इन्द्र की स्तुति करेंगे।

इन्द्रायगावआशिरंदुदुह्रेवज्रिणेमधु। यत्सीमुपह्वरेविदत् ॥ ६ ॥

इन्द्राय। गावः। आऽशिरम्। दुदुह्रे। वज्रिणे।

मधु। यत्। सीम्। उपऽह्वरे। विदत् ॥ ६ ॥

इन्द्राय गावआशिरं आश्रयणसाधनं पयआदिकं मधु मदकरं दुदुह्रे दुहते। कीदृशाय वज्रिणे वज्रयुक्तायेन्द्राय यद्यदा उपह्वरे समीपेवर्तमानं मधु सोमरसं सीं सर्वतोविदत् लभते तदा ॥ ६ ॥ ६. इन्द्र जिस समय चारों ओर से समीप में वर्त्तमान मधु (सोमरस) को प्राप्त करते हैं, उस समय गायें वज्री इन्द्र के लिए सोम में मिलाने के उपयुक्त मधु (दुग्ध आदि) का वितरण वा दोहन करती हैं।

षोडशिशस्त्रस्योद्वद्ब्रध्नस्येत्येषान्त्या सूक्तिश्च—उद्वद्ब्रध्नस्यविष्टपमित्येषा परिधानीयेति।

उद्यद्ब्रध्नस्यविष्टपंगृहमिन्द्रश्चगन्वहि ।
मध्वःपीत्वासंचेवहित्रिःसप्तसख्युःपदे ॥ ७ ॥

उत् । यत् । ब्रध्नस्य । विष्टपम् । गृहम् । इन्द्रः । च । गन्वहि ।
मध्वः । पीत्वा । सचेवहि । त्रिः । सप्त । सख्युः । पदे ॥ ७ ॥

यद्यदा ब्रध्नस्य महन्नाम ब्रध्नइति महत आदित्यस्य विष्टपं स्थानं गृहं इन्द्रश्चाहं चोभौ उद्गन्वहि उद्गच्छावः । तदानीं मध्वो मधुरं सोमरसं पीत्वा सचेवहि संसृष्टौ भवेव । कुत्र सख्युःपदे सर्वेषां सखिभूतस्यादित्यस्य त्रिःसप्तेत्यनेन देवलोकानामुत्तममेकविंशस्थानमुच्यते आदित्यस्यैकविंशत्वात् । तथाचब्राह्मणम्—द्वादशमासाःपञ्चर्तवस्त्रयइमेलोका असावादित्यएकविंशईति । तादृशे एकविंशस्थाने सचेवहीति ॥ ७ ॥

७. जिस समय इन्द्र और मैं सूर्य के गृह में जाते हैं, उस समय सखा आदित्य के इक्कीस स्थानों (द्वादश मास, पांच ऋतुएँ, तीन लोक और एक आदित्य) में मधुर सोमरस का पान करके हम मिलें।

पूर्वोक्तएवशस्त्रे अर्चतेतिद्वितीयआनुष्टुभस्तृचः । सूत्रितश्च—प्रप्रवस्त्रिष्टुभमिषमर्चतप्रार्चतेति ।

अस्मिंस्तृचे प्रथमा सूक्तेष्टम्येषा—

अर्चतप्रार्चतप्रियमेधासोअर्चत ।
अर्चन्तुपुत्रकाउतपुरंनधृष्ण्वर्चत ॥ ८ ॥

अर्चत । प्र । अर्चत । प्रियऽमेधासः । अर्चत । अर्चन्तु ।
पुत्रकाः । उत । पुरम् । न । धृष्णु । अर्चत ॥ ८ ॥

हे अध्वर्य्वादयो यूयं इन्द्रं अर्चत पूजयत स्तुत्याप्रार्चत प्रकर्षेणार्चतेन्द्रमेव । हे प्रियमेधासः प्रियमेधसम्बन्धिनः तद्गोत्रा यूयमर्चतेन्द्रं पुत्रका पुत्राअप्यर्चन्त्विन्द्रं । उतापिच पुरंन धृष्णु यथा पुरं धर्षणशीलं अर्चन्ति तादृशमिन्द्रमर्चत ॥ ८ ॥

८. अध्वर्युओ, तुम लोग इन्द्र की पूजा करो। विशेष रूप से पूजा करो। प्रियमेध-वंशीयो, जैसे पुर-विदारक की पूजा पुत्र लोग करते हैं, वैसे ही इन्द्र की पूजा करो।

अथ तृचे द्वितीया सूक्ते नवमी—

अवस्वरातिगर्गरोगोधापरिसनिष्वणत् ।
पिङ्गापरिचनिष्कददिन्द्रायब्रह्मोद्यतम् ॥ ९ ॥

---

१ ऐ० ब्रा० १. ३०. ।

अव॑ । स्व॒रा॒ति॒ । गर्ग॑रः । गो॒धा । परि॑ । स॒नि॒स्व॒न॒त् ।
पिङ्गा॑ । परि॑ । च॒नि॒स्क॒द॒त् । इन्द्रा॑य । ब्रह्म॑ । उत्ऽय॑तम् ॥ ९ ॥

गर्गरो गर्गरध्वनियुक्तोवा वाद्यविशेषो युद्धे अवस्वराति भयंशब्दयति । गोधा हस्तघ्नः परि परितः सनिष्वणत् स्वनति भृशं पिंगा पिंगवर्णाज्यापि परिचनिष्कदत् परिस्कन्दते यस्मादेवं युद्धः संनद्धः अतइन्द्राय ब्रह्मपरिवृढंकर्म स्तुतिलक्षणं उद्यतं भवत्वितिशेषः ॥ ९ ॥

९. जुझाऊ बाजा भयंकर रीति से घहरा रहा है। गोधा (हस्तघ्न नाम का बाजा) चारों ओर शब्द करता है। पिङ्गल वर्ण की ज्या शब्द कर रही है। इसलिए इन्द्र के उद्देश्य से स्तुति करो।

आयत्पतं॑न्त्ये॒न्य॑ःसु॒दु॒घा॒अन॑पस्फुरः ।
अ॒प॒स्फु॒रं॑गृभायत॒सोम॒मिन्द्रा॑य॒पात॑वे ॥ १० ॥ ६ ॥

आ । यत् । पत॑न्ति । ए॒न्य॑ः । सु॒ऽदु॒घा॑ः । अन॑पऽस्फुरः ।
अ॒प॒ऽस्फु॒र॑म् । गृ॒भा॒य॒त॒ । सोम॑म् । इन्द्रा॑य । पात॑वे ॥ १० ॥ ६ ॥

यद्यदा एन्यः एतवर्णाः शुभ्रवर्णानद्यः आपतन्ति आगच्छन्ति सर्वतः प्रवहन्ति । कीदृश्यः सुदुघाः सुदोहा अनपस्फुरः अपस्फुरो अपस्फुरा अपवृद्धाः अताद्दश्यः अनपस्फुरः अत्यन्तंप्रवृद्धाइत्यर्थः । यद्वा सुदुघाः प्रवृद्धा एतवर्णागावो यदा पयआयर्थायापतन्ति तदा अपस्फुरं अत्रापशब्दो धात्वर्थानुवादी अत्यन्तं प्रवृद्धं सोममिन्द्राय पातवे पातुं गृभायत ग्रहणंकुरुत । अथवा अनपस्फुरइत्यत्रापशब्दोनुवादी धात्वर्थस्य । तथासत्ययमर्थः—यदाएन्योनद्यः अनपस्फुरःअप्रवृद्धोदका आपतन्ति वृष्टिरल्पा यदाभवति तदा सोममिन्द्रार्थं संपादयतेति॥१०॥

१०. जिस समय शुभ्रवर्ण और सुन्दर दोहनवाली नदियाँ अतीव प्रवृद्ध होती हैं, उस समय इन्द्र के पान के लिए अतीव प्रवृद्ध सोम को ले आओ।  ॥ इति षष्ठस्य पञ्चमे षष्ठोवर्गः ॥ ६ ॥

अथैकादशी—

अपा॒दिन्द्रो॒अपा॑द॒ग्निर्विश्वे॑दे॒वाअ॑मत्सत ।
वरु॑ण॒इदि॒हक्ष॑य॒त्तमापो॑अ॒भ्य॑नूषतव॒त्सं॑सं॒शिश्व॑रीरिव॥११॥

अपा॑त् । इन्द्र॑ः । अपा॑त् । अ॒ग्निः । विश्वे॑ । दे॒वाः । अ॒म॒त्स॒त॒ ।
वरु॑णः । इत् । इ॒ह । क्ष॒य॒त् । तम् । आप॑ः । अ॒भि ।
अ॒नू॒ष॒त॒ । व॒त्सम् । सं॒शिश्व॑रीःऽइव ॥ ११ ॥

इन्द्रोपादपिबत् सोममग्निरप्यपिबत् विश्वेदेवा अप्यमत्सत तृप्ता अभवन् सोमपानेन वरुणइव वरुणोपीहास्मिन् यागगृहे क्षयत् निवसतु सोमपानार्थं निवसन्तं तं आपोप्यभ्यनूषत उदकान्यापनशीलाः स्तुतयोवा अभ्यस्तुवन्। किमिव वत्सं स्वीयं संशिश्वरीः संशिश्वर्यः संगच्छमाना गावइव। तायथा धावत्यो हंभारवं कुर्वन्ति तद्वत्॥ ११॥

११. इन्द्र ने सोम का पान किया, अग्नि ने भी पान किया। विश्वदेवगण तृप्त हुए। इस गृह में वरुण निवास करें। बछड़ेवाली गायें जैसे बछड़े के लिए शब्द करती हैं, वैसे ही उकथ वरुण की स्तुति करते हैं।

सुदेवोअसिवरुणयस्यंतेसप्तसिन्धवः।
अनुक्षरन्तिकाकुदंसूर्म्यंसुषिरामिव॥ १२॥

सुऽदेवः। असि। वरुण। यस्य। ते। सप्त। सिन्धवः।
अनुऽक्षरन्ति। काकुदम्। सूर्म्यम्। सुषिराम्ऽइव॥ १२॥

हे वरुण जलाभिमानिन् देव त्वं सुदेवोअसि यस्यसुदेवस्य ते तव काकुदं तालु समुद्राख्यं सप्तसिन्धवो गंगाद्याः सप्तनद्योऽनुक्षरन्ति जिह्वायां सर्वदा स्रवन्ति। दृष्टान्तः—सूर्म्यं सुषिरामिव यथा सूर्यं प्रतिरश्मिजालं तद्वत्॥ १२॥

१२. वरुण (जलाभिमानी देव), तुम सुदेव हो। जैसे किरणें सूर्य के अभिमुख धावित होती हैं, वैसे ही तुम्हारे तालु पर गङ्गा आदि सातों नदियां अनुक्षण क्षरित होती हैं।

षोडशिशस्त्रे योव्यतीनिति तृतीयआनुष्टुभस्तृचः सूत्रितश्च—योव्यतीरँफाणयदितितृच आनुष्टुभइति। तृचे प्रथमा सूक्ते त्रयोदशी—

योव्यतीँरफाणयत्सुयुक्ताँउपदाशुषे।
तक्कोनेतातदिद्वपुरुपमायोअमुच्यत॥ १३॥

यः। व्यतीन्। अफाणयत्। सुऽयुक्तान्। उप। दाशुषे। तक्वः।
नेता। तत्। इत्। वपुः। उपऽमा। यः। अमुच्यत॥ १३॥

यइन्द्रोव्यतीन् विविधगमनान् सुयुक्तान् सुष्ठुरथे संबद्धान् अश्वान् दाशुषे हविर्दात्रे यजमानाय गन्तुं प्राप्तुं उप अफाणयत् उपगमयति फणतिर्गतिकर्मा। यदेवंकरोति तदिव तदानीमेव तक्वः तक्वतिर्गतिकर्मा यज्ञगमनशीलो नेताउदकस्य फलस्य वा नायक इन्द्रोवपुरुदकं उत्पादयतीतिशेषः यइन्द्र उपमा उपमानभूतः अमुच्यतअन्यैर्वृष्टिनिवारकै रसुरादिभिर्मुक्तोभवति॥ १३॥

१३. जो इन्द्र विविधगामी और रथ में सम्बद्ध अश्वों को हविर्दाता यजमान के पास जाने को छोड़ देते हैं, जो इन्द्र उपमा के स्थल हैं और जिनके लिए सभी मार्ग दे देते हैं, वही इन्द्र यज्ञगमन के समय में सबके नेता होते हैं।

अथ तृचे द्वितीया सूक्ते चतुर्दशी—

अतीदुंशक्रओहतइन्द्रोविश्वाअतिद्विषः ।
भिनत्कनीनंओदनंपच्यमानंपरोगिरा ॥ १४ ॥

अति । इत् ।। ऊँ इति । शक्रः । ओहते । इन्द्रः । विश्वाः ।
अति । द्विषः । भिनत् । कनीनः । ओदनम् ।
पच्यमानम् । परः । गिरा ॥ १४ ॥

अयमिन्द्रः शक्रः शक्तः सन् अतीद्वोहते अतिक्रम्य गच्छत्येव संग्रामे निरोधकान् शत्रून् । तदेवाह—अयमिन्द्रो विश्वाः द्विषो द्वेष्टॄन् शत्रूनति अतिक्रम्य गच्छति। कनीनः कमनीयः परोमेघानां परस्ताद्वर्तमान इन्द्रओदनं मेघनामैतत् मेघं भिनत् अभिनत् भिनत्ति वृष्ट्यर्थं । कीदृशं गिरा माध्यमिकयावाचा स्तनितलक्षणया पच्यमानं वज्रनिर्घोषेण ताड्यमानमित्यर्थः ॥ १४ ॥

१४. शक्र (इन्द्र) युद्ध में निरोधक शत्रुओं को लाँघकर जाते हैं। सारे द्वेषी शत्रुओं को अतिक्रम करके जाते हैं। कमनीय और उत्कृष्ट इन्द्र वाक्य-द्वारा ताड़न करके मेघ को फाड़ते हैं।

अर्भकोनकुमारकोधितिष्ठंनवंरथम् ।
सपक्षन्महिषंमृगंपित्रेमात्रेविभुक्रतुम् ॥ १५ ॥

अर्भकः । न । कुमारकः । आधि । तिष्ठत् । नवम् । रथम् ।
सः । पक्षत् । महिषम् । मृगम् । पित्रे । मात्रे । विभुऽक्रतुम् ॥ १५ ॥

अयमिन्द्रः अर्भकोन अल्पशरीरः कुमारकः कुमारकइव पित्रे मात्रे सयथाधितिष्ठति तद्वत् नवं स्तुत्यं रथमधितिष्ठदधितिष्ठति सइन्द्रो महिषं महान्तं मृगं मृगवदितस्ततो धावन्तं सर्वैर्मृग्यं वा विभुक्रतुं बहुकर्माणं मेघं पक्षत् पचति वृष्ट्यभिमुखं करोतीत्यर्थः ॥ १५॥

१५. अल्प-शरीर कुमार के समान यह इन्द्र नये रथ पर अधिष्ठान करते हैं। माता-पिता के सामने इन्द्र महान् मृग के समान हैं। बहुकर्मा इन्द्र मेघ को वृष्टि की ओर करते हैं।

सैषा षोडशी—

आतूसुशिप्रदंपतेरथंतिष्ठाहिरण्ययम् ।
अधद्युक्षंसचेवहिसहस्रपादमरुषंस्वस्तिगामनेहसम्॥१६॥

आ । तु । सु॒ऽशि॒प्र॒ । द॒म्ऽप॒ते॒ । रथ॑म् । ति॒ष्ठ॒ । हि॒र॒ण्यय॑म् । अध॑ ।
द्यु॒क्षम् । स॒चे॒व॒हि॒ । स॒हस्र॑ऽपादम् । अ॒रु॒षम् ।
स्व॒स्ति॒ऽगाम् । अ॒ने॒हस॑म् ॥ १६ ॥

हे सुशिप्र सुहनो हे दंपते गृहस्वामिन् अत्र गृहोरथः तस्यस्वामिन् तु त्वं तावद्रथमातिष्ठ हविः स्वीकरणानन्तरं पश्चादहमारोहामीतिभावः । कीदृशं हिरण्ययं हिरण्मयं अध तवारोहणानन्तरं अहमथारुह्य उभौ सचेवहि संगच्छेवहि संगतौ भवेव । किंतत् द्युक्षं दीप्तं रथं कीदृशं सहस्रपादं बहुपादं अरुषमारोचनं स्वस्तिगां कुशलगमनं अनेहसमपापम् ॥ १६ ॥

१६. सुन्दर हनुवाले और रथ के स्वामी इन्द्र, स्वच्छन्द-गन्ता, दीप्त, बहुपाद, हिरण्मय और निष्पाप रथ पर चढ़ो। अनन्तर हम दोनों मिलेंगे।

पूर्वाह्णे प्रवर्ग्ये तंघेमित्थेत्येषा । सूत्रितश्च—तंघेमित्थानमस्विनइति प्रागाथींपूर्वाह्णइति ।

सैषा सप्तदशी—

तंघे॒मि॒त्थान॑म॒स्विन॒उप॒स्व॒राज॑मासते ।
अर्थं॑चिदस्य॒सुधि॑त॒ंयदे॑त॑वआव॒र्तय॑न्तिदा॒वने॑ ॥ १७ ॥

तम् । घ॒ । ई॒म् । इ॒त्था । न॒म॒स्विनः॑ । उप॑ । स्व॒ऽराज॑म् ।
आ॒स॒ते॒ । अर्थ॑म् । चि॒त् । अ॒स्य॒ । सु॒ऽधि॑तम् । यत् ।
एत॑वे । आ॒ऽव॒र्तय॑न्ति । दा॒वने॑ ॥ १७ ॥

तं घ तं खल्वीमेनमिन्द्रं इत्था इत्थमनेन प्रकारेण नमस्विनोऽन्नवन्तः स्तुतिमन्तोवाध्वर्य्वादयः स्वराजं स्वयं राजमानं वा उपासते सेवन्ते । तथा कृत्वाअर्थंचित् अरणीयं धनं सुधितं सुष्ठु स्थापितं अस्येन्द्रस्य संबन्धिनं प्राप्नुवन्तीतिशेषः। कदेत्याह—यद्यदा एतवे अस्येन्द्रस्य गमनाय स्वयं प्राप्तुंवा दावने हविर्दानायावर्तयन्ति स्तुतयः तदेत्यर्थः । अथवा अश्वावा आवर्तयन्ति तदेत्यर्थः ॥ १७ ॥

१७. इस प्रकार दीप्त और विराजमान इन्द्र की अन्नवान् लोग सेवा करते हैं। अनन्तर जिस समय गमन और हव्यदान के लिए स्तुतियाँ इन्द्र को आवर्त्तित करती हैं, उस समय सुस्थापित धन प्राप्त होता है।

अथाष्टादशी—

अनु॑प्र॒त्नस्यौक॑सःप्रि॒यमे॑धासएषाम् ।
पूर्वा॒मनु॒प्रय॑तिंवृ॒क्तब॑र्हिषोहि॒तप्र॑यसआशत ॥ १८ ॥ ७ ॥

अनु॑ । प्र॒त्नस्य॑ । ओक॑सः । प्रि॒यऽमे॑धासः । ए॒षाम् ।

पूर्वाम् । अनु । प्रऽयंतिम् । वृक्तऽबर्हिषः ।
हितऽप्रयसः । आशत ॥ १८ ॥ ७ ॥

अनया स्तुतिमुपसंहरति एषां देवानामिन्द्रादीनां प्रत्नस्य पुराणस्यौकसः स्थानस्य पुराणं स्थानं प्रियमेधासः प्रियमेधा अन्वाशत अनुप्राप्ताः । कीदृशाः प्रियमेधाः पूर्वां मुख्यां प्रयतिं प्रदानमनुलक्षीकृत्य वृक्तबर्हिषः स्तीर्णदर्भाः हितप्रयसः आसादितसोमादिहविष्काः ॥ १८ ॥

१८. प्रियमेध-वंशीयों ने इन्द्र आदि के प्राचीन स्थानों को प्राप्त किया है। प्रियमेधों ने मुख्य प्रदान के लिए कुश फैलाया है और हव्य-स्थापन किया है।

॥ इति षष्ठस्य पञ्चमे सप्तमोवर्गः ॥ ७ ॥

॥ इत्यष्टमे मण्डले सप्तमोनुवाकः ॥ ७ ॥

अष्टमेनुवाके एकादशसूक्तानि तत्र योराजेति पञ्चदशर्चं प्रथमं सूक्तं । अत्रानुक्रमणिका—योराजापञ्चोना पुरुहन्मा बार्हतं त्रिप्रगाथाद्युष्णिगनुष्टुप्पुरउष्णिगन्तमिति । पुरुहन्माऋषिः सच क्वचित्कथंचिदविशेषितमिति परिभाषयांगिरसः आद्यातृतीयापञ्चम्योबृहत्यः द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः सप्तम्याद्याः षट्बृहत्यः त्रयोदशीपुरउष्णिक् आद्यद्वादशकाद्यष्टका आद्यश्चेत्पुरउष्णिगितिहि तल्लक्षणं । इन्द्रोदेवता । महाव्रते निष्केवल्ये बार्हततृचाशीतावादित एकादशर्चः तथाचपञ्चमारण्यकेसूत्रितं—योराजाचर्षणीनामित्येकादशेति ।

तत्र प्रथमा—

योराजाचर्षणीनांयातारथेभिरध्रिगुः ।
विश्वासांतरुतापृतनानांज्येष्ठोयोवृत्रहागृणे ॥ १ ॥

यः । राजा । चर्षणीनाम् । याता । रथेभिः । अध्रिऽगुः । विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥ १ ॥

यइन्द्रश्चर्षणीनां मनुष्याणां राजा स्वामीरथेभिः रथैः याता गन्ताच अध्रिगुरधृतगमनोन्यैः विश्वासां पृतनानां सेनानां तरुता तारकः यश्च ज्येष्ठः गुणैर्ज्यायान् यश्च वृत्रहा वृत्रं हतवान् तं महाभागमिन्द्रं गृणे स्तौमि ॥ १ ॥

१. जो मनुष्यों के राजा हैं, जो रथ पर जाते हैं, जिनके गमन में कोई बाधक नहीं हो सकता और जो सारी सेना के उद्धारक हैं, उन्हीं ज्येष्ठ और वृत्रघ्न इन्द्र की मैं स्तुति करता हूँ।

इन्द्रंतंशुंभपुरुहन्मन्नवसेयस्यद्विताविधर्तरि ।
हस्तायवज्रःप्रतिधायिदर्शतोमहोदिवेनसूर्यः ॥ २ ॥

इन्द्रम् । तम् । शुम्भ । पुरुऽहन्मन् । अवसे । यस्य । द्विता ।
विऽधर्तरि । हस्ताय । वज्रः । प्रति । धायि । दर्शतः ।
महः । दिवे । न । सूर्यः ॥ २ ॥

हे पुरुहन्मन् ऋषे त्वं तमिन्द्रं शुंभ हविःप्रदानादिनालंकुरु । किमर्थं अवसे रक्षणाय एवमात्मना स्वात्मानं संबोध्य ब्रवीति— यस्य तव विधर्तरि विधारके इन्द्रे द्विता द्वित्वमस्ति औग्र्यमनौग्र्यं तव शत्रून् हन्तुमुग्रत्वं त्वदनुग्रहायानौग्र्यंचेति द्वैतमस्ति । तत्रौग्र्यं चिह्नं दर्शयति हस्ताय कराय हननाय शत्रूणां दर्शतो दर्शनीयः महोमहान्वज्रः प्रतिधायि प्रतिनिहितो भवति । दिवे प्रकाशाय दिवसायवा अथवा दिवि दृश्यमानः सूर्योन सूर्यइव ॥ २ ॥

२. पुरुहन्मा, तुम अपने रक्षण के लिए इन्द्र को अलंकृत करो। तुम्हारे पालक इन्द्र का स्वभाव दो प्रकार का है—उग्र और अनुग्र । इन्द्र हाथ में दर्शनीय वज्र को धारण करते हैं। वह वज्र आकाश में दिखाई देनेवाले सूर्य के समान है।

तस्मिन्नेवशस्त्रे नकिष्टमिति प्रगाथो वैकल्पिकःस्तोत्रियः सूत्रितश्च—नकिष्टंकर्मणानशत्वावहन्तोअद्रयइति ।

नकिष्टंकर्मणानशद्यश्चकारसदावृधम् ।
इन्द्रंनयज्ञैर्विश्वगूर्तमृभ्वसमधृष्टंधृष्णवोजसम् ॥ ३ ॥

नकिः । तम् । कर्मणा । नशत् । यः । चकार । सदाऽवृधम् ।
इन्द्रम् । न । यज्ञैः । विश्वऽगूर्तम् । ऋभ्वसम् ।
अधृष्टम् । धृष्णुऽओजसम् ॥ ३ ॥

तं जनं अन्योमर्षकोजनः कर्मणा हननादिव्यापारेण नकिर्नशत् नैवव्याप्नोति यइन्द्रं चकार इन्द्रमेवानुकूलं यज्ञैः साधनैः । कीदृशमिन्द्रं सदावृधं सदावर्धकं विश्वगूर्तं सर्वैःस्तुत्यं ऋभ्वसं महान्तं अधृष्टमन्यैः धृष्णवोजसं धर्षकबलम् ॥ ३ ॥

३. सर्वदा वृद्धिशील, सबके स्तुत्य, महान् और अन्यों के अभिभविता इन्द्र को जो यज्ञ के द्वारा अनुकूल करते हैं, उनके अतिरिक्त अन्य व्यक्ति कर्म के द्वारा नहीं व्याप्त कर सकते।

अथ तृचे द्वितीया सूक्ते चतुर्थी—

अषाह्ळमुग्रंपृतनासुसासहिंयस्मिन्महीरुरुज्रयः ।
संधेनवोजायमानेअनोनवुर्द्यावःक्षामोअनोनवुः ॥ ४ ॥

अषाह्ळम् । उग्रम् । पृतनासु । सुसहिम् । यस्मिन् । महीः ।
उरुऽज्रयः । सम् । धेनवः । जायमाने । अनोनवुः ।
द्यावः । क्षामः । अनोनवुः ॥ ४ ॥

अषाह्ळं असोढं उग्रमुद्गूर्णबलं पृतनासु शत्रुसेनासु सासहिं अभिभवितारं स्तौमीत्यर्थः । यस्मिन्निन्द्रे जायमाने महीर्महत्यः उरुज्रयो बहुवेगाः धेनवोहविरादिनाप्रीणयित्र्यः प्रजागावएववा समनोनवुः समस्तुवन् । नकेवलं धेनवएव अपितु द्यावोद्युलोकाः क्षामः पृथिव्यश्च समनोनवुः । तत्रत्याः सर्वेप्राणिनो नमन्तेइत्यर्थः । त्रिवृतो लोकाइति श्रुतेर्बहुवचनम् ॥४॥

४. दूसरों के लिए असहनीय, उग्र और शत्रु-सेना के विजेता इन्द्र की मैं स्तुति करता हूँ। इन्द्र के जन्म लेने पर विशाला और अत्यन्त वेगवाली गायों ने उनकी स्तुति की थी। सारे द्युलोकों और पृथिवियों ने भी स्तुति की थी।

तृतीयेहनि निष्केवल्ये वैरूपसामपक्षे यद्द्यावइति प्रगाथःस्तोत्रियः । सूत्रितश्च—यद्द्याव इन्द्रतेशतं यदिन्द्रयावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपाविति ।

यद्द्यावइन्द्रतेशतंशतंभूमीरुतस्युः ।
नत्वावज्रिन्त्सहस्रंसूर्याअनुनजातमष्टरोदसी ॥ ५ ॥ ८ ॥

यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत ।
स्युरिति स्युः । न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अनु ।
न । जातम् । अष्ट । रोदसी इति ॥ ५ ॥ ८ ॥

हे इन्द्र ते तव प्रतिमानार्थं यद्यदि द्यावोद्युलोकाः शतंस्युः तथापि नाश्नुवन्ति । उतापिच भूमीर्भूम्यः ते तवमूर्तिप्रतिबिंबाय शतंस्युः तथापि नाश्नुवन्ति । हे वज्रिन् त्वा त्वां सहस्रं सूर्या अगणिताःअपि सूर्याः नानुभवन्ति नप्रकाशयन्तीत्यर्थः । न तत्र सूर्यो भातीति श्रुतेः । किंबहुना जातं पूर्वमुत्पन्नं किञ्च अनुनाष्ट नाश्नुते । तथा रोदसी द्यावापृथिव्यौ नाश्नुवाते सर्वेभ्योतिरिच्यसइत्यर्थः । ज्यायान् पृथिव्या ज्यायानन्तरिक्षाद् ज्यायान् दिवो ज्यायानेभ्योलोकेभ्यइतिश्रुतेः ॥ ५ ॥

५. इन्द्र, यदि सौ द्युलोक हो जायें, तो भी तुम्हारा परिमाण नहीं कर सकते; यदि सौ पृथिवियाँ हो जायें, तो भी तुम्हें नहीं माप सकतीं; यदि सूर्य सौ हो जायें, तो भी तुम्हें प्रकाशित नहीं कर सकते। इस लोक में जो कुछ जन्मा है, वह और द्यावापृथिवी तुम्हारी सीमा नहीं कर सकते।

॥ इति षष्ठस्य पञ्चमेष्टमोवर्गः ॥ ८ ॥

---

१ ऐ० ब्रा० २. १७. २ कठोपनिषत्. ३ बृहदारण्यके.

अथ प्रगाथे द्वितीया सूक्ते षष्ठी–

आपंप्राथमहिनावृष्ण्यांवृषन्विश्वांशविष्ठशवंसा ।
अस्माँअंवमघवन्गोमंतिव्रजेवज्रिन्चित्राभिरूतिभिः॥६॥

आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा । शविष्ठ । शवसा ।
अस्मान् । अव । मघऽवन् । गोऽमंति । व्रजे । वज्रिन् ।
चित्राभिः । ऊतिऽभिः ॥ ६ ॥

हे शविष्ठ मघवन् बलवन् धनवन् हे वृषन् अभिमतवर्षकेन्द्र त्वं आपप्राथ आपूरयसि व्याप्नोषि ।कानि विश्वा विश्वानि सर्वाणि वृष्ण्या वर्षकाणि बलानि शत्रुसंबन्धीनि । केनसाधनेन महिना महता शवसा बलेन स्वीयेन । अथवा वृष्ण्येत्येतच्छवोविशेषणं तथा सति अभिमतवर्षकेण महता बलेनास्मदीयानि बलानि पूरयसीत्यर्थः । अथ तथाकृत्वा अस्मान्गोमति बहुभिर्गोभिर्युक्ते व्रजे शत्रुसंबन्धिनि निमित्ते सत्यस्मानव । हे वज्रिन् वज्रयुक्तेन्द्र कैः साधनैः चित्राभिर्नानाविधैरूतिभीरक्षणैरिति ॥ ६ ॥

६. अभिलाषदाता, अतीव बली, धनी और वज्री इन्द्र, महान् बल के द्वारा तुमने बल को व्याप्त किया है। हमारी गायों के निमित्त विविध रक्षणों के द्वारा हमारी रक्षा करो।

नसीमदेवआपदिषंदीर्घायोमर्त्यः ।
एतग्वाचिद्यएतंशायुयोजतेहरीइन्द्रोयुयोजते ॥७॥

न । सीम् । अदेवः । आपत् । इषम् । दीर्घायो इति दीर्घऽआयो ।
मर्त्यः । एतऽग्वा । चित् । यः । एतशा । युयोजते ।
हरी इति । इन्द्रः । युयोजते ॥ ७ ॥

हे दीर्घायो नित्येन्द्र सः अदेवः इन्द्राख्यदेवरहितो मर्त्योमरणधर्मा मनुष्यो सीं सर्वमिषमन्नं नापत् नप्राप्नोति । योमर्त्योस्येन्द्रस्य एतग्वाचित् एतवर्णाविवाश्वौ भवतोभिमतदेशगमनाय एतशा एतशौ अश्वौ युयोजते योजयति रथे यज्ञंगन्तुम् यश्चेन्द्रोहरी युयोजते तं न यः स्तौति सनप्राप्नोतीति समन्वयः ॥ ७ ॥

७. दीर्घायु इन्द्र, जो व्यक्ति श्वेतवर्ण अश्वद्वय को रथ में जोतता है, उसी के लिए इन्द्र हरिद्वय जोतते हैं। देव-शून्य व्यक्ति सारा अन्न नहीं पाता।

अथाष्टमी—

तंवोमहोमहाय्यमिन्द्रंदानायसक्षणिम् ।
योगाधेषुयआरणेषुहव्योवाजेष्वस्तिहव्यः ॥ ८ ॥

तम् । वः । महः । महाय्यम् । इन्द्रम् । दानाय । सक्षणिम् ।
यः । गाधेषु । यः । आऽअरणेषु । हव्यः । वाजेषु ।
अस्ति । हव्यः ॥ ८ ॥

हे ऋत्विजो महो महान्तो वो यूयं तं महाय्यं पूज्यं इन्द्रं दानाय सक्षणिं सचमानं परिचरतेतिशेषः । यइन्द्रो गाधेषूदकेषु हव्योस्ति आह्वातव्योभवति यश्चारणेषु गन्तव्येषु निम्नेषूदकेषु स्थलेषुवा हव्योस्ति तथा वाजेषु संग्रामेषु जयाय हव्यो ह्वातव्योस्ति भवति ॥ ८ ॥

८. ऋत्विको, महान् तुम लोग उन पूज्य इन्द्र की, दान के लिए, मिलकर पूजा करो। जल-प्राप्ति के लिए इन्द्र को बुलाना चाहिए। निम्न स्थल की प्राप्ति के लिए भी इन्द्र को बुलाना चाहिए। संग्राम में भी इन्द्र को बुलाना चाहिए।

उदूषुणोवसोमहेमृशस्वशूरराधसे ।
उदूषुमह्यैमघवन्मघत्तयउदिन्द्रश्रवसेमहे ॥ ९ ॥

उत् । ऊँ इति । सु । नः । वसो इति । महे । मृशस्व । शूर । राधसे ।
उत् । ऊँ इति । सु । मह्यै । मघऽवन् । मघत्तये । उत् ।
इन्द्र । श्रवसे । महे ॥ ९ ॥

हे वसो वासयितः शूरेन्द्र त्वं नोस्मान् सु सुष्ठु उदुमृशस्व उन्मृशस्वैव उत्थापय किमर्थं महे महते राधसेन्नाय । तथा हे शूर मघवन् इन्द्र उन्मृशस्व मह्यै महते मघत्तये धनदानाय तथोन्मृशस्वेन्द्र महे महत्यै श्रवसे कीर्त्यै ॥ ९ ॥

९. वासदाता और शूर इन्द्र, तुम हमें महान् धन की प्राप्ति के लिए उठाओ। शूर और धनी इन्द्र, महान धन और महती कीर्त्ति देने के लिए उद्योग करो।

अथ दशमी—

त्वंनइन्द्रऋतयुस्त्वानिदोनितृम्पसि ।
मध्येवसिष्वतुविनृम्णोर्वोर्निदासंशिश्नथोहथैः ॥१०॥९॥

त्वम् । नः । इन्द्र । ऋतऽयुः । त्वाऽनिदः । नि । तृम्पसि ।
मध्ये । वसिष्व । तुविऽनृम्ण । ऊर्वोः । नि ।
दासम् । शिश्नथः । हथैः ॥ १० ॥ ९ ॥

हे इन्द्र ऋतयुर्यज्ञकामस्त्वं नोस्मान् त्वानिदः त्वां योनिन्दति सः अयजनमेवनिन्दा तव तस्मादयष्टुः सकाशात् नि नितरां तृम्पसि प्रीणयसि तस्य धनमपहृत्येति भावः।एवं सन्तर्प्य हे तुविनृम्ण प्रभूतधन सत्वं तवोर्वोर्मध्येस्मान्वसिष्व ऊरुभ्यामाच्छादय रक्षार्थं। दासं उपक्षपयितारं अस्मद्द्वेषिणं पापंवा हथैर्हननैर्निशिश्नथः मारयसि। अथवा त्वद्विरोधिनं दासमसुरं निशिश्नथोहननैः ॥ १० ॥

१०. इन्द्र, तुम यज्ञाभिलाषी हो। जो तुम्हारी निन्दा करता है, उसका धन अपहृत करके तुम प्रसन्न होते हो। प्रचुर-धन इन्द्र, हमारी रक्षा के लिए तुम हमें दोनों जांघों के बीच छिपा लो। शत्रुओं को मारो। अस्त्र के द्वारा दास को मार डालो।

॥ इति षष्ठस्य पञ्चमे नवमोवर्गः ॥ ९ ॥

अन्यव्रतममानुषमयज्वानमदेवयुम् ।
अवस्वःसखादुधुवीतपर्वतःसुघ्नायदस्युंपर्वतः ॥११॥

अन्यऽव्रतम् । अमानुषम् । अयज्वानम् । अदेवऽयुम् ।
अव । स्वः । सखा । दुधुवीत । पर्वतः । सुऽघ्नाय ।
दस्युम् । पर्वतः ॥ ११ ॥

हे इन्द्र अन्यव्रतं व्यतिरिक्तकर्माणं अतएव अमानुषं मानुषाणां इन्द्रयाजिनामप्रियं अयज्वानं अयष्टारं अदेवयुं अदेवकर्मिणं पापिनं स्वः स्वर्गादवदुधुवीत अवचालयेदित्यर्थः। कः सखा पर्वतः तव सखिभूतः पर्वतऋषिः यद्यप्यन्यं देवमिष्ट्वा स्वर्गंप्रामोति सः तथापि पातयति ऋषिः। नकेवलं धूननमात्रं अपितु सुघ्नाय सुष्ठु हंत्रे मृत्यवे दस्युमुक्तलक्षणं पर्वतः प्रेरयतीति शेषः। अत इन्द्रमेवावश्यं यजध्वमिति शेषः ॥ ११ ॥

११. इन्द्र, तुम्हारे सखा पर्वत अन्यरूप-धारक, अमानुष, यज्ञ-शून्य और देव-द्वेषी व्यक्ति को स्वर्ग से नीचे फेंकते हैं। वे दस्यु को मृत्यु के हाथ में भेजते हैं।

अथ द्वादशी—

त्वंनइन्द्रासांहस्तेशविष्ठदावने ।
धानानांनसंगृभायास्मयुर्द्विःसंगृभायास्मयुः ॥ १२ ॥

त्वम् । नः । इन्द्र । आसाम् । हस्ते । शविष्ठ । दावने ।
धानानाम् । न । सम् । गृभाय । अस्मऽयुः । द्विः ।
सम् । गृभाय । अस्मऽयुः ॥ १२ ॥

हे शविष्ठ बलवन्निन्द्र त्वं नोस्मभ्यं दावने प्रदानाय आसां गवां कर्मणिषष्ठी एतागाः हस्ते गृभाय गृहाण । ग्रहणे दृष्टान्तः—धानानां न धाना भृष्टयवाः अत्रापि कर्मणिषष्ठी धाना-यथा संगृह्णाति तद्वद्गृहाण । कीदृशस्त्वं अस्मयुरस्मान् कामयमानः गृहीत्वा चास्मयुः सन् द्विः संगृभाय पुनर्द्विवारं संगृहाण ॥ १२ ॥

१२. बली इन्द्र, हमें देने के लिए भूने यव वा जौ के समान गौओं को हाथ से ग्रहण करो। तुम हमारी अभिलाषा करते हो। और भी अभिलाषा करके और भी ग्रहण करो।

सखायः क्रतुमिच्छत कथा राधाम शरस्य ।
उपस्तुतिं भोजः सूरियो अह्रयः ॥ १३ ॥

सखायः । क्रतुम् । इच्छत । कथा । राधाम । शरस्य ।
उपऽस्तुतिम् । भोजः । सूरिः । यः । अह्रयः ॥ १३ ॥

हे सखायः ऋत्विजोध्वर्य्वादयः क्रतुं कर्मेन्द्रसंबंधिनमिच्छत कर्तुं । हे सखायः शरस्य शॄहिंसायां हिंसकस्येन्द्रस्य कथा कथं राधाम साधयाम । किं उपस्तुतिं स्तोत्रं यइन्द्रोभोजः शत्रूणां भोजयिता सूरिः प्रेरकः अह्रयोऽनवनवतः शत्रूणामिति ॥ १३ ॥

१३. मित्रो, इन्द्र-सम्बन्धी और कर्म करने की इच्छा करो। हम हिंसक इन्द्र की कैसे स्तुति करेंगे ? इन्द्र शत्रुओं के भक्षक और प्रेरक हैं। वे कभी भी अवनत नहीं होते।

भूरिभिः समह ऋषिभिर्बर्हिष्मद्भिः स्तविष्यसे ।
यदित्थमेकमेकमिच्छर वत्सान्पराददः ॥ १४ ॥

भूरिऽभिः । समह । ऋषिऽभिः । बर्हिष्मत्ऽभिः । स्तविष्यसे । यत् ।
इत्थम् । एकम्ऽएकम् । इत् । शर । वत्सान् । पराऽददः ॥ १४ ॥

हे इन्द्र समह समानपूज सर्वैः पूज्येत्यर्थः भूरिभिर्बहुभिर्ऋषिभिः अतीन्द्रियज्ञैर्ऋत्वि-ग्भिः बर्हिष्मद्भिः यागवद्भिःस्तविष्यसे स्तूयसे यतः यइन्द्र इत्थं एकमेकमित् एकमेकमेव बहू-

न्वत्सान्स्तोतृभ्यः परादद: प्रयच्छसि हे शर हिंसक शत्रोः। अत्र वत्सशब्दो वत्समातॄणां गवां उपलक्षकः गाः प्रयच्छसीति ॥ १४ ॥

१४. सबके पूजनीय इन्द्र, अनेक ऋषि और हव्यदाता तुम्हारी स्तुति करते हैं। हिंसक इन्द्र, तुम एक-एक करके अनेक प्रकार से, स्तोताओं को अनेक वत्स देते हो।

कर्णगृह्यामघवाशौरदेव्योवत्संनस्त्रिभ्यआनयत्।
अजांसूरिर्नधातवे ॥ १५ ॥ १० ॥

कर्णऽगृह्य। मघऽवा। शौरऽदेव्यः। वत्सम्। नः। त्रिऽभ्यः।
आ। अनयत्। अजाम्। सूरिः। न। धातवे। १५ ॥ १० ॥

अयं मघवेन्द्रस्त्रिभ्यो हिंसकेभ्यः सकाशात् शौरदेव्यः दीव्यन्ति क्रीडन्त इतिदेवा योद्धारः शूराश्च ते देवाश्च शूरदेवाः तेषां हितः शौरदेवं युद्धं तत्संबन्धिन्योगाः युद्धे शत्रून्हत्वा तत्संबन्धिन्यइत्यर्थः। ताः वत्संन। नेतिचार्थे वत्ससहिता अस्मभ्यं कर्णगृह्य कर्णेगृहीत्वा आनयदानयतु। सूरिर्न प्रेरकः स्वामीव धातवे पानायाजां यथा सआनयति कर्णेगृहीत्वा तद्वदिति ॥ १५ ॥

१५. ये ही धनी इन्द्र तीन हिंसकों से युद्ध में जीती हुई गायों और बछड़ों को कान पकड़कर हमारे पास ले आवें। इसी प्रकार पीने के लिए स्वामी बकरी को कान पकड़कर ले आता है।

॥ इति षष्ठस्य पंचमे दशमोवर्गः ॥ १० ॥

त्वंनोअग्नइति पञ्चदशर्चं द्वितीयं सूक्तं सुदीतिपुरुमीळ्हावृषी तयोरन्यतरोवा आदौ नवगायत्र्यः दशमीद्वादशीचतुर्दश्योबृहत्यः एकादशीत्रयोदशीपञ्चदश्यःसतोबृहत्यः अग्निर्देवता। तथाचानुक्रान्तम्—त्वंनः सुदीति पुरुमीळ्हौ तयोर्वान्यतर आग्नेयंतु त्रिप्रगाथान्तमिति। प्रातरनुवाके आग्नेयेक्रतौ गायत्रे छन्दसि आश्विनशस्त्रे आदितोनवर्चः। तथाचसूत्रितम्—त्वंनो अग्नेमहोभिरिति नवेति।

तत्र प्रथमा—

त्वंनोअग्नेमहोभिःपाहिविश्वस्याअरातेः।
उतद्विषोमर्त्यस्य ॥ १ ॥

त्वम्। नः। अग्ने। महःऽभिः। पाहि। विश्वस्याः। अरातेः।
उत। द्विषः। मर्त्यस्य ॥ १ ॥

हे अग्ने त्वं नोस्मान् महोभिः पूजाभिः महद्भिर्धनैर्वा पाहि रक्ष । कस्य महोभिर्विश्वस्याः बहुविधस्य अरातेरदातुः सकाशात् अदानाद्वा पाहि त्वमेव महद्धनं दत्वा अदातुरदानाद्वा सकाशाद्रक्षेत्यर्थः । यद्वा महोभिर्युक्तस्त्वमिति योज्यम् । उत अपिच द्विषोद्वेष्टुर्मर्त्यस्य मर्त्यात्सकाशात्पाहि अस्मभ्यं बलं दत्वेति भावः । अथवा मर्त्यस्यद्विषो द्वेषाद्रक्षेति संबन्धः । अरातेरित्यस्य अदानादिति पक्षे तत्रापि मर्त्यस्यादानादिति संबन्धनीयम् ॥ १ ॥

१. दान-शून्य अनेक व्यक्तियों से लब्ध महाधन के द्वारा तुम हमें पालित करो। शत्रुओं के हाथ से भी हमें बचाओ।

नहिमन्युःपौरुषेयईशेहिवःप्रियजात ।
त्वमिदसिक्षपावान् ॥ २ ॥

नहि । मन्युः । पौरुषेयः । ईशे । हि । वः । प्रियऽजात ।
त्वम् । इत् । असि । क्षपाऽवान् ॥ २ ॥

हे प्रियजात प्रियो यजमानस्तदर्थमुत्पन्न अग्ने वस्तव पौरुषेयः पुरुषसंबन्धी मन्युःक्रोधो नहीशे नेष्टे बाधितुं अस्मदादिभीरक्षितत्वादितिभावः । दिवाचराः खलु पुरुषाः । अतो दिवा तवहानिर्नास्तीतिभावः । अथ रात्रिश्चरा रक्षःप्रभृतयः तेभ्योपि पीडा नास्तीत्युच्यते त्वमित् त्वमेवखलु क्षपावान् रात्रिमानसि रात्रौ त्वग्निर्विशेषेण तेजस्वीभवति ॥ २ ॥

२. प्रिय-जन्मा अग्नि, पुरुष-सम्बन्धी क्रोध तुम्हें नहीं बाधा दे सकता। तुम रात्रिवाले हो (रात में अग्नि विशेष तेजस्वी होते हैं)।

सनोविश्वेभिर्देवेभिरूर्जोनपाद्भद्रशोचे ।
रयिंदेहिविश्ववारम् ॥ ३ ॥

सः । नः । विश्वेभिः । देवेभिः । ऊर्जः । नपात् । भद्रऽशोचे ।
रयिम् । देहि । विश्वऽवारम् ॥ ३ ॥

हे अग्ने सः स्तुत्यस्त्वं नोस्मभ्यं विश्वेभिः देवेभिः धनं प्रयच्छसि । हे ऊर्जोनपात् बलस्य नप्तः नपातयितर्वा हे भद्रशोचे स्तुत्य प्रकाशनदेव आदरार्थं पुनराह रयिं धनं विश्ववारं सर्वैर्वरणीयं धनं देहि । अथवा यद्वसूपमास्यस्मभ्यं दातुं तद्धनं गृहादिलक्षणं तच्च रयिं दानार्हं गोहिरण्यादिकंच देहीत्यपुनरुक्तिः ॥ ३ ॥

३. बल के पुत्र और प्रशस्य तेजवाले अग्नि, तुम सारे देवों के साथ सबके लिए वरणीय धन हमें दो।

अथ चतुर्थी–

नतमग्नेअरातयोमर्तंयुवन्तरायः।
यंत्रायसेदाश्वांसम् ॥ ४ ॥

न। तम्। अग्ने। अरातयः। मर्तम्। युवन्त। रायः।
यम्। त्रायसे। दाश्वांसम् ॥ ४ ॥

हे अग्ने तं मर्तं मनुष्यं स्तोतारं अरातयः अदानशीला द्वेषिणो रायो रयिमन्तो न युवन्त न पृथक्कुर्वन्ति रायो धनाद्वा नयुवन्त यं दाश्वांसं हविर्दातारं त्रायसे पालयसे ॥ ४ ॥

४. अग्नि, जिस हविर्दाता का तुम पालन करते हो, उस व्यक्ति को अदाता और धनी व्यक्ति नहीं पृथक् करते।

यंत्वंविप्रमेधसातावग्नेहिनोषिधनाय।
सतवोतीगोषुगन्ता ॥ ५ ॥ ११ ॥

यम्। त्वम्। विप्र। मेधऽसातौ। अग्ने। हिनोषि।
धनाय। सः। तव। ऊती। गोषु। गन्ता ॥ ५ ॥ ११ ॥

हे अग्ने विप्र त्वं यं मर्त्यं मेधसातौ यज्ञस्य संभजने हिनोषि प्रेरयसि धनाय गवादिधनलाभाय सयजमानस्तवोती ऊत्या रक्षणेन यागेषु गन्ता भवति गोमान् भवतीत्यर्थः ॥ ५ ॥

५. मेधावी अग्नि, तुम जिस व्यक्ति को धन-लाभ के लिए यज्ञ प्रेरित करते हो, वह तुम्हारी रक्षा के कारण गो-संयुक्त होता है।

॥ इति षष्ठस्य पंचमे एकादशोवर्गः ॥ ११ ॥

अथ षष्ठी–

त्वंरयिंपुरुवीरमग्नेदाशुषेमर्ताय।
प्रणोनयवस्योअच्छ ॥ ६ ॥

त्वम्। रयिम्। पुरुऽवीरम्। अग्ने। दाशुषे। मर्ताय।
प्र। नः। नय। वस्यः। अच्छ ॥ ६ ॥

हे अग्ने त्वं दाशुषे हविर्दत्तवते मर्ताय मर्त्याय यजमानाय रयिं धनं पुरुवीरं बहुभिर्वीरैर्युक्तं प्रयच्छसि अतो नोस्मानपिवस्यः वसीयोधनं अच्छाभिमाखं प्रणय प्रापय ॥ ६ ॥

६. अग्नि, तुम हव्यदाता मनुष्य के लिए बहु-वीरयुक्त धन प्रदान करो। वासयोग्य धन के अभिमुख हमें प्रेरित करो।

अथ सप्तमी–

उरुष्याणोमापरादाअघायतेजातवेदः ।
दुराध्येमर्ताय ॥ ७ ॥

उरुष्य । नः । मा । परा । दाः । अघऽयते । जातऽवेदः ।
दुःऽआध्ये । मर्ताय ॥ ७ ॥

हे जातवेदः जातविद्य जातधन वा अग्ने नोस्मानुरुष्य रक्ष । उरुष्यती रक्षाकर्मेति[1] यास्कः । मापरादाः मापरादेह्यस्मान् । कस्माइति सउच्यते अघायते अघं पापमिच्छते दुराध्ये दुराध्यानाय दुर्विचिन्तकाय हिंसाबुद्धये मर्ताय मनुष्याय ॥ ७ ॥

७. जात-धन अग्नि, हमारी रक्षा करो। अनिष्ट चाहनेवाले और हिंसा-मूर्त्ति मनुष्य के हाथ में हमें नहीं समर्पित करना।

अथाष्टमी–

अग्नेमाकिष्टेदेवस्यरातिमदेवोयुयोत ।
त्वमीशिषेवसूनाम् ॥ ८ ॥

अग्ने । माकिः । ते । देवस्य । रातिम् । अदेवः । युयोत ।
त्वम् । ईशिषे । वसूनाम् ॥ ८ ॥

हे अग्ने देवस्य द्योतमानस्य ते तव रातिं दानं दत्तं धनं वा कश्चित् अदेवो मर्त्यादिर्माकिर्युयोत मैव पृथक्करोतु त्वमेव ईशिषे । कस्य वसूनां धनानां ईश्वरोभवसि दातुं अनेनामिश्रणीयायारातेः सद्भावउक्तो भवति ॥ ८ ॥

८. अग्नि, तुम द्योतमान हो। कोई भी देव-शून्य व्यक्ति तुम्हें धन-दान से अलग नहीं कर सकता।

अथ नवमी–

सनोवस्वउपमास्यूर्जोनपान्माहिनस्य ।
सखेवसोजरितृभ्यः ॥ ९ ॥

सः । नः । वस्वः । उप । मासि । ऊर्जः । नपात् ।
माहिनस्य । सखे । वसो इति । जरितृऽभ्यः ॥ ९ ॥

---

[1] नि० ५. २३ ।

हे ऊर्जोनपाद् बलस्य अन्नस्य पुत्र बलेन मथ्यमानत्वादाज्यलक्षणेनान्नेन प्रवर्धनाद् ऊर्जोनपात्त्वं हे सखे सखिवद्धितकारिन् वसो वासकाग्ने सः स्तुत्यत्वेन वा प्रसिद्धस्त्वं जरितृभ्यः गरितृभ्यः स्तोतृभ्यो नोस्मभ्यं माहिनस्य वस्वः माहिनइति महन्नाम महद्धनं उपमासि समीपे मासि निर्मासि प्रयच्छसीत्यर्थः ॥ ९ ॥

९. बल के पुत्र, सखा और निवासप्रद अग्नि, हम स्तोता हैं। तुम हमें महाधन प्रदान करो।

प्रातरनुवाके बार्हतेछन्दस्यच्छानइत्याद्याःषळृचः तथाच सूत्रितं—अच्छानःशीरशोचिषमिति षळिति । दशमेहनि प्रातःसवनेअच्छावोअग्निमिति तृचस्यस्थाने अच्छानइति तृचोच्छावाकवादः सूत्रितश्च—अच्छानःशीरशोचिषं प्रतिश्रुतायवोधृषदिति तृचाविति ।

अच्छांनःशीरशोचिषंगिरोयन्तुदर्शतम् ।
अच्छायज्ञासोनमसापुरूवसुंपुरुप्रशस्तमूतये॥१०॥१२॥

अच्छं । नः । शीरऽशोचिषम् । गिरः । यन्तु । दर्शतम् ।
अच्छं । यज्ञासः । नमसा । पुरुऽवसुम् । पुरुऽप्रशस्तम् ।
ऊतये ॥ १० ॥ १२ ॥

अच्छाभिमुखं यन्तु गच्छन्तु नोस्माकं गिरः स्तुतयः कं शीरशोचिषं अशनशीलज्वालं दर्शतं सर्वैर्दर्शनीयं अग्निं । तथा यज्ञासो यज्ञाश्चास्मदीया नमसा हविषाज्यादिलक्षणेनाच्छाभिमुखं यन्तु गच्छतु । कीदृशं पुरुवसुं प्रभूतधनं पुरुप्रशस्तं बहुस्तुतं किमर्थं ऊतयेस्माकं रक्षणाय ॥ १० ॥

१०. हमारी स्तुतियाँ भक्षण (दहन) करनेवाली शिखाओंवाले और दर्शनीय अग्नि की ओर जायें। सारे यज्ञ रक्षा के लिए हविर्युक्त होकर प्रचर धनवाले और अनेकों के द्वारा स्तुत अग्नि की ओर जायें। ॥ इति षष्ठस्य पञ्चमे द्वादशोवर्गः ॥ १२ ॥

अथैकादशी—

अग्निंसूनुंसहसोजातवेदसंदानायवार्याणाम् ।
द्विताय्रोभूदमृतोमर्त्येष्वाहोतामन्द्रतमोविशि ॥ ११ ॥

अग्निम् । सूनुम् । सहसः । जातऽवेदसम् । दानाय । वार्याणाम् ।
द्विता । यः । भूत् । अमृतः । मर्त्येषु । आ । होता ।
मन्द्रऽतमः । विशि ॥ ११ ॥

अग्निं सहसःसूनुं बलस्यपुत्रं जातवेदसं जातधनं वार्याणां वरणीयानां गवादिधनानां दानाय गिरोच्छयन्त्वित्यनुवर्तते। योग्निरमृतः अमरणधर्मा देवेषु भवति समर्त्येष्वा आकारश्चार्थे मनुष्येषुच भूदभवदिति। एवं द्विता द्वैधं भवति देवेष्वमृतत्वमस्य प्रसिद्धम्। मनुष्येषु कीदृशो भूदिति उच्यते—विशि विक्षु यजमानरूपासु प्रजासु होता होमनिष्पादकः मन्द्रतमो मादयितृतमश्च भवति। अच्छयन्त्विति समन्वयः।अथवा यः अमृतो द्विता द्वित्वं द्वैधं द्विप्रकारोभूत् कथंमर्त्येषु सामान्येन दाहपाकादिसाधनो भवदित्येतत्प्रसिद्धं। विशि यजमानरूपायांतु होता मन्द्रतमो भवदित्येवं द्वित्वम्॥ ११॥

११. सारी स्तुतियाँ बल के पुत्र, जातधन और वरणीय (स्वीकरणीय) अग्नि की ओर जायँ। अग्नि अमर और मनुष्यों में रहनेवाले हैं। अग्नि दो प्रकार के हैं—मनुष्यों में होम-सम्पादक और मदकारी हैं।

अ॒ग्निर्वो॑दे॒वय॒ज्यया॒ग्निंप्र॑य॒त्य॑ध्व॒रे।
अ॒ग्निंधी॒षुप्र॑थ॒मम॒ग्निमर्व॑त्य॒ग्निंक्षैत्रा॑य॒साध॑से ॥ १२ ॥

अ॒ग्निम्। वः॒। दे॒व॒ऽय॒ज्यया॑। अ॒ग्निम्। प्र॒ऽय॒ति।
अ॒ध्व॒रे। अ॒ग्निम्। धी॒षु। प्र॒थ॒मम्। अ॒ग्निम्। अर्व॑ति।
अ॒ग्निम्। क्षैत्रा॑य। साध॑से॥ १२॥

हे यजमाना वो युष्माकं देवयज्यया देवयागेन निमित्तेन देवयागार्थमग्निं स्तौमीतिशेषः। तथाग्निं अध्वरे यागे प्रयति प्रकर्षेण गच्छति प्रवृत्तेसति स्तौमि। प्रथमं इतरदेवेभ्यः। तथाग्निमर्वति आगते भ्रातृव्ये स्तौमि। यज्ञे विघ्नपरिहारार्थं।तथा क्षैत्राय क्षेत्राय क्षेत्रसंबन्धिने साधसे साधनाय क्षेत्रलाभाय स्तौमि। यज्ञान्ते क्षेत्रलाभरूपाय फलायच स्तौमि। एवं आदौ मध्येन्तेच सर्वदा स्तौमीत्यर्थः॥ १२॥

१२. यजमानो, तुम्हारे देव-यज्ञ के लिए अग्नि की मैं स्तुति करता हूँ। यज्ञ के प्रारम्भ होने पर मैं अग्नि की स्तुति करता हूँ। कर्म-काल में अग्नि की प्रथम स्तुति करता हूँ। बन्धुत्व आने पर अग्नि की स्तुति करता हूँ। क्षेत्र-प्राप्ति होने पर अग्नि की स्तुति करता हूँ।

अ॒ग्निरि॒षांस॒ख्येद॑दातु॒नईशे॒योवार्या॑णाम्।
अ॒ग्निंतो॒केतन॑ये॒शश्व॑दीमहे॒वसुं॒सन्तं॑तनू॒पाम् ॥ १३ ॥

अ॒ग्निः। इ॒षाम्। स॒ख्ये। द॒दा॒तु। नः॒। ईशे॑। यः। वार्या॑णाम्।
अ॒ग्निम्। तो॒के। तन॑ये। शश्व॑त्। ई॒म॒हे॒। वसु॑म्।
सन्त॑म्। त॒नू॒ऽपाम्॥ १३॥

अथ तृतीया—

अन्तरिच्छन्तितंजनेरुद्रंपरोमनीषया ।
गृभ्णन्तिजिह्वयाससम् ॥ ३ ॥

अन्तः । इच्छन्ति । तम् । जने । रुद्रम् । परः । मनीषया ।
गृभ्णन्ति । जिह्वया । ससम् ॥ ३ ॥

तं रुद्रं रुद्दुःखं तस्यद्रावयितारं अथवा रुत् स्तुतिः तया गन्तव्यं स्तुत्यमित्यर्थः तादृशमग्निं जने यजमानार्थं मनीषया स्वप्रज्ञानेन परः परस्तात्पुरोदेशे इच्छन्ति स्थापयितुं तएव पश्चाद् अन्तः ससं स्वपन्तमग्निं जिह्वया जन्ये जनकशब्दः जिह्वा प्रभवया स्तुत्या गृभ्णन्ति गृह्णन्ति अंगुलीभिः । अत्रयास्कः—स्वपन्तमेतन्मध्यमं ज्योतिरनित्यदर्शनमिति[1] ॥ ३ ॥

३. यजमान की मनोरथ-सिद्धि के लिए वे अपने प्रज्ञा-बल से उन रुद्र (दुःख-घातक) अग्नि को सम्मुख स्थापित करने की इच्छा करते हैं। वे जिह्वा (स्तुति) द्वारा अग्नि को ग्रहण करते हैं।

जाम्यतीतपेधनुर्वयोधाअरुहद्वनम् ।
दृषदंजिह्वयावधीत् ॥ ४ ॥

जामि । अतीतपे । धनुः । वयःऽधाः । अरुहत् । वनम् ।
दृषदम् । जिह्वया । आ । अवधीत् ॥ ४ ॥

वयोधा अन्नस्यदाताग्निः मध्यमस्थानो जामि प्रवृद्धं सर्वमतिरिच्य वर्तमानं । जाम्यतिरेकनामेतियास्कः[2] । धनुर्धन्वान्तरिक्षं अतीतपे अतितपति । अथवा अग्नेर्जामि गमनशीलं धनुरतीतपते स्वविरोधिनं । सच वयोधा अन्नस्यदाताग्निः वनमुदकंअरुहद् आरोहति विमोकाय । तदर्थं जिह्वया ज्वालया दृषदं मेघमवधीद् हन्ति । दावाग्निपक्षे वनं तरुसमूहं हन्ति जिह्वया दृषदं कठिनमपि पाषाणं भिनत्तीति ॥ ४ ॥

४. अन्नदाता अग्नि सबको लांघकर रहते हैं। वे अन्तरिक्ष को लांघकर रहते हैं। वे अपनी ज्वाला के द्वारा मेघ का वध करते हैं। वे जल के ऊपर चढ़े हैं।

अथ पञ्चमी—

चरन्वत्सोरुशन्निहनिदातारंनविन्दते ।
वेतिस्तोतवअम्ब्यम् ॥ ५ ॥ १४ ॥

---

1 नि० ५. ३. । 2 नि० ४. २०. ।

चरंन् । वत्सः । रुशंन् । इह । निऽदातारंम् । न । विन्दते ।
वेति । स्तोतवे । अम्ब्यम् ॥ ५ ॥ १४ ॥

वत्सो वत्सवच्चापल्येन धावनाद्वत्स इत्युपचर्यते । अथवा वत्सइव सञ्चरन् इवशब्दो लुप्यते रुशन् श्वेतोभवन् इह अस्मिन् लोके निदातारं निरोधकं नविन्दते नलभते किन्तु स्तोतवेस्तोतुमंब्यं अन्यं स्तोतारं स्वयं वेति कामयते । अथवात्र वैद्युतोग्निरुच्यते वैद्युतोयं रुशन् चरंश्चेहान्तरिक्षे वत्सः सर्वदा वसन् वत्सस्थानीयोवा सन् निदातारं निरोधकं नविन्दते । किन्तु स्तोतुं अंब्यं माध्यमिकां वाचं वेति ॥ ५ ॥

५. वत्स के समान चंचल और श्वेतवर्ण अग्नि इस संसार में निरोधक को नहीं प्राप्त करते हैं। वे स्तोता की कामना करते हैं।

॥ इति षष्ठस्य पञ्चमे चतुर्दशोवर्गः ॥ १४ ॥

अथ षष्ठी—

उतोन्वंस्ययन्महदश्वावद्योजंनंबृहत् ।
दामारथंस्यददंशे ॥ ६ ॥

उतो इति । नु । अस्य । यत् । महत् । अश्वऽवत् । योजंनम् ।
बृहत् । दामा । रथंस्य । ददंशे ॥ ६ ॥

उतो अपिच नु क्षिप्रं अद्य अस्यादित्यस्य यन्महत् माहात्म्ययुक्तं अश्वावत् संवृद्धाश्ववत् बृहत् महत् स्थूलं योजनं दृश्यते । तदेवाह—रथस्य दामा ददृशे दृश्यते अन्तरिक्षे रथेश्वान्नियोजयतीत्यर्थः । तदा दुहन्तीत्युत्तरत्रसंबन्धः ॥ ६ ॥

६. इन अग्नि का माहात्म्य-युक्त अश्व-सम्पन्न प्रकाण्ड योजन है—रथ की रस्सी है।

अभिष्टवे घर्मदाहे दुहन्तिसप्तेत्येषा । सूत्रितश्च—दुहन्तिसप्तैकां समिद्धोअग्निरश्विनेति । ग्रावस्तोत्रेप्येषा । सूत्रितश्च—दुहन्तिसप्तैकामधुक्षत्पिप्युषीमिषमिति ।

सैषा सप्तमी—

दुहन्तिंसप्तैकामुपद्वापञ्चंसृजतः ।
तीर्थेसिन्धोरधिस्वरे ॥ ७ ॥

दुहन्ति । सप्त । एकाम् । उपं । द्वा । पञ्चं । सृजतः ।
तीर्थे । सिन्धोः । अधि । स्वरे ॥ ७ ॥

सप्तर्त्विज एकां घर्मं दुहन्ति तेषां मध्ये द्वौ द्वौ प्रतिप्रस्थातारौ अध्वर्यू पञ्चान्यानुपसृजतः। प्रयोजयतः। केते पञ्च तउच्यन्ते—यजमानं ब्रह्माणं होतारमाग्नीध्रं प्रस्तोतारमिति। कुत्रेति उच्यते—सिन्धोः कस्याश्चित्सरस्वत्यादि प्रख्याताया नद्यास्तीर्थे यत्रायमृषिर्जयति तत्र स्वरे अधि। स्वरतिः शब्दकर्मा। अधीति सप्तम्यर्थानुवादी स्वरोपेतेशब्दवति। यत्तीर्थमृत्विजां ओश्रावयेत्यादिशब्दैः शब्दवद्भवति तस्मिन्नित्यर्थः॥ ७॥

७. शब्दशाली सिन्धु नद के घाट पर सात ऋत्विक् जल का दोहन करते हैं। इनमें दो प्रस्थाता अध्वर्यु अन्य पाँच (यजमान, ब्रह्मा, होता, अग्निध्र और स्तोता) को प्रयुक्त करते हैं।

प्रवर्ग्येऽभिष्टवे ग्राव्णोभिष्टवे वा आदशभिरित्येषा। सूत्रितञ्च—आदशभिर्विवस्वतो दुहन्तिसप्तैकामिति।

सैषाष्टमी—

आदशभिर्विवस्वतइन्द्रःकोशमचुच्यवीत्।
खेदयात्रिवृतादिवः॥ ८॥

आ। दशऽभिः। विवस्वतः। इन्द्रः। कोशम्। अचुच्यवीत्।
खेदया। त्रिऽवृता। दिवः॥ ८॥

विवस्वतः परिचरतो यजमानस्य दशभिरंगुलीभिर्याचितः सन्निन्द्रः कोशं मेघनामैतत् उदकसेचकं मेघं दिवोन्तरिक्षसम्बन्धिनं तत्सकाशाद्वा अचुच्यवीद्व्यदारयदित्यर्थः। केनसाधनेनेति तदुच्यते त्रिवृता त्रिप्रकारवर्तनवता खेदया रश्मिना यद्वा अत्रेन्द्रशब्देनाग्निरादित्योवा गृह्यते खेदया त्रिवृतेति लिंगात्॥ ८॥

८. सेवक यजमान की दस अँगुलियों के द्वारा याचित होकर इन्द्र ने आकाश में मेघ से तीन प्रकार की किरणों के द्वारा जल-वर्षण कराया।

परित्रिधातुरध्वरंजूर्णिरेतिनवीयसी।
मध्वाहोतारोअञ्जते॥ ९॥

परि। त्रिऽधातुः। अध्वरम्। जूर्णिः। एति। नवीयसी।
मध्वा। होतारः। अञ्जते॥ ९॥

अयमग्निः त्रिधातुः लोहितशुक्लकृष्णभेदेन त्रिवर्णः जूर्णिर्जवो वेगवान् नवीयसी नवीयस्या ज्वालया अध्वरं प्रवर्ग्यं एति गच्छति होतासे होमनिष्पादका अध्वर्य्वादयो मध्वा आ-

ज्यादिना पर्यञ्जते। अथवा अग्नेः निमकारा क्षिप्रा नवतरा ज्वालापर्येति महावीरं तं मध्वांजतइति ॥ ९ ॥

९. तीन वर्ण (लोहित, शुक्ल और कृष्ण) वाले तथा वेगवान् अग्नि अपनी शिखा के साथ यज्ञ में जाते हैं। होन-सम्पादक अध्वर्यु लोग मधु के द्वारा मधु (आज्य आदि) के द्वारा उनका पूजन करते हैं।

सिञ्चन्तिनमसावतमुच्चाचक्रंपरिज्मानम्।
नीचीनबारमक्षितम् ॥ १० ॥ १५ ॥

सिञ्चन्ति। नमसा। अवतम्। उच्चाऽचक्रम्। परिऽज्मानम्।
नीचीनऽबारम्। अक्षितम् ॥ १० ॥ १५ ॥

नमसा नमनेन अवतं महावीरं उच्चाचक्रं उपरिस्थितचक्रं परिज्मानं परिणत्याभं नीचीनबारं नीचीनद्वारं अक्षितमक्षीणं ईदृशं क्षीराद्यवशेषयुक्तं आहवनीयस्योपरि नमनेन सिञ्चन्ति जुह्वति महावीरेणत्याहवनीये हूयते ॥ १० ॥

१०. महावीर, ऊपर चक्र से युक्त, दीप्ति-सम्पन्न, निम्नमुख द्वारवाले, अक्षीण और रक्षक अग्नि के ऊपर, अवनत होकर, अध्वर्यु उन्हें सिक्त करते हैं।　　॥ इति षष्ठस्य पञ्चमे पञ्चदशोवर्गः ॥ १५ ॥

अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु।
अवतस्यविसर्जने ॥ ११ ॥

अभिऽआरम्। इत्। अद्रयः। निऽसिक्तम्। पुष्करे।
मधु। अवतस्य। विऽसर्जने ॥ ११ ॥

अद्रयः आद्रियमाणा अध्वर्य्वादयः अभ्यारमित् अभिगम्यैव निषिक्तम् अतिरिक्तं मधु पुष्करेव पुष्करे प्रवृद्धउपयमनीपात्रे सिञ्चन्ति अग्निहोत्रार्थमवतस्य महावीरस्य विसर्जने विसर्जनसमये होमानन्तरं खलु महावीरमासन्ध्यमासादयन्ति ॥ ११ ॥

११. आदर से युक्त अध्वर्युगण निकटगामी होकर रक्षक अग्नि के विसर्जन के समय विशाल पात्र (उपयमनीपात्र) में मधु-सिंचन करते हैं।

अथ द्वादशी—

गावउपावतावतंमहीयज्ञस्यरप्सुदा।
उभाकर्णाहिरण्यया ॥ १२ ॥

गावः । उपं । अवत । अवतम् । मही इति । यज्ञस्यं । रप्सुदा ।
उभा । कर्णा । हिरण्ययां ॥ १२ ॥

हे गावो घर्मदुघा यूयमवतं महावीरं प्रत्युपावतोपागच्छत । यस्माद्यज्ञस्य घर्मयागस्य साधनभूते रप्सुदा रप्सुदे आरिप्सोः फलप्रदे लिप्स्वोरश्विनोर्दातव्येवा । यद्वा रपणं शब्दनं रप् मंत्रः तेन सुष्ठु दातव्ये। अथवा षूदक्षरणे रपा मन्त्रेण क्षारणीये दोहनीये ईदृशे गवाजयोः पयसी मही महती बहुले अपेक्षिते अतउपावतं। गौरजाया अप्युपलक्षकः अजापयसोपि महावीरे सेचनीयत्वात् अपिचास्य महावीरस्य उभा उभौ कर्णाकर्णस्थानीयौ द्वौ रुक्मौ हिरण्यया हिरणमयौ सुवर्णरजतमयावित्यर्थः ॥ १२ ॥

१२. गौओ, मन्त्र के द्वारा दूहने योग्य बहुत दूध की आवश्यकता होने पर तुम लोग रक्षक (महावीर) अग्नि के पास जाओ। अग्नि के दोनों कर्ण सोने और चाँदी के हैं।

प्रवर्ग्ये अजापयसि महावीरे आनीयमाने आसुतइत्येषा सूत्रितश्च—आसुतेसिञ्चतश्रियमित्याजइति । सैषा त्रयोदशी—

आसुतेसिञ्चतश्रियंरोदस्योरभिश्रियम् ।
रसादंधीतवृषभम् ॥ १३ ॥

आ । सुते । सिञ्चत । श्रियम् । रोदस्योः । अभिऽश्रियम् ।
रसा । दधीत । वृषभम् ॥ १३ ॥

सुते दुग्धे गोपयसि श्रियं श्रयणं आजं पयआसिञ्चत । सिञ्चतवा । हे अध्वर्यवः। कीदृशमाजं रोदस्योः कर्मणिषष्ठ्येषा द्यावापृथिव्यावभिश्रियं अभिश्रयन्तं अग्निसंयोगात्तावत्पर्यन्तं प्रवृद्धमित्यर्थः। अथवा तत्कावश्विनौ द्यावापृथिव्यावित्येकइतिंनिरुक्तत्वादश्विनोरभिश्रियमित्यर्थः। सेचनानन्तरं रसा रसे आजे पयसि वृषभं वर्षकमग्निं दधीत स्थापयत अजायाआग्नेयीत्वात् क्षीरस्याप्यग्निसंयोजनमुचितं। आग्नेयीवाएषायदजेतिब्राह्मणम् ॥ १३ ॥

१३. अध्वर्युओ, दूध दूहे जाने पर द्यावापृथिवी पर आश्रित और मिश्रणयोग्य दूध का सिंचन करो। अनन्तर बकरी के दूध में अग्नि को स्थापित करो।

अथ चतुर्दशी—

तेजानतस्वमोक्यं[1]संवत्सासोनमातृभिः ।
मिथोनंसन्तजामिभिः ॥ १४ ॥

---

१ नि० १२. १ ।

ते । जा॒न॒त॒ । स्वम् । ओ॒क्य॑म् । सम् । व॒त्सासः॑ । न । मा॒तृऽभिः॑ ।
मि॒थः । न॒स॒न्त॒ । जा॒मिऽभिः॑ ॥ १४ ॥

ते ता गावौ जानत ज्ञातवत्यः । अथवा सामान्याकारेण तइति पुंनिर्देशः । किं स्वं स्वकीयमोक्यं निवासं महावीरं तत्रदोग्धुमगमन्नित्यर्थः । तदेवाह—वत्सासो वत्सामातृभिर्न जननीभिः सह यथा संगच्छन्ति तद्वज्जामिभिर्बन्धुभिः सहितागावोमिथः प्रत्येकं संनसन्त संगच्छन्ते महावीरम् ॥ १४ ॥

१४. उन्होंने (गौओं ने) अपने निवासदाता अग्नि को जाना है। जैसे वत्स अपनी माता से मिलते हैं, वैसे ही गायें अपने बन्धुओं के साथ मिलती हैं।

अथ पञ्चदशी—

उप॒स्रक्वे॑षु॒बप्स॑तःकृण्व॒ते ध॒रुणं॑दि॒वि ।
इन्द्रे॑अ॒ग्नानमः॒स्वः॑ ॥ १५ ॥ १६ ॥

उप॑ । स्रक्वे॑षु । बप्स॑तः । कृ॒ण्व॒ते । ध॒रुण॑म् । दि॒वि । इन्द्रे॑ ।
अ॒ग्ना । नमः॑ । स्व१॒रिति॒ स्वः॑ ॥ १५ ॥ १६ ॥

महावीरस्य स्रक्केषु बप्सतो ज्वालया भक्षयतोग्नेरन्नं धरुणं इन्द्रेअग्नेति वक्ष्यमाणत्वादिन्द्राग्न्योर्धारकमाजं दिवि अन्तरिक्षे उपकृण्वते उपकुर्वते । यदाग्निर्महावीरं दहति तदा तस्योपर्युभयविधं क्षीरमासेचयन्तीत्यर्थः । एवं महावीरं आसिच्य इन्द्रे अग्ना अग्नौ च स्वः सर्वं गव्यमाजंच नमोन्नं । अथवा स्वः अन्तरिक्षे योजयन्तीति शेषः ॥ १५ ॥

१५. शिखा (ज्वाला) के द्वारा भक्षक अग्नि का अन्न अग्नि और इन्द्र का पोषण करता और अन्तरिक्ष (अन्तरिक्ष) का उपकार करता है। इन्द्र और अग्नि को सारा अन्न दो।

॥ इति षष्ठस्य पञ्चमे षोडशोवर्गः ॥ १६ ॥

प्रवर्ग्ये घर्मदुहि दुग्धायामधुक्षदित्येषा । सूत्रितश्च—दुग्धायामधुक्षत्पिप्युषीमिति । ग्रावस्तोत्रेप्येषा अधुक्षत्पिप्युषीमिषमाकलशेषुधावतीतिसूत्रितत्वात् ।

सैषा षोडशी—

अधु॑क्षत्पि॒प्युषी॑मि॒षमू॒र्जं॑स॒प्तप॑दीम॒रिः ।
सूर्य॑स्यस॒प्तर॒श्मिभिः॑ ॥ १६ ॥

अधु॑क्षत् । पि॒प्युषी॑म् । इष॑म् । ऊर्ज॑म् । स॒प्तऽप॑दीम् ।
अ॒रिः । सूर्य॑स्य । स॒प्त । र॒श्मिऽभिः॑ ॥ १६ ॥

अरिररणशीलोवायुः सूर्यस्य सप्तरश्मिभिः साधनैः पिप्युषीं आप्याययदिषमन्नं ऊर्जं रसं च। सप्तपदीं सर्पणस्वभावपादां माध्यमिकां वाचं धर्मधुग्रूपेणावस्थितां अधुक्षत् दुग्धवान्। यद्यप्यध्वर्युः पात्रेण गां दुग्धे तथाप्येवं भावनया सांगं भवति। माध्यमिकायावाचो मधुधुक्त्वं। हिंकृण्वती गौरमीमेत्यादिषु प्रसिद्धम्॥ १६॥

१६. गमनशील वायु और चंचल चरणों से युक्त माध्यमिकी वाक् (वचन) से सूर्य की सात किरणों के द्वारा वर्द्धित अन्न और रस को अध्वर्यु ग्रहण करता है।

सोमस्यमित्रावरुणोदितासूरआददे।
तदातुरस्यभेषजम्॥ १७॥

सोमस्य। मित्रावरुणा। उत्ऽइता। सूरे। आ। ददे।
तत्। आतुरस्य। भेषजम्॥ १७॥

हे मित्रावरुणा मित्रावरुणौ सूर्ये उदिता उदिते सोमस्य सोममाददे स्वीकरोति। तत्र हेतुं आह—तत्स्वीकाररूपं कर्म आतुरस्यास्मदादेर्भेषजं औषधं हितकरमित्यर्थः॥ १७॥

१७. मित्र और वरुण, सूर्योदय होने पर सूर्य सोम को स्वीकार करते हैं। वे हमारे (आतुरों के) लिए हितकर भेषज हैं।

उतोन्वस्ययत्पदंहर्यतस्यनिधान्यम्।
परिद्यांजिह्वयातनत्॥ १८॥ १७॥

उतो इति। नु। अस्य। यत्। पदम्। हर्यतस्य। निऽधान्यम्।
परि। द्याम्। जिह्वया। अतनत्॥ १८॥ १७॥

पवमाने सोमे उतो अपिच अस्य सोमदातुर्हर्यतस्य प्रदानं कामयमानस्य मम यत्पदं निधान्यं हविषां निधानार्हं उत्तरवेदिलक्षणं तत्र स्थितवाग्निर्द्यांपरि परितो जिह्वया ज्वालया अतनत् व्यापोत्॥ १८॥

१८. हर्यत ऋषि का जो स्थान हव्य स्थापन के लिए उपयुक्त है, वहाँ से अग्नि अपनी शिखा के द्वारा द्युलोक को व्याप्त करते हैं।

॥ इति षष्ठस्य पञ्चमे सप्तदशोवर्गः॥ १७॥

उदीराथामित्यष्टादशर्चं चतुर्थं सूक्तं आत्रेयस्य गोपवनस्य सप्तवध्रेर्वार्षं गायत्रमाश्विनं तथाचानुक्रमणिका—उदीराथांगोपवनआत्रेयः सप्तवध्रिर्वाश्विनमिति। प्रातरनुवाकेआश्विने क्रतौगायत्रेछंन्दस्याश्विनशस्त्रे चेदंसूक्तम् उदीराथामामेहवमितिगायत्रमितिसूत्रितत्वात्।

---

१ ऋ० सं० २-६. १९.।

तत्र प्रथमा—

उदीराथामृतायते युञ्जाथामश्विना रथम् ।
अन्ति षद्भूतु वामवः ॥ १ ॥

उत् । ईराथाम् । ऋतऽयते । युञ्जाथाम् । अश्विना । रथम् ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १ ॥

हे अश्विना अश्विनौ ऋतायते यज्ञमिच्छते मह्यं मदर्थं उदीराथां उद्गच्छतं तदर्थमाह्वानं यज्ञं वा प्राप्तुं युंजाथां योजयतमश्वैः रथं । वां युवयोरवो रक्षणं अन्ति अस्मदन्तिके सद्वर्तमानं भूतु भवतु ॥ १ ॥

१. अश्विद्वय, मैं यज्ञाभिलाषी हूँ। मेरे लिए उदित होओ। रथ को जोतो। तुम्हारी रक्षा हमारी समीपवर्त्तिनी हो।

अथ द्वितीया—

निमिषश्चिज्जवीयसा रथेना यातमश्विना ।
अन्ति षद्भूतु वामवः ॥ २ ॥

निऽमिषः । चित् । जवीयसा । रथेन । आ । यातम् ।
अश्विना । अन्ति । सत् । भूतु । वाम् । अवः ॥ २ ॥

निमिषश्चित् निमेषादपि जवीयसा अतिशयवेगेन रथेनायातमागच्छतम् अस्मद्यज्ञं हे-अश्विना । शिष्टमुक्तम् ॥ २ ॥

२. अश्विद्वय, निमेष से भी अधिक वेगवान् रथ से आओ। तुम्हारी रक्षा हमारी समीपवर्त्तिनी हो।

उप स्तृणीतमत्रये हिमेन घर्ममश्विना ।
अन्ति षद्भूतु वामवः ॥ ३ ॥

उप । स्तृणीतम् । अत्रये । हिमेन । घर्मम् । अश्विना ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ ३॥

अत्रये महर्षये असुरैरग्नौप्रक्षिप्ताय तस्य हितार्थं घर्ममग्निदाहकं हिमेनोदकेन उपस्तृणीतं उपस्तीर्णवन्तौ । हिमेनाग्निंघंसमवारयेथामितिनिगमः ॥ ३ ॥

३. अश्विद्वय, (अग्नि में फेंके हुए) अत्रि के लिए हिम (जल) से घर्म (अग्नि-दहन) का निवारण करो। तुम्हारी रक्षा हमारी समीपवर्त्तिनी हो।

---

१ ऋ० सं० १.८. ९. ।

अथ चतुर्थी—

कुह॑ स्थः॒ कुह॑ जग्मथुः॒ कुह॑ श्ये॒नेव॑ पेतथुः ।
अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ४ ॥

कुह॑ । स्थः॒ । कुह॑ । ज॒ग्म॒थुः॒ । कुह॑ । श्ये॒नाऽइ॑व । पे॒त॒थुः॒ ।
अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥ ४ ॥

हे अश्विनौ युवां कुह क्वस्थः भवथः इदानीं कुह क्व कुत्र जग्मथुः गच्छथः स्वेच्छया कुह क्वा श्येनेव श्येनाविव शीघ्रपतनौ सन्तौ पेतथुः पतथः । एवमचिन्त्यस्वभावौ कृपया-संनिहितौ भवतमितिशेषः । तादृशयोरवोन्तिके भवतु ॥ ४ ॥

४. तुम लोग कहाँ हो? कहाँ जाते हो? श्येन पक्षी के समान कहाँ गिरते हो? तुम्हारी रक्षा हमारी समीपवर्त्तिनी हो।

यद॒द्य कर्हि॒ कर्हि॑ चिच्छुश्रू॒यात॑मि॒मं हव॑म् ।
अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ५ ॥ १८ ॥

यत् । अ॒द्य । कर्हि॑ । कर्हि॑ । चि॒त् । शु॒श्रु॒यात॑म् । इ॒मम् ।
हव॑म् । अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥ ५ ॥ १८ ॥

यद्यस्मान्ननिर्धार्यते अतोद्यास्मिन्काले कर्हि कस्मिन्नपि देशे कर्हि कस्मिन्नपि काले इमं हवं अस्मदीयमाह्वानं शुश्रुयातं शृणुयातम् ॥ ५ ॥

५. तुम किस समय, किस स्थान पर, आज हमारे इस आह्वान को सुनोगे, यह हम नहीं जानते? तुम्हारा रक्षण हमारे पास आवे।

॥ इति षष्ठस्य पञ्चमे अष्टादशोवर्गः ॥ १८ ॥

अ॒श्विना॑ याम॒हूत॑मा॒ नेदि॑ष्ठं या॒म्याप्य॑म् ।
अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ६ ॥

अ॒श्विना॑ । या॒म॒ऽहूत॑मा । नेदि॑ष्ठम् । या॒मि॒ । आप्य॑म् ।
अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥ ६ ॥

यामहूतमा अतिशयेन काले ह्वातव्यावश्विनाश्विनौ यामि नेदिष्ठमन्तिकतममाप्यं बांधवं च यामि तयोः ॥ ६ ॥

६. यथासमय अत्यन्त आह्वान के योग्य में अश्विद्वय के पास जाता हूँ। उनके निकट स्थित बन्धुओं के पास भी मैं जाता हूँ। तुम्हारा रक्षण हमारे पास आवे।

अथ सप्तमी—

अवन्तमत्रयेगृहंकृणुतंयुवमश्विना ।
अन्तिषद्भूतुवामवः ॥ ७ ॥

अवन्तम् । अत्रये । गृहम् । कृणुतम् । युवम् । अश्विना ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ ७ ॥

हे अश्विना युवं युवां अत्रये अभ्यागारे दह्यमानाय अवन्तं रक्षन्तं गृहं कृणुतं कृतवन्तौ तादृशयोर्वामवोभवतु । अवन्तमिति व्यत्ययेन पुंल्लिंगता ॥ ७ ॥

७. अश्विद्वय, तुम लोगों ने अत्रि के लिए (जलने से बचने के लिए) रक्षक गृह का निर्माण किया था। तुम्हारा रक्षण हमारे पास आवे।

वरेथेअग्निमातपोवदतेवल्ग्वत्रये ।
अन्तिषद्भूतुवामवः ॥ ८ ॥

वरेथे इति । अग्निम् । आऽतपः । वदते । वल्गु । अत्रये ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ ८ ॥

हे अश्विनौ वल्गु मनोहरं वदते स्तुवते अत्रये आतपः आतपादौष्ण्यादग्निं वरेथे आवारयतम् ॥ ८ ॥ अश्विद्वय, मनोहर स्तोता अत्रि के लिए अग्नि को जलाने से अलग करो। तुम्हारा रक्षण हमारे पास आवे।

प्रसप्तवध्रिराशसाधारामग्नेरशायत ।
अन्तिषद्भूतुवामवः ॥ ९ ॥

प्र । सप्तऽवध्रिः । आऽशसा । धाराम् । अग्नेः । अशायत ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ ९ ॥

सप्तवध्रिर्महर्षिः हे अश्विनौ युवयोराशसा आशंसनेन स्तुत्या मंजूषाया निर्गत्य अग्नेर्धारां तस्यां मञ्जूषाया माशायत आशाययत् स्वस्वनिरोधिकां तां दग्धवानित्यर्थः । सप्तवध्रेः पेटिकान्तः प्रवेशोश्विनोरनुग्रहान्निर्गमश्च विजिहीष्ववनस्पत इत्यत्र स्पष्टमुक्तः ॥ ९ ॥

९. महर्षि सप्तवध्रि ने तुम्हारी स्तुति से अग्नि को धारा (ज्वाला) को, मञ्जूषा (पेटिका = बाक्स) में से स्वयं बाहर निकालकर, उसी में, सुला (पैंठा) दिया था। तुम्हारा रक्षण हमारे पास आवे।

---

1 ऋ० सं० ४. ४. २१.।

अथ दशमी—

इहागतंवृषण्वसूश्रृणुतंमइमंहवम् ।
अन्तिषद्भूतुवामवः ॥ १० ॥ १९ ॥

इह । आ । गतम् । वृषण्वसू इति वृषण्ऽवसू । श्रृणुतम् ।
मे । इमम् । हवम् । अन्ति । सत् । भूतु । वाम् । अवः ॥ १०॥१९ ॥

हे वृषण्वसू वर्षणधनौ अश्विनाविहास्मिन्यज्ञमागतमागच्छतं तदर्थं म इमं हवं श्रृणुतम् ॥ १० ॥

१०. वृष्टिदाता और धनी अश्विद्वय, यहाँ आओ और हमारा आह्वान सुनो। तुम्हारा रक्षण हमारे पास आवे।

॥ इति षष्ठस्य पंचमे एकोनविंशोवर्गः ॥ १९ ॥

किमिदंवांपुराणवज्जरतोरिवशस्यते ।
अन्तिषद्भूतुवामवः ॥ ११ ॥

किम् । इदम् । वाम् । पुराणऽवत् । जरतोःऽइव । शस्यते ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ ११ ॥

हे अश्विनौ वां युवयोरर्थं गमनाय पुराणवत् पुराणयोरतिवृद्धयोरिव । तदेवाह जरतोरिव शस्यते पुनःपुनरागच्छतमिति शस्यते किमिदं यथा लोके वृद्धोजीर्णो बहुवारमाहूतोपि नागच्छति तद्वद्युवामपीत्यर्थः एवमनागमाद्ब्रवीति ॥ ११ ॥

११. अश्विद्वय, अतीव वृद्ध के समान तुम्हें क्यों बार-बार बुलाना पड़ता है? तुम्हारा रक्षण हमारे पास आवे ।

अथ द्वादशी—

समानंवांसजात्यंसमानोबन्धुरश्विना ।
अन्तिषद्भूतुवामवः ॥ १२ ॥

समानम् । वाम् । सऽजात्यम् । समानः । बन्धुः ।
अश्विना । अन्ति । सत् । भूतु । वाम् । अवः ॥ १२ ॥

हे अश्विना अश्विनौ वां युवयोः परस्परं सजात्यं समानजातित्वं समानमेकमेव उभयोरपि अश्वरूपायासूर्यपत्न्याउत्पत्तेः सजात्यं तथा युवयोः बन्धुर्बन्धकः सुवः समानएकएव। अथर्वार्षिरहं समान एकएव बन्धुः ॥ १२ ॥

१२. अश्विद्वय, तुम दोनों का उत्पत्ति-स्थान एक है; तुम्हारे बन्धु भी एक समान हैं। तुम्हारा रक्षण हमारे पास आवे।

योवांरजांस्यश्विनारथोवियातिरोदसी।
अन्तिषद्भूतुवामवः ॥ १३ ॥

यः। वाम्। रजांसि। अश्विना। रथः। विऽयाति।
रोदसी इति। अन्ति। सत्। भूतु। वाम्। अवः ॥ १३ ॥

हे अश्विना अश्विनौ वां युवयोर्योरथोस्ति सरथो रजांसि लोकान् रोदसी द्यावापृथिव्यौच वियाति विशेषेण गच्छति अतस्तेन रथेन शीघ्रमागच्छतमिति शेषः ॥ १३ ॥

१३. अश्विद्वय, तुम्हारा रथ द्यावापृथिवी और सारे लोकों में घूमता है। तुम्हारी रक्षा हमारी समीपवर्त्तिनी हो।

आनोगव्येभिरश्व्यैःसहस्रैरुपगच्छतम्।
अन्तिषद्भूतुवामवः ॥ १४ ॥

आ। नः। गव्येभिः। अश्व्यैः। सहस्रैः। उप। गच्छतम्।
अन्ति। सत्। भूतु। वाम्। अवः ॥ १४ ॥

हे अश्विनौ नोस्मान् सहस्रैरपरिमितैर्गव्येभिर्गोसमूहैः अश्व्यैरश्वसमूहैश्चोपागच्छतम् ॥ १४ ॥

१४. अश्विद्वय, अपरिमित (सहस्र) गौओं और अश्वों के साथ हमारे पास आओ। तुम्हारा रक्षण हमारे पास आवे।

अथ पञ्चदशी—

मानोगव्येभिरश्व्यैःसहस्रेभिरतिख्यतम्।
अन्तिषद्भूतुवामवः ॥ १५ ॥

मा। नः। गव्येभिः। अश्व्यैः। सहस्रेभिः। अति।
ख्यतम्। अन्ति। सत्। भूतु। वाम्। अवः ॥ १५ ॥

हे अश्विनौ नोस्मान् गव्येभिर्गोसमूहैरश्व्यैश्च सहस्रेभिः सहस्रसंख्याकैर्मास्मानतिख्य-तम्। अतीति प्रतीत्यस्मिन्नर्थे। मानिवारयतमित्यर्थः ॥ १५ ॥

१५. अश्विद्वय, सहस्र गौओं और अश्वों से हमारा निवारण नहीं करना (अर्थात् हमें ये सब देना)। तुम्हारा रक्षण हमारे पास आवे।

अ॒रु॒णप्सु॑रु॒षा अ॑भू॒दक॒र्ज्योति॑र्ऋ॒तावरी।
अन्ति॒ षद्भू॑तु वा॒मव॑: ॥ १६ ॥

अ॒रु॒णऽप्सु॑: । उ॒षाः । अ॒भू॒त् । अक॑: । ज्योति॑: । ऋ॒तऽव॑री ।
अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अव॑: ॥ १६ ॥

हे अश्विनौ उषा अरुणप्सुः शुभ्रवर्णा भूद्भवति। न केवलं स्वयं ज्योतिस्तेजः अकः करोति सर्वत ऋतावरीऋतवत्युषाः ॥ १६ ॥

१६. अश्विद्वय, उषा शुक्लवर्ण की हैं। वे यज्ञवाली और ज्योति का निर्माण करनेवाली हैं। तुम्हारा रक्षण हमारे पास आवे।

अ॒श्विना॒ सु वि॒चाक॑शद्वृ॒क्षं प॑रशु॒माँ इ॑व।
अन्ति॒ षद्भू॑तु वा॒मव॑: ॥ १७ ॥

अ॒श्विना॑ । सु । वि॒ऽचाक॑शत् । वृ॒क्षम् । प॒र॒शु॒मान्ऽइ॑व ।
अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अव॑: ॥ १७॥

सुविचाकशद् अत्यन्तं दीप्यमानः सूर्योग्निर्वा वृक्षं परशुमानिव सयथा शकलयति तद्व-त्तमोनिशारयतीतिशेषः। दृष्टान्तसामर्थ्यादेवलभ्यते यस्मादेवं तस्मादश्विनौ आह्वयइति शेषः ॥ १७ ॥ १७. जैसे फरसावाला व्यक्ति वृक्ष काटता है, वैसे ही अतीव दीप्ति-मान् सूर्य अन्धकार का निवारण करते हैं। मैं अश्विद्वय को बुलाता हूँ। तुम्हारा रक्षण हमारे पास आवे।

पुरं॑ न धृ॑ष्ण॒वा रु॑ज कृ॒ष्णया॑ बाधि॒तो वि॒शा।
अन्ति॒ षद्भू॑तु वा॒मव॑: ॥ १८ ॥ २० ॥

पुर॑म् । न । धृ॒ष्णो॒ इति॑ । आ । रु॒ज॒ । कृ॒ष्णया॑ । बा॒धि॒तः ।
वि॒शा । अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अव॑: ॥ १८ ॥ २० ॥

हे धृष्णो धर्षक सप्तवध्रे त्वं कृष्णया कर्षया विशा प्रवेशयन्त्या पेटिकया बाधितस्त्वं ततोनिर्गत्य तामेवारुज पीडय अश्विनोरनुग्रहाद्। कमिव पुरं न यथा शत्रुः पुरं पीडयति एवं

स्वयं स्वात्मानं प्रेष्यति । अथवा गोपवनः सप्तवध्रिमेवं ब्रवीति वां युवयोरवोरक्षणं गमनंवा समीपे तत्र त्रिषु वर्गेषु अन्तिषदित्युत्तरोर्धर्चोन्वितपदाध्याहारेण योज्यः ॥ १८ ॥

१८. घर्षक सप्तवध्रि, तुम काले पेटक (बाक्स) में बन्द थे। पीछे उसे तुमने नगर के समान जला दिया था। तुम्हारा रक्षण हमारे पास आवे। ॥ इति षष्ठस्य पञ्चमे विंशोवर्गः ॥ २० ॥

विशोविशोवइति पंचदशर्चं चतुर्थंसूक्तं। अत्रेयमनुक्रमणिका—विशोविशोवः पञ्चोनाग्नेयं त्वनुष्टुम्मुखास्तृचाश्चत्वारोन्त्यास्तिस्रोनुष्टुभ आर्क्षस्य श्रुतर्वणोदानस्तुतिरिति। अनुवृत्तेर्गोपवन-ऋषिः आदितस्तृषु तृचेषु सर्वाः प्रथमाअनुष्टुभः द्वितीयातृतीये प्राग्वत्समपरिभाषया गायत्र्यौ त्रयोदश्याद्यास्तिस्रोनुष्टुभः अस्योत्तरस्यचाग्निर्देवता अन्त्यास्तिस्रः श्रुतर्वनाम्नोराज्ञोदानस्तुतिः। व्योमविश्वदेवस्तुतपञ्चशारदीयेष्विदंसूक्तमाज्यशस्त्रं । सूत्रितञ्च—विशोविशोवोअतिथिमित्या-ज्यमिति।

विशोविशोवोअतिथिंवाजयन्तःपुरुप्रियम् ।
अग्निंवोदुर्यंवचःस्तुषेशूषस्यमन्मभिः ॥ १ ॥

विशःऽविशः । वः । अतिथिम् । वाजऽयन्तः । पुरुऽप्रियम् ।
अग्निम् । वः । दुर्यम् । वचः । स्तुषे । शूषस्य । मन्मऽभिः ॥ १ ॥

हे अन्ये ऋत्विजो यजमानाश्च वो यूयं वाजयन्तोन्नमिच्छन्तो विशोविशः सर्वस्याः प्रजायाः अतिथिं पूज्यं पुरुप्रियं बहुप्रियमग्निं स्तुत्या परिचरतेतिशेषः। अहंच वोयुष्मदर्थं दुर्यं गुहाहितं वचः स्तुषे शूषस्य सुखस्य लाभाय। कैः साधनैः मन्मभिर्मननीयैः स्तोत्रैः ॥ १ ॥

१. ऋत्विको और यजमानो, तुम लोग अन्नाभिलाषी हो। सारी प्रजा के अतिथि और बहुतों के प्रिय अग्नि की स्तुति के द्वारा सेवा करो। मैं तुम्हारे सुख के लिए मननीय स्तोत्र के द्वारा गूढ़ वचन का उच्चारण करता हूँ।

अथ द्वितीया—

यंजनासोहविष्मन्तोमित्रंनसर्पिरासुतिम् ।
प्रशंसन्तिप्रशस्तिभिः ॥ २ ॥

यम् । जनासः । हविष्मन्तः । मित्रम् । न । सर्पिःऽआसुतिम् ।
प्रऽशंसन्ति । प्रशस्तिऽभिः ॥ २ ॥

यमग्निं जनासो जनायजमाना हविष्मन्तः सन्तो मित्रंन मित्रमिव आदित्यमिव सखायमिव वा सर्पिरासुतिं सर्पिरासूयते हूयते यस्मिन् तादृशं प्रशंसन्ति स्तुवन्ति। प्रशस्तिभिः स्तुतिभिः स्तुवइतिशेषः॥ २॥

२. जिन अग्नि के लिए घी का होम किया जाता है और जिनको द्रव्य का दान करते हुए स्तुति द्वारा प्रशंसा की जाती है—

पन्यांसंजातवेदसंयोदेवतात्युद्यता।
हव्यान्यैरयद्दिवि॥ ३॥

पन्यांसम्। जातऽवेदसम्। यः। देवऽताति। उत्ऽयता।
हव्यानि। ऐरयत्। दिवि॥ ३॥

पन्यांसं अतिशयेनस्तोतारं साधुकृतमिति यजमानं स्तुवन्तं जातवेदसं जातधनं जातविद्यं वा स्तुवइतिशेषः। योग्निर्देवताति देवतातौ यज्ञे उद्यता उद्यतानि हव्यानि हवींषि दिव्यैरयत् प्रेरयति दिवि देवेभ्यः॥ ३॥

३. जो स्तोता के प्रशंसक और जात-धन हैं तथा जो यज्ञ में दिये हवि को द्युलोक में प्रेरित करते हैं—

आगन्मवृत्रहन्तमंज्येष्ठमग्निमानवम्।
यस्यश्रुतर्वाबृहन्नार्क्षोअनीकएधते॥ ४॥

आ। अगन्म। वृत्रहन्ऽतमम्। ज्येष्ठम्। अग्निम्। आनवम्।
यस्य। श्रुतर्वा। बृहन्। आर्क्षः। अनीके। एधते॥ ४॥

वृत्रहन्तमं पापानामतिशयेन हन्तारं ज्येष्ठं प्रशस्यं मानवं मनुष्यसंबन्धिनं तेषां हितकारिणमग्निमागन्म आगतावयं। पूजार्थे बहुवचनं। यस्याग्नेरनीके ज्वालासंघे बृहन्महान् आर्क्षः ऋक्षपुत्रः श्रुतर्वानामराजा एधते वर्धते कर्मकरोतीत्यर्थः। तमग्निमागन्म इतिसमन्वयः। एवं श्रुतर्वाणं भिक्षयागतो गोपवनोऽग्निं स्तौति॥ ४॥

४. जिनकी ज्वालाओं ने ऋक्षपुत्र और महान् श्रुतर्वा को वर्द्धित किया है, उन पापियों के नाशक और मनुष्यों के हितकर अग्नि के पास में उपस्थित हुआ हूँ।

अथ पञ्चमी—

अमृतंजातवेदसंतिरस्तमांसिदर्शतम्।
घृताहवनमीड्यम्॥ ५॥ २१॥

अमृतम् । जातऽवेदसम् । तिरः । तमांसि । दर्शतम् ।
घृतऽआहवनम् । ईड्यम् ॥ ५ ॥ २१ ॥

सएवागत्य स्तौति—अमृतं अमरणं जातवेदसं जाततेजआद्युपलक्षणंधनं तमांसि तिरोदर्शतं दर्शयन्तमित्यर्थः घृताहवनं घृतमाहूयते यत्र तं ईड्यं स्तुत्यं ईदृशमागन्मेतिसंबन्धः ॥ ५ ॥५. अग्नि अमर हैं, जात-धन हैं और स्तवनीय हैं। वे अन्धकार को दूर करते हैं। उनका घृत के द्वारा हवन किया जाता है।

॥ इति षष्ठस्य पञ्चमे एकविंशोवर्गः ॥ २१ ॥

अथ षष्ठी—

सबाधोयंजनाइमे३ऽग्निंहव्येभिरीळते ।
जुह्वानासोयतस्रुचः ॥ ६ ॥

सऽबाधः । यम् । जनाः । इमे । अग्निम् । हव्येभिः । ईळते ।
जुह्वानासः । यतऽस्रुचः ॥ ६ ॥

इमे जनाः सबाधो बाधसहिता अध्वर्य्वादयो यमग्निं हव्येभिर्हविर्भिरीळते स्तुवन्ति। कीदृशाजना जुह्वानासो यागं कुर्वाणाः यतस्रुचः तदर्थं धृतस्रुग्दंडाः तमागन्मेति समन्वयः ॥ ६ ॥६. बाधावाले लोग यज्ञ करते और स्रुक् संयत करते हुए हव्य के द्वारा उनकी स्तुति करते हैं।

इयंतेनव्यसीमतिरग्नेअधाय्यस्मदा ।
मंद्रसुजातसुक्रतोमूरदस्मातिथे ॥ ७ ॥

इयम् । ते । नव्यसी । मतिः । अग्ने । अधायि । अस्मत् । आ ।
मन्द्र । सुऽजात । सुक्रतो इति सुऽक्रतो । अमूर । दस्म । अतिथे ॥ ७ ॥

हे अग्ने इयं इदानीं क्रियमाणा नव्यसी नवतरा मतिः स्तुतिस्ते तव स्वभूताअस्मदस्मासु अधायि धृताभूत् वयं तव स्तुतिं कुर्मइत्यर्थः । हे मन्द्र मोदमान सुजात शोभनजनन सुक्रतो शोभनकर्मन् अमूरामूढ दस्म दर्शनीयातिथे अतिथिवत्पूज्येत्यग्नेर्विशेषणानि ॥ ७ ॥

७. हृष्ट, शोभन-जन्मा, बुद्धिमान् और दर्शनीय अग्नि, हम तुम्हारी यह स्तुति करते हैं।

अथाष्टमी–

सातेअग्नेशंतमाचनिष्ठाभवतुप्रिया । तयावर्धस्वसुष्टुतः ॥ ८॥

सा । ते । अग्ने । शम्ऽतमा । चनिष्ठा । भवतु । प्रिया ।
तया । वर्धस्व । सुऽस्तुतः ॥ ८ ॥

हे अग्ने सास्माभिः क्रियमाणास्तुतिः शन्तमा अत्यन्तं सुखकरा चनिष्ठा अतिशयेनान्नवती ते तव प्रिया भवतु । तया स्तुत्या सुष्टुतः सुष्ठु स्तुतः सन्वर्धस्व प्रवृद्धोभव ॥ ८ ॥

८. अग्नि, वह स्तुति अतीव सुखावह, अधिक अन्नवाली और तुम्हारे लिए प्रिय हो। उसके द्वारा तुम भली भाँति स्तुत होकर बढ़ो।

साद्युम्नैर्द्युम्निनीबृहदुपोपश्रवसिश्रवः । दधीतवृत्रतूर्ये ॥ ९ ॥

सा । द्युम्नैः । द्युम्निनी । बृहत् । उपऽउप । श्रवसि ।
श्रवः । दधीत । वृत्रऽतूर्ये ॥ ९ ॥

सास्माभिः क्रियमाणा स्तुतिः द्युम्नैः द्योतमानैरन्नैरस्मभ्यं प्रदेयैर्द्युम्निनी अन्नवती श्रवसि पूर्वस्मिन् विद्यमानेन्ने पुनरपिबृहन्महत् श्रवोन्नं उपोपदधीत पुनरुपरि धारयतु । कुत्रेति उच्यते–वृत्रतूर्ये संग्रामे शत्रोःसंबन्धिनमिति यावत् ॥ ९ ॥

९. वह स्तुति प्रचुर अन्नवाली है। युद्ध में वह अन्न के ऊपर यथेष्ठ अन्न धारण करे।

अथ दशमी–

अश्वमिद्गांरथप्रांत्वेषमिन्द्रंनसत्पतिम् ।
यस्यश्रवांसितूर्वथपन्यंपन्यंचकृष्टयः ॥ १० ॥ २२ ॥

अश्वम् । इत् । गाम् । रथऽप्राम् । त्वेषम् । इन्द्रम् । न ।
सत्ऽपतिम् । यस्य । श्रवांसि । तूर्वथ । पन्यम्ऽपन्यम् ।
च । कृष्टयः ॥ १० ॥ २२ ॥

गां गन्तारमश्वमित् इच्छब्दइवार्थे अश्वमिव तं यथा स्तुवन्ते तथेत्यर्थः रथप्रां रथानामस्मदीयानां पूरयितारं धनैः तथा त्वेषं दीप्तं अग्निं सत्पतिं सतां पालकं इन्द्रंन इन्द्रमिव इमं कृष्टयो मनुष्याः परिचरतेतिशेषः । यस्याग्नेर्बलेन श्रवांसि अन्नानि शत्रुसंबन्धीनि तूर्वथ । तथा पन्यंपन्यंच यद्यत्स्तुत्यं धनमस्ति तदपि तूर्वथ हिंस्थ ॥ १० ॥

१०. जो अग्नि बल के द्वारा शत्रु के अन्न और स्तुत्य धन की हिंसा करते हैं, उन्हीं प्रदीप्त और रथादि के पूरक अग्नि की, गतिपरायण अश्व के समान तथा सत्पति इन्द्र के सदृश, मनुष्य लोग सेवा करते हैं।

॥ इति पञ्चमस्य प्रथमे द्वाविंशो वर्गः ॥ २२ ॥

अथैकादशी—

यंत्वांगोपवनोगिराचनिष्ठदग्नेअङ्गिरः । सपावकश्रुधीहवम् ॥ ११॥

यम् । त्वा । गोपवनः । गिरा । चनिष्ठत् । अग्ने । अङ्गिरः ।
सः । पावक । श्रुधि । हवम् ॥ ११ ॥

हे अग्ने यं त्वा त्वां गोपवनऋषिर्गिरा स्तुत्या चनिष्ठदतिशयेनान्नप्रदातारमकरोत् सत्वाद्दशाग्ने अङ्गिरः सर्वत्रगन्तः अङ्गिरसांमध्ये एकवा पावक शोधक हवं गोपवनस्य श्रुधि शृणु॥ ११ ॥

११. अग्नि, गोपवन नामक ऋषि की स्तुति से तुम अन्नदाता हुए थे। तुम सर्वत्र जानेवाले और शोधक हो। तुम गोपवन के आह्वान को सुनो।

यंत्वाजनासईळतेसबाधोवाजसातये । सबोधिवृत्रतूर्यें ॥ १२ ॥

यम् । त्वा । जनासः । ईळते । सऽबाधः । वाजऽसातये ।
सः । बोधि । वृत्रऽतूर्यें ॥ १२ ॥

हे अग्ने यं त्वा त्वां जनासो जनाः स्तोतारो वः वाजसातये अन्नस्यलाभाय सबाधः निर्बन्धरूपबाधोपेताः सन्त ईळते स्तुवन्ति सत्वं वृत्रतूर्ये वैरिनाशनाय पापक्षयायवा बोधि बुध्यस्व । अथवा वृत्रस्य तूर्ये संग्रामे बोधि ॥ १२ ॥

१२. बाधा-संयुक्त होने पर भी लोग, अन्न-प्राप्ति के लिए, तुम्हारी स्तुति करते हैं। तुम युद्ध में जागो।

अहंहुवानआर्क्षेश्रुतर्वणिमदच्युति ।
शर्धांसीवस्तुकाविनांमृक्षाशीर्षाचतुर्णाम् ॥ १३ ॥

अहम् । हुवानः । आर्क्षे । श्रुतर्वणि । मदऽच्युति ।
शर्धांसिऽइव । स्तुकाऽविनाम् । मृक्षा । शीर्षा । चतुर्णाम् ॥ १३ ॥

अहमृषिर्हुवानो हूयमानो यज्ञदिदृक्षार्थं श्रुतर्वणि एतन्नाम्नि राजनि मदच्युति शत्रूणां मदस्यच्यावयितरि स्तुकाविनां स्तुकाविनऊर्णायवः स्तुकः केशसंघातः तद्वतां शर्धांसीव उच्छ्रितानि लोमानीव तानि यथा स्पृशन्ति तद्वत् मृक्षा मृक्षाणि मृश्यन्तइति मृक्षाः केशाः तद्वन्ति मृक्षाणि शीर्षाणि शिरांसि । केषां चतुर्णां श्रुतर्वणा मदत्तानामश्वानां शिरांसि उन्मृजामीति शेषः । अथवा मृक्षा मृक्षेण म्रक्षणसाधनत्वाद्धस्तोहस्तस्तेनोन्मृजामि ॥ १३ ॥

१३. मैं (ऋषि) बुलाये जाने पर, शत्रु-गर्व-ध्वंसक और ऋक्ष-पुत्र श्रुतर्वा राजा के दिये हुए लोमवाले चार अश्वों के ऊँचे और लोमवाले मस्तकों को मैं हाथों से धो रहा हूँ।

अथ चतुर्दशी–

मांचत्वारआशवःशविष्ठस्यद्रवित्नवः ।
सुरथासोअभिप्रयोवक्षन्वयोनतुग्र्यम् ॥ १४ ॥

माम् । चत्वारः । आशवः । शविष्ठस्य । द्रवित्नवः । सुऽरथासः ।
अभि । प्रयः । वक्षन् । वयः । न । तुग्र्यम् ॥ १४ ॥

मां शविष्ठस्यातिशयेनान्नवतः श्रुतर्वणोराज्ञः संबन्धिनश्चत्वार आशवोश्वा द्रवित्नवो गमनशीलाः सुरथासः शोभनरथा अश्वाः प्रयोन्नं शत्रूणां संबन्धिनं प्रति अभिवक्षन् अभिवहन्ति वयोन तुग्र्यं भुज्युं यथाश्विभ्यां प्रेरिताश्चतस्रो नावः स्वगृहं प्रापयन् तद्वदिति ॥ १४ ॥

१४. अतीव अन्नवाले श्रुतर्वा राजा के चार अश्व द्रुतगामी और उत्तम रथवाले होकर, उसी प्रकार अन्न को ढोते हैं, जिस प्रकार अश्विद्वय की भेजी हुई चार नावों ने तुग्र-पुत्र भुज्यु का वहन किया था।

सत्यमित्त्वामहेनदिपरुष्ण्यवदेदिशम् ।
नेमापोअश्वदातरःशविष्ठादस्तिमर्त्यः ॥ १५ ॥ ॥ २३ ॥

सत्यम् । इत् । त्वा । महेऽनदि । परुष्णि । अव । देदिशम् । न ।
ईम् । आपः । अश्वऽदातरः । शविष्ठात् । अस्ति । मर्त्यः ॥१५॥२३॥

हे महेनदि परुष्णि एतन्नामिके त्वा त्वां सत्यमित् सत्यमेव अवदेदिशं आदिशामि वदामि। नद्याकारेण संबोध्यापः संबोधयति–हेआपःईमस्माच्छविष्ठाद्बलवत्तमाच्छ्रुतर्वणोधिकः कश्चिदश्वदातरः अश्वानांदातृतमो मर्त्योनास्ति परुष्ण्यास्तीरे राज्ञोश्वमेधप्रतिग्रहार्थां संबोध्य ब्रूते ॥ १५ ॥

१५. हे महानदी परुष्णी (रावी), हे जल, मैं तुमसे सच्चा कहता हूँ कि सबसे बली इन श्रुतर्वा राजा से अधिक अश्वों का दान कोई भी मनुष्य नहीं कर सकता।

॥ इति षष्ठस्य पञ्चमे त्रयोविंशोवर्गः ॥२३॥

युक्ष्वाहीति षोडशर्चं पचमं सूक्तं आंगिरसस्य विरूपस्यार्षं गायत्रमाग्नेयं तथाचानुक्रमणिका–युक्ष्वाहि षोडश विरूपइति । दशरात्रे तृतीयेहनीदंसूक्तं आज्यशस्त्रं सूत्रितंच–तृतीये युक्ष्वाहीत्याज्यमिति । प्रातरनुवाकेप्याग्नेयेक्रतौ गायत्रेछन्दसि आश्विनशस्त्रेचेदंसूक्तम् । सूत्रितंच–युक्ष्वाहिप्रेष्ठंवइति ।

तत्र प्रथमा—

युक्ष्वाहिदेवहूतमाँअश्वाँअग्नेरथीरिव ।
निहोतापूर्व्यःसदः ॥ १ ॥

युक्ष्व । हि । देवऽहूतमान् । अश्वान् । अग्ने । रथीःऽइव ।
नि । होता । पूर्व्यः । सदः ॥ १ ॥

हे अग्ने देवहूतमान् देवानामाह्वातृतमानश्वान् युक्ष्व योजय । रथे रथीरिव यथा रथी स्वाश्वानिष्टदेशगमनाय योजयति तद्वत् । तथा कृत्वा होता त्वं पूर्व्यो मुख्यः सन् निषदः उपविशच । हिपूरणः ॥ १ ॥

१. अग्नि, सारथि के समान तुम देवों को बुलाने में कुशल घोड़ों को रथ में जोतो। तुम होता हो। प्रधान होकर तुम बैठो।

उतनोदेवदेवाँअच्छावोचोविदुष्टरः ।
श्रद्विश्वावार्याकृधि ॥ २ ॥

उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतरः ।
श्रत् । विश्वा । वार्या । कृधि ॥ २ ॥

हे देवाग्ने उतापिच नोस्मान् देवानच्छावोचोभिब्रूयाः सम्यगनुष्ठितवन्तइति । तथा विदुष्टरो विद्वत्तमान्वोचः । तथा कृत्वा विश्वा सर्वाणि वार्या वरणीयानि धनानि देवसम्बन्धीनि श्रत् सत्यानि कृधि कुरु अस्माकं। अथवास्मदीयानि सर्वाणि वरणीयानि हवींषि श्रत् सत्यानि कुरु देवान् प्रापयेत्यर्थः ॥ २ ॥

२. देव, तुम देवताओं के यहाँ हमें "विद्वत्श्रेष्ठ" कहकर हमारे वरणीय धनों को देवों के पास भेजो। अथ तृतीया—

त्वंहयद्यविष्ठ्यसहसःसूनवाहुत । ऋतावायज्ञियोभुवः ॥ ३ ॥

त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो इति । आऽहुत ।
ऋतऽवा । यज्ञियः । भुवः ॥ ३ ॥

हे अग्ने यविष्ठ्य युवतम सहसः सूनो बलस्यपुत्र आहुत सर्वतोहुत आहुतोवा त्वं यद्यदा ह खलु ऋतावा सत्यवान् यज्ञियो यज्ञार्हश्च भुवो भवसि तदा वार्याणि श्रत्कुर्विति संबंधः॥३॥

३. तरुणतम, बल के पुत्र और आहूत अग्नि, तुम सत्यवाले और यज्ञ-योग्य हो।

दर्शपूर्णमासयोराग्नेयस्यायमग्निरिति वैकल्पिकीयाज्या । सूत्रितंच—अयमग्निः सहस्रिणइति वेदंविष्णुर्विचक्रमइति ।

सैषा चतुर्थी—

अयमग्निःसंहस्रिणोवाजस्यशतिनस्पतिः । मूर्धाकवीरयीणाम् ॥ ४ ॥

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ।
मूर्धा । कविः । रयीणाम् ॥ ४ ॥

अयमग्निः शतिनः सहस्रिणश्च उक्तसंख्योपेतस्य वाजस्यान्नस्य पतिः स्वामी मूर्धा शिरोवदुन्नतः श्रेष्ठः कविर्मेधावी रयीणां धनानामपि पतिरितिशेषः तदुभयंमयच्छत्वित्यर्थः ॥४॥

४. यह अग्नि सौ और हजार तरह के अन्नों के स्वामी, शिरः-संयुक्त, कवि (मेधावी) और धनपति हैं।

तंनेमिमृभवोयथानमस्वसहूतिभिः । नेदीयोयज्ञमंङ्गिरः ॥५॥२४॥

तम् । नेमिम् । ऋभवः । यथा । आ । नमस्व । सहूतिऽभिः ।
नेदीयः । यज्ञम् । अङ्गिरः ॥ ५ ॥ २४ ॥

हे अंगिरः त्वं सहूतिभिः समानाह्वानैरन्यैर्देवैः सह नेदीयोन्तिकतमं तं यज्ञं आनमस्व आनमय ऋभवोनेमिं रथमिव ॥ ५ ॥

५. गमनशील अग्नि, जैसे ऋभु लोग रथ-नेमि को ले आते हैं, वैसे ही तुम भी एकत्र आहूत देवों के साथ अतीव निकटवर्ती यज्ञ को ले आओ। ॥ इति षष्ठस्य पंचमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ षष्ठी—

तस्मैनूनमभिद्यवेवाचाविरूपनित्यया । वृष्णेचोदस्वसुष्टुतिम् ॥ ६ ॥

तस्मै । नूनम् । अभिऽद्यवे । वाचा । विऽरूप । नित्यया ।
वृष्णे । चोदस्व । सुऽस्तुतिम् ॥ ६ ॥

हे विरूप नानारूपैतन्नामक महर्षे त्वं तस्मै प्रसिद्धायाभिद्यवेभिगततृप्तये वृष्णे वर्षकायाग्नये नित्यया उत्पत्तिरहितया वाचा मंत्ररूपया सुष्टुतिं नूनमिदानीं चोदस्व स्तुहि इत्येवमृषिः स्वात्मानं ब्रवीति । यजमानोवा होतारं विरूपं ॥ ६ ॥

६. विशिष्ट रूपवाले ऋषि, तुम नित्य वाक्य के द्वारा तृप्त और अभीष्टवर्षी अग्नि की स्तुति करो।

अथ सप्तमी–

कमुंष्विदस्यसेनयाग्नेरपाकचक्षसः । पणिंगोषुंस्तरामहे ॥ ७ ॥

कम् । ऊँ इति । स्वित् । अस्य । सेनया । अग्नेः । अपाकऽचक्षसः ।
पणिम् । गोषुं । स्तरामहे ॥ ७ ॥

अस्याग्नेरपाकचक्षसः अनल्पचक्षसोऽग्नेः सेनया ज्वालारूपया गोषु निमित्तेषु कमुष्वित् कंखलु पणिं स्तरामहे । स्तरणं हिंसनमिदानीं बलिनमभिभवामेत्यर्थः ॥ ७ ॥

७. गायों के लिए हम विशाल चक्षुवाले अग्नि की ज्वाला के द्वारा किस पणि का वध करेंगे?

मानोदेवानांविशंःप्रस्नातीरिवोस्राः । कृशंनहासुरघ्न्यांः ॥ ८ ॥

मा । नः । देवानाम् । विशंः । प्रस्नातीःऽइव । उस्राः ।
कृशम् । न । हासुः । अघ्न्याः ॥ ८ ॥

देवानां सर्वेषां विशः प्रजाभूतान् परिचारकान् नोस्मान्माहासीदग्निः मापरित्यजतु । प्रस्नातीरुस्राइव पयः क्षरन्तीर्गावइव ता यथा नमुंचंति उभयमपि नपरित्यजत्वित्यर्थः । किमिव कृशं अल्पं स्ववत्सं अघ्न्यागावो यथा नहासुर्नपरित्यजंति तद्वत् ॥ ८ ॥

८. हम देवों के परिचारक हैं। जैसे दूध देनेवाली गायों को नहीं छोड़ा जाता और गाय अपने छोटे बच्चे को नहीं छोड़ती, वैसे ही अग्नि हमें न छोड़ें।

अथ नवमी–

मानःसमस्यदूढ्यं१ःपरिंद्वेषसोअंहृतिः । ऊर्मिर्ननावमावंधीत् ॥ ९ ॥

मा । नः । समस्य । दुःऽध्यंः । परिंऽद्वेषसः । अंहृतिः । ऊर्मिः ।
न । नावम् । आ । वधीत् ॥ ९ ॥

समस्य सर्वस्य परिद्वेषसः परितोद्विषतोदुर्ध्यः पापबुद्धेरंहतिर्हननं नः अस्मान्माआवधीव माहिंस्याव् । नावमूर्मिर्न समुद्रतरंगइव स यथा तां पीडयति तद्वन्मावधीदित्यर्थः । अन्न मानः सर्वस्य दुर्धियः इत्यादिनिरुक्तं द्रष्टव्यं ॥ ९ ॥

९. जैसे समुद्र की तरङ्ग नौका को बाधा देती है, वैसे ही शत्रुओं की दुष्ट बुद्धि हमें बाधा न दे।

---

१ नि० ५. २३.

अथ दशमी–

**नमस्तेअग्नओजसेगृणन्तिदेवकृष्टयः । अमैरमित्रमर्दय ॥१०॥२५॥**

नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः ।
अमैः । अमित्रम् । अर्दय ॥ १० ॥ २५ ॥

हे अग्ने देव ते तुभ्यं नमोगृणन्ति नमस्कारशब्दमुच्चारयन्ति । किमर्थमोजसे बलाय । के कृष्टयोमनुष्यायजमानाः अतोहमपि गृणामीत्यर्थः । तथा अमैर्बलैः अमित्रं शत्रुं अर्दय नाशय ॥१०॥

१०. अग्निदेव, मनुष्य बल-प्राप्ति के लिए तुम्हारे निमित्त नमस्कार करते हैं। तुम बल के द्वारा शत्रुसंहार करो।

॥ इति षष्ठस्य पंचमे पंचविंशोवर्गः ॥ २५ ॥

ग्राम्येणाग्निना वैतानिकस्य संसर्गे अग्नये संवर्गायेष्टिः कार्या । तत्र कुवित्सुनइत्यनुवाक्या मानोअस्मिन्निति याज्या । सूत्रितं च–कुवित्सुनोगविष्टये मानोअस्मिन्महाधनइति ।

**कुवित्सुनोगविष्टयेग्नेसंवेषिषोरयिम् । उरुकृदुरुणस्कृधि ॥ ११ ॥**

कुवित् । सु । नः । गोऽइष्टये । अग्ने । सम्ऽवेषिषः ।
रयिम् । उरुऽकृत् । उरु । नः । कृधि ॥ ११ ॥

हे अग्ने त्वं नोस्माकं गविष्टये गवामेषणाय कुविद्बहु रयिं धनं संवेषिषः संप्रापय उरुकृव् त्वं नोस्मान् उरु कृधि कुरु ॥ ११ ॥

११. अग्नि, हमें गायें खोजने के लिए प्रचुर धन दो। तुम समृद्धिकर्त्ता हो। हमें समृद्ध करो।

अथ द्वादशी–

**मानोअस्मिन्महाधनेपरावर्ग्भारभृद्यथा । संवर्गंसंरयिंजय ॥ १२ ॥**

मा । नः । अस्मिन् । महाऽधने । परा । वर्क् । भारऽभृत् ।
यथा । सम्ऽवर्गम् । सम् । रयिम् । जय ॥ १२ ॥

नोस्मानस्मिन्महाधने संग्रामे मापरावर्क् मापरित्याक्षीः भारभृद्यथा भारवाही यथा भारमन्ते परित्यजति तद्वत् संवर्गं शत्रुभ्यः सहाच्छिद्यमानं रयिं धनं संजयास्मदर्थम् ॥ १२ ॥

१२. भारवाहक व्यक्ति के समान तुम हमें इस संग्राम में नहीं छोड़ना। शत्रुओं के द्वारा धन छिन्न हो रहा है। उसे हमारे लिए जीतो।

अथ त्रयोदशी—

**अन्यमस्मद्भियाइयमग्नेसिषंक्तुदुच्छुनां । वर्धानोअमंवच्छवः ॥१३॥**

अन्यम् । अस्मत् । भिये । इयम् । अग्ने । सिसक्तु ।
दुच्छुना । वर्ध । नः । अमंऽवत् । शवः ॥ १३ ॥

हे अग्ने त्वदीयेयं दुच्छुना बाधकसंहतिरस्मदन्यं अस्तोतारं भियै भयाय सिषक्तु सेवतां । त्वंच नोस्माकं अमवद्बलोपेतं शवोवेगं वर्ध वर्धय संग्रामे ॥ १३ ॥

१३. अग्नि, ये बाधायें स्तुति-विहीन के लिए भय उत्पन्न करें। तुम हमारे बल से युक्त वेग को वर्द्धित करो।

**यस्याजुंषन्नमस्विनःशमीमदुंमखस्यवा । तंघेदग्निर्वृधावंति ॥१४ ॥**

यस्यं । अजुंषत् । नमस्विनः । शमीम् । अदुंःऽमखस्य ।
वा । तम् । घ । इत् । अग्निः । वृधा । अवति ॥ १४ ॥

यस्य नमस्विनो नमस्कारवतो अदुर्मखस्य वा अदुष्टयागस्य वा शमीं कर्म अजुषदसेवत । तं घेव् तमेव यजमानं संग्रामे अग्निर्वृधावति विशेषेण गच्छति अतो नमोयुक्ता अदुर्मखाश्च भवामेति भावः ॥ १४ ॥

१४. नमस्कारवाले अथवा यज्ञ-युक्त जिस व्यक्ति का कर्म सेवा करता है, उसी के पास विशेषतया अग्नि जाते हैं।

**परस्याअधिसंवतोवराँअभ्यातर । यत्राहमस्मितांँअव ॥१५॥**

परस्याः । अधि । सम्ऽवतः । अवरान् । अभि ।
आ । तर । यत्र । अहम् । अस्मि । तान् । अव ॥ १५॥

हे अग्ने परस्याअन्यायाः संवतः सेनायाः अवरानन्यानस्मदीयान् अभि अभिमुखं आसर्वतस्तर तारय वैरिसेना अस्मद्भटैः पराभावयेत्यर्थः। यत्र येषु अस्मदीयपरिजनमध्ये अहमस्मि स्वामी तानव रक्ष ॥ १५॥

१५. शत्रु-सेना से अलग हमारी सेनाओं को अभिमुखीन करो। जिनके बीच में हूँ, उनकी रक्षा करो।

अथ षोडशी—

**विद्माहितेपुरावयमग्नेपितुर्यथावसः । अधातेसुम्नमीमहे ॥१६॥२६॥**

वि॒द्म । हि । ते॒ । पु॒रा । व॒यम् । अग्ने॑ । पि॒तुः । यथा॑ ।
अव॑सः । अध॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ ॥ १६ ॥ २६ ॥

हे अग्ने पितुः पालकस्य ते तवावसो वोरक्षणं पुरा यथा तथेदानीमपीति विद्म वयं जानीमः ।अधाथ ते तव सुम्नं सुखमीमहे याचामहे । अथवा पितुर्यथेतिदृष्टान्तः—पितुः पालनं पुत्रो यथा वेत्ति तथेत्यर्थः ॥ १६ ॥

१६. अग्नि, तुम पालक हो। पहले के समान इस समय तुम्हारे रक्षण को हम जानते हैं। अब तुम्हारे सुख की हम याचना करते हैं।

॥ इति षष्ठस्य पंचमे षड्विंशोवर्गः ॥ २६ ॥

इमंनुमायिनमिति द्वादशर्चं षष्ठं सूक्तं कुरुसुतिर्नाम काण्वऋषिः गायत्रीछदः इन्द्रोदेवता। तथाचानुक्रान्तं—इमंनुद्वादशकुरुसुतिः काण्वइति । व्यूढे दशरात्रे चतुर्थेहनि मरुत्वतीयेआद्यस्तृचः सूत्रितंच—इमंनुमायिनंहुवे त्यमुवःसत्रासाहमिति ।

तत्र प्रथमा—

इ॒मंनु॑मा॒यिनं॑हुव॒इंद्र॒मीशा॑न॒मोज॑सा । म॒रुत्व॑न्तं॒नवृ॒ञ्जसे॑ ॥ १ ॥

इ॒मम् । नु । मा॒यिन॑म् । हु॒वे॒ । इन्द्र॑म् । ईशा॑नम् ।
ओज॑सा । म॒रुत्व॑न्तम् । न । वृ॒ञ्जसे॑ ॥ १ ॥

इमं मायिनं प्रज्ञावन्तं ओजसा स्वबलेन ईशानं सर्वस्य स्वामिनं मरुत्वन्तंन । नेति संप्रत्यर्थे । मरुद्भिस्तद्वन्तमिदानीमिन्द्रं वृंजसे शत्रूणां छेदनाय हुवे आह्वयामि ॥१॥

१. मैं शत्रुच्छेदन के लिए प्राज्ञ इन्द्र को बुलाता हूँ। वे अपने बल से सबके स्वामी और मरुतोंवाले हैं।

अ॒यमिन्द्रो॑म॒रुत्स॑खा॒विवृ॒त्रस्या॑भिन॒च्छिरः॑ । वज्रे॑णश॒तप॑र्वणा॥२॥

अ॒यम् । इन्द्रः॑ । म॒रुत्ऽस॑खा । वि । वृ॒त्रस्य॑ । अ॒भि॒न॒त् ।
शिरः॑ । वज्रे॑ण । श॒तऽप॑र्वणा ॥ २ ॥

अयमिन्द्रो मरुत्सखा मरुद्युक्तोवृत्रस्य व्यभिनव् व्यच्छिनच्छिरः वज्रेण शतपर्वणा शतसंधिना ॥ २ ॥

२. इन इन्द्र ने, मरुतों के साथ, सौ पर्वों (जोड़ों) वाले वज्र से वृत्र का शिर काटा था।

अथ तृतीया—

वा॒वृ॒धा॒नोम॒रुत्स॒खेन्द्रो॒विवृ॒त्रमै॑रयत् । सृ॒जन्त्स॑मु॒द्रिया॑अ॒पः ॥३॥

वृधानः। मरुत्ऽसखा। इन्द्रः। वि। वृत्रम्।
ऐरयत्। सृजन्। समुद्रियाः। अपः॥ ३॥

अयमिन्द्रो वा वृधानो वर्धमानो मरुत्सखा मरुत्सहायो वृत्रं मेघं व्यैरयत् विदारितवान्। किंकुर्वन् समुद्रियाः समुद्रमन्तरिक्षं तत्संबन्धिन्यअपः सृजन् असृजन्॥ ३॥

३. इन्द्र ने बढ़कर और मरुतों से मिलकर वृत्र को विदीर्ण किया था। उन्होंने अन्तरिक्ष को जल बनाया था।

षष्ठेहनि मरुत्वतीये अयं हयेनेति मरुत्वन्निविद्धानीयः। सूत्रितंच—अयंहयेनवाइदमुपनोहरिभिःसुतमिति।

तत्र प्रथमा सूक्ते चतुर्थी—

अयंहयेनवाइदंस्वर्मरुत्वताजितम्। इन्द्रेणसोमपीतये॥ ४॥

अयम्। ह। येन। वै। इदम्। स्वः। मरुत्वता।
जितम्। इन्द्रेण। सोमऽपीतये॥ ४॥

अयंह खल्विन्द्रः येन वै येनखलु मरुत्वता मरुद्भिर्युक्तेनेन्द्रेणेदं स्वः स्वर्गाख्यं स्थानं इदं स्वः सर्वं कर्म वा यद्वेदं सर्वं जगत् जितं। किमर्थं सोमपीतये सोमपानाय॥ ४॥

४. जिन्होंने मरुतों से युक्त होकर, सोमपान के लिए, स्वर्ग को जीता था, वे ही ये इन्द्र हैं।

अथ तृचे द्वितीया सूक्ते पंचमी—

मरुत्वन्तमृजीषिणमोजस्वन्तंविरप्शिनम्। इन्द्रंगीर्भिर्हवामहे॥५॥

मरुत्वन्तम्। ऋजीषिणम्। ओजस्वन्तम्। विऽरप्शिनम्।
इन्द्रम्। गीःऽभिः। हवामहे॥ ५॥

मरुत्वंतं मरुद्भिस्तद्वन्तं ऋजीषिणं। अभिषुतशेषऋजीषः सच तृतीयसवने पुनः सूयते। तद्वन्तं ओजस्वन्तं ओजोनामाष्टमीदशा शरीरवृद्ध्युपेतमित्यर्थः। विरप्शिनं महन्नामैतत् महान्तं एवं महानुभावमिन्द्रं गीर्भिः स्तुतिभिर्हवामहे आह्वयामः॥ ५॥

५. इन्द्र मरुतों से युक्त, ऋजीष (तृतीय सवन में पुनः अभिषुत सोम का शेष भाग) वाले, सोम-संयुक्त, ओजस्वी और महान् हैं। हम स्तुति-द्वारा उन्हें बुलाते हैं।

इन्द्रंप्रत्नेनमन्मनामरुत्वन्तंहवामहे। अस्यसोमस्यपीतये॥६॥२७॥

इन्द्रम्। प्रत्नेन। मन्मना। मरुत्वन्तम्। हवामहे।
अस्य। सोमस्य। पीतये॥ ६॥ २७॥

मरुत्वन्तमिन्द्रं प्रत्नेन पुराणेन मन्मना मननीयेन स्तोत्रेण हवामहे अस्य सोमस्य पीतये पानाय ॥ ६ ॥

६. मरुतों से युक्त इन्द्र को हम, सोमपान के लिए, प्राचीन स्तोत्र के द्वारा बुलाते हैं।

॥ इति षष्ठस्य पंचमे सप्तविंशोवर्गः ॥ २७ ॥

पंचमेहनि मरुत्वतीये मरुत्वाँइन्द्रमीढ्वइति तृचोनिविद्धानीयः । सूत्रितंच—मरुत्वाँइन्द्रमीढ्वस्तमिन्द्रंवाजयामसीति ।

मरुत्वाँइन्द्रमीढ्वःपिबासोमंशतक्रतो । अस्मिन्यज्ञेपुरुष्टुत ॥ ७ ॥

मरुत्वान् । इन्द्र । मीढ्वः । पिब । सोमम् । शतक्रतो इति शतऽक्रतो । अस्मिन् । यज्ञे । पुरुऽस्तुत ॥ ७ ॥

हे मीढ्वः फलस्य वृष्टेर्वा सेक्तः शतक्रतो बहुकर्मेन्द्र त्वं मरुत्वान् सोमं पिबास्मिन्यज्ञे । हे पुरुष्टुत बहुभिराहूत ॥ ७ ॥

७. फल-वर्षक, अनेकों द्वारा आहूत और शतक्रतु इन्द्र, मरुतों के साथ तुम इस यज्ञ में सोमपान करो।

तुभ्येदिन्द्रमरुत्वतेसुताःसोमासोअद्रिवः । हृदाहूयन्तउक्थिनः ॥ ८ ॥

तुभ्य । इत् । इन्द्र । मरुत्वते । सुताः । सोमासः । अद्रिऽवः । हृदा । हूयन्ते । उक्थिनः ॥ ८ ॥

हे अद्रिवोवज्रवन्निन्द्र मरुत्वते तुभ्येत् तुभ्यमेव सोमासः सुताअभिषुताः तेचोक्थिनः शस्त्रवन्तो हृदा मनसा भक्त्या हूयन्ते त्वदर्थम् ॥ ८ ॥

८. वज्रधर इन्द्र, तुम्हारे और मरुतों के लिए सोम अभिषुत हुआ है। उक्थ मन्त्रों का उच्चारण करनेवाले व्यक्ति भक्ति के साथ तुम्हें बुलाते हैं ।

अथ तृचे तृतीया सूक्ते नवमी—

पिबेदिन्द्रमरुत्सखासुतंसोमंदिविष्टिषु । वज्रंशिशानओजसा ॥ ९ ॥

पिब । इत् । इन्द्र । मरुत्ऽसखा । सुतम् । सोमम् । दिविष्टिषु । वज्रम् । शिशानः । ओजसा ॥ ९ ॥

हे इन्द्र मरुत्सखा त्वं सुतमभिषुतं सोमं पिब किमर्थं दिविष्टिषु अस्माकमह्नामभिगमनेषु दिवः स्वर्गस्य वा एषणेषु निमित्तेषु पीत्वा चौजसा बलेन सोमपानजनितेन वज्रं शिशानः तीक्ष्णीकुर्वन् शत्रून् जहीतिभावः ॥ ९ ॥

९. इन्द्र, तुम मरुतों के मित्र हो। तुम हमारे स्वर्ग देनेवाले यज्ञ में अभिषुत सोम का पान करो और बल के द्वारा वज्र को तेज करो।

चतुर्विंशेहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे उत्तिष्ठन्निति तृचः षळहस्तोत्रियः। सूत्रितंच—उत्तिष्ठन्नोजसासहर्भिधिविश्वाअपद्विषइति ब्राह्मणाच्छंसिनइति।

अस्मिंस्तृचे प्रथमा सूक्ते दशमी—

उत्तिष्ठन्नोजसासहपीत्वीशिप्रेअवेपयः। सोममिन्द्रचमूसुतम् ॥१०॥

उत्ऽतिष्ठन्। ओजसा। सह। पीत्वी। शिप्रे इति। अवेपयः।
सोमम्। इन्द्र। चमू इति। सुतम् ॥ १० ॥

हे इन्द्र त्वं पीत्वी पीत्वोजसा बलेन सहोत्तिष्ठन् शिप्रे हनू अवेपयः अकंपयः मदावेशादितिभावः। किं पीत्वा चमू चम्वोरधिषवणफलकयोः सुतं सोमम् ॥ १० ॥

१०. अभिषवण-फलकों (चमुओं) पर अभिषुत सोम को पीते हुए बल के साथ खड़े होकर दोनों जबड़ों को कँपाओ।

अनुत्वारोदसीउभेक्रक्षमाणमकृपेताम्। इन्द्रयद्दस्युहाभवः ॥११॥

अनु। त्वा। रोदसी इति। उभे इति। क्रक्षमाणम्।
अकृपेताम्। इन्द्र। यत्। दस्युऽहा। अभवः ॥ ११ ॥

हे इन्द्र क्रक्षमाणं शत्रून्विलिखन्तं त्वा त्वां उभे रोदसी उभे अपि द्यावापृथिव्यौ अन्वकृपेतां अनुकल्पयेतां। यद्यदा दस्युहा भवोभवसि तदा ॥ ११ ॥

११. तुम शत्रुओं का विनाश करनेवाले हो। उसी समय द्यावापृथिवी, दोनों ही तुम्हारी कल्पना करते हैं, जिस समय तुम दस्युओं का विनाश करते हो।

अथ तृचे तृतीया सूक्ते द्वादशी—

वाचमष्टापदीमहंनवस्रक्तिमृतस्पृशम्। इंद्रात्परितन्वंममे ॥१२॥२८॥

वाचम्। अष्टाऽपदीम्। अहम्। नवऽस्रक्तिम्। ऋतऽस्पृशम्।
इन्द्रात्। परि। तन्वम्। ममे ॥ १२ ॥ २८ ॥

अष्टापदीं अष्टाभिर्दिग्भिर्विदिग्भिः साष्टापदीं नवस्रक्तिं उपरिस्थितेनादित्येन नवस्रक्तिं आसु दिक्षु व्याप्तामित्यर्थः। ऋतस्पृशं यज्ञस्पृशं वाचं स्तुतिं मया परिपूर्णादिन्द्रात्तन्वं तनुं न्यूनां सतीं परिममे अन्यूनेयत्तां करोमीत्यर्थः। कात्स्न्येंन स्वरूपं स्तुत्या विषयीकर्तुमशक्यत्वादिति भावः॥ १२॥

१२. आठ और नौ दिशाओं (चार दिशायें, चार कोण और आदित्य) में यज्ञ-स्पर्श करनेवाली स्तुति भी इन्द्र से कम है। मैं उसी स्तुति को करता हूँ। ॥ इति षष्ठस्य पंचमेष्टाविंशोवर्गः॥ २८॥

जज्ञानइत्येकादशर्चं सप्तमं सूक्तं काण्वस्य पुरुसुतेरार्षं आद्यानव गायत्र्यः दशमी बृहती एकादशी सतोबृहती इन्द्रोदेवता। तथाचानुक्रान्तं—जज्ञानएकादशप्रगाथान्तमिति। महाव्रते निष्केवल्ये जज्ञानोनुशतक्रतुरित्येषा। तथैव पंचमारण्यके सूत्रितं—जज्ञानोनुशतक्रतुरित्येकेति।

जज्ञानोनुशतक्रंतुर्विपृंच्छदितिमातरंम्। कउग्राःकेहंश्रृण्विरे॥१॥

जज्ञानः। नु। शतऽक्रतुः। वि। पृच्छत्। इति। मातरंम्। के। उग्राः। के। ह। श्रृण्विरे॥ १॥

अयमिन्द्रो जज्ञानोनु जायमानएव शतक्रतुर्बहुकर्मा इतीत्थं मातरं स्वजननीं विपृच्छत् विपृच्छति। किमिति के उग्रा उद्गूर्णबला लोके केह श्रृण्विरे श्रूयन्ते गुणैः केविश्रुताइत्यर्थः॥१॥

१. जन्म लेते ही बहुकर्म-शाली होकर इन्द्र ने अपनी माता से पूछा, "उग्र कौन हैं और प्रसिद्ध कौन है?"

अथ द्वितीया—

आदींशवस्यंब्रवीदौर्णवाभमंहीशुवंम्। तेपुंत्रसन्तुनिष्टुरंः॥ २॥

आत्। ईम्। शवसी। अब्रवीत्। और्णऽवाभम्। अहीशुवंम्। ते। पुत्र। सन्तु। निःऽतुरंः॥ २॥

इन्द्रेण पृष्टा शवसी माता आदनंतरमेव ईं एनमिन्द्रमब्रवीत्। किमिति उच्यते—और्णवाभमहीशुवमेतन्नामानावसुरौ तिष्ठतः तौ उक्तौ। अन्ये च तादृशाः हे पुत्र तव निष्टुरो निस्तारणीयाः सन्त्विति॥ २॥

२. शवसी (बलवती माता) ने उसी समय कहा—"पुत्र, ऊर्णनाभ, अहीशुव आदि अनेक हैं। उनका निस्तार करना उपयुक्त है।"

अथ तृतीया—

समित्तान्वृंत्रहाखिंदत्खेअराँइंवखेदंया। प्रवृंद्धोदस्युहाभंवत्॥३॥

सम् । इत् । तान् । वृत्रऽहा । अखिदत् । खे । अरान्ऽइव ।
खेदया । प्रऽवृद्धः । दस्युऽहा । अभवत् ॥ ३ ॥

तान् जनन्योक्तान्वृत्रहा इन्द्रः समिद् सहैवाखिदत् खेदनं नामाकर्षणं । खे रथचक्रस्य नाभौ अरान् चक्रांगभूतान् शंकून् खेदयाइव रज्ज्वेव तया तान्यथा संखिदन्ति तद्वत् तथा कृत्वादस्युहा शत्रुघातीन्द्रः प्रवृद्धोभवत् ॥ ३ ॥

३. वृत्रघ्न इन्द्र ने रथ-चक्र की लकड़ियों (अरों) के समान एक साथ ही रस्सी से उन्हें खींचा और दस्युओं का हनन करके प्रवृद्ध हुए।

अथ चतुर्थी—

एकंयाप्रतिधापिबत्साकंसरांसित्रिंशतंम् । इन्द्रःसोमंस्यकाणुका ॥४॥

एकंया । प्रतिऽधा । अपिबत् । साकम् । सरांसि ।
त्रिंशतंम् । इन्द्रंः । सोमंस्य । काणुका ॥ ४ ॥

अयमिन्द्रः एकया एकेन प्रतिधा प्रतिधानेन साकं सह एकधैव त्रिंशतं सरांसि उक्थपात्राणीत्यर्थः। कीदृशानि सरांसि सोमस्यपूर्णानि सोमरसेन पूर्णानि। काणुका कान्तानि क्रान्तानिवा सोमेन कृतानि वा सोमपूर्णानि अपिबत् पीतवान् माध्यंदिनसवने। याज्ञिकप्रसिद्धैवं। नैरुक्तप्रसिद्ध्यातु कालाभिमानीन्द्रः त्रिंशदपरपक्षस्याहोरात्रांस्त्रिंशत्पूर्वपक्षस्य च सन्ति तानेकरूपमनुभवतीति एतत्सर्वमेकेन प्रतिधानेनापिबदित्यादि[1] निरुक्ते तद्व्याख्यानेच स्पष्टमुक्तं तदत्र द्रष्टव्यम् ॥ ४ ॥

४. इन्द्र ने एक साथ ही सोम से पूर्ण तीस कमनीय पात्रों को पी डाला।

अथ पञ्चमी—

अभिगंन्धर्वमंतृणदबुध्नेषुरजःस्वा । इन्द्रोंब्रह्मभ्यइद्वृधे ॥ ५ ॥ २९ ॥

अभि । गन्धर्वम् । अतृणत् । अबुध्नेषुं । रजःऽसु ।
आ । इन्द्रंः । ब्रह्मऽभ्यंः । इत् । वृधे ॥ ५ ॥ २९ ॥

अयमिन्द्रो गंधर्वं गामुदकं धारयतीति गंधर्वो मेघस्तं अभ्यातृणत् सर्वतोहिंसितवान् । कुत्र अबुध्नेषु पदनिधानयोग्यस्थानरहितेषु रजःसु लोकेषु अन्तरिक्षप्रदेशेष्वित्यर्थः। किमर्थं ब्रह्मभ्यइव् ब्राह्मणेभ्यएव वृधे वर्धनाय ॥ ५ ॥

५. इन्द्र ने मूल-शून्य अन्तरिक्ष में ब्राह्मणों के वर्द्धन के लिए चारों ओर से मेघ को मारा।

॥ इति षष्ठस्य पंचमे एकोनत्रिंशोवर्गः ॥ २९ ॥

---

१ नि० ५. ११.।

अथ षष्ठी—

निराविध्यद्गिरिभ्यआधारयत्पक्कमोदनम् ।
इन्द्रोबुन्दंस्वाततम् ॥ ६ ॥

निः । अविध्यत् । गिरिऽभ्यः । आ । धारयत् । पक्कम् ।
ओदनम् । इन्द्रः । बुन्दम् । सुऽआततम् ॥ ६ ॥

अयमिन्द्रो गिरिभ्यो मेघेभ्यः सकाशादुदकं निर्गमयितुं निराविध्यत् संप्राहरत् तानेव मेघान् अधारयत् । किंकुर्वन् पक्कं परिपक्कमोदनं कुर्वन् मनुष्याणामर्थाय । केन साधनेनेति त-दुच्यते—बुंदं इषुं स्वाततं सुष्ठु सर्वतोविस्तृतं आदायेतिशेषः ॥ ६ ॥

६. मनुष्यों के लिए परिपक्व अन्न का निर्माण करते हुए इन्द्र ने विराट् शर को लेकर मेघ को छेदा था।

शतब्रध्नइषुस्तवसहस्रपर्णएकइत् । यमिन्द्रचकृषेयुजम् ॥ ७ ॥

शतऽब्रध्नः । इषुः । तव । सहस्रऽपर्णः । एकः ।
इत् । यम् । इन्द्र । चकृषे । युजम् ॥ ७ ॥

हे इन्द्र तवेषुः शतब्रध्नः शताग्रः सहस्रपर्णः सहस्रसंख्याकैः पत्रैः संवृतः शीघ्रगमनाय अपरिमितगमनोवा सचैकइत् एकएव यंचेषुं युजं सहायं चकृषे करोषि युद्धाय ॥ ७ ॥

७. इन्द्र, तुम्हारा एकमात्र वाण सौ अग्र भागों से युक्त और सहस्र पात्रों से संयुक्त है। तुम इसी वाण को सहायक बनाते हो।

अथाष्टमी—

तेनस्तोतृभ्यआभरनृभ्योनारिभ्योअत्तवे । सद्योजातऋभुष्ठिर॥८॥

तेन । स्तोतृऽभ्यः । आ । भर । नृऽभ्यः । नारिऽभ्यः ।
अत्तवे । सद्यः । जातः । ऋभुऽस्थिर ॥ ८ ॥

तेनेषुणा स्तोतृभ्यः अस्मभ्यं नृभ्यो मनुष्येभ्यः पुत्रेभ्य इत्यर्थः। तथा नारिभ्यः स्त्रीभ्य-श्चात्तवे अदनाय पर्याप्तं धनमाभराहर । सद्यस्तदानीमेव जातोस्माभिः दत्तेन सोमेन प्रवृद्धः सन् हेऋभुस्थिर प्रभूतःस्थिरश्च संग्रामे सतथोक्तः हे तादृशेन्द्र त्वमाभरेतिसमन्वयः ॥ ८ ॥

८. स्तोताओं, पुत्रों और स्त्रियों के भक्षण के लिए उसी वाण के द्वारा यथेष्ट धन ले आओ। जन्म के साथ ही तुम प्रभूत और स्थिर हो।

अथ नवमी—

एताच्यौत्नानितेकृतावर्षिष्ठानिपरीणसा। हृदावीड्वधारयः ॥ ९ ॥

एता। च्यौत्नानि। ते। कृता। वर्षिष्ठानि। परीणसा।
हृदा। वीळु। अधारयः ॥ ९ ॥

हे इन्द्र ते त्वया एता एतानि पुरतः सर्वैर्दृश्यमानानि वर्षिष्ठानि अतिशयेन प्रवृद्धानि परीणसा परितोनतानि अतएव च्यौत्नानीति भावः भूमेः कीलवद्धारणानि कृता कृतानि पर्वतास्त्वया कृताइत्यर्थः। या यानि हृदा बुध्या वीळु स्थिराण्यधारयः बुध्या कर्तव्यानीति यान्यधारयस्तानीमानीति ॥ ९ ॥

९. इन्द्र, तुमने ये सब अतीव प्रवृद्ध और चारों ओर फैले हुए पर्वतों को बनाया है। बुद्धि में उन्हें स्थिर भाव से धारण करो।

अथ दशमी—

विश्वेत्ताविष्णुराभरदुरुक्रमस्त्वेषितः।
शतंमहिषान्क्षीरपाकमोदनंवराहमिन्द्रएमुषम् ॥ १० ॥

विश्वा। इत्। ता। विष्णुः। आ। अभरत्। उरुऽक्रमः।
त्वाऽइषितः। शतम्। महिषान्। क्षीरऽपाकम्। ओदनम्।
वराहम्। इन्द्रः। एमुषम् ॥ १० ॥

अस्याऋचोनैरुक्तैतिहासिकमतभेदेनद्विधायोजना। नैरुक्तपक्षे तावत्—हेइन्द्र ता तानि यानि त्वया स्रष्टव्यान्युदकानि सन्ति तानि विष्णुर्व्यापनशीलआदित्यआभरत् आभरति लोकाय प्रयच्छतीत्यर्थः। कीदृशोविष्णुः उरुक्रमोबहुगतिः। किं स्वविरोधेनेत्याह त्वेषितः त्वयाप्रेरितः नकेवलमुदकान्येव। अपिच शतं महिषान् शतसंख्याकान् पशून् महिषशब्दो गवादेरप्युपलक्षकः। अथवा शतशब्दोपरिमितवचनः महिषइति महन्नाम असंख्यातान् महतोयज्ञान् यजमानेभ्यआभरत् ददातीत्यर्थः। किंच क्षीरपाकं क्षीरपक्कमोदनं पायसं एतच्चरुपुरोडाशादेरुपलक्षकं तद्यजमानेभ्यआभरत्। अथवा सर्वार्थं वृष्टिप्रदानद्वारा ओदनं प्राहरत्। किंच इन्द्रोवराहं जलपूर्णं मेघं हन्तीतिशेषः। कीदृशं तं एमुषं आइत्यस्य स्थाने छान्दसएकारः आमुषमुदकस्य मोष-

कमित्यर्थः। निरुक्तपक्षे एवं। ऐतिहासिकपक्षे चरकब्राह्मणे इतिहासः आम्नायते—विष्णुर्यज्ञः सदेवेभ्यआत्मानमन्तरधात्तमन्यदेवतानाविदन् इन्द्रस्त्ववेत् सइन्द्रमब्रवीत्कोभवानिति। तमिन्द्रः प्रत्यब्रवीत् अहं दुर्गाणामसुराणां च हन्ता भवांस्तुक इति। सोब्रवीत् अहं दुर्गादाहर्ता त्वंतु यदि दुर्गाणामसुराणां हन्ता ततोयं वराहोवाममुषएकविंशत्यापुरांपारेश्ममयीनां वसति तस्मिन्नसुराणां वसु वाममस्ति तमिमं जहीति। तस्येन्द्रस्ताः पुरोभित्वा हृदयमविध्यत् अधि तत्र यदासीत्तद्विष्णुराहरदिति। सोयमितिहासः अस्येदुमातुःसवनेषु विश्वेत्ताविष्णुरित्याभ्यां प्रतिपादितः। तयोर्मध्ये अस्येदुमातुरित्यत्र विष्णुना हेइन्द्र त्वं दुर्गाणां हन्ता इति आत्मानं कथयसि तर्हि वाममुषं वराहमसुरं जहीत्युक्तोर्थो विध्यद्वराहमिति पादेन प्रतिपादितः। इन्द्रेण च विष्णो त्वं दुर्गादाहर्तेतिब्रूषे। मया पुराणि जितानि असुरश्च घातितः तस्य वामं वस्वानयेत्युक्तो विष्णुमूर्तिस्तस्य वराहासुरस्य धनं मुमोष। सोर्थो मुषायद्विष्णुःपचतमिति पादेन सूचितः। सकिं पुनर्मुषितवानिति तदत्रोच्यते—विश्वेत्तेति। हे इन्द्र त्वेषितःत्वया प्रेरितो विष्णुर्यज्ञरूपी त्वेषितः त्वं दुर्गादाहर्ता किल तर्हि त्वं तस्य धनान्याहरेति त्वया प्रेरितः सन् उरुक्रमो भूत्वा विश्वेत्ता यानि त्वया हर्तव्यानि इत्युक्तानि यानि च तत्र स्थितानि सर्वाण्याभरत् आभरतु। कानि तानीति शतं महिषान् अपरिमितान् प्रशस्तान् पदार्थान् तेषां वाहनरूपान् महिषान्वा क्षीरपाकमोदनं च पक्वमात्रमेवोदनं वा भरत्। विध्यद्वराहमित्यत्रोक्तोर्थश्च चरमपादेनोच्यते—इन्द्रस्तु वराहं वराहारं स्वीकृतासुरसर्वस्वं वराहरूपिणं वा एमुषं एमुषनामानं अथवा एमुषं धनानामामोषकं वराहमसुरं हृदये अविध्यदितिशेषः ॥ १० ॥

१०. इन्द्र, तुम्हारा जो सब जल है, उसे विष्णु (आदित्य) प्रदान करते हैं। विष्णु आकाश में भ्रमण करनेवाले (बहु-गति) और तुम्हारे द्वारा प्रेरित हैं। इन्द्र ने सौ महिषों (पशुओं), क्षीर-पक्व अन्न और जल चुरानेवाले मेघ (वराह) को भी दिया।

अथैकादशी--

तुविक्षंतेसुकृतंसूमयंधनुःसाधुर्बुन्दोहिरण्ययः।
उभातेबाहूरण्यासुसंस्कृतऋदूपेचिदृदूवृधा ॥ ११॥३०॥

तुविऽक्षम्। ते। सुऽकृतम्। सुऽमयम्। धनुः। साधुः। बुन्दः।
हिरण्ययः। उभा। ते। बाहू इति। रण्या। सुऽसंस्कृता।
ऋदुऽपे। चित्। ऋदुऽवृधा। ११ ॥ ३० ॥

---

१ ऋ० सं० १. ४, २८.।

एषा निरुक्ते एकमपि पदं विहाय यास्केन व्याख्याता तदेवलिख्यते—तुविक्षं बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दोहिरण्मयः उभौ ते बाहू रण्यौ रमणीयौ संग्राम्यौ वर्दूपे अर्दनपातिनौ गमनपातिनौ मर्मण्यर्दनवेधिनौ गमनवेधिनौ वेति[१] ॥११॥

११. तुम्हारा धनुष बहुत बाण फेंकनेवाला, सुनिर्मित और सुखावह है। तुम्हारा बाण सोने का है। तुम्हारी दोनों भुजायें रमणीय, मर्मभेदक, सुसंस्कृत और यज्ञवर्द्धक हैं।

॥ इति षष्ठस्य पञ्चमे त्रिंशोवर्गः ॥ ३० ॥

पुरोळाशंनइति दशर्चमष्टमं सूक्तं काण्वस्य कुरुसुतेरार्षं आद्यानवगायत्र्योदशमी बृहती इन्द्रोदेवता। तथाचानुक्रान्तं—पुरोळाशं दशबृहत्यन्तमिति। सूक्तविनियोगोलैङ्गिकः। महाव्रते निष्केवल्ये गायत्रतृचाशीतौ आद्यास्तिस्रऋचः। तथाच सूत्रितं—पुरोळाशंनोअन्धसइति तिस्रइति।

पुरोळाशंनोअन्धसइन्द्रंसहस्रमाभर। शताचंशूरगोनाम् ॥ १ ॥

पुरोळाशम्। नः। अन्धसः। इन्द्र। सहस्रम्। आ। भर। शता। च। शूर। गोनाम् ॥ १ ॥

हे शूर इन्द्र पुरोळाशं पुरोदीयमानमेतत्संज्ञकं अंधसोन्नं स्वीकृत्य गोनां गवां सहस्रं शता शतानि च नोस्मभ्यं आभराहर। अथवा नोस्मभ्यं पुरतो दीयमानं अंधसोंधोव्यञ्जनं सहस्रं सहस्रसंख्याकं गोसहस्रं चाहरेति योज्यम् ॥ १ ॥

१. शूर इन्द्र, पुरोडाश नाम के अन्न को स्वीकार कर सौ और सहस्र गायें हमें दो।

अथ द्वितीया—

आनोभरव्यञ्जनंगामश्वमभ्यञ्जनम्। सचामनाहिरण्यया ॥ २ ॥

आ। नः। भर। विऽअञ्जनम्। गाम्। अश्वम्। अभिऽअञ्जनम्। सचा। मना। हिरण्यया ॥ २ ॥

हे इन्द्र त्वंनोस्मभ्यं व्यंजनं गामश्वं अभ्यञ्जनं तैलं चाभर। मना मननीयानि हिरण्यया हिरण्मयानि उपकरणानि सचा सहाभरेति ॥ २ ॥

२. इन्द्र, तुम हमें गाय, अश्व और तैल दो। साथ ही मनोहर और हिरण्मय अलंकार भी दो।

---

१ नि० ६. ३३.।　　* हेइन्द्र ते तव धनुः तुविक्षं महाक्षेपं सुकृतं सूमयं सुसुखच ते बुन्दः इषुः साधुः हिरण्ययः हिरण्मयः ते उभा उभौ बाहू रण्या रमणीयौ सुसंस्कृता सुष्ठु अलंकृतौ ऋदुपेचित् संग्रामे अर्दनपातिनौ ऋदुवृधा अर्दनवर्धनौ। इतिपुस्तकांतरे उपलभ्यते।

अथ तृतीया—

उतनःकर्णशोभनापुरूणिधृष्णवाभर । त्वंहिशृण्विषेवसो ॥ ३ ॥

उत । नः । कर्णऽशोभना । पुरूणि । धृष्णो इति । आ ।
भर । त्वम् । हि । शृण्विषे । वसो इति ॥ ३ ॥

उतापिच नोस्मभ्यं कर्णशोभना कर्णाभरणानि पुरूणि बहून्याभर । हे धृष्णो धर्षकेन्द्र वसो वासयितरिन्द्र त्वं हि खलु शृण्विषे श्रूयसे । किमिति उदारोयमिन्द्रइति ॥ ३ ॥

**३. शत्रुओं को रगड़नेवाले और वासदाता इन्द्र, तुम्हीं सुने जाते हो। तुम हमें बहु-संख्यक कर्णाभरण प्रदान करो।**

नकींवृधीकइन्द्रतेनसुषानसुदाउत । नान्यस्त्वच्छूरवाघतः ॥ ४ ॥

नकीम् । वृधीकः । इन्द्र । ते । न । सुऽसाः । न । सुऽदाः ।
उत । न । अन्यः । त्वत् । शूर । वाघतः ॥ ४ ॥

हे इन्द्र ते त्वत्तोन्यः कश्चिद्वृधीको वर्धयिता नकीं नैव । तथा सुषाः सुष्ठु संभक्ताः संग्रामादौ त्वत्तोन्योन । उतापिच सुदाः सुदाता न । तथा हेशूर त्वत् त्वत्तोन्यो वाघतः ऋत्विङ्नामैतत् ऋत्विजो यजमानस्य नेता नान्योस्ति त्वामृते ॥ ४ ॥

**४. शूर इन्द्र, तुम्हारे सिवा अन्य वर्द्धक नहीं है। तुम्हारी अपेक्षा संग्राम में दूसरा कोई सम्भक्त नहीं है—कोई उत्तम दाता भी नहीं है। तुम्हारे सिवा ऋत्विकों का कोई नेता भी नहीं है।**

नकीमिन्द्रोनिकर्तवेनशक्रःपरिशक्तवे । विश्वंशृणोतिपश्यति॥५॥३१॥

नकीम् । इन्द्रः । निऽकर्तवे । न । शक्रः । परिऽशक्तवे ।
विश्वम् । शृणोति । पश्यति ॥ ५ ॥ ३१ ॥

अयमिन्द्रो निकर्तवे निकर्तुं नकीं नैव शक्यः।तथा शक्रः शक्तोयं परिशक्तवे परिभावाय नशक्यत इति । सतु विश्वं शृणोति पश्यतिच ॥ ५ ॥

**५. इन्द्र किसी का तिरस्कार नहीं करते। इन्द्र किसी से हार नहीं सकते। वे संसार को देखते और सुनते हैं।**

॥ इति षष्ठस्य पंचमे एकत्रिंशोवर्गः ॥ ३१ ॥

अथ षष्ठी—

समन्युंमर्त्यानामदब्धोनिचिकीषते । पुरानिदश्चिकीषते ॥ ६ ॥

सः। मन्युम्। मर्त्यानाम्। अदब्धः। नि।
चिकीषते। पुरा। निदः। चिकीषते॥ ६॥

सइन्द्रो मन्युं क्रोधं केषां मर्त्यानां अदब्धः केनाप्यहिंसितः सन् निचिकीषते निकरोति। किं मन्युं प्राप्यैव नेत्याह निदोनिन्दायाः पुरा पूर्वमेव चिकीषते यदा तं निन्दितुमिच्छति कश्चित्ततः पूर्वमेव तं निकरोतीत्यर्थः॥ ६॥

६. इन्द्र का वध मनुष्य नहीं कर सकते। वे क्रोध को मन में स्थान नहीं देते। निन्दा के पूर्व ही निन्दा को स्थान नहीं देते।

क्रत्वइत्पूर्णमुदरंतुरस्यास्तिविधतः। वृत्रघ्नःसोमपाव्नः॥ ७॥

क्रत्वः। इत्। पूर्णम्। उदरम्। तुरस्य। अस्ति।
विधतः। वृत्रऽघ्नः। सोमऽपाव्नः॥ ७॥

तुरस्य त्वरमाणस्य वृत्रघ्नो वृत्रं हतवतः सोमपाव्नः सोमपातुरुदरं क्रत्वइव कर्मणैव पूर्णमस्ति भवति। कस्य कर्मणेति उच्यते—विधतः परिचरतो यजमानस्य। यतः परिचरणाभावे वस्य कुक्षिपूर्त्यभावः अतस्तत्पूर्तये परिचरतेतिशेषः॥ ७॥

७. क्षिप्रकारी, वृत्रघ्न और सोमपाता इन्द्र का उदर सेवक के कर्म द्वारा ही पूर्ण है।

अथाष्टमी—

त्वेवसूनिसङ्गताविश्वाचसोमसौभगा। सुदात्वपरिह्वृता॥ ८॥

त्वे इति। वसूनि। सम्ऽगता। विश्वा। च।
सोम। सौभगा। सुऽदातु। अपरिऽह्वृता॥ ८॥

हे इन्द्र त्वे त्वयि वसूनि धनान्यस्मदिष्टानि संगता संगतानि। तथा हे सोम सोमवन्निन्द्र त्वयि विश्वा सर्वाणि सौभगा सौभाग्यानि संगतानि। तथा सुदातु सुदानान्यपरिह्वृता अकुटिलानि अतस्तानि कुर्विति भावः। यद्वाचेन्द्रः सोमं पीत्वा सोम इत्यभिहितः सोमश्रुतेः॥८॥

८. इन्द्र, तुममें सारे धन सङ्गत हैं। सोमपाता इन्द्र, तुममें समस्त सौभाग्य संगत हैं। सुन्दर दान सदा कुटिलता से शून्य हुआ करता है।

अथ नवमी—

त्वामिद्यवयुर्ममकामोगव्युर्हिरण्ययुः। त्वामश्वयुरेषते॥ ९॥

त्वाम्। इत्। यवऽयुः। मम। कामः। गव्युः।
हिरण्यऽयुः। त्वाम्। अश्वऽयुः। आ। ईषते॥ ९॥

त्वामित् त्वामेवेषते किं मम कामः सकीदृशः यवयुः यवेच्छुः सन्नेषते । तथा गव्युः सन्नेषते । तथा हिरण्ययुश्चसन्नेषते । तथाश्वयुश्च सन्नेषते । तं काममाप्तेच्छं कुर्विति भावः ॥९॥

९. मेरा मन यव (जौ), गौ, सुवर्ण और अश्व का अभिलाषी होकर तुम्हारे ही पास जाता है।

तवेदिन्द्राहमाशसाहस्तेदात्रंचनादंदे ।
दिनस्यंवामघवन्त्संभृतस्यवापूर्धियवंस्यकाशिना ॥ १० ॥ ३२ ॥

तवं । इत् । इन्द्र । अहम् । आऽशसा । हस्ते । दात्रम् ।
चन । आ । ददे । दिनस्यं । वा । मघऽवन् ।
समऽभृतस्य । वा । पूर्धि । यवंस्य । काशिना ॥ १० ॥ ३२ ॥

हे मघवन् इन्द्र तवेव् तवैवाशसा आशंसनेन त्वमस्मदीयं क्षेत्रं यवसमृद्धं करोषीत्याशंसनेन हस्ते दात्रं चन लवनसाधनं दात्रमथाददे स्वीकरोमि । किमनेन प्रयासेन दिनस्य वा पूर्वमेव छिन्नस्य वा यवस्य संभृतस्य वा पूर्वमेव छित्वा निष्कृतस्य राशीकृतस्य वा यवस्य काशिना मुष्टिना पूर्धि पूरयाशंसनं देहिच ॥ १० ॥

१०. इन्द्र, मैं तुम्हारी आशा से ही हाथों में दात्र (खेत काटने का हथियार) धारण करता हूँ। पहले काटे हुए अथवा पूर्व संगृहीत जौ की मुष्टि से आशा को पूर्ण करो।

॥ इति षष्ठस्य पंचमे द्वात्रिंशोवर्गः ॥ ३२ ॥

अयं क्रतुरिति नवर्चं नवमं सूक्तं । अत्रेयमनुक्रमणिका—अयंक्रतुर्नवक्रतुर्भार्गवः सौम्यमन्त्यानुष्टुविति । भार्गवः क्रतुर्ऋषिः नवम्यनुष्टुप् अष्टौ गायत्र्यः सोमोदेवता विनियोगोलैंगिकः ।

अयंक्रतुरगृंभीतोविश्वजिदुद्भिदित्सोमः । ऋषिर्विप्रःकाव्येन ॥१॥

अयम् । क्रतुः । अगृभीतः । विश्वऽजित् ।
उत्ऽभित् । इत् । सोमः । ऋषिः । विप्रः । काव्येन ॥ १ ॥

अयं सोमः क्रतुः कर्ता सर्वस्य अगृभीतोन्यैरगृहीतः विश्वजित् सर्वस्य जेता उद्भित् फलस्योद्भेदकः अथवा विश्वजिदुद्भिदौ सोमयागौ तयोर्निष्पादकत्वात् तद्रूपौ ऋषिर्ज्ञानवान् विप्रः मेधावी विप्रवत्पूज्यः विशेषेण पूरकोवा एवं महानुभावः सोमः काव्येन स्तोत्रेण स्तुत्यो भवतीतिशेषः ॥ १ ॥

१. ये सोमकर्त्ता हैं। कोई इनका ग्रहण नहीं कर सकता। ये विश्वजित् और उद्भिद् नामक सोम-यज्ञों के निष्पादक हैं। ये ऋषि (ज्ञानी), मेधावी और काव्य (स्तोत्र) के द्वारा स्तुत्य हैं।

अथ द्वितीया—

अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत्तुरम्।
प्रेमन्धः ख्यन्निः श्रोणो भूत्॥ २ ॥

अभि। ऊर्णोति। यत्। नग्नम्। भिषक्ति। विश्वम्। यत्।
तुरम्। प्र। ईम्। अन्धः। ख्यत्। निः। श्रोणः। भूत्॥ २ ॥

अयं सोमो यन्नग्नमस्ति तदभ्यूर्णोति आच्छादयति यन्नग्नमिव विफलं वर्तते तदाच्छादयति फलेन अथवा वस्त्रं जनयन्नाच्छादयति। तथा यत्तुरमातुरं रुग्णं विश्वं तद्भिषक्ति भिषज्यति यज्ञद्वारा स्वर्गसाधनेन औषधरूपेण च शरीरसिद्धिसाधनश्च अन्धः सन्नन्धोपि प्रख्यत् पश्यति। श्रोणः श्रोणोपि पंगुरपि निर्भूत् निर्भवति निर्गच्छति॥ २ ॥

२. जो नग्न है, उसे सोम ढंकते हैं। जो रोगी है, उसे नीरोग करते हैं। यह सन्नद्ध रहने पर भी दर्शन करते हैं, यह पंगु होकर भी गमन करते हैं।

अथ तृतीया—

त्वं सोम तनूकृद्भ्यो द्वेषोभ्योन्यकृतेभ्यः। उरु यन्तासि वरूथम्॥ ३॥

त्वम्। सोम। तनूकृत्ऽभ्यः। द्वेषःऽभ्यः।
अन्यऽकृतेभ्यः। उरु। यन्ता। असि। वरूथम्॥ ३॥

हे सोम त्वं तनूकृद्भ्यः कृशीकुर्वद्भ्यः अथवांगानां विच्छेदकेभ्योन्यकृतेभ्यो द्वेषोभ्यो शत्रुकृतेभ्योप्रियेभ्यः कृत्येभ्यइत्यर्थः वरूथं वरकं रक्षणं उरुयंतासि बहुकृद्भवसि स्तोतॄणां। अन्यकृतानि हि रक्षांसीति ब्राह्मणम्॥ ३॥

३. सोम, तुम शरीर को कृश करनेवाले अन्य कृतों (राक्षसों) के अप्रिय कार्यों से रक्षा करते हो।

अथ चतुर्थी—

त्वं चित्ती तव दक्षैर्दिव आ पृथिव्या ऋजीषिन्।
यावीरघस्य चिद्द्वेषः॥ ४॥

त्वम्। चित्ती। तव। दक्षैः। दिवः। आ। पृथिव्याः।
ऋजीषिन्। यावीः। अघस्य। चित्। द्वेषः॥ ४॥

हे ऋजीषिन् तृतीयसवनगतेन ऋजीषेण तद्वन् सोम त्वं तव चित्ती चित्या प्रज्ञया दक्षैः बलैश्च दिवआ दिवश्च आ इति चार्थे पृथिव्या आ पृथिव्याश्च सकाशात् अघस्यचिदस्माकमाहन्तुरपि द्वेषः शत्रोः कृत्यां यावीः पृथक्कुरु ॥ ४ ॥

४. हे ऋजीष (तृतीय सवन में अभिषुत सोम का शेष भाग) वाले सोम, तुम प्रज्ञा और बल के द्वारा द्युलोक और पृथिवी के यहाँ से हमारे शत्रु के कार्य को पृथक् करो।

अर्थिनोयन्तिचेदर्थंगच्छानिद्ददुषोरातिम्।
ववृज्युस्तृष्यतःकामम् ॥ ५ ॥ ३३ ॥

अर्थिनः। यन्ति। च। इत्। अर्थम्। गच्छान्। इत्।
ददुषः। रातिम्। ववृज्युः। तृष्यतः। कामम् ॥ ५ ॥ ३३ ॥

अर्थिनो धनानि कामयमाना यन्ति चेत् यन्ति च अर्थं प्रति गत्वा च ददुषो दात् रातिं दानं गच्छानित् गच्छन्तिच। गतेषु मध्ये यं हे सोम त्वमनुगृह्णासि तस्य तृष्यतोभिक्षमाणस्य कामं ववृज्युः पुनः कामानावर्जयन्ति तावत्पर्यन्तं पूरयन्तीत्यर्थः ॥ ५ ॥

५. यदि धनेच्छु लोग धनी के पास जाते हैं, तो दाता का दान मिलता और भिक्षुक की अभिलाषा भली भाँति पूर्ण होती है।

॥ इति षष्ठस्य पंचमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

विदद्यत्पूर्व्यंनष्टमुदीमृतायुमीरयत्।
प्रेमायुस्तारीदतीर्णम् ॥ ६ ॥

विदत्। यत्। पूर्व्यम्। नष्टम्। उत्। ईम्। ऋतऽयुम्।
ईरयत्। प्र। ईम्। आयुः। तारीत्। अतीर्णम् ॥ ६ ॥

यद्यदा पूर्व्यं पुराणं नष्टं स्वकीयं धनं विदल्लभते नष्टधनः ईं एनं ऋतायुं नष्टधनलाभार्थं यज्ञकामं उदीरयत् प्रेरयति धनं साधयतीत्यर्थः। तदा ईं अतीर्णं एनं यज्ञारंभिणं आयुः जीवनं प्रतारीत् प्रकर्षेण वर्धयेत् ॥ ६ ॥

६. जिस समय पुराना धन प्राप्त किया जाता है, उस समय यज्ञाभिलाषी को प्रेरित किया जाता है। तभी दीर्घ जीवन प्राप्त किया जाता है।

अथ सप्तमी—

सुशेवोनोमृळयाकुरदृप्तक्रतुरवातः। भवानःसोमशंहृदे ॥ ७ ॥

सुऽशेवः । नः । मृळयाकुः । अदृप्तऽक्रतुः । अवातः ।
भव । नः । सोम । शम् । हृदे ॥ ७ ॥

हे सोमपीतस्त्वं नः अस्माकं हृदे हृदये वर्तमानः शं सुखं भव । किंच नः अस्माकं सुशेवः सुसुखः मृळयाकुः सुखकर्ता अदृप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः ॥ ७ ॥

७. सोम, तुम हमारे हृदय में सुन्दर, सुखकर, यज्ञ-सम्पादक, निश्चल और मङ्गलकर हो।

मानःसोमसंवीविजोमाविबीभिषथाराजन् ।
मानोहार्दित्विषावधीः ॥ ८ ॥

मा । नः । सोम । सम् । वीविजः । मा । वि । बीभिषथाः ।
राजन् । मा । नः । हार्दि । त्विषा । वधीः ॥ ८ ॥

हे सोमपीतस्त्वं नोस्मान्मासंवीविजश्चलितांगान्माकार्षीः । राजन् सोमास्मान् माविबीभिषथाः भीतान्माकुरु । नोस्माकं हार्दि हृदये त्विषा दीप्त्या मावधीः ॥ ८ ॥

८. सोम, तुम हमें चंचलाङ्ग नहीं करना। राजन्, हमें डराना नहीं। हमारे हृदय में प्रकाश के द्वारा वध नहीं करना।

अवयत्स्वेसधस्थेदेवानांदुर्मतीरीक्षे ।
राजन्नपद्विषःसेधमीढ्वोअपस्निधःसेध ॥ ९ ॥ ३४ ॥

अव । यत् । स्वे । सधऽस्थे । देवानाम् । दुःऽमतीः । ईक्षे । राजन् ।
अप । द्विषः । सेध । मीढ्वः । अप । स्निधः । सेध ॥ ९ ॥ ३४ ॥

स्वे सधस्थे स्वकीये सहस्थाने गृहे देवानां दुर्मतीः दुर्मतयो न प्रविशन्त्विति। यद्यदा अवेक्षेहं त्वं वा ईक्षसे तदा हेराजन् द्विषोस्मद्द्वेष्टॄन् अपसेध । हे मीढ्वो सोमरसस्य सेक्तः स्निधो हिंसकानपसेध भिन्धीत्यर्थः ॥ ९ ॥

९. तुम्हारे गृह में देवों की दुर्बुद्धि न प्रवेश करे। राजन्, शत्रुओं को दूर करो। सोमरस का सेचन करनेवाले हिंसकों को मारो।

॥ इति षष्ठस्य पञ्चमे चतुस्त्रिंशोवर्गः ॥ ३४ ॥

नह्यन्यमिति दशर्चं दशमं सूक्तं । अत्रेयमनुक्रमणिका—नह्यन्यंदशैकद्यूनौंधसोगायत्रेन्त्यादैवीत्रिष्टुबिति । एकद्यूर्नामनोधसः पुत्रऋषिः अन्त्यात्रिष्टुप् साच देवदेवत्या शिष्टागायत्र्यः

ऐन्द्रः। द्वितीये पर्याये मैत्रावरुणशस्त्रे आदितोष्टर्चः। सूत्रितंच—नह्यन्यं बळाकरमित्यष्टाविति। महाव्रते निष्केवल्ये गायत्रतृचाशीतौ आद्याविनियुक्ता। तथाच पंचमारण्यके शौनकः—नह्य१न्यंबळाकरमित्येतांप्रत्यवदधाति।

तत्र प्रथमा—

नह्यं१न्यंबळाकंरंमर्डितारंशतक्रतो। त्वंनंइन्द्रमृळय ॥ १॥

नहि। अन्यम्। बळा। अकरम्। मर्डितारम्। शतक्रतो इति शतऽक्रतो। त्वम्। नः। इन्द्र। मृळय ॥ १ ॥

हे शतक्रतो त्वत्तोन्यं मर्डितारं सुखयितारं बळा बट् तत्सत्यकरं नकरोमि तस्मात् हे इन्द्र त्वं नोस्मान्मृळय ॥ १ ॥

१. इन्द्र, तुम्हारे सिवा अन्य सुखदाता को मैं बहुमान नहीं प्रदान करता हूँ; इसलिए हे शतक्रतो, सुख दो।

अथ द्वितीया—

योनःशश्वंत्पुराविथामृध्रोवाजंसातये। सत्वंनंइन्द्रमृळय ॥ २ ॥

यः। नः। शश्वंत्। पुरा। आविथ। अमृध्रः। वाजंऽसातये। सः। त्वम्। नः। इन्द्र। मृळय ॥ २ ॥

हे इन्द्र यस्त्वं अमृध्रः शत्रुभिरहिंसितः सन् पुरा पूर्वस्मिन्काले शश्वत् बहुवारं नोस्मान् आविथ रक्षितवानसि। सत्वं नोस्मान्वाजसातये अन्नदानार्थं यद्वा अन्नसंसजनार्थं मृळय सुखयं ॥ २ ॥

२. जिन अहिंसक इन्द्र ने पहले हमें अन्न-प्राप्ति के लिए बचाया था, वे हमें सदा सुखी करें।

अथ तृतीया—

किमङ्गरध्रचोदंनःसुन्वानस्यावितेदंसि। कुवित्स्विन्द्रणःशकंः ॥३॥

किम्। अङ्ग। रध्रऽचोदंनः। सुन्वानस्यं। अविता। इत्। असि। कुवित्। सु। इन्द्र। नः। शकंः ॥ ३ ॥

---

१ योमृध्रोहिंसकः नोस्मान्वाजसातये अन्नलाभाय पुरा पूर्वमाविथ रक्षितवान् हे इन्द्र सत्वं नोस्मान् शश्वत्सदा मृळय सुखय। इति व्याख्यानांतरं पुस्तकान्तरस्थं।

अंग हे इन्द्र त्वं रध्रचोदनः रध्रं राधकं चोदयतीति रध्रचोदनः तादृशस्त्वं सुन्वानस्यावितेदसि रक्षक एव भवसि। अतोनोस्माकं कुविद्वहु सु सुष्ठु शकः अशकःशक्तोभव बहुधनं कुर्वित्यर्थः अस्मान्वा बहुकुर्विति ॥ ३ ॥

३. इन्द्र, तुम आराधक को प्रवर्त्तित करो। तुम अभिषव-कर्त्ता के रक्षक हो। फलतः हमें बहुधन दो।

इन्द्रप्रणोरथमवपश्चाच्चित्सन्तमद्रिवः। पुरस्तादेनंमेकृधि ॥ ४ ॥

इन्द्र। प्र। नः। रथम्। अव। पश्चात्। चित्। सन्तम्।
अद्रिऽवः। पुरस्तात्। एनम्। मे। कृधि ॥ ४ ॥

हे इन्द्र नोरथं प्राव प्ररक्ष। कीदृशं रथं पश्चाच्चित्सन्तं चिदप्यर्थे अस्मत्समानरथानां पश्चाद्भूतमप्येनं मे रथं हे अद्रिवो वज्रवन्निन्द्र पुरस्ताद्वर्तमानं कृधि कुरु ॥ ४ ॥

४. इन्द्र, तुम हमारे पीछे खड़े रथ की रक्षा करो। वज्रधर इन्द्र, उसे सामने ले आओ।

हन्तोनुकिमाससेप्रथमंनोरथंकृधि। उपमंवाजयुश्रवः ॥५॥३५॥

हन्तो इति। नु। किम्। आससे। प्रथमम्। नः। रथम्।
कृधि। उपऽमम्। वाजऽयु। श्रवः ॥ ५ ॥ ३५ ॥

हन्तेत्येतदादि मुख्यकृदामन्त्रितेन समानं हन्तेन्द्र नु इदानीं किं त्वं तूष्णीमाससे। तत्र किं करोमीति चेत् उच्यते—नः रथं प्रथमं सर्वेषां मुख्यं कृधि कुरु वाजयु अस्माकमन्नमिच्छच्छ्रवोन्नं हविर्लक्षणं उपमं अन्तिकनामैतत् तवान्तिकभूतं वर्ततइतिशेषः। यस्मादेवं तस्माद्रथं अस्मदीयं प्रथमं कृधीति ॥ ५ ॥

५. शत्रु-हन्ता इन्द्र, इस समय तुम क्यों चुप हो? हमारे रथ को मुख्य करो। हमारा अन्नाभिलाषी अन्न तुम्हारे पास है।

॥ इति षष्ठस्य पंचमे पंचत्रिंशोवर्गः ॥ ३५ ॥

अथ षष्ठी—

अवानोवाजयुंरथंसुकरंतेकिमित्परि। अस्मान्त्सुजिग्युषस्कृधि ॥६॥

अव। नः। वाजऽयुम्। रथम्। सुऽकरम्। ते।
किम्। इत्। परि। अस्मान्। सु। जिग्युषः। कृधि ॥ ६ ॥

हे इन्द्र नोवाजयुं अन्नेच्छुं रथं अव रक्ष। संग्रामे ते तव किमिद् किमपि सर्वकर्तव्य-जातं परि परितः सुकरं सुखेन कर्तव्यं। तव कर्तुमशक्यं नकिंचिदस्ति। यस्मादेवं तस्माद् अस्मान् सुजिग्युषः सुष्ठु जेतॄन् कृधि कुरु संग्रामे ॥ ६ ॥

६. इन्द्र, हमारे अन्नाभिलाषी रथ की रक्षा करो। तुम्हारा क्या कर्त्तव्य है? हमें संग्राम में सब तरह से विजयी बनाओ।

इन्द्र॒दृह्य॑स्व॒पूर॑सि॒भ॒द्रात॑ए॒ति॒निष्कृ॑तम्। इ॒यंधीॠ॒त्विया॑वती ॥ ७॥

इन्द्र॑। दृह्य॑स्व। पूः। अ॒सि॒। भ॒द्रा। ते॒। ए॒ति॒। निः॒ऽकृ॒तम्।
इ॒यम्। धीः। ॠ॒त्विय॑ऽवती ॥ ७ ॥

हे इन्द्र त्वं दृह्यस्व दृढोभव संग्रामे त्वं पूरसि पूरयसि यथा पुरमविचलितं तद्वत्त्वमसि। अथवास्मदीये यज्ञे दृढोभव त्वं पुनरन्ययज्ञं जिगमिषुर्माभूः त्वं पूः पूरकःकामानामसि। किमत्र विद्यतइति चेद् उच्यते—निष्कृतं निष्कर्तारं ते त्वां भद्रा कल्याणी इयं धीः स्तुतिः क्रिया वा ऋत्वियावती ऋतुशब्दः कालोपलक्षकः स्वकालोपेता सती एति गच्छति। यद्वा ते निष्कृतं स्थानमेति ॥ ७ ॥

७. इन्द्र, दृढ़ होओ। तुम नगर के समान हो। मङ्गलमयी स्तुति-क्रिया यथासमय तुम्हारे पास जाती है। तुम यज्ञ-सम्पादक हो।

मासी॑मव॒द्यआभा॑गु॒र्वीकाष्ठा॑हि॒तंधन॑म्। अ॒पावृ॑क्ताअर॒त्नय॑ः ॥८॥

मा। सी॒म्। अ॒व॒द्ये। आ। भा॒क्। उ॒र्वी। काष्ठा॑। हि॒तम्।
धन॑म्। अ॒प॒ऽआवृ॑क्ताः। अ॒र॒त्नय॑ः ॥ ८ ॥

मास्मान् सीं सर्वतोऽवद्ये निन्दा आभाग् माभजतु प्राप्नोतु न कुतश्चिद्। पापरहितान्कुर्वित्यर्थः। किंचोर्वी काष्ठा बह्वंतरालआज्यंतः आज्यंतोपि काष्ठोच्यते क्रान्त्वा स्थितोभवतीति यास्कः[1]। तत्र हितं निहितं शत्रुसंबन्धि धनं अस्माकं भवत्वित्यर्थः। अरत्नयः अरममाणाःशत्रवः अपावृक्ताः सन्त्वितिशेषः ॥ ८ ॥

८. निन्दा-पात्र व्यक्ति हमारे पास उपस्थित न हो। विशाल दिशाओं में निहित धन हमारा हो। शत्रु विनष्ट हों।

अथ नवमी—

तु॒रीय॑ं॒नाम॑य॒ज्ञियं॑य॒दाक॑र॒स्तदु॑श्मसि। आदि॒त्पति॑र्नओहसे ॥९॥

---

1 नि० २. १५.

तुरीयम् । नाम । यज्ञियम् । यदा । करः । तत् । उश्मसि ।
आत् । इत् । पतिः । नः । ओहसे ॥ ९ ॥

हे इन्द्र त्वं यज्ञियं यज्ञसंबन्धिनं तुरीयं चतुर्थं नाम यदा करः करोषि तदुश्मसि कामयामहे आदिदनंतरमेव नामकामानन्तरमेव पतिः पालकः त्वं नोस्मानोहसे वहसि प्रापयसि । नक्षत्रनाम गुह्यंनाम प्रकाशं नामेति त्रीणि नामानि। सोमयाजीति तुरीयं नाम तच्चयज्ञियं ॥ ९ ॥

९. इन्द्र, तुमने जिस समय यज्ञ-सम्बन्धी चतुर्थ नाम धारण किया, उसी समय हमने उसकी कामना की। तुम हमारे रक्षक हो। तुम्हीं हमारा पालन करते हो। अथ दशमी—

अवीवृधद्वोअमृताअमंदीदेकद्यूर्देवाउतयाश्चदेवीः ।
तस्माउराधःकृणुतप्रशस्तंप्रातर्मक्षूधियावसुर्जगम्यात् ॥१०॥३६॥

अवीवृधत् । वः । अमृताः । अमन्दीत् । एकऽद्यूः । देवाः ।
उत । याः । च । देवीः । तस्मै । ॐ इति । राधः । कृणुत ।
प्रऽशस्तम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १०॥ ३६ ॥

इयं वैश्वदेवी । हे देवाः हे अमृता अमरणा वोयुष्मानयमवीवृधत् वर्धयति स्तुत्या।अमंदीत् तर्पयति सोमेन। एकद्यूः ऋषिरहं। उतापिच हे देवीर्देव्यो देवपत्न्यो याश्च यूयं स्थोयुष्मानपि अवीवृधदमन्दीच्च तस्मै राधो धनं प्रशस्तं प्रवृद्धं कृणुत कुरुत । उइति पूरणः एवकारार्थोवा ।प्रातः प्रातरेव मक्षु क्षिप्रं धियावसुः कर्मधनइन्द्रो जगम्यादागच्छतु। इन्द्रस्य देवस्वामित्वादाधिक्यद्योतनाय पुनरभिधानम् ॥ १० ॥

१०. अमर देवो, एकद्यु ऋषि तुम्हें और तुम्हारी पत्नियों को वर्द्धित और तृप्त करते हैं। हमारे लिए प्रचुर धन दो। कर्म-धन इन्द्र प्रातःकाल ही आगमन करें।

॥ इति षष्ठस्य पंचमे षट्त्रिंशोवर्गः ॥३६ ॥

॥ इत्यष्टमे मंडलेऽष्टमोनुवाकः ॥ ८ ॥

नवमेनुवाके त्रयोदशसूक्तानि । तत्रातूनइन्द्रेति नवर्चं प्रथमं सूक्तं कण्वपुत्रस्य कुसीदिनआर्षं गायत्रमैन्द्रं। तथाचानुक्रम्यते—आतूनोनवकुसीदीकाण्वइति।महाव्रते निष्केवल्ये गायत्रचाशीतावेतदादिके द्वे सूक्ते । तथैव पंचमारण्यके सूत्रितंच शौनकेन—आतूनइन्द्रक्षुमंतमिति सूक्ते सूददोहाइति । द्वितीये पर्याये मैत्रावरुणशस्त्रे आद्यस्तृचः स्तोत्रियः । सूत्रितंच—आतूनइन्द्रक्षुमन्तमामद्रवपरावतइति ।

तत्र प्रथमा—

आतूनइन्द्रक्षुमन्तंचित्रंग्राभंसंगृभाय । महाहस्तीदक्षिणेन ॥१॥

आ । तु । नः । इन्द्र । क्षुऽमन्तम् । चित्रम् । ग्राभम् ।
सम् । गृभाय । महाऽहस्ती । दक्षिणेन ॥ १ ॥

हे इन्द्र महाहस्ती महाहस्तवान् त्वं तु तदानीमेव अस्मभ्यं दातुं नोस्मदर्थं क्षुमन्तं शब्दवन्तं स्तुत्यमित्यर्थः । चित्रं चायनीयं ग्राभं ग्राहकं ग्रहणार्हं वाधनं दक्षिणेन हस्तेन नु क्षिप्रं आसंगृभाय आभिमुख्येन संगृहाण ॥ १ ॥

१. इन्द्र, तुम महान् हस्त (हाथ) वाले हो। तुम हमें देने के लिए शब्दवान् (स्तुत्य), विचित्र और ग्रहण के योग्य धन दक्षिण हाथ में धारण करो।

विद्माहित्वातुविकूर्मिंतुविदेष्णंतुवीमघम् । तुविमात्रमवोभिः ॥२॥

विद्म । हि । त्वा । तुविऽकूर्मिम् । तुविऽदेष्णम् । तुविऽमघम् ।
तुविऽमात्रम् । अवःऽभिः ॥ २ ॥

हे इन्द्र त्वा त्वां विद्म हि जानीमः खलु । कीदृशमिति तुविकूर्मिं बहुकर्माणं तुविदेष्णं बहुप्रदेयं तुविमघं बहुधनं तुविमात्रं बहुप्रमाणं अवोभिर्युक्तम् ॥ २ ॥

२. इन्द्र, हम तुम्हें जानते हैं। तुम बहुकर्मा, बहुदाता, बहुधनी और बहुरक्षावाले हो।

नहित्वाशूरदेवानमर्तासोदित्सन्तम् । भीमंनगांवारयन्ते ॥ ३ ॥

नहि । त्वा । शूर । देवाः । न । मर्तासः । दित्सन्तम् ।
भीमम् । न । गाम् । वारयन्ते ॥ ३ ॥

हे शूरेन्द्र त्वा त्वां दित्सन्तं दातुमिच्छन्तं देवाः नहि वारयन्ते ननिवारयन्ति । तथा मर्तासो मर्त्या अपि नवारयन्ते । भीमंन गां भयजनकं वृषभं यवसे प्रवृत्तमिव तं यथा वारयितुं न शक्नुवन्ति तद्वत ॥ ३ ॥

३. शूर इन्द्र, तुम्हारे दानेच्छु होने पर देव और मनुष्य, भयंकर वृषभ के समान, तुम्हें बाधा नहीं पहुंचा सकते।

प्रथमेपर्यायेच्छावाकशस्त्रेएतोन्विन्द्रमितितृचः तथाचसूत्रितं—एतोन्विन्द्रंस्तवामेशानंमानोअस्मिन्मघवन्निति ।

तृचे प्रथमा सूक्ते चतुर्थी—

एतोन्विन्द्रंस्तवामेशानंवस्वःस्वराजम् । नराधंसामर्धिषन्नः ॥ ४ ॥

आ । इत । ऊँ इति । नु । इन्द्रम् । स्तवम । ईशानम् ।
वस्वः । स्वऽराजम् । न । राधसा । मर्धिषत् । नः ॥ ४ ॥

हे अस्मदीयाजनाः एतो आगच्छतैव नु क्षिप्रं । किंकर्तुं स्तवामेन्द्रं । कीदृशं तं वस्वोवसुनोधनस्य ईशानं स्वामिनं स्वराजं स्वयमेव राजमानं स्वर्गे राजमानं वा । नोस्मानिन्द्रेणानुगृहीतान् राधसा धनेन अन्योधनीनमर्धिषत् नबाधतां आढयानामस्मत्समानानामप्याढ्यत्वाय स्तवामेत्यर्थः ॥ ४ ॥

४. मनुष्यो, आओ और इन्द्र की स्तुति करो। वह स्वयं दीप्यमान धन के स्वामी हैं। अन्य धनी के समान वे धन के द्वारा बाधा न दें।

प्रस्तोषदुपगासिषच्छ्रवत्सामगीयमानम् । अभिराधसाजुगुरत् ॥५॥३७॥
प्र । स्तोषत् । उप । गासिषत् । श्रवत् । साम । गीयमानम् ।
अभि । राधसा । जुगुरत् ॥ ५ ॥ ३७ ॥

पूर्वमंत्रे स्तवामेत्युक्तं तदेव स्तोत्रमिन्द्रः प्रस्तोषत् प्रस्तुत्वा च उपगासिषत् उपगानं च करोतु । तदर्थं गीयमानं साम स्तोत्रं श्रवत् शृणोतु । राधसा धनेन च युक्तोस्मानभिजुगुरदभिगृणातु स्वीकुर्वितिति ॥ ५ ॥

५. इन्द्र, तुम्हारी स्तुति की प्रशंसा करें और तदनुरूप गान करें। वे सामवेदीय स्तोत्र का श्रवण करें। धन-युक्त होकर हमारे ऊपर अनुग्रह करें। ॥ इति षष्ठस्य पंचमे सप्तत्रिंशोवर्गः ॥ ३७ ॥

अथ तृचे तृतीया सूक्ते षष्ठी—

आनोभरदक्षिणेनाभिसव्येनप्रमृश । इन्द्रमानोवसोर्निर्भाक् ॥६॥
आ । नः । भर । दक्षिणेन । अभि । सव्येन । प्र । मृश ।
इन्द्र । मा । नः । वसोः । निः । भाक् ॥ ६ ॥

हे इन्द्र नोस्मभ्यं आभराहृत्य दक्षिणेन सव्येन च हस्तेन उभाभ्यां हस्ताभ्यां अभिप्रमृश प्रयच्छेत्यर्थः । नोस्मान्वसोर्धनात् मानिर्भाक् मानिर्भाक्षीः ॥ ६ ॥

६. इन्द्र, हमारे लिए आगमन करो। दोनों हाथों से दान करो। हमें धन से अलग नहीं करना।

द्वितीये पर्यायेच्छावाकशस्त्रे उपक्रमस्वेति तृचः । सूत्रितंच—उपक्रमस्वाभरधृषतातदस्मै नव्यमिति ।

सैषा तृचे प्रथमा सूक्ते सप्तमी—

उपक्रमस्वाभरधृषताधृष्णोजनानाम् । अदाशूष्टरस्यवेदः ॥७॥

उप॑ । क्र॒म॒स्व॒ । आ । भ॒र॒ । धृ॒ष॒ता । धृ॒ष्णो॒ इति॑ ।

जना॑नाम् । अदा॑शूःऽतरस्य । वेद॑ः ॥ ७ ॥

हे इन्द्र त्वमुपक्रमस्व धनं प्रत्युपगच्छ प्रवृत्तो भव वा दातुं । हे धृष्णो धर्षक शत्रूणां धृषता धृष्टेन चेतसा युक्तः सन् आभराहरच । कस्य धनमाहरेति उच्यते—जनानां मध्ये अदाशूष्टरस्य अत्यन्तमदातृतमस्य वेदोधनं ॥ ७ ॥

७. इन्द्र, तुम धन के पास जाओ। शत्रुजेता इन्द्र, जो मनुष्यों में अदाता (दानशून्य) है, उसका धन ले आओ।

इन्द्र॒यउ॒नु॒ते॒अस्ति॒वाजो॒विप्रे॑भि॒ःसनि॑त्वः । अ॒स्माभि॒ःसुतंस॑नुहि ॥८॥

इन्द्र॑ । यः । ऊँ इति॑ । नु । ते॒ । अस्ति॑ । वाज॑ः । विप्रे॑भिः । सनि॑त्वः ।

अ॒स्माभि॑ः । सु । तम् । स॒नु॒हि॒ ॥ ८ ॥

हे इन्द्र योवाजोन्नं विप्रेभिर्मेधाविभिः सनित्वः संभजनीयः ते तवास्ति तं वाजमस्माभिर्याचितः सन् अस्मभ्यं वा सु सुष्ठु सनुहि देहि ॥ ८ ॥

८. इन्द्र, जो धन ब्राह्मणों (विप्रों) के द्वारा भजनीय (आश्रयणीय) है और जो धन तुम्हारा है, उसे माँगने पर हमें दो।

स॒द्यो॒जु॒वस्ते॒वाजा॑अ॒स्मभ्यं॑वि॒श्वश्च॑न्द्राः । वशै॑श्चम॒क्षूज॑रन्ते ॥९॥३८॥

स॒द्यःऽजुव॑ः । ते॒ । वाजा॑ः । अ॒स्मभ्य॑म् । वि॒श्वऽच॑न्द्राः ।

वशै॑ः । च॒ । म॒क्षु । ज॒र॒न्ते॒ ॥ ९ ॥ ३८ ॥

हे इन्द्र ते तव वाजाः अन्नानि अस्मभ्यं सद्योजुवः शीघ्रं गन्तारोभवन्तु । कीदृशास्ते विश्वचन्द्राः सर्वहिरण्योपेताः बहूनामाह्लादकावा अस्मदीयाश्च जनाः वशैः कामैरनेकैर्युक्ताः मक्षु शीघ्रं जरन्ते स्तुवन्ति ॥ ९ ॥

९. इन्द्र, तुम्हारा अन्न हमारे पास शीघ्र आवे। वह अन्न सबके लिए प्रसन्नतादायक है। नानाविध लालसाओं से युक्त होकर हमारे स्तोता लोग शीघ्र ही तुम्हारी स्तुति करते हैं।

॥ इति षष्ठस्य पंचमेऽष्टत्रिंशोवर्गः ॥ ३८ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके पंचमोध्यायः ॥ ५ ॥

## ॥श्रीगणेशायनमः॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममेतमहंवन्दे विद्यातीर्थंमहेश्वरम् ॥ १ ॥

आप्रद्रवेति नवर्चं द्वितीयं सूक्तं । तथाचानुक्रम्यते—आप्रद्रवेति । ऋषिश्चान्यस्मादिति परिभाषया काण्वःकुसीदऋषिः प्राग्वत्समीपपरिभाषया गायत्रीछन्दः अनादेशपरिभाषयेन्द्रोदेवता । महाव्रते निष्केवल्ये सूक्तविनियोगउक्तः । द्वितीये रात्रिपर्याये मैत्रावरुणशस्त्रे आप्रद्रवेतितृचोनुरूपः । सूत्रितंच—आप्रद्रवपरावतो नह्य१न्यंबळाकरमित्यष्टाविति ।

अथ तस्मिन्त्सूक्ते प्रथमा—

ओम् आप्रद्रंवपरावतोर्वावतश्चवृत्रहन् । मध्वःप्रतिप्रभर्मणि ॥ १ ॥

आ । प्र । द्रव । पराऽवतः । अर्वाऽवतः । च ।

वृत्रऽहन् । मध्वः । प्रति । प्रऽभर्मणि ॥ १ ॥

हे वृत्रहन् अपामावरकस्य वृत्रासुरस्य हन्तर्हे इन्द्र प्रभर्मणि प्रकृष्टानि भर्माणि भरणानि पशुग्रहादिसंपादनानि यस्मिन् सप्रभर्मा यज्ञः । यद्वा प्रकृष्टाः कर्मणिकुशला भर्माणः देवानां हविः प्रदानेन पोषका ऋत्विजोयस्मिन्निति सतथोक्तः एतादृशे यज्ञे मध्वः मदकरान् सोमान् प्रति परावतः विप्रकृष्टात् दूरस्थाद्देशादपि अर्वावतश्च समीपस्थाद्देशादपि आभिमुख्येन प्रद्रव त्वं त्वरया आगच्छ । मध्वइति वाछन्दसीति पूर्वसवर्णदीर्घाभावः ॥ १ ॥

१. वृत्रघ्न इन्द्र, यज्ञ के मदकर सोम के लिए दूर और समीप के स्थानों से आओ।

अथ द्वितीया—

तीव्राःसोमासआगहिसुतासोमादयिष्णवः । पिबादधृग्यथोचिषे ॥२ ॥

तीव्राः । सोमासः । आ । गहि । सुतासः । मादयिष्णवः ।

पिब । दधृक् । यथा । ओचिषे ॥ २ ॥

हे इन्द्र तीव्राः तीव्रमदाः क्षिप्रं मदकारिणइत्यर्थः । मादयिष्णवः मादनशीला मादनकारिणोवा इमे सोमासः सोमाः सुतासः त्वदर्थमभिषुताः तस्मादागहि अस्मदीयं यज्ञं प्रत्याग-

च्छ। आगत्यच तान् पिब। सोमपाने कारणमाह—त्वं यथा दधृक् धृष्टः तत्पीतौ प्रगल्भःसन् तान् ओचिषे समवैषि सेवसे ततस्तान्यथाकामंपिबेत्यर्थः। दधृगिति ञिधृषाप्रागल्भ्येइत्यस्माद्द्-त्विग्दधृगित्यादिना क्विन्प्रत्ययान्तोनिपात्यते। ओचिषे उचसमवाये छान्दसेलेटिरूपम्॥ २॥

२. शीघ्र मद (नशा) करनेवाला सोम अभिषुत हुआ है। आओ, पियो और मत्त होकर उसकी सेवा करो।

इ॒षाम॑न्दस्वा॒दुते॒ऽरं॒वरा॑य॒म॒न्यवे॑। भुव॑त्तइन्द्र॒शंहृ॒दे॥ ३॥

इ॒षा। म॒न्दस्व॑। आत्। ऊँ इति॑। ते॒। अर॑म्। वरा॑य।
म॒न्यवे॑। भुव॑त्। ते॒। इ॒न्द्र॒। शम्। हृ॒दे॥ ३॥

हे इन्द्र इषा सोमलक्षणेनान्नेन मन्दस्व मोदस्व हृष्टोभव। उइत्यवधारणे। आदनन्तरमेव ते तव वराय शत्रुनिवारकाय मन्यवे क्रोधाय ससोमः अरमलं पर्याप्तोभवतु क्रोधशमने समर्थो-भवतु। यदा सोमं पिबति तदा मन्युं त्यजतीत्यर्थः। किंच ते तव हृदे हृदये ससोमः शं शंकरः सुखकरोभुवत् भवतु॥ ३॥

३. सोम-रूप अन्न के द्वारा मत्त होओ। वह शत्रु को दूर करनेवाले क्रोध के लिए यथेष्ट हो। तुम्हारे हृदय में सोम सुखकर हो।

तृतीये पर्याये आत्वशत्रवित्यनुरूपस्तृचः। सूत्रितंच—आत्वेतानिषीदतात्वशत्रवागहीति।

तस्मिन्प्रथमा सूक्ते चतुर्थी—

आत्वंश॒त्र॒वाग॑हि॒न्यु॒१॑क्थानि॑चहूयसे। उ॒प॒मेरो॑च॒नेदि॒वः॥ ४॥

आ। तु। अ॒श॒त्रो॒ इति॑। आ। ग॒हि॒। नि। उ॒क्थानि॑।
च॒। हू॒य॒से॒। उ॒प॒ऽमे। रो॒च॒ने। दि॒वः॥ ४॥

हे अशत्रो सपत्नरहित अस्य बहुविधबलत्वात् रणाभिमुखं गन्तारः शत्रवो नसन्तीत्य-र्थः। तादृशेन्द्र तु क्षिप्रं आगह्यस्मद्यज्ञं प्रत्यागच्छ। यतः दिवः स्वतेजसा दीप्यमानात् द्युलोकात् तत्रस्थैर्देवैरित्यर्थः रोचने अग्निभिर्दीप्यमाने लोकेच उपमे समीपे स्तोतारः स्तोत्रशस्त्रात्मकं श-ब्दंकुर्वन्त्यत्रेति उपमोयज्ञः तस्मिन्नस्मदीये यज्ञे च उक्थानि त्रिवृत्पञ्चदशादिलक्षणानि स्तोत्रा-णि प्रति निहूयसे त्वं स्तोतव्यतया नितरामाहूयसे। यस्मादेवं तस्मादागच्छेति समन्वयः॥४॥

४. शत्रु-शून्य इन्द्र, शीघ्र आओ; क्योंकि तुम द्युलोकस्थ देवों से प्रकाशमान समीपस्थ यज्ञ में उक्थ मन्त्रों के द्वारा बुलाये जा रहे हो।

अथ पञ्चमी—

तुभ्यायमद्रिभिःसुतोगोभिःश्रीतोमदायकम्। प्रसोमइन्द्रहूयते॥५॥१॥

तुभ्य॑। अ॒यम्। अद्रि॑ऽभिः। सु॒तः। गोभिः॑। श्री॒तः।
मदा॑य। कम्। प्र। सोमः॑। इ॒न्द्र॒। हू॒य॒ते॒॥ ५॥ १॥

हे इन्द्र अद्रिभिरभिषवसाधनैर्ग्रावभिरयं सोमः तुभ्य तुभ्यं त्वदर्थं सुतोभिषुतः ततोद-शापवित्रेण पूत्वा गोभिः गोविकारैः क्षीरादिभिःश्रीतः सः अस्माभिः परावतएव संस्कृतः सोमः तव मदाय मदार्थं कं सुखेन प्रहूयते अग्नौ स्वाहाक्रियते तस्मादागत्य सोमं पिब ॥ ५ ॥

**५. इन्द्र, यह सोम पत्थर से प्रस्तुत किया गया है। यह क्षीरादि के द्वारा मिलाया जाकर तुम्हारे आनन्द के लिए अग्नि में हुत हो रहा है।**

॥ इति षष्ठस्य षष्ठे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

इन्द्रश्रुधिसुमेहवमस्मेसुतस्यगोमतः। विपीतिंतृप्तिमश्नुहि ॥ ६॥

इन्द्र॑। श्रु॒धि। सु। मे॒। हव॑म्। अ॒स्मे इति॑। सु॒तस्य॑।
गोऽम॑तः। वि। पी॒तिम्। तृ॒प्तिम्। अ॒श्नु॒हि॒ ॥ ६ ॥

हेइन्द्र मे मदीयं हवं त्वद्विषयमाह्वानं सु सुष्ठु श्रुधि शृणु। तथास्मे अस्माभिः सुतस्याभिषुतस्य गोमतो गव्यक्षीरवतः क्षीरेण मिश्रितस्येत्यर्थः। तादृशस्य सोमस्य पीतिं पानं व्यश्नुहि विविधं प्राप्नुहि। तत्पानेन विविधां तृप्तिं च गच्छ। अशूव्याप्तौ व्यत्ययेन परस्मैपदम् ॥ ६ ॥

**६. इन्द्र, मेरा आह्वान सुनो। हमारे द्वारा अभिषुत और गव्य-मिश्रित सोम पियो और विविध प्रकार की तृप्ति प्राप्त करो।**

तृतीये पर्याये एवाच्छावाकशस्त्रे यइन्द्रचमसेष्वितितृचः। सूत्रितंच—यइन्द्रचमसे-ष्वासोमः प्रवःसतामिति।

तत्र प्रथमा सूक्ते सप्तमी—

यइन्द्रचमसेष्वासोमश्चमूषुतेसुतः। पिबेदस्यत्वमीशिषे ॥ ७॥

यः। इ॒न्द्र॒। च॒म॒सेषु॑। आ। सोमः॑। च॒मूषु॑। ते॒।
सु॒तः। पिब॑। इत्। अ॒स्य॒। त्वम्। ई॒शि॒षे॒॥ ७॥

हे इन्द्र ते त्वदर्थं सुतोभिषुतो यः सोमः चमसेषु एतन्नामकेषु पात्रेषु तथा चमूषु चम-न्ति यजन्त्यत्रेति चम्वोग्रहाः तेषु चासर्वतोस्ति। अस्य तमेतं सोमं पिबेत् इदवधारणे पिबैव।

कथमस्य सोमपानयोग्यता तत्राह—हे इन्द्र त्वमीशिषे तस्य त्वमेव ईश्वरो भवसि खलु। यतएवं ततः पिबेति समन्वयः। ईश ऐश्वर्ये लटि ईशःसइतीडागमः ॥ ७ ॥

७. इन्द्र, जो अभिषुत सोम चमस और चमू नाम के पात्रों में है, उसे पियो। तुम ईश्वर हो; इसलिए पियो।

योअप्सुचन्द्रमाइवसोमश्चमूषुददृशे। पिबेदस्यत्वमीशिषे ॥८॥

यः। अप्ऽसु। चन्द्रमाःऽइव। सोमः। चमूषु। ददृशे।
पिब। इत्। अस्य। त्वम्। ईशिषे ॥ ८ ॥

हे इन्द्र योगृहीतः सोमः चमूषु ग्रहेषु ददृशे अन्तर्दृश्यते। तत्र दृष्टान्तः—चन्द्रमाइव यथा चन्द्रमा अप्सु अन्तरिक्षे निर्मलतया दृश्यते तद्वत्। यद्वा अप्सु उदकेषु चन्द्रमाः प्रतिबिंबतया नानाविधो दृश्यते। तथाष्टग्रहेषु अनेकरूपः सन् दृश्यते तमेतं सोमं पिबेव यतस्त्वमेवेशिषे खलु ॥ ८ ॥ ८. जल में चन्द्रमा के समान चमू में जो सोम दिखाई दे रहा है, तुम ईश्वर हो; इसलिए उसे पियो।

यंतेश्येनःपदाभरत्तिरोरजांस्यस्पृतम्। पिबेदस्यत्वमीशिषे ॥९॥२॥

यम्। ते। श्येनः। पदा। आ। अभरत्। तिरः।
रजांसि। अस्पृतम्। पिब। इत्। अस्य। त्वम्। ईशिषे ॥९॥२॥

हे इन्द्र श्येनः शंसनीयः पक्षी पक्षिरूपधारिणी गायत्रीत्यर्थः। सपक्षी रजांसि अन्तरिक्षादिलोकस्थितान् सोमपालान् गन्धर्वान् तिरस्तिरस्कुर्वन् अस्पृतं शत्रुभिरस्पृष्टं सन्तं यं सोमं ते त्वदर्थं पदापद्भ्यामाभरत् पदेति सवनद्वयाभिप्रायम् सवनद्वये आहृतं सोमं त्वं पिब। गायत्री पक्षिरूपं धारयित्वा पद्भ्यां सोममाहरत् इत्यत्रार्थे यजुर्ब्राह्मणं—पद्भ्यां द्वेसवने समगृह्णात् मुखेनैकं तस्माद्द्वेसवने शुक्रवती प्रातःसवनंच माध्यंदिनेचेति[1]। तं पिबेव तस्य ईश्वरोभवसि ॥९॥

९. श्येन पक्षी का रूप धारण करके गायत्री जो अन्तरिक्षस्थ सोमरक्षक गन्धर्वों को तिरस्कृत करते हुए दोनों सवनों में सोम ले आई थी, इन्द्र, तुम ईश्वर हो, उसे पियो।

॥ इति षष्ठस्य षष्ठे द्वितीयोवर्गः ॥ २ ॥

देवानामिति नवर्चं तृतीयं सूक्तं काण्वस्य कुसीदिनआर्षं गायत्रं वैश्वदेवं। तथाचानुक्रम्यते—देवानां वैश्वदेवमिति। दशरात्रेष्टमेहनि वैश्वदेवशस्त्रे इदंसूक्तं वैश्वदेवनिविद्धानं सूत्रितंच—देवानामिदंवइति वैश्वदेवमिति।

---

[1] तै० सं० ६. १. ६.

तत्र प्रथमा–

देवानामिदवोमहत्तदावृणीमहेवयम्। वृष्णामस्मभ्यमूतये ॥ १ ॥

देवानाम्। इत्। अवः। महत्। तत्। आ। वृणीमहे।
वयम्। वृष्णाम्। अस्मभ्यम्। ऊतये ॥ १ ॥

हे देवाः देवानां स्वतेजसा सर्वतोदीप्यमानानां इत् एवार्थे युष्माकमेव महत् व्याप्तं मंहनीयंवा अवः पालनं यद्विद्यते तद्वृष्णां कामानां वर्षितॄणां युष्माकं स्वभूतं तद्रक्षणं यजमाना-वयं आवृणीमहे समंतात्संभजामहे। किमर्थमस्मभ्यमूतये पूर्वमस्मभ्यमस्मदर्थमिति साधारण्येनोक्त्वा तद्विशिनष्टि ऊतयइति अस्माकं पालनायेति ॥ १ ॥

१. देवो, हम अपने पालन के लिए तुम्हारी काम-वर्षिणी महारक्षा की प्राप्ति के निमित्त प्रार्थना करते हैं।

अथ द्वितीया–

तेनःसन्तुयुजःसदावरुणोमित्रोअर्यमा। वृधासश्चप्रचेतसः ॥ २ ॥

ते। नः। सन्तु। युजः। सदा। वरुणः। मित्रः।
अर्यमा। वृधासः। च। प्रऽचेतसः ॥ २ ॥

ते देवाः वरुणः शत्रूणां निवारकः मित्रः सर्वेषां मित्रभूतः अर्यमा सततं गच्छन् एतन्नामकास्ते त्रयोदेवाः सदा सर्वदा सर्वेषु अहःसु नोस्माकं युजः सहायाः सन्तु भवन्तु। अग्निहोत्रादिकर्मणि इन्द्रादिदेवाः सहागमनादि यज्ञपरिसमापनान्तेषु साहाय्यं कुर्वन्त्वित्यर्थः। ततः प्रचेतसः प्रकृष्टज्ञानाः यद्वा चेतः स्तोत्रं शोभनस्तुतयस्तेदेवा वृधासो वर्धकाश्च अस्माकं धनादिदानेन वर्धयितारश्च सन्तु ॥ २ ॥

२. देवो वरुण, मित्र और अर्यमा सदा हमारे सहायक हों। वे शोभन स्तुतिवाले और हमारे वर्द्धक हों।

अथ तृतीया–

अतिनोविष्पितापुरुनौभिरपोनपर्षथ। यूयमृतस्यरथ्यः ॥ ३ ॥

अति। नः। विष्पिता। पुरु। नौभिः। अपः।
न। पर्षथ। यूयम्। ऋतस्य। रथ्यः ॥ ३ ॥

ऋतस्य सत्यस्य यज्ञस्यवा हे रथ्यो नेतारोदेवाःयूयं विष्पिता विष्पितानि विप्राप्तानि विततानि

पुरु सुपोलुक् पुरूणि बहूनि शत्रुबलानि कर्माणि नोस्मान् यूयमतिपर्षथ बलानिचेत् तेषां वधेन अतीत्य गमयत। कर्माणिचेत् नोस्मानतिपर्षथ पारं समाप्तिं रक्षणैः गमयत। तत्रदृष्टान्तः—नौभिरपोन यथा नाविकः अपः उदकानि नौभिर्जनान् तीरं प्रति प्रापयति तद्वत् ॥ ३ ॥

३. सत्य-नेता देवो, नौका के द्वारा जल के समान हमें विशाल और अनन्त शत्रु-सेना के पार ले जाओ।

वामंनोअस्त्वर्यमन्वामंवरुणशंस्यम्। वामंह्यावृणीमहे ॥ ४ ॥

वामम्। नः। अस्तु। अर्यमन्। वामम्। वरुण।
शंस्यम्। वामम्। हि। आऽवृणीमहे ॥ ४ ॥

हे अर्यमन्देव वामं वननीयं संभजनीयं धनं नोस्माकं अस्तु भवतु। हे वरुण शंस्यं शंसनीयं स्तुत्यं वामं धनमस्माकमस्तु। कुतः हिशब्दोहेतौ यस्मात्कारणात् वयं वामं धनं युष्मानावृणीमहे याचामहे इत्यर्थः तस्मान्नोस्त्वित्याशास्ते ॥ ४ ॥

४. अर्यमा हमारे पास भजनीय धन हो। वरुण, प्रशंसनीय धन हमारे यहाँ हो। हम भजनीय (व्यवहार के उपयुक्त) धन के लिए प्रार्थना करते हैं।

वामस्यहिप्रचेतसईशानासोरिशादसः। नेमादित्याअघस्ययत् ॥ ५ ॥ ३ ॥

वामस्य। हि। प्रऽचेतसः। ईशानासः। रिशादसः।
न। ईम्। आदित्याः। अघस्य। यत् ॥ ५ ॥ ३ ॥

हे प्रचेतसः प्रकृष्टज्ञानाः शोभनस्तुतयोवा हे रिशादसः रिशतां हिंसतां शत्रूणामसितारः क्षेप्तारोदेवाः यूयं वामस्य वननीयस्य धनस्य ईशानास ईशानाः हिरवधारणे ईशानाएव स्वामिनएव भवथ तस्माद्युष्मान्याचामहे इत्यर्थः। ईशानाः ईशऐश्वर्ये अनुदात्तेत् तास्यनुदात्तेदिति स्वरेणाद्युदात्तता भवति न संबुद्धिः। ततो हे आदित्याः अदितेःपुत्रादेवाः ईमेनं याचमानं मां तद्धनं प्राप्नोतु यद्धनमघस्य पापस्य संबन्धि विद्यते ॥ ५ ॥

५. प्रकृष्ट ज्ञानवाले और शत्रु-भक्षक देवो, तुम भजनीय धन के स्वामी हो। आदित्यो, पाप-सम्बन्धी जो है, वह हमारे पास आवे।

॥ इति षष्ठस्य षष्ठे तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

वयमिद्वःसुदानवःक्षियन्तोयान्तोअध्वन्ना। देवावृधायहूमहे ॥ ६ ॥

वयम्। इत्। वः। सुऽदानवः। क्षियन्तः। यान्तः।
अध्वन्। आ। देवाः। वृधाय। हूमहे ॥ ६ ॥

हे सुदानवः शोभनदानाः हे देवाः क्षियन्तो गृहेष्वग्निहोत्रार्थं निवसन्तः अध्वन् सुपो-लुक् अध्वनि समिदाहरणार्थं यान्तो गच्छन्तोपि वयं वइत् युष्मानेव वृधाय हविर्भिर्वर्धना-य हूमहे आह्वयामः। यद्वा वयं गृहेषु गृहान्निर्गमनकाले मार्गेषु च वृधाय अस्माकं धनादि-भिर्वर्धनायाह्वयामः ॥ ६ ॥

६. सुन्दर दानवाले देवो, हम चाहे घर में, चाहे मार्ग में, हव्य-वर्द्धन के लिए तुम्हें ही बुलाते हैं।

अधिनइन्द्रैषांविष्णोसजात्यानाम्। इतामरुतोअश्विना ॥ ७ ॥

अधि। नः। इन्द्र। एषाम्। विष्णो इति। सऽजात्यानाम्। इत। मरुतः। अश्विना ॥ ७ ॥

हे इन्द्र विष्णो मरुतः हे अश्विना अश्विनौ हे इन्द्रादयोदेवाः सजात्यानां समानायां जातौ भवाः सजात्याः भ्रातृमित्रादयः तेषामेषां मध्ये नोस्मान् अधीत यूयं स्तुत्यतया अ-धिगच्छत ॥ ७ ॥

७. इन्द्र, विष्णु, मरुतो और अश्विद्वय, समान जातिवालों में हमारे ही पास आओ।

अथाष्टमी—

प्रभ्रातृत्वंसुदानवोधद्विताासमान्या। मातुर्गर्भेभरामहे ॥ ८ ॥

प्र। भ्रातृऽत्वम्। सुऽदानवः। अध। द्विता। समान्या। मातुः। गर्भे। भरामहे ॥ ८ ॥

हे सुदानवः शोभनदाना आदित्याः अधाथ अस्मत्प्रत्यागमनानन्तरं वयं समान्या स-मान्येन सुपोड्यादेशः। पूर्वं सर्वेषां देवानां सांहत्येन ततोद्विता द्विधा द्विमकारेण च मातुरदिते-र्गर्भे संजातं यद्युष्माकं भ्रातृत्वं विद्यते तदिदानीं वयं प्रभरामहे प्रभरणमुच्चारणं प्रकाशनंवा उच्चारयामः प्रकाशयामोवा। सर्वेषां देवानां द्वंद्वशोजननं तैत्तिरीयके स्पष्टमभिहितं—अदितिः पुत्रकामा साध्येभ्योदेवेभ्यो ब्रह्मौदनमपचदित्युपक्रम्य तस्यैपूषाचार्यमाचाजायेतामित्यादिना[1]॥८॥

८. सुन्दर दान-शील देवो, आने के पश्चात्, हम पहले तुम सब लोगों को प्रकट करेंगे और अनन्तर मातृ-गर्भ से तुम लोगों के दो-दो करके जन्म लेने के कारण तुममें जो बन्धुत्व है, उसे भी प्रकाशित करेंगे।

अथ नवमी—

यूयंहिष्ठासुदानवइन्द्रज्येष्ठाअभिद्यवः। अधाचिद्वउतब्रुवे ॥ ९ ॥ ४ ॥

---

१ तै० सं० ६. ५. ६.।

यूयम् । हि । स्थ । सुऽदानवः । इन्द्रंऽज्येष्ठाः । अभिऽद्यवः ।
अधं । चित् । वः । उत । ब्रुवे ॥ ९ ॥ ४ ॥

पूर्वोर्धर्चंःसिद्धः हे सुदानवः शोभनदानादेवाः इन्द्रज्येष्ठाः इन्द्रोज्येष्ठोमुख्योयेषां ते तथोक्ताः सर्वेदेवाः इन्द्रनेतृकाइत्यर्थः । तादृशः अभिद्यवः अभिगतदीप्तयो यूयं स्थ अस्मद्यज्ञे भवथखलु । हिः प्रसिद्धौ । अधचित् अथानन्तरमेव वोयुष्मानहं ब्रुवे स्तौमि । उतापिच पुनःपुनः स्तौमीत्यर्थः ॥ ९ ॥

९. तुम दानशील हो। तुमसें इन्द्र श्रेष्ठ हैं। तुम दीप्ति से युक्त हो। तुम लोग यज्ञ में रहो। अनन्तर मैं तुम्हारा स्तव करता हूँ।

॥ इति षष्ठस्य षष्ठे चतुर्थोवर्गः ॥ ४ ॥

प्रेष्ठंवइति नवर्चं चतुर्थं सूक्तं कवेःपुत्रस्योशनसआर्षं गायत्रमाग्नेयं—तथानुक्रम्यते—प्रेष्ठमुशनाकाव्यआग्नेयमिति । प्रातरनुवाके आग्नेयेक्रतौ गायत्रेछन्दसि आश्विनशस्त्रे चेदंसूक्तं । सूत्रितंच—युक्ष्वाहि प्रेष्ठंवइति । आभिप्लविकेषूक्थ्येषु मैत्रावरुणे प्रेष्ठंवइतितृचो वैकल्पिकः स्तोत्रियः । सूत्रितंच—प्रेष्ठंवोअतिथिं श्रेष्ठंयविष्ठभारतेति ।

तत्र प्रथमा—

प्रेष्ठंवोअतिथिंस्तुषेमित्रमिवप्रियम् । अग्निंरथंनवेद्यम् ॥ १ ॥

प्रेष्ठंम् । वः । अतिथिम् । स्तुषे । मित्रम्ऽइंव । प्रियम् ।
अग्निम् । रथंम् । न । वेद्यम् ॥ १ ॥

हे यजमानाः प्रेष्ठं युष्माकं धनदानेन प्रियतमं अतिथिं युष्माभिरतिथिवत् पूज्यं यद्वा अत सातत्यगमने ऋतन्यञ्जीत्यादिना अतेरिथिन् सततं देवानां हविःप्रदातुं गच्छन्तं मित्रमिव सखायमिव प्रियं स्तोतुः प्रीणनकरं रथंन रथमिव वेद्यं वेदोधनं धनहितं लाभहेतुं यथा रथी रथेन धनं लभते तद्वत् स्तोतारोनेनधनं लभन्ते तादृशं धनलाभकारणमग्निं वोयुष्मत्कर्मसिध्यर्थं स्तुषे काव्यउशना स्तौति ॥ १ ॥

१. प्रियतम अतिथि और मित्र के समान प्रिय तथा रथ के समान धन-वाहक, अग्नि की, तुम्हारे लिए, मैं स्तुति करता हूँ।

अथद्वितीया—

कविमिवप्रचेतसंयंदेवासोअधद्विता । निमर्त्येष्वादधुः ॥ २ ॥

कविम्ऽइंव । प्रऽचेतसम् । यम् । देवासः । अध ।
द्विता । नि । मर्त्येषु । आऽदधुः ॥ २ ॥

अधापिच देवासोदेवाः इन्द्रादयः यमग्निं मर्त्येषु मनुष्येषु द्विता द्विधान्यादधुः गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः। तत्रदृष्टान्तः—कविमिव प्रचेतसं प्रकृष्टज्ञानं कविं क्रान्तकर्माणं पुरुषं यथा द्विधा कार्यद्वयेऽन्यो नियोजयति तद्वत्। यद्वा दिवि पृथिव्यां च निहितवन्तः भूमौतु हविराहरणार्थं। दिवितु हविः प्रदानार्थं इति द्वैधं विधानं कृतवन्तइत्यर्थः ॥ २ ॥

२. देवों ने जिन अग्नि को, प्रकृष्ट ज्ञानवाले पुरुष के समान, मनुष्यों में दो प्रकार से (द्यावा और पृथिवी में) स्थापित किया है, उनकी मैं स्तुति करता हूँ।

त्वंयविष्ठदाशुषोनॄँःपाहिशृणुधीगिरः। रक्षातोकमुतत्मना॥३॥

त्वम्। यविष्ठ। दाशुषः। नॄन्। पाहि। शृणुधि।
गिरः। रक्ष। तोकम्। उत। त्मना ॥ ३ ॥

हे यविष्ठ युवतम यद्वा यौतेस्तृजन्तस्य इष्ठनिरूपं देवानां हविषां मिश्रयितृतमाग्ने त्वं दाशुषो हविर्दत्तवतो नॄन् कर्मणां नेतॄन् यजमानान् पाहि धनादिदानेन रक्ष। नॄँःपाहीत्यत्र संहितायां नॄन्पेइति नकारस्य रुत्वं अत्रानुनासिकइति पूर्वस्यानुनासिकः। किंच गिरः त्वद्विषयाः स्तुतीः शृणुधि अवहितः सन् शृणु। श्रु श्रवणे श्रु शृणु पॄ इत्यादिना हेर्ध्यादेशः। उतापिच त्मना आत्मनैव स्वयमेव तोकमस्मदीयं तनयं पुत्रं रक्ष पालय। त्मनेति सर्वत्र संबध्यते आत्मना स्वयमेव रक्ष। त्वदन्यं पालयितारं नविंदामः। त्वमेवास्मदीयं स्तोत्रं शृणु ॥ ३ ॥

३. तरुणतम अग्नि, हविर्दाता के मनुष्यों का पालन करो। स्तुति सुनो और स्वयं ही हमारी सन्तान की रक्षा करो।

कयातेअग्नेअङ्गिरऊर्जोनपादुपस्तुतिम्। वरायदेवमन्यवे॥ ४ ॥

कया। ते। अग्ने। अङ्गिरः। ऊर्जः। नपात्। उपऽस्तुतिम्।
वराय। देव। मन्यवे ॥ ४ ॥

हे अंगिरः अंगिरसां वरिष्ठ यद्वा अंगति सर्वत्र गच्छतीत्यंगिराः तादृश हे ऊर्जोनपात् नपादित्यपत्यनाम अन्नस्यपुत्र हविर्भिर्वर्धमानत्वात्। यद्वा नपादिति नप्ता हविर्लक्षणस्यान्नस्य नप्तः—अग्नौप्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायतेवृष्टिरिति। वृष्टेरोषधयः ओषधीभ्यः अग्निरिति अन्नस्यनप्तः हे देव द्योतमानाग्ने वराय सर्वैर्वरणीयाय मन्यवे शत्रूनतिमन्यमानाय ते तुभ्यं कया कीदृश्या वाचा उपस्तुतिमुपस्तोत्रमहंभरेयं त्वं महान् खलु अहमल्पः तदर्थं स्तुतिं कुर्यामिति ऋषिरग्निं प्रतिवदति ॥ ४ ॥

४. अङ्गिरा (गतिशील) बल के पुत्र और देव अग्नि, तुम सबके वरणीय (स्वीकार के योग्य) और शत्रुओं के सामने जानेवाले हो। कैसे स्तोत्र से मैं तुम्हारी स्तुति करूँ ?

अथ पंचमी—

दाशेमकस्यमनसायज्ञस्यसहसोयहो । कदुवोचइदंनमः॥५॥५॥

दाशेम । कस्य । मनसा । यज्ञस्य । सहसः । यहो इति ।

कत् । ऊँ इति । वोचे । इदम् । नमः ॥ ५ ॥ ५ ॥

ऋषिरग्निंमतिब्रूते हे सहसोयहो यहुरित्यपत्यनाम बलेन निष्पाद्यमानत्वात् बलस्यपुत्र हे अग्ने कस्य कीदृशस्य यज्ञस्य यज्ञवतो यजनीयदेववतो यजमानस्य मनसा युक्ताः सन्तो हवींषि तुभ्यं वयं दाशेम प्रयच्छेम पूजायां बहुवचनं । किंच तुभ्यं इदंनमो हविर्नमस्कारंवा कद् कदावा वोचे अहं वदामि । उइति प्रश्ने । ऋषिः कदा यक्ष्यामि कदा स्तोष्यामीत्यग्निंपृच्छति । वोचे वच्यादेशस्य लुङ्यात्मनेपदे उत्तमैकवचने रूपम् ॥५॥

५. बल-पुत्र अग्नि, कैसे यजमान के मन के अनुकूल हम तुम्हें हव्य देंगे? कब इस नमस्कार का मैं उच्चारण करूँगा?

॥ इति षष्ठस्य षष्ठे पञ्चमोवर्गः ॥ ५ ॥

अथ षष्ठी—

अधात्वंहिनस्करोविश्वाअस्मभ्यंसुक्षितीः । वाजद्रविणसोगिरः॥६॥

अध । त्वम् । हि । नः । करः । विश्वाः । अस्मभ्यम् ।

सुऽक्षितीः । वाजऽद्रविणसः । गिरः ॥ ६ ॥

हे अग्ने अधानन्तरं त्वं हिरवधारणे त्वमेवास्मभ्यं करः कुरु देहीत्यर्थः करोतेर्लेट्यडागमः । किमित्यपेक्षायामाह—नोस्मदीयागिरस्त्वद्विषया विश्वाः सर्वाः स्तुतीरेवं कुरु यथा सुक्षितीः क्षियन्ति निवसन्तीत्यत्रेतिक्षितयोगृहाः शोभननिवासाः यद्वा क्षितयोमनुष्याः कल्याणपुत्रपौत्रादियुक्ताः तथा वाजद्रविणसः अन्नयुक्तधनवतीः अथवा वाजोदीप्तिः सर्वतोदीप्तधनाश्च कुरु त्वमस्माभिः स्तुतः सन् गृहपुत्रान्नधनादीनि देहीत्यर्थः ॥ ६ ॥

६. तुम्हीं, हमारे लिए, हमारी सारी स्तुतियों को उत्तम गृह, धन और अन्नवाली करो।

अथ सप्तमी—

कस्यनूनंपरीणसोधियोजिन्वसिदंपते । गोषातायस्यतेगिरः ॥७॥

कस्य । नूनम् । परीणसः । धियः । जिन्वसि । दम्ऽपते ।

गोऽसाता । यस्य । ते । गिरः ॥ ७ ॥

हे दंपते गृहपते यदा गार्हपत्ये वर्तसे तदा जायापतिस्वरूपोसि तस्माद्दंपतिशब्देनाग्निर-भिधीयते। तथाविध हे अग्ने नूनमिदानीं कस्य कीदृशस्य जनस्य परीणसः बहूनि धियः कर्माणि जिन्वसि प्रीणयसि। यस्य ते तव संबन्धिन्योगिरः स्तुतयः गोसाता गोसातौ गवां लाभे भवन्ति खलु। तस्मात्त्वं कुत्र तिष्ठसि। अस्माकमिदानीं गवेच्छा प्रवर्तते। यद्वा हे अग्ने त्वमिदानीं कस्य कर्माणि प्रीणयसि नकस्यापीत्यर्थः। अस्माकमेव कर्माणि प्रीणयेतिभावः॥७॥

**७. दम्पती-रूप (गार्हपत्य) अग्नि, तुम इस समय किसके कर्म को प्रसन्न (सफल) करते हो? तुम्हारी स्तुतियाँ धन देनेवाली हैं।**

अग्निमन्थने तंमर्जयन्तसुक्रतुमित्येषा। सूत्रितंच—तंमर्जयन्तसुक्रतुं यज्ञेनयज्ञमयजन्तदे-वाइति। सैषा सूक्तेष्टमी—

तंमर्जयन्तसुक्रतुंपुरोयावानमाजिषु। स्वेषुक्षयेषुवाजिनम्॥ ८॥

तम्। मर्जयन्त। सुऽक्रतुम्। पुरःऽयावानम्। आजिषु। स्वेषु। क्षयेषु। वाजिनम्॥ ८॥

सुक्रतुं शोभनप्रज्ञं सुकर्माणं वा आजिषु संग्रामेषु पुरोयावानं शत्रुहननार्थं पुरतएवगन्तारं वाजिनं बलवन्तं तं तादृशमग्निं यजमानाः स्वेषु आत्मीयेषु क्षयेषु गृहेषु मर्जयन्त निर्मथितम-ग्निमलंकुर्वन्ति परिचरन्तीति यावत्॥ ८॥

**८. अपने घर में यजमान लोग सुन्दर बुद्धिवाले, सुकृती युद्ध में अग्र-गामी और बली अग्नि की पूजा करते हैं।**

क्षेतिक्षेमेभिःसाधुभिर्नकिर्यंघ्नन्तिहन्तियः। अग्नेसुवीरएधते॥९॥६॥

क्षेति। क्षेमेभिः। साधुऽभिः। नकिः। यम्। घ्नन्ति। हन्ति। यः। अग्ने। सुऽवीरः। एधते॥ ९॥ ६॥

हे अग्ने योमनुष्यः साधुभिः साधयद्भिः क्षेमेभिः पालनैः सह क्षेति स्वगृहे निवसति। तथा यं जनं नकिः नकेचन घ्नन्ति न हिंसन्ति। यएवं हन्ति शत्रून् स्वयमेव हन्ति समनुष्य-स्तव स्तोता खलु अन्यथा तस्यैतावन्नघटते। ततः सः स्तोता सुवीरः शोभनपुत्रादियुक्तःसन् एधते आत्मीयगृहेषु धनादिभिर्वर्धते॥ ९॥

**९. अग्नि, जो व्यक्ति साधक रक्षण के साथ अपने गृह में रहता है, जिसे कोई मार नहीं सकता और जो शत्रु को मारता है, वही सुन्दर पुत्र-पौत्र से युक्त होकर बढ़ता है।**

॥ इति षष्ठस्य षष्ठे षष्ठोवर्गः॥ ६॥

आमेहवमिति नवर्चं पंचमं सूक्तं कृष्णोनामांगिरसऋषिः गायत्रीछन्दः एतदादीनि त्रीणिसूक्तानि अश्विदेवत्यानि ! तथाचानुक्रान्तं—आमेंकृष्णआश्विनंहीति । प्रातरनुवाकाश्विने क्रतौ गायत्रेछंदस्याश्विनशस्त्रे चेदंसूक्तं । सूत्रितंच—उदीराथामामेहवमिति ।

तत्र प्रथमा—

आमेहवंनासत्याश्विंनागच्छंतंयुवम् । मध्वःसोमस्यपीतये ॥ १ ॥

आ । मे । हवम् । नासत्या । अश्विना । गच्छंतम् । युवम् ।
मध्वः । सोमस्य । पीतये ॥ १ ॥

हे नासत्या असत्यमनयोर्नास्तीति नासत्यौ तादृशौ हे अश्विना अश्विनौ युवं युवां मे मदीयं हवमाह्वानं श्रुत्वा यद्वा हवं हूयतेत्रेति हवोयज्ञः केवलस्याधिकरणे अप्छान्दसः मदीयं यज्ञं प्रति मध्वः मदकरस्य सोमस्य पीतये पानाय तदर्थमागच्छतम् ॥ १ ॥

१. नासत्य अश्विद्वय, तुम दोनों मेरा आह्वान सुनकर, मदकर सोम-पान के लिए, मेरे यज्ञ में आओ।

अथ द्वितीया—

इमंमेस्तोममश्विनेमंमेंश्रृणुतंहवम् । मध्वःसोमस्यपीतये ॥ २ ॥

इमम् । मे । स्तोमम् । अश्विना । इमम् । मे । श्रृणुतम् ।
हवम् । मध्वः । सोमस्य । पीतये ॥ २ ॥

हे अश्विना अश्विनौ मे मदीयं इमं स्तोमं स्तोत्रं किंच मे मदीयं इममिदमागमनविषयं हवमाह्वानंच श्रृणुतम् ॥ २ ॥

२. अश्विद्वय, मदकर सोम के पान के लिए मेरे स्तोत्र को सुनो। मेरा आह्वान सुनो।

अथ तृतीया—

अयंवांकृष्णोअश्विनाहवंतेवाजिनीवसू । मध्वःसोमस्यपीतये॥३॥

अयम् । वाम् । कृष्णः । अश्विना । हवंते । वाजिनीवसू
इति वाजिनीऽवसू । मध्वः । सोमस्य । पीतये ॥ ३ ॥

हे वाजिनीवसू अन्नयुक्तधनौ अत्र इनिरनुवादार्थः । यद्वा वाजः वजनं क्रिया तद्वती वाजिनी तद्युक्तधनवन्तौ हे अश्विना अश्विनौ अयं कृष्णोनाम मंत्रद्रष्टाऋषिः वां युवां हवते स्तुतिभिराह्वयति । किमर्थं मध्वः सोमस्य पीतयइति ॥३ ॥

३. हे अन्न और धनवाले अश्विद्वय, मदकर सोम-पान के लिए यह कृष्ण ऋषि (मैं) तुम्हें बुलाता है।

अथ चतुर्थी—

श्रृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा । मध्वः सोमस्य पीतये ॥ ४ ॥

श्रृणुतम् । जरितुः । हवम् । कृष्णस्य । स्तुवतः ।
नरा । मध्वः । सोमस्य । पीतये ॥ ४ ॥

हे नरा नरौ सर्वस्य नेतारावश्विनौ जरितुः तच्छीलार्थेतृन् व्यत्ययेनान्तोदात्तत्वं । जरितुः स्तवनशीलस्य संप्रति स्तुवतः स्तोत्रं कुर्वतः कृष्णस्य एतन्नामकस्य ऋषेः संबन्धि हवं युष्मद्विषयाह्वानं श्रृणुतं । यद्वा जरितुः अन्यदेवानां स्तोतुः स्तुवतइदानीं युवयोः स्तोत्रकारिणस्तस्य हवं श्रृणुतं । शिष्टं गतम् ॥ ४ ॥

४. नेताओ, स्तोत्र-परायण और स्तोता कृष्ण का आह्वान, मदकर सोमपान के लिए, सुनो।

अथ पञ्चमी—

छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा । मध्वः सोमस्य पीतये ॥ ५ ॥ ७ ॥

छर्दिः । यन्तम् । अदाभ्यम् । विप्राय । स्तुवते । नरा ।
मध्वः । सोमस्य । पीतये ॥ ५ ॥ ७ ॥

हे नरा नेतारावश्विनौ विप्राय मेधाविने अतएव स्तुवते स्तोत्रं कुर्वते कृष्णाय ऋषये अदाभ्यं दभेश्चेति ण्यत्प्रत्ययः परैरहिंस्यं छर्दिर्गृहं यन्तं प्रयच्छतं । किमर्थं सोमपानाय स्तोत्रे गृहे दीयमाने सति तदाससोमं युवाभ्यां प्रयच्छति ॥ ५ ॥

५. नेताओ, मदकर सोमपान के लिए मेधावी स्तोता कृष्ण को अहिंसनीय गृह प्रदान करो। ॥ इति षष्ठस्य षष्ठे सप्तमोवर्गः ॥ ७ ॥

गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना । मध्वः सोमस्य पीतये ॥ ६ ॥

गच्छतम् । दाशुषः । गृहम् । इत्था । स्तुवतः । अश्विना ।
मध्वः । सोमस्य । पीतये ॥ ६ ॥

हे अश्विना अश्विनौ इत्था इत्थमनेन प्रकारेण स्तुवतः युवयोः स्तोत्रं कुर्वतो दाशुषो हवींषि दत्तवतो यजमानस्य गृहंप्रति गच्छतं युवामागच्छतं । किमर्थं मध्वः सोमस्य पीतयइति ॥ ६ ॥

६. अश्विद्वय, इसी प्रकार स्तोता और हव्यदाता के गृह में, मदकर सोमपान के लिए, आओ।

अथ सप्तमी—

युञ्जाथांरासभंरथेवीड्वङ्गेवृषणवसू । मध्वःसोमस्यपीतये ॥ ७ ॥

युञ्जाथाम् । रासभम् । रथे । वीळुऽअङ्गे । वृषणवसू इति वृषणऽवसू । मध्वः । सोमस्य । पीतये ॥ ७ ॥

हे वृषणवसू वर्षणशीलधनवन्तौ अश्विनौ युवां वीड्वंगेवीळुर्दृढः दृढांगोपेते स्वरथे-रासभं शब्दायमानं एतन्नामकमश्वं युंजाथां संयोजयतां। किमर्थं मध्वः सोमस्य पीतयइ-ति। रासभावश्विनोरिति रासभावेवाश्विनो रथस्यवाहनौ ॥ ७ ॥

७. वर्षक और धनी अश्विद्वय, मदकर सोमपान के लिए दृढ़ाङ्ग रथ में रासभ (अश्व) को जोतो।

अथाष्टमी—

त्रिवन्धुरेणत्रिवृतारथेनायातमश्विना । मध्वःसोमस्यपीतये ॥८॥

त्रिऽवन्धुरेण । त्रिऽवृता । रथेन । आ । यातम् । अश्विना । मध्वः । सोमस्य । पीतये ॥ ८ ॥

हे अश्विना अश्विनौ त्रिवन्धुरेण त्रिफलका संघट्टितेन त्रिवृता त्रिकोणेन यद्वा त्रिवृता त्रीणि कवचादिभिरावरणानि यस्य सतथोक्तः तेन रथेन अस्मयज्ञं प्रत्यायातं युवामागच्छतं च। शिष्टं गतम् ॥ ८ ॥

८. अश्विद्वय, तीन बन्धुरों (फलकों) और तीन कोनोंवाले रथ पर, मदकर सोमपान के लिए, आगमन करो।

नूमेगिरोनासत्याश्विनाप्रावतंयुवम् । मध्वःसोमस्यपीतये ॥९॥८॥

नु । मे । गिरः । नासत्या । अश्विना । प्र । अवतम् । युवम् । मध्वः । सोमस्य । पीतये ॥ ९ ॥ ८ ॥

हे नासत्या असत्यरहितौ हे अश्विना अश्विनौ मे मदीयागिरः स्तुतिलक्षणावाचः प्रति युवं युवां नु क्षिप्रं प्रावतं प्रकर्षेण गच्छतं। यद्वा मे गिरः प्रावतं आत्मीयतया प्ररक्षतं। कि-मर्थं मध्वो मदकरस्य सोमस्य पीतये पानाय तदर्थं सर्वेदेवाः स्तुतिभिराहूताः सन्तोयज्ञं प्रत्या-गच्छन्ति स्तुतिभिर्विना नागच्छन्तीति गच्छतं रक्षतंचेति युक्तं भवति ॥ ९ ॥

९. नासत्य-द्वय, मदकर सोमपान के लिए मेरे स्तुति-वचनों की ओर तुम शीघ्र आओ।

॥ इति षष्ठस्य षष्ठेऽष्टमोवर्गः ॥ ८ ॥

उभाहिदस्रेति पंचर्चं षष्ठं सूक्तं विश्वकोनाम कृष्णस्यपुत्रः कृष्णएववा ऋषिः जगतीछन्दः। अश्विनौ देवता। तथानुक्रम्यते—उभाहिपंच विश्वकोवा कार्ष्णिर्जागतमिति। विनियोगोलिंगादवगन्तव्यः।

तत्र प्रथमा—

उभाहिदस्राभिषजामयोभुवोभादक्षस्यवचसोबभूवथुः।
तावांविश्वकोहवतेतनूकृथेमानोवियौष्टंसख्यामुमोचतम्॥ १॥

उभा। हि। दस्रा। भिषजा। मयःऽभुवा। उभा। दक्षस्य। वचसः। बभूवथुः। ता। वाम्। विश्वकः। हवते। तनूऽकृथे। मा। नः। वि। यौष्टम्। सख्या। मुमोचतम्॥ १॥

हे अश्विनौ दस्रा दर्शनीयौ यद्वा दसु उपक्षये सर्वेषां शत्रूणामुपक्षपयितारौ भिषजा देवानां वैद्यौ यद्वा भीतीनां त्रासयितारौ यद्वा नराः अश्विनौ स्तुवन्ति तदा तौ तेषां भीतिंसमनयतइत्यर्थः पृषोदरादित्वाद्रूपसिद्धिः। तादृशौ अतएव मयोभुवा मयसः सुखस्य भावयितारौ उभा परस्परं द्वित्वसंख्यापूरकौ उभा उभौ द्वौ युवां दक्षस्य एतन्नामकस्य प्रजापतेःवचसः स्तुतेः संबन्धिनौ बभूवथुः। हि प्रसिद्धौ। पुरा युवां दक्षेणास्ताविषाथां खलु विद्याढचौ खलु ता तौ तादृशौ प्रसिद्धौ वां युवां विश्वकः एतन्नामकऋषिः तनूकृथे तनोति कुलमिति तनूः पुत्रः तस्य विष्णाप्वो निमित्तं हवते स्तुतिभिराह्वयति। तस्मात् नोस्माकं सख्या सख्यानि यष्टृयष्टव्यतया जातानि सखित्वानि मावियौष्टं मापृथक्कुरुतं। यौतेर्लुङि सिचिरूपं। किंच युवां मुमोचतं अस्मानागन्तुं रथे स्थित्वा अश्वप्रग्रहान्मुंचतं। मुंचतेर्लोटि बहुलंछन्दसीति शपः श्लुः अडागमः। अत्रविष्णापूनामानं पुत्रमुद्दिश्य तस्य पिता विश्वको युवामाह्वयतीत्यात्मानमाह। यद्वा विश्वकस्य पिता कृष्णोनामऋषिः ममपुत्रो विश्वकः पुत्रार्थं युवां अधि ह्वयतीति वदति॥१॥

१. दर्शनीय और वैद्य अश्विद्वय, तुम दोनों सुखकर हो। तुम लोग दक्ष के स्तुति-समय में उपस्थित थे। सन्तान के लिए तुम्हें विश्वक (मैं) बुलाता हूँ। हमारा (ऋषि और स्तोताओं का) बन्धुत्व अलग नहीं करना। लगाम से अश्वों को छुड़ाओ।

अथ द्वितीया—

कुथानूनंवांविमनाउपस्तवद्युवंधियंददथुर्वस्यइष्टये।
तावांविश्वकोहवतेतनूकृथेमानोवियौष्टंसख्यामुमोतचम्॥ २॥

कथा । नूनम् । वाम् । विऽमनाः । उप । स्तवत् । युवम् । धियम् । ददथुः । वस्यःऽइष्टये । ता । वाम् । विश्वकः । हवते । तनूऽकृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥ २ ॥

हे अश्विनौ विमनाः एतन्नामकऋषिः नूनं पुरा कथा कथं वां युवामुपस्तवत् कथमुपस्तौत्। तेन स्तुतौ युवं युवां वस्यइष्टये वस्योवसीयः प्रशस्तं धनं तस्याभिलषितस्य इष्टये अभिगमनाय यद्वावशिष्टधनस्यइष्टये प्राप्तये धियं बुद्धिं विमनसे ददथुः अदधाथां खलु। वस्यइति वसुमच्छब्दादीयसुनि विन्मतोर्लुगिति लुक् ईयसुन ईकारलोपश्छान्दसः। तादृशौ युवां विश्वकोहवतइति गतम् ॥ २ ॥

२. अश्विद्वय, विमना नाम के ऋषि ने पूर्व काल में तुम्हारी कैसे स्तुति की थी कि विमना को धन-प्राप्ति के लिए तुमने अपने मन को निश्चित किया था? वैसे तुमको विश्वक बुलाता है। हमारा बन्धुत्व वियुक्त न हो। लगाम से अश्वों को छुड़ाओ।

युवंहिष्मापुरुभुजेममेधतुंविष्णाप्वेददथुर्वस्यइष्टये ।
तावांविश्वकोहवतेतनूकृथेमानोवियौष्टंसख्यामुमोचतम् ॥ ३ ॥

युवम् । हि । स्म । पुरुऽभुजा । इमम् । एधतुम् । विष्णाप्वे । ददथुः । वस्यःऽइष्टये । ता । वाम् । विश्वकः । हवते । तनूऽकृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥ ३ ॥

हे पुरुभुजा पुरुभुजौ पुरूणां बहूनां धनादिदानेन भोजयितारौ यद्वा बहूनां स्तोतॄणां पालयितारौ अश्विनौ युवं हिष्मेत्यवधारणे युवामेव इममेधतुं एधतेरेधिवह्योश्चतुरिति चतुप्रत्ययः चित्त्वादन्तोदात्तः। इमां धनादिवृद्धिं विष्णाप्वे विष्णोः सर्वेषां देवानां मुख्यत्वात्तद्ग्रहणे सर्वेदेवा गृहीताभवन्ति विष्ण्वादीन् कर्मणा व्याप्नोतीति विष्णापूः पृषोदरादिः। यद्वा विष्णुं सर्वग्रहेषु व्याप्तं सोमं दशापवित्रेण आपुनातीति तस्य चतुर्थी विष्णाप्वइति। एतन्नामकेममपुत्रे पौत्रे वा पुत्राय पौत्राय वा इमां धनादिवृद्धिं ददथुः अदत्तं। किमर्थं वस्यइष्टये वसीयसः प्रशस्तधनस्य इष्टये इच्छां पूरयितुं। क्रियार्थोपपदस्येति चतुर्थी। तावामिति पूर्ववद्व्याख्येयम् ॥ ३ ॥

३. अनेकों के पालक अश्विद्वय, विष्णुवापु (मेरे पुत्र) की उत्कृष्ट धन की अभिलाषा को पूर्ण करने के लिए तुमने धन-वृद्धि प्रदान किया है। वैसे तुम्हें, सन्तान के लिए, विश्वक बुलाता है। हमारा सखित्व अलग नहीं करना। लगाम से अश्वों को छोड़ो।

उतत्यंवीरंधनसामृजीषिणंदूरेचित्सन्तमवसेहवामहे ।
यस्यस्वादिष्ठासुमतिःपितुर्यथामानोवियौष्टंसख्यामुमोचतम् ॥४॥

उत । त्यम् । वीरम् । धनऽसाम् । ऋजीषिणम् । दूरे । चित् । सन्तम् ।
अवसे । हवामहे । यस्य । स्वादिष्ठा । सुऽमतिः । पितुः । यथा ।
मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥ ४ ॥

हे अश्विनौ उतापिच वीरं कर्मणि समर्थं धनसां धनानां संभक्तारं ऋजीषिणं ऋजीषोपार्जितोभिषुतः सोमस्तद्वन्तं दूरेचित् दूरेएवसन्तं भवन्तं विनष्टमिव त्यं तं विष्णाप्वं अवसेस्माकं रक्षणाय हवामहे आह्वयामः । पुत्रोहि पितरं रक्षते । किंच यस्य पुत्रस्य पौत्रस्य वा सुमतिः शोभना स्तुतिः स्वादिष्ठा स्वादुतमा अतिशयेन देवानां स्वादुकारिणीत्यर्थः । तत्रदृष्टान्तः— पितुर्यथा पितुर्विश्वकस्य स्तुतिर्यथा देवानां प्रीतिकरी तद्वत् तस्मात्तमाह्वयामइतिशेषः । मानोइति गतार्थः ॥ ४ ॥

४. अश्विद्वय, वीर, धन-भोक्ता, अभिषुत सोम से युक्त और दूरस्थ विष्णुवापु को हम बुलाते हैं। पिता (मेरे) समान ही विष्णुवापु की स्तुति भी अतीव सुस्वादु है। हमारे सख्य को पृथक् मत करो।

ऋतेनदेवःसवितागमायतऋतस्यशृङ्गमुर्वियाविपप्रथे ।
ऋतंसासाहमहिचित्पृतन्यतोमानोवियौष्टंसख्यामुमोचतम् ॥ ५॥९॥

ऋतेन । देवः । सविता । शम्ऽआयते । ऋतस्य । शृङ्गम् ।
उर्विया । वि । पप्रथे । ऋतम् । ससाह । महि । चित् । पृतन्यतः ।
मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥ ५ ॥ ९ ॥

ऋषिः सत्यप्रशंसां करोति । हे अश्विनौ देवोद्योतमानः सविता सर्वस्य स्वस्वकर्मणि प्रेरक एतन्नामकोदेवः ऋतेन सत्येन शमायते सायंकाले स्वकिरणसमूहं शमयति । ततोनन्तरं सएव सविता ऋतस्य सत्यस्य शृंगमग्रं उर्विया उरुविस्तीर्णं यथाभवति तथा प्रातःकाले विपप्रथे विशेषेण प्रथयति सर्वतो विस्तारयति । किंच पृतन्यतः पृतनामिच्छतः संयुयुत्सोः शत्रोर्महिचित् महदपि बलं ऋतं सत्यं ससाह स्वयमेवाभिभवति । इत्थमृतं प्रशस्तमभूत् तस्माद्युवामपि तेन ऋतेन नोस्माकं सख्यानि मावियौष्टं अत्रागन्तुमश्वरश्मीन्मुंचतमिति ॥ ५ ॥

५. अश्विद्वय, सत्य के द्वारा सूर्य अपनी किरणों को (सायंकाल में) एकत्र करते हैं। अनन्तर सत्य के शृंग (किरण-समूह) को (प्रातःकाल) विशेष रूप से विस्तारित करते हैं। सचमुच वह (सूर्य = सविता) सेनावाले शत्रु को परास्त करते हैं। सत्य के द्वारा हमारा बन्धुत्व वियुक्त न हो। लगाम से अश्वों को छुडाओ।

॥ इति षष्ठस्य षष्ठे नवमोवर्गः ॥ ९ ॥

द्युम्नीवामिति षळृचं सप्तमं सूक्तं । तथाचानुक्रम्यते—द्युम्नीषड्वासिष्ठोवा द्युम्नीकः प्रियमेधोवा प्रागाथं हेति । वसिष्ठपुत्रो द्युम्नीकऋषिः आंगिरसः प्रियमेधोवा । उभयत्र वाशब्दाद्यदोभा-

वपि नस्यातां तदा प्रकृतआंगिरसः कृष्णएवऋषिः। अयुजोबृहत्यो युजःसतोबृहत्यः। अश्विनौ देवता। प्रातरनुवाके आश्विने क्रतौ बार्हतेछन्दसि आश्विनशस्त्रे चेदंसूक्तं। सूत्रितंच—द्युम्नीवांयत्स्थइति बार्हतइति।

तत्र प्रथमा—

द्युम्नीवांस्तोमोअश्विनाक्रिविर्नसेकआगतम्।
मध्वंःसुतस्यसदिविप्रियोनरापातंगौराविवेरिणे॥ १॥

द्युम्नी। वाम्। स्तोमः। अश्विना। क्रिविः। न। सेके।
आ। गतम्। मध्वंः। सुतस्यं। सः। दिवि। प्रियः।
नरा। पातम्। गौरौऽइंव। इरिणे॥ १॥

हे अश्विना अश्विनौ अयमनुक्षीणस्तोत्रो द्युम्नीक एतन्नामकऋषिः वां युवयोः स्तोमः स्तोताभवति युष्मत्स्तुतौ कृतायां स्तोत्राणि नाल्पीभवन्ति किंतु पुनर्वर्धन्तइत्यर्थः। तत्रदृष्टान्तः—क्रिविर्न क्रिविरिति कूपनाम कूपोयथा सेके उदकसेचने वृष्टौ भवन्त्यां नाल्पोदकोभवति तद्वव। यद्वा वां युवयोः स्तोमः युष्मद्विषयास्तुतिः द्युम्नी अन्नवतीखलु स्तोत्रे कृते तस्माअन्नादिकं प्रयच्छत इत्यर्थः। तस्माद्युवामस्मदीयं यज्ञं प्रत्यागतं स्तोत्राणि श्रोतुमागच्छतं। हे नरा नरौ नेतारौ अश्विनौ सोयं स्तोता दिवि द्योतमानेस्मिन्यज्ञे सुतस्याभिषुतस्य मध्वो मदकरस्य सोमस्य प्रियः स्तोत्रकारित्वेन प्रियतमोभवति। ततस्तेन सुतं सोमं पातं युवां शीघ्रमागत्य पिबतं। तत्रदृष्टान्तः—गौराविव यथा तृषितौ गौरौ एतन्नामकौ मृगौ इरिणे तटाकादिषु उदकपानार्थं शीघ्रमागच्छतस्तद्वत्॥ १॥

१. अश्विद्वय, द्युम्नीक ऋषि तुम्हारा स्तोता है। वर्षा-ऋतु में कुंओं की तरह तुम आओ। नेताओ, यह स्तोता द्युतिमान् यज्ञ में अभिषुत और मदकर सोम का प्रेमी है। फलतः जैसे गौर मृग तड़ाग आदि का जल पीते हैं, वैसे ही अभिषुत सोम का पान करो।

अथ द्वितीया—

पिबंतंघर्ममधुमन्तमश्विनाबर्हिःसीदतंनरा।
तामन्दसानामनुषोदुरोणआनिपातंवेदसावयः॥ २॥

पिबंतम्। घर्मम्। मधुंऽमन्तम्। अश्विना। आ। बर्हिः।
सीदतम्। नरा। ता। मन्दसाना। मनुषः।
दुरोणे। आ। नि। पातम्। वेदसा। वयः॥ २॥

हे अश्विना अश्विनौ मधुमन्तं मदवन्तं मदकारिणमित्यर्थः तादृशं रसवन्तं वा घर्मं घृक्षरणदीप्त्योः पात्रेषु क्षरन्तं सोमं पिबतं। यद्वा मधुमंतं मधुर्मदकरः सोमः तद्वन्तं घर्मं महावीरपात्रगतंक्षीरं पिबतं सोमंचेति नतु साहचर्येण तदसंभवात्। हे नरा नरौ नेतारौ सर्वस्य हे अश्विनौ बर्हिः बर्हिषि यज्ञे आसीदतमुपविशतं। यद्वा पूर्वं द्वितीयं पादं व्याख्याय प्रथमपादोव्याख्येयः। उपसदनानन्तरं सोमपानं युक्तमिति। किंच मनुषो मनुष्यस्य दुरोणे गृहभूतेस्मिन् देवयजने मंदसाना सोमपानेन मोदमानौ ता तौ पूर्वोक्तलक्षणौ युवां वेदसा पुरोडाशादिलक्षणेन हविषा सह वयः सोमरूपमन्नं आनिपातं आगत्य निपातं निपिबतं। यद्वा वेदसा धनेन सह वयोस्माकमायुर्निपातं नितरां रक्षतम्॥ २॥

२. अश्विद्वय, रसवान् और चूनेवाला सोम पिओ। नेताओ, यज्ञ में बैठो। मनुष्य के गृह में प्रमत्त होकर तुम लोग, हव्य के साथ, सोम का पान करो।

आवांविश्वाभिरूतिभिःप्रियमेधाअहूषत।
तावर्तिर्यातमुपवृक्तबर्हिषोजुष्टंयज्ञंदिविष्टिषु॥ ३॥

आ। वाम्। विश्वाभिः। ऊतिऽभिः। प्रियऽमेधाः।
अहूषत। ता। वर्तिः। यातम्। उप। वृक्तऽबर्हिषः।
जुष्टम्। यज्ञम्। दिविष्टिषु॥ ३॥

हे अश्विनौ प्रियमेधाः मेधोयज्ञः प्रियतमयज्ञा यजमानाः। यद्वा प्रियमेधा एतन्नामकऋषिः पूजायां बहुवचनं यष्टारः ऋषिर्वा विश्वाभिरूतिभिः सर्वैः पालनैः सह अथवा अवतिर्याञ्चाकर्मा सर्वैरभिलषितयाजनैः सहिता आहूषत आह्वासिषुः आह्वासीत् आत्मना पालनहेतुकत्वेन यद्वाभिलषितदानाय वां आह्वयन्ति। ता तौ युवां वृक्तबर्हिषः आस्तरणार्थं छिन्नबर्हिषोयष्टुः संबन्धि जुष्टं सर्वैःदेवैः सेवितं पर्याप्तं वा यज्ञं यजनीयं हविः प्रति दिविष्टिषु दिवसानामह्वामागमनेषु प्रातः कालेषु यज्ञेषुवा वर्तिः वर्तन्ते अत्रेति वर्तिर्गृहं तदुपायातं हविः स्वीकरणार्थं युवामागच्छतम्॥ ३॥

३. अश्विद्वय, यजमान तुम्हें सारी रक्षाओं के साथ, बुला रहे हैं। जिस यजमान ने कुशों को बिछाया है, उसी के द्वारा सदा सेवित हवि के लिए तुम लोग प्रातःकाल ही घर में आओ।

पिबतंसोमंमधुमन्तमश्विनाबर्हिःसीदतंसुमत्।
तावांवृधानाउपसुष्टुतिंदिवोगन्तंगौराविवेरिणम्॥ ४॥

पिबतम् । सोमम् । मधुऽमन्तम् । अश्विना । आ । बर्हिः ।
सीदतम् । सुऽमत् । ता । ववृधानौ । उप । सुऽस्तुतिम् ।
दिवः । गन्तम् । गौरौऽइव । इरिणम् ॥ ४ ॥

हे अश्विनाश्विनौ मधुमन्तं रसवन्तं मदवन्तंवा सोमं युवां पिबतं ततोबर्हिः बर्हिषि यज्ञे सुमत् शोभनमासीदतं । पश्चात् ववृधानौ सोमपानेन वृद्धौ ता तौ युवां दिवः द्युलोकात् सुष्टुतिं अस्माभिः क्रियमाणां शोभनां स्तुतिं उपगन्तं उपगच्छतं । तत्रदृष्टान्तः--गौराविव यथा गौरमृगौ अन्यस्माद्देशादिरिणं तटाकादिकं प्रति जलपानार्थं आगच्छतस्तद्वत् ॥ ४ ॥

४. अश्विद्वय, रसवान् सोम का पान करो। अनन्तर सुन्दर कुशों पर बैठो। तत्पश्चात् प्रवृद्ध होकर उसी प्रकार हमारी स्तुति की ओर आओ, जिस प्रकार दो गौर मृग तड़ाग आदि की ओर जाते हैं।

आनूनंयातमश्विनाश्वेभिःप्रुषितप्सुभिः ।
दस्राहिरण्यवर्तनीशुभस्पतीपातंसोममृतावृधा ॥ ५ ॥

आ । नूनम् । यातम् । अश्विना । अश्वेभिः । प्रुषितप्सुऽभिः ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । शुभः ।
पती इति । पातम् । सोमम् । ऋतऽवृधा ॥ ५ ॥

हे अश्विना अश्विनौ युवां प्रुषितप्सुभिः प्सुइति रूपनाम प्रुषप्लुष स्नेहनसेचनपूरणेषु । स्निग्धरूपैर्दीप्तरूपैरित्यर्थः । तादृशैः अश्वेभिः शीघ्रगामिभिरश्वैः सह नूनमिदानीमायातं अस्मदीयं यज्ञं प्रत्यागच्छतं । हे दस्रा दस्रौ दर्शनीयौ उपक्षयितारौ वा हे हिरण्यवर्तनी वर्तते अत्रेति वर्तनी रथः हिरणमयरथौ हे शुभस्पती उदकस्य कल्याणस्यवा पालयितारौ हे ऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ हे अश्विनौ युवां शीघ्रमागत्य सोमं पातं पिबतम् ॥ ५ ॥

५. अश्विद्वय, तुम लोग स्निग्ध रूपवाले अश्वों के साथ इस समय आओ। दर्शनीय और सुवर्णमय रथवाले, जल के पालक और यज्ञ के वर्द्धक अश्विद्वय, सोमपान करो।

अथ षष्ठी—

वयंहिवांहवामहेविपन्यवोविप्रासोवाजसातये ।
तावल्गूदस्रापुरुदंससाधियाश्विनाश्रुष्ट्यागतम् ॥ ६ ॥ १० ॥

वयम् । हि । वाम् । हवामहे । विपन्यवः । विप्रासः ।
वाजऽसातये । ता । वल्गू इति । दस्रा । पुरुऽदंससा । धिया ।
अश्विना । श्रुष्टी । आ । गतम् ॥ ६ ॥ १० ॥

हे अश्विनौ विपन्यवः स्तोतारः अतएव विप्रासो मेधाविनो वयं वाजसातये अन्नला-भाय वां हिरवधारणे युवामेव हवामहे स्तुतिभिराह्वयामः । ता तौ वल्गू वल्गनं कुशलगमनं कुशलगमनशीलौ दस्रा दर्शनीयौ पुरुदंससा बहुकर्माणौ तौ युवां धिया अस्मदीयया स्तुत्या आहूतौ सन्तौ श्रुष्टी श्रुष्टीति क्षिप्रनाम क्षिप्रमस्मभ्यं धनादिदानायागतमागच्छतम् ॥ ६ ॥

६. अश्विद्वय, हम स्तोता और ब्राह्मण हैं। हम अन्न-लाभ के लिए तुम्हें बुलाते हैं। तुम सुन्दर गमनवाले और विविध-कर्मा हो। हमारी स्तुति के द्वारा बुलाये जाकर शीघ्र आओ।

॥ इति षष्ठस्य षष्ठे दशमोवर्गः ॥ १० ॥

तंवोदस्ममिति षळृचमष्टमंसूक्तं गौतमस्य नोधसआर्षं । तथाचानुक्रम्यते—तंवोदस्मं नो-धाइति । प्रागाथं हेत्युक्तत्वादेतदादिसूक्तत्रयं प्रागाथं । इन्द्रोदेवता महाव्रते निष्केवल्ये बार्हतत्-चाशीतावेतत्सूक्तं । तथाच पंचमारण्यके सूत्रितं—तंवोदस्ममृतीषहमानोविश्वासुहव्यइति । अ-ग्निष्टोमे माध्यन्दिनसवने अच्छावाकशस्त्रे तंवोदस्ममिति प्रगाथःस्तोत्रियः । सूत्रितंच—तंवोदस्म-मृतीषहं तत्त्वायामिस्तुवीर्यमिति प्रगाथौ स्तोत्रियानुरूपाविति । चातुर्विंशिकेहनि माध्यन्दिनसव-ने ब्राह्मणाच्छंसिनो वैकल्पिकःस्तोत्रियोयमेवप्रगाथः विषुवत्यपिमाध्यन्दिनसवने ब्राह्मणाच्छंसि-शस्त्रे तंवोदस्ममृतीषहमिति नौधसस्य योनिः शंसनीया तंवोदस्ममृतीषहमभिप्रवःसुराधसमिति।

तत्र प्रथमा—

तंवोदस्ममृतीषहंवसोर्मन्दानमन्धसः ।
अभिवत्संनस्वसरेषुधेनवइन्द्रंगीर्भिर्नवामहे ॥ १ ॥

तम् । वः । दस्मम् । ऋतिऽसहम् । वसोः । मन्दानम् । अन्धसः ।
अभि । वत्सम् । न । स्वसरेषु । धेनवः । इन्द्रम् । गीःऽभिः । नवामहे ॥१॥

नोधाइन्द्रं स्तौति हे ऋत्विग्यजमानाः दस्मं दर्शनीयं ऋतीषहं ऋतयोबाधकाः शत्रवः तेषामभिभवितारं पुनः कीदृशं वसोर्वासयितुर्दुःखस्य निवासयितुः यद्वा वसोः पात्रेनिवसतः तादृशस्य अंधसः सोमलक्षणस्यान्नस्य पानेन मंदानं मोदमानं वः यष्टृयष्टव्यत्वेन युष्मत्संब-न्धिनं तं तादृशमिन्द्रं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिरभिनवामहे नूस्तवने नुशब्दे अभिष्टुमः । कु-नेति स्वसरेषु । अत्रयास्कः—स्वसराण्यहानि भवन्ति स्वयंसारीण्यपिवा स्वरादित्योभवति सए-नानिसारयतीति[1] । सूर्यकर्तृकेषु दिवसेषु वयमभिष्टुमः। तत्रदृष्टान्तः—वत्सं न यथा धेनवो नवप्रसू-

---

१ नि० ५. ४.।

तिका धेनवः स्वसरेषु सुष्ठु अस्यन्ते प्रेर्यन्ते गावः अत्रेति स्वसराणि गोष्ठानि तेषु वत्समभिलक्ष्य शब्दयन्ति तद्वत् ॥ १ ॥

१. जैसे दिन में, गोशाला में, गायें अपने बछड़ों को बुलाती हैं, वैसे ही दर्शनीय, शत्रु-नाशक, दुःख दूर करनेवाले और सोमपान के द्वारा प्रमत्त इन्द्र को, स्तुति के द्वारा, हम बुलाते हैं।

द्युक्षंसुदानुंतविषीभिरावृंतंगिरिंनपुरुभोजसम् ।
क्षुमन्तंवाजंशतिनंसहस्रिणंमक्षूगोमन्तमीमहे ॥ २ ॥

द्युक्षम् । सुऽदानुम् । तविषीभिः । आऽवृतम् । गिरिम् । न ।
पुरुऽभोजसम् । क्षुमन्तम् । वाजम् । शतिनम् । सहस्रिणम् ।
मक्षु । गोऽमन्तम् । ईमहे ॥ २ ॥

द्युक्षं दीप्तीनां निवासस्थानं अतिशयितदीप्तमित्यर्थः । यद्वा द्युक्षं दिवि लोके क्षियन्तं निवसन्तं सुदानुं शोभनदानं तविषीभिर्बलैरावृतमाच्छादितं । आवरणेदृष्टान्तः—गिरिंन तविषीभिर्बलयुक्तैर्मेघैरावृतं शिलोच्चयमिव स्थितं । पुनःकीदृशं पुरुभोजसं सोमादिहविःप्रदानेन बहुभिर्यजमानैर्भोजयितव्यं यद्वा बहूनां पालयितारमिन्द्रं क्षुमन्तं । टुक्षुशब्दे । शब्दवन्तं अनेन पुत्रादिकं लक्ष्यते स्तोत्रादीनि कुर्वाणं शतिनं सहस्रिणं शतसहस्रसंख्याकधनयुक्तं गोमन्तं गवादियुक्तं वाजमन्नं मक्षु शीघ्रं ईमहे याचामहे । यद्वा पूर्वार्धो वाजविशेषणत्वेन वा योजनीयः । प्रदीप्तं शोभनयोग्यं बलादियुक्तं बहुभिः पुत्रमित्रादिभिर्भोक्तव्यं शब्दादियुक्तमन्नमिन्द्रं याचामइति ॥ २ ॥

२. इन्द्र दीप्ति के निवास-स्थान, स्वर्ग-वासी, उत्तम दानवाले, पर्वत के समान बल के द्वारा ढके हुए और अनेकों के पालक इन्द्र से शब्दकारी पुत्रादि, सौ और सहस्र धन तथा गो से युक्त अन्न की हम शीघ्र याचना करते हैं।

चातुर्विंशिकेहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनो नत्वाबृहन्तइति वैकल्पिकोनुरूपः । सूत्रितंच—नत्वाबृहन्तो अद्रय उभयंशृणवचनइति ।

नत्वांबृहन्तोअद्रयोवरन्तइन्द्रवीळवंः ।
यद्दित्ससिस्तुवतेमावंतेवसुनकिष्टदामिनातिते ॥ ३ ॥

न । त्वा । बृहन्तः । अद्रयः । वरन्ते । इन्द्र । वीळवंः ।
यत् । दित्ससि । स्तुवते । माऽवते । वसु । नकिः । तत् । आ ।
मिनाति । ते ॥ ३ ॥

हे इन्द्र बृहन्तो बलेन महान्तः अतएव वीळवः सर्वतोदृढाअपि अद्रयः पर्वताः त्वा त्वां नवरन्ते बलेन ननिवारयन्ति। अनिवारणमेवोत्तरार्धेन विवृणोति स्तुवते त्वद्विषयं स्तोत्रं कुर्वते मावते मत्सदृशायमादृशाय स्तोत्रे यद्वसु यद्धनं दित्ससि त्वं तद्दातुमिच्छसि ते तव देयं तद्धनं नकिर्नकश्चिदामिनाति आभिमुख्येन हिनस्ति। मीञ् हिंसायां। मीनातेर्निगमेइति ह्रस्वः। मावते युष्मदस्मद्भ्यां सादृश्यउपसंख्यानमिति वतुप् ॥ ३ ॥

३. इन्द्र, विराट् और सुदृढ़ पर्वत भी तुम्हें बाधा नहीं पहुँचा सकते। मेरे जैसे स्तोता को जो धन देने की इच्छा करते हो, उसे कोई नहीं विनष्ट कर सकता।

योद्धासिक्रत्वाशवसोतदंसनाविश्वाजाताभिमज्मना।
आत्वायमर्कऊतयेववर्ततियंगोतमाअजीजनन् ॥ ४ ॥

योद्धा। असि। क्रत्वा। शवसा। उत। दंसना। विश्वा। जाता। अभि। मज्मना। आ। त्वा। अयम्। अर्कः। ऊतये। ववर्तति। यम्। गोतमाः। अजीजनन् ॥ ४ ॥

हे इन्द्र। क्रत्वा वृत्रहननादि कर्मणा अपिवा प्रज्ञानेन शवसा आत्मीयेन बलेन योद्धा शत्रूणां संप्रहारकोसि। उतापिच त्वं दंसना स्वकीयेन कर्मणा मज्मना मजमुजिशब्दार्थाः। मजमुजीचेति मजतिः शब्दार्थः। शत्रूणामाक्रोशनसमर्थेन बलेन विश्वा जाता सर्वाणि भूतजातानि अभिभवसि। उक्तार्थस्य विश्वाजातान्यभ्यस्मिमह्नेत्यादिषु इन्द्रेणैवोक्तत्वात्। एतादृशं त्वा त्वामर्कः अर्चपूजायां अर्चनीयः अयं मंत्रः यद्वा अर्कः देवानामर्चकः पूजकः अयं स्तोता ऊतये स्वरक्षणाय आववर्तति आवर्तयति आत्माभिमुख्ये करोतीत्यर्थः। वर्ततेर्लेटि बहुलंश्लुरडागमश्च। यं त्वां गोतमाः गोतमपुत्रानोधःप्रभृतयः अजीजनन् स्वयज्ञे प्रादुरवीभवन् तं त्वां अयं मंत्रः स्तोता वा आवर्तयति ॥ ४ ॥

४. इन्द्र, कर्म और बल के द्वारा तुम शत्रुओं के विनाशक हो। तुम अपने कर्म और बल के द्वारा सारी वस्तुओं को जीतते हो। देवों का पूजक यह स्तोता, अपनी रक्षा के लिए, तुममें अपने को लगाता है। गौतम लोगों ने तुम्हें आविर्भूत किया है।

अथ पञ्चमी—

प्रहिरिरिक्षओजसादिवोअन्तेभ्यस्परि।
नत्वाविव्याचरजइन्द्रपार्थिवमनुस्वधांववक्षिथ ॥ ५ ॥

---

१ ऋ० सं० ६. ७. ४.।

प्र । हि । रि॒रि॒क्षे । ओज॑सा । दि॒वः । अन्ते॑भ्यः । परि॑ ।
न । त्वा॒ । वि॒व्या॒च॒ । रजः॑ । इ॒न्द्र॒ । पार्थि॑वम् ।
अनु॑ । स्व॒धाम् । व॒व॒क्षि॒थ॒ ॥ ५ ॥

हे इन्द्र दिवोद्युलोकस्य पर्यंतेभ्यः ओजसा हिरवधारणे स्वबलेनैव प्ररिरिक्षे प्रकर्षेणा-तिरिक्तोभवसि रिचेर्लेटिबहुलंछन्दसीतिश्लुः । प्रत्ययस्वरः । किंच हे इन्द्र पार्थिवं पृथिव्यां भवो रजोलोकः त्वा त्वां महता स्वशरीरेण नविव्याच नव्यामोति द्यावापृथिवीभ्यामपि स्वतः सत्वं बलेन समर्थोभवसीत्यर्थः । एवंभूतःसन् अस्माकं स्वधामन्नमुदकंवा नु ववक्षिथ अनु-वोढुमिच्छ । वहेः सन्नंतस्य छान्दसेलिटिरूपं मंत्रत्वादामभावः ॥ ५ ॥

५. इन्द्र, द्युलोक पर्यन्त प्रदेश से भी तुम प्रधान हो। पार्थिव लोक (रजोलोक) तुम्हें नहीं व्याप्त कर सकता। तुम हमारा अन्न ले जाने की इच्छा करो।

नकि॒ःपरि॑ष्टिर्मघवन्म॒घस्य॑तेयद्दा॒शुषे॑दश॒स्यसि॑ ।
अ॒स्माकं॑बोध्यु॒चथ॑स्यचोदि॒तामंहि॑ष्ठो॒वाज॑सातये ॥६ ॥ ११ ॥

नकिः॑ । परि॑ष्टिः । म॒घ॒ऽव॒न् । म॒घस्य॑ । ते॒ । यत् । दा॒शुषे॑ ।
द॒श॒स्यसि॑ । अ॒स्माक॑म् । बो॒धि॒ । उ॒चथ॑स्य । चो॒दि॒ता ।
मंहि॑ष्ठः । वाज॑ऽसातये ॥ ६ ॥ ११ ॥

हे मघवन् धनवन्निन्द्र ते तव मघस्य मंहनीयस्य धनस्य परिष्टिः परिबाधको निरोद्धा नकिर्नकश्चिदस्ति यद्यदा दाशुषे हविर्दत्तवते यजमानाय दशस्यसि धनंप्रयच्छसि तदा तस्य निरोधकोनास्तीत्यर्थः । तथासति चोदिता धनानां चोदयिता स्तोतृभ्यः प्रेरयिता अतएव मंहिष्ठोदातृतमो मंहनीयोवा सत्वं अस्माकं संबन्धि उचथस्य स्तोत्रं वाजसातये अन्नलाभा-य तदर्थं क्रियमाणमिति बोधि बुध्यस्व स्तोत्रेण स्तुतः सन्नस्मभ्यमन्नादिकं प्रयच्छेतिशेषः । बोधि बुधबोधने भौवादिकः लोटि छान्दसः शपोलुक् ध्यादेशः ॥ ६ ॥

६. धनी इन्द्र, हव्य-दाता को जो धन तुम देते हो, उसमें कोई बाधक नहीं है। तुम धन-प्रेरक और अतीव दान-शील होकर धन-प्राप्ति के लिए हमारे उचथ्य के स्तोत्र को जानो।

॥ इति षष्ठस्य षष्ठे एकादशोवर्गः ॥ ११ ॥

बृहदिन्द्रायेति सप्तर्चं नवमं सूक्तं नृमेधपुरुमेधावृषी वौचानुक्तत्वादांगिरसौ आदितोद्वौ प्र-गाथौ पंचमीषष्ठ्यावनुष्टुभौ सप्तमीबृहती इन्द्रोदेवता । तथाचानुक्रम्यते--बृहदिन्द्रायसप्त नृमेध-पुरुमेधौ अनुष्टुब्बृहत्यंतमिति । चातुर्विंशिकेहनि मरुत्वतीये प्राकृतान्मरुत्वतीयात्प्रगाथादूर्ध्वं द्वौ

मरुत्वतीयौ प्रगाथौ शंसनीयौ बृहदिन्द्रायगायतेत्ययमाद्यः प्रगाथः पृष्ठ्याभिप्लवषडहयोः द्वितीयेहनि अयंप्रगाथः। सूत्रितंच—बृहदिन्द्रायगायत नकिःसुदासोरथमिति मरुत्वतीयऊर्ध्वं नित्याइति।

तत्र प्रथमा—

बृहदिन्द्रा॑यगायत॒मरु॑तोवृत्र॒हन्त॑मम्।
येन॒ज्योति॒रज॑नयन्नृता॒वृधो॑दे॒वंदे॒वाय॒जागृ॑वि ॥ १ ॥

बृ॒हत्। इन्द्रा॑य। गा॒य॒त॒। मरु॑तः। वृ॒त्र॒हन्ऽत॑मम्।
येन॑। ज्योतिः॑। अज॑नयन्। ऋ॒त॒ऽवृधः॑। दे॒वम्।
दे॒वाय॑। जागृ॑वि ॥ १ ॥

हे मरुतः। रुशब्दे मितं रुवंतीति मरुतः। हे मितभाषिणः स्तोतारः वृत्रहन्तमं अतिशयेन पापविनाशनं बृहत्साम इन्द्राय इन्द्रार्थं गायत अस्मदीययज्ञे गानं कुरुत। ऋतावृधः सत्यस्य यज्ञस्यवा वर्धका विश्वेदेवाः देवाय द्योतमानायेन्द्राय देवं देवनशीलं जागृवि सर्वेषां जागरणशीलं ज्योतिः सूर्यं येनसाम्ना अजनयन् इन्द्रार्थमुदपादयन् तत्सामगायतेति ॥ १ ॥

१. मरुतो, इन्द्र के लिए पाप-विनाशक और विशाल गान करो। यज्ञवर्द्धक विश्वदेवों ने द्युतिमान् इन्द्र के लिए इस गान के द्वारा दीप्त और सदा जागरूक ज्योति (सूर्य) को उत्पन्न किया।

अथ द्वितीया—

अपा॑धमद॒भिश॑स्तीरशस्ति॒हाथेन्द्रो॑द्यु॒म्न्याभ॑वत्।
दे॒वास्त॑इन्द्रस॒ख्याय॑येमिरे॒बृह॑द्भानो॒मरु॑द्गण ॥ २ ॥

अप॑। अ॒ध॒म॒त्। अ॒भिऽश॑स्तीः। अ॒श॒स्ति॒ऽहा। अथ॑।
इन्द्रः॑। द्यु॒म्नी। आ। अ॒भ॒व॒त्। दे॒वाः। ते॒। इ॒न्द्र॒। स॒ख्याय॑।
ये॒मि॒रे॒। बृह॑द्भानो॒ इति॒ बृह॑त्ऽभानो। मरु॑त्ऽगण ॥ २ ॥

अशस्तिहा स्तोत्रशंसनरहितानां शत्रूणां हन्तेन्द्रः अभिशस्तीः शस्तुर्हिंसायां अभितोहिंसा येषां ते तादृशान् यद्वा अभिशस्तीः शत्रुकृता हिंसाः अपाधमत् अपागमयत् अथ शत्रुहननानन्तरं इन्द्रोद्युम्नी सर्वत्रद्योतमानयशोयुक्तः। यद्वा तेषां धनापहरणेन धनादिमान् आभवत् सर्वतः प्रसिद्धोभवत्। अथोत्तरार्धः प्रत्यक्षकृतःहे बृहद्भानो बृंहणशीलतेजस्क महादीप्तेवा मरु-

द्गण मरुतां सप्तगणायस्यसन्ति सततोक्तः तादृश हे इन्द्र देवाः द्योतमानाः सर्वे देवाः सख्याय आत्मनः सखिभावाय ते त्वां येमिरे नियच्छन्ति ॥ २ ॥

२. स्तोत्र-शून्य लोगों के विनाशक इन्द्र ने शत्रु की हिंसा को दूर किया था। अनन्तर इन्द्र प्रकाशक और यशस्वी हुए थे। विशाल दीप्ति और मरुतों से युक्त इन्द्र, देवों ने तुम्हारी मैत्री के लिए तुम्हें स्वीकृत किया था।

अग्निष्टोमे मरुत्वतीये प्रवइन्द्रायेत्ययं मरुत्वतीयः प्रगाथः। सूत्रितंच—प्रवइन्द्रायबृहतइति मरुत्वतीयः प्रगाथइति। तत्र प्रथमा सूक्ते तृतीया—

प्रवइन्द्रायबृहतेमरुतोब्रह्मार्चत।
वृत्रंहनतिवृत्रहाशतक्रतुर्वज्रेणशतपर्वणा ॥ ३ ॥

प्र। वः। इन्द्राय। बृहते। मरुतः। ब्रह्म। अर्चत। वृत्रम्।
हनति। वृत्रऽहा। शतऽक्रतुः। वज्रेण। शतऽपर्वणा ॥ ३ ॥

हे मरुतो मितराविणः स्तोतारः बृहते महते वः स्तुत्यस्तोतृत्वलक्षणेन संबन्धेन युष्मदीयायेन्द्राय ब्रह्मसामलक्षणं स्तोत्रं प्रार्चत प्रोच्चारयत। ततो वृत्रहा वृत्रस्य पापस्यवा हन्ता शतक्रतुः शतविधकर्मा बहुविधप्रज्ञोवा इन्द्रः शतपर्वणा शतसंख्याकधारेण वज्रेण एतन्नामकेनायुधेन वृत्रमपामावरकं वृत्राख्यमसुरं हनति युष्माभिरभिष्टुतः सन् हन्तु। हन्तेर्लेटचड़ागमः ॥३॥

३. मरुतो, इन्द्र महान् हैं। उनके लिए स्तोत्र का उच्चारण करो। वृत्रघ्न और शतक्रतु इन्द्र ने सौ सन्धियोंवाले वज्र से वृत्र का वध किया था। अथ चतुर्थी—

अभिप्रभरधृषताधृषन्मनःश्रवश्चित्तेअसद्बृहत्।
अर्षन्त्वापोजवसाविमातरोहनोवृत्रंजयास्वः ॥ ४ ॥

अभि। प्र। भर। धृषता। धृषत्ऽमनः। श्रवः। चित्।
ते। असत्। बृहत्। अर्षन्तु। आपः। जवसा। वि।
मातरः। हनः। वृत्रम्। जय। स्व१रिति स्वः ॥ ४ ॥

हे धृषन्मनः शत्रूणां धर्षणशीलमनस्केन्द्र तेचित् तवैव बृहन्महदतिप्रभूतं श्रवोन्नमसदस्ति। तदन्नं धृषता धृष्टेन मनसा युक्तः सन् अस्मभ्यमभिप्रभर अभ्याभिमुख्येन प्रकर्षेण संपादय देहीत्यर्थः। हे इन्द्र आपो मातरः अस्माकमुत्पादनहेतुत्वान्मातृभूताः। कथमपां मातृत्वं-अद्भ्यः पृथिवी। पृथिव्याओषधयइत्यादिश्रुतेः[1]। तादृश्यआपः जवसा वेगेन व्यर्षंतु विविधं

---

1 तै० आरण्यके.

भूमिं प्रतिगच्छन्तु—कथमापोगच्छन्तीतिचेत् तदाह—वृत्रं अपामावरितारं शत्रुं मेघं हनोजहि ताडय। ततो मेघभेदनेनोदकानि विगच्छन्तु पुनरपि स्वः सर्वं भूतजातं जय॥ ४॥

४. शत्रु-वध के लिए प्रस्तुत इन्द्र, तुम्हारे पास बहुत अन्न है। तुम सुदृढ़ चित्त से हमें वह अन्न दो। इन्द्र, हमारे मातृ-रूप जल वेग से विविध भूमियों की ओर जायें। जल को रोकनेवाले वृत्र का नाश करो। स्वर्ग को (वा प्राणियों को) जीतो।

प्रथमे स्वरसाम्नि निष्केवल्ये यज्जायथाअपूर्व्येति स्तोत्रियः। तथाच सूत्र्यते—तेषां स्तोत्रिया यज्जायथाअपूर्व्येति।

यज्जायथाअपूर्व्यमघवन्वृत्रहत्याय।
तत्पृथिवीमप्रथयस्तदस्तभ्नाउतद्याम्॥ ५॥

यत्। जायथाः। अपूर्व्य। मघऽवन्। वृत्रऽहत्याय। तत्।
पृथिवीम्। अप्रथयः। तत्। अस्तभ्नाः। उत। द्याम्॥ ५॥

हे अपूर्व्य स्वतोव्यतिरिक्तेन पूर्व्येण वर्जित हे मघवन् मंहनीयधनवन्निन्द्र वृत्रहत्याय वृत्रासुरहननाय यद्यदा त्वं जायथाः उत्पन्नः प्रादुर्भूतोसि तत्तदानीमेव पृथिवीं प्रथमानामप्रथयः प्रसिद्धां दृढामकरोः। उतापिच तत्तदानीमेव द्यां द्युलोकमन्तरिक्षेण अस्तभ्नाः निरुद्धामकार्षीः। एतादृशं वीर्यं त्वदन्यस्य नसंभवतीत्यर्थं द्योतयितुमपूर्व्येतिपदम्॥ ५॥

५. अपूर्व धनी इन्द्र, वृत्र-वध के लिए जिस समय तुम प्रकट हुए उस समय तुमने पृथिवी को दृढ़ किया और द्युलोक को रोका।

तत्तेयज्ञोअजायततदर्कउतहस्कृतिः।
तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम्॥ ६॥

तत्। ते। यज्ञः। अजायत। तत्। अर्कः। उत। हस्कृतिः।
तत्। विश्वम्। अभिऽभूः। असि। यत्। जातम्।
यत्। च। जन्त्वम्॥ ६॥

हे इन्द्र यद्यदा त्वमजायथाः तत्तदानीं ते त्वदर्थो यज्ञोग्निष्टोमादिरजायत सोमपानार्थमभूत्। उतापिच तदानीं हस्कृतिः। हसे हसने। हासकारी प्रीत्यर्थं क्रियमाणो हर्षस्य सूचकः अर्कः अर्चनीयो मन्त्रोपि अजायत। किंच तदा यज्जातं भूतजातं यच्च जन्त्वं कृत्यार्थेत्वन्प्रत्ययः जनितव्यं विश्वमस्ति तत्सर्वमभिभूरसि स्वमहिम्ना अभिभूतवानसि॥ ६॥

६. उस समय तुम्हारे लिए यज्ञ उत्पन्न हुआ और प्रसन्नतादायक मन्त्र उत्पन्न हुए। उस समय तुमने समस्त उत्पन्न और उत्पन्न होनेवाले संसार को अभिभूत किया।

अथ सप्तमी—

आमासुंपक्वमैरंयआसूर्यंरोहयोदिवि ।
घर्मंनसामंतपतासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत् ॥ ७ ॥ १२ ॥

आमासुं । पक्वम् । ऐरंयः । आ । सूर्यंम् । रोहयः ।
दिवि । घर्मम् । न । सामंन् । तपत । सुवृक्तिऽभिः ।
जुष्टंम् । गिर्वणसे । बृहत् ॥ ७ ॥ १२ ॥

हे इन्द्र आमासु अपक्कासु गोषु पक्कं पय ऐरयः प्रैरयश्च । तथामंत्रः—आमासुचिद्दधिषेपक्वमन्तरिति । किंच दिवि द्युलोके सूर्यमारोहयश्च पूर्वं पणयोनामासुराः अंगिरसां गाअपहृत्यांधकारावृते कस्मिंश्चित्पर्वते ताः स्थापितवन्तः ततोंगिरसइन्द्रं स्तुत्वा गाः पुनरस्मभ्यमाहरेति तैरुक्तइन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गोदर्शनाय द्युलोके सर्वप्रकाशकं सूर्यमारोहितवान् स्थापितवानसि । चादिलोपेविभाषेति पूर्वस्य ऐरयइत्यस्य ननिघातः । अथ परोक्षकृतोर्धर्चः हे स्तोतारः सुवृक्तिभिः शोभनाभिः स्तुतिभिः तपत इन्द्रं तीक्ष्णीकुरुत इन्द्रं स्तुतिभिः प्रवर्धयतेत्यर्थः। तत्रदृष्टान्तः—घर्मंन यथा घर्मं दीपनशीलं प्रवर्ग्यं सामन् सुपांसुलुगिति तृतीयायालुक् सामभिर्यथा तपन्ति तद्वत् । ततो गिर्वणसे गीर्भिर्वननीयायेन्द्राय जुष्टं प्रीतिकरं पर्याप्तं वा बृहत्साम गायत ॥ ७ ॥

७. इन्द्र, उस समय तुमने अपक्व दूधवाली गायों में पक्व दूध उत्पन्न किया और द्युलोक में सूर्य को चढ़ाया। साम-मन्त्रों के द्वारा प्रवर्ग्य सोम के समान शोभन स्तुतियों से इन्द्र को बढ़ाओ। स्तुति-भोगी इन्द्र के लिए हर्षदाता और विशाल साम का गान करो।

॥ इति षष्ठस्य षष्ठे द्वादशोवर्गः ॥ १२ ॥

आनोविश्वास्विति षळृचं दशमं सूक्तं नृमेधपुरुमेधावृषी विषमसंख्याकाबृहत्यः समसंख्याकाः सतोबृहत्यः इन्द्रोदेवता तथाचानुक्रान्तं—आनोविश्वासु षळिति । महाव्रते निष्केवल्ये बार्हततृचाशीतौ एतत्सूक्तं सूत्र्यतेहि पंचमारण्यके—आनोविश्वासुहव्यो याइन्द्रभुजआभरेति ।

तत्र प्रथमा—

आनोविश्वांसुहव्यइन्द्रःसमत्सुंभूषतु ।
उपब्रह्मांणिसवंनानिवृत्रहापरमज्याऋचीषमः ॥ १ ॥

आ । नः । विश्वांसु । हव्यंः । इन्द्रंः । समत्ऽसुं । भूषतु । उपं ।
ब्रह्मांणि । सवंनानि । वृत्रऽहा । परमऽज्याः । ऋचीषमः ॥ १ ॥

---

१ ऋ० सं० १. ५. २.

ऋषिरनयेन्द्र एवंकरोत्वित्याशास्ते । विश्वासु सर्वासु समस्तु असुरयुद्धेषु हव्यः सर्वैःदेवैरात्मरक्षणार्थमाह्वातव्यः एतादृशइन्द्रः नोस्माकं ब्रह्माणि स्तोत्राणि हवीरूपाण्यन्नानि वा उपाभूषतु उदकं अनुभावयतु सेवतामित्यर्थः । यद्वा एतानि अलंकरोतु तदागमनेन स्तोत्राणि हवींषि वा अलंकृतानि भवन्ति । तथा सवनानि प्रातः सवनादीनि त्रीणिसवनानि च भूषतु । कीदृशइन्द्रः वृत्रहा वृत्रस्यासुरस्य पापस्यवा हन्ता । परमज्याः युद्धेषु शत्रुहननार्थं परमा अविनश्वरी ज्या मौर्वी यस्य सतथोक्तः । यद्वा परमान् बलेन प्रकृष्टान् शत्रून् जिनाति हिनस्तीति परमज्याः। ऋचीषमः स्तुत्या समः स्तुतिभिरभिमुखीकरणीय एतादृगिन्द्रः स्तोत्राणि भूषत्विति ॥ १ ॥

१. सारे युद्धों में बुलाने योग्य इन्द्र हमारे स्तोत्र का आश्रय करें। तीनों सवनों की सेवा करो। वे वृत्रघ्न हैं। उनकी ज्या (प्रत्यञ्चा) अविनाशी है। वे स्तुति के द्वारा सामने करने योग्य हैं।

त्वंदाताप्रथमोराधसामस्यसिसत्यईशानकृत् ।
तुविद्युम्नस्ययुज्यावृणीमहेपुत्रस्यशवसोमहः ॥ २ ॥

त्वम् । दाता । प्रथमः । राधसाम् । असि । असि । सत्यः ।
ईशानऽकृत् । तुविऽद्युम्नस्य । युज्या । आ । वृणीमहे ।
पुत्रस्य । शवसः । महः ॥ २ ॥

हे इन्द्र प्रथमः सर्वेषां मुख्यस्त्वं राधसां धनानां दातासि यद्वा धनदातॄणां मध्ये त्वं प्रथमआदिमोभवसि । तथा ईशानकृत् तवस्तोतॄनीशानानैश्वर्ययुक्तान् कुर्वन् त्वं सत्यः सत्यकर्मासि यथार्थकर्मा भवसीत्यर्थः । यस्मादेवं तस्माद्वयं तुविद्युम्नस्य बहुधनवतः बह्वन्नस्यवा शवसोबलस्यपुत्रस्य शत्रुवधार्थं बलकारणत्वेनोत्पन्नत्वात् तत्पुत्रस्य अतएव महोमहतस्तव युज्या योग्यानि धनानि आवृणीमहे संभजामहे ॥ २ ॥

२. इन्द्र, तुम सबके मुख्य धन-प्रद हो, तुम सत्य हो। तुम स्तोताओं को ऐश्वर्यशाली करो। तुम बहुत धनवाले और बल के पुत्र हो। तुम महान् हो। तुम्हारे योग्य धन का हम आश्रय करते हैं।

अथ तृतीया—

ब्रह्मातइन्द्रगिर्वणःक्रियन्तेअनतिद्भुता ।
इमाजुषस्वहर्यश्वयोजनेन्द्रयातेअमन्महि ॥ ३ ॥

ब्रह्म । ते । इन्द्र । गिर्वणः । क्रियन्ते । अनतिऽद्भुता । इमा ।
जुषस्व । हरिऽअश्व । योजना । इन्द्र । या । ते । अमन्महि ॥ ३ ॥

हे गिर्वणो गीर्भिर्वननीयेन्द्र अनतिद्भुता सर्वानतिक्रम्य नभवन्ति इन्द्रगुणव्यापकानि यथार्थभूतानीत्यर्थः। तादृशानि यानि ब्रह्म ब्रह्माणि स्तोत्राणि ते त्वदर्थमस्माभिः क्रियन्ते हे हर्यश्व हरिताश्वन् हे इन्द्र योजना योजनानि तव सम्यक् योजनशीलानि ता तानीमा इमानि स्तोत्राणि जुषस्व सेवस्व। किंच हे इन्द्र ते त्वदर्थं या यानि स्तोत्राणि अमन्महि वयमुच्चरामः तानि सर्वाणि सेवस्व ॥ ३ ॥

३. स्तुत्य इन्द्र, तुम्हारे लिए हम जो यथार्थ स्तोत्र करते हैं, हर्यश्व, उसमें तुम युक्त होओ और उसकी सेवा करो। तुम्हारे लिए हम जिसमें स्तोत्रों का उच्चारण करते हैं, उनकी भी सेवा करो।

त्वंहिसत्योमघवन्ननानतोवृत्राभूरिन्यृञ्जसे।
सत्वंशविष्ठवज्रहस्तदाशुषेर्वाञ्चंरयिमाकृधि ॥ ४ ॥

त्वम्। हि। सत्यः। मघऽवन्। अनानतः। वृत्रा। भूरि।
निऽऋञ्जसे। सः। त्वम्। शविष्ठ। वज्रऽहस्त। दाशुषे।
अर्वाञ्चम्। रयिम्। आ। कृधि ॥ ४ ॥

हे मघवन् धनवन्निन्द्र सत्यः सत्यकर्मा त्वमेव अनानतः केषामप्यप्रह्वः सन् भूरि भूरीणि वृत्रा वृत्राणि रक्षांसि न्यृंजसे तानि प्रह्वीभावयसि न्यक्करोषीत्यर्थः। हिरवधारणे। हेशविष्ठ बलेनवृद्धतम हे वज्रहस्त वज्रोहस्ते यस्य सतथोक्तः। हे इन्द्र सतादृशस्त्वं दाशुषे तुभ्यं हविर्दत्तवते यजमानाय रयिं धनादिकं अर्वाचं अर्वाचीनं अभिमुखं यथागच्छति तथा आकृधि समन्तात्कुरु ॥ ४ ॥

४. धनी इन्द्र, तुम सत्य हो। तुमने किसी से भी न दबकर अनेक राक्षसों का नाश किया है। इन्द्र, जैसे हव्यदाता के पास धन पहुँचे, वैसा करो।

चातुर्विंशिकेहनिमाध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे त्वमिन्द्रयशाप्रगाथोवैकल्पिकोनुरूपः। सूत्र्यतेच—त्वमिन्द्रयशाअसीन्द्रक्रतुंनआभरेति।

तत्र प्रथमा सूक्ते पंचमी—

त्वमिन्द्रयशाअस्यृजीषीशवसस्पते।
त्वंवृत्राणिहंस्यप्रतीन्येकइदनुत्ताचर्षणीधृता ॥ ५ ॥

त्वम्। इन्द्र। यशाः। असि। ऋजीषी। शवसः। पते। त्वम्।
वृत्राणि। हंसि। अप्रतीनि। एकः। इत्। अनुत्ता। चर्षणिऽधृता ॥५॥

हे शवसस्पते बलस्य पालयितः हे इन्द्र ऋजीष्युपार्जितोभिषुतः सोमः तद्वान् त्वं यशाः यशस्व्यसि भवसि । कथमस्य यशस्वित्वं तदाह—अप्रतीनि बलिभिरप्यप्रतिगतानि अतएव अनुत्ता अन्यैर्नोतुमशक्यानि वृत्राणि रक्षांसि त्वमेकइव असहायएव चर्षणिधृता असुरादिहननद्वारेण मनुष्याणां धारकेण वज्रेण हंसि संप्रहरसि । अतएवास्य यशस्वित्वम् ॥ ५ ॥

५. बलाधिपति इन्द्र, तुम अभिषुत सोमवाले होकर यशस्वी बने हो। तुमने अकेले ही किसी के द्वारा न जाने योग्य और न जीतने योग्य राक्षसों को, मनुष्यों के रक्षक वज्र के द्वारा मारा है।

तमु॒त्वानू॒नम॑सुर॒प्रचे॑तसं॒राधो॑भा॒गमि॑वेमहे ।
म॒हीव॒कृत्तिः॑शर॒णात॑इन्द्र॒प्रते॑सु॒म्नानो॑अश्नवन् ॥ ६ ॥ १३ ॥

तम् । ऊँ इति॑ । त्वा॒ । नूनम् । अ॒सु॒र॒ । प्रऽचे॑तसम् । राध॑ः ।
भा॒गम्ऽइ॑व । ई॒म॒हे॒ । म॒हीऽइ॑व । कृत्तिः॑ । श॒र॒णा । ते॒ । इ॒न्द्र॒ ।
प्र । ते॒ । सु॒म्ना । न॒ः । अ॒श्न॒व॒न् ॥ ६ ॥ १३ ॥

हे असुर बलवन् प्राणवन् हे इन्द्र यउक्तगुणोस्ति तं प्रचेतसं प्रकृष्टज्ञानं त्वाउ इत्यवधारणे पितृवत्पोषकं त्वामेव राधः धर्मादिसाधनं धनं नूनमिदानीमीमहे वयं याचामहे । तत्रदृष्टान्तः—भागमिव यथा कश्चित्पितृभागभूतं धनं याचते तद्वत् इन्द्रोयजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्माद्भागभूतं धनं यष्टारोवयं याचामहे । हे इन्द्र महीवकृत्तिः कृत्तिर्यशोवान्नं वा । कृतीछेदने करणेक्तिन् कृन्तत्यनेनेति ईदृशी कृत्तिरिव ते तव शरणा शरणं गृहमन्तरिक्षे द्युलोके मही महद्वर्तते । अत्रयास्कः[1]—कृत्तिः कृन्ततेर्यशोवान्नंवा महीवकृत्तिःशरणातइन्द्र सुमहत्तइन्द्र शरणमन्तरिक्षे कृत्तिरिवे ति । किंच ते तव स्वभूतानि सुम्ना सुम्नानि पुत्रादिविषयसुखानिच नोस्मान्प्राश्नवत् प्रकर्षेणाश्नुवतां व्याप्नुवन्तु । अश्नोतेर्लेटचडागमः ॥ ६ ॥

६. बली (असुर) इन्द्र, तुम उत्तम ज्ञानवाले हो। तुम्हारे ही समीप हम पैतृक धन के भाग के समान धन की याचना करते हैं। इन्द्र, तुम्हारी कीर्त्ति के समान तुम्हारा गृह द्युलोक में, विशाल रूप से, अवस्थित है। तुम्हारे सारे सुख हमें व्याप्त करें।

॥ इति षष्ठस्य षष्ठे त्रयोदशोवर्गः ॥ १३ ॥

कन्यावारिति सप्तर्चमेकादशंसूक्तं अत्रेः पुत्री अपालाख्या त्वग्दोषपरिहारायानेन सूक्तेनेन्द्रंस्तुतवती अतःसैवऋषिः प्रथमाद्वितीयपंक्ती शिष्टाः पंचानुष्टुभः इन्द्रोदेवता । तथाचानुक्रान्तं—कन्यावाः सप्तात्रेय्यपालेतिहासऐन्द्रआनुष्टुभं द्विपंक्त्यादीति । विनियोगोलैंगिकः। अत्रे-

1 नि० ५. २२. ।

तिहासमाचक्षते—पुराकिलात्रिसुता अपालाब्रह्मवादिनी केनचित्कारणेन त्वग्दोषदुष्टासती अतएवदुर्भगेति भर्त्रापरित्यक्ता पितुराश्रमे त्वग्दोषपरिहाराय चिरकालमिन्द्रमधिकृत्य तपस्तेपे। साकदाचिदिन्द्रस्य सोमःप्रियकरोभवति तमिन्द्राय दास्यामीतिबुध्या नदीतीरंप्रत्यागमत्। सा तत्रस्नात्वा पथि सोममप्यलभत तमादाय गृहंप्रत्यागच्छन्ती मार्गएव तं चखाद तद्भक्षणकाले दंतघर्षणजातंशब्दं ग्राव्णां सोमाभिषवध्वनिमिति मत्वा तदानीमेवेन्द्रः समागमत् आगत्य तामुवाच किमत्रग्रावाणोभिषुण्वन्तीति। साप्रत्यूचे अत्रिकन्यास्नानार्थमागत्य सोमंदृष्ट्वा तंभक्षयति तद्भक्षणजोध्वनिरेव नतु ग्राव्णांसोमाभिषवध्वनिरिति। तथा प्रत्युक्तइन्द्रः पराङावर्तत गच्छन्तमिन्द्रं सापुनरब्रवीत्। किमर्थं निवर्तसे त्वंतु सोमपानाय गृहंगृहंप्रति गच्छसि तदानीमत्रापि ममदंष्ट्राभ्यां अभिषुतं सोमंपिब धानादींश्च भक्षयेति। सैवमिन्द्रमनादियमाणासती पुनरप्याह—अत्रागतं त्वामिन्द्रं इति नजानामि त्वयि गृहं आगते बहुमानं करिष्यामीतीन्द्रमुक्त्वा अत्रसमागतः इन्द्रएव नान्यइतिनिश्चित्य स्वास्येनिहितं सोममाह—हे सोम त्वमागतायेन्द्राय पूर्वं शनैः ततः शनकैः क्षिप्रं परिस्रवेति। ततइन्द्रस्तां कामयित्वा तस्या आस्यएव दंष्ट्राभिषुतं सोममपात् ततइन्द्रेण सोमेपीतेसति त्वग्दोषादहं भर्त्रा परित्यक्तासती इदानीमिन्द्रेण संगता इति अपालायामुक्तायामिन्द्रस्तांव्याजहार। किंकामयसे तदहंकरिष्यामीत्युक्ते सा वरमचीकमत। ममपितुः शिरोरोमवर्जितं तस्योषरं क्षेत्रं फलादिरहितं ममगुह्यस्थानमप्यरोमशं एतानि रोमफलादियुक्तं कुर्वित्युक्तायां तत्पितृशिरःस्थितां खलतिमपहाय क्षेत्रंच फलादियुक्तंकृत्वा एतस्यास्त्वग्दोषपरिहाराय स्वकीयरथच्छिद्रे शकटस्य युगस्यच छिद्रे एतां त्रिवारं निश्चकर्ष। तस्याः पूर्वाभिहतायाः त्वक् शल्यको द्वितीया गोधा तृतीया कृकलासोभूत्। ततइन्द्रस्तामप्यपालां सूर्यसदृशत्वचमकरोदित्यैतिहासिकीकथा। एतच्च शाट्यायनब्राह्मणेस्पष्टमुक्तं—तद्ब्राह्मणं तत्तदृग्व्याख्यानसमये दर्शयिष्ये। एषोर्थः कन्यावारित्यादिषु ऋक्षु प्रतिपाद्यते।

तत्र सूक्ते प्रथमा—

कन्या३वारवायतीसोममपिस्रुताविदत्।
अस्तंभरन्त्यब्रवीदिन्द्रायसुनवैत्वाशक्रायसुनवैत्वा ॥१॥

कन्या। वाः। अवऽयती। सोमम्। अपि। स्रुता।
अविदत्। अस्तम्। भरन्ती। अब्रवीत्। इन्द्राय। सुनवै।
त्वा। शक्राय। सुनवै। त्वा ॥ १ ॥

वाः उदकं प्रति अवायती स्नानार्थमभ्यवगच्छन्ती कन्या अपालानामस्त्री स्रुता स्रुतौ मार्गे सोममभ्यविदत्। विदूल्लाभे अलभत लङिरूपं। तं सोमं अस्तं गृहंप्रति भरन्ती आहरन्ती सा सोममब्रवीत्। हे सोम त्वा त्वामिन्द्राय सुनवै ममदन्तैरेवाभिषुणवै। पुनर्हे सोम त्वा त्वां शक्राय समर्थायेन्द्राय सुनवै इदानीमेवाभिषवं करवै। सोमभक्षणकाले दंतेदंतध्वनिं ग्रावध्वनिमिति मत्वेन्द्रः तामगमत्। एषोर्थः शाट्यायनब्राह्मणे स्पष्टमभिहितः—सावीर्थमभ्यवयन्ती सोमांशुमविन्दत्तंसमखादत्तस्यैहग्रावाणइव दन्ताऊदुः सइन्द्रः आद्रवत् ग्रावाणोवैवदन्तीति। सातमभिव्याजहार कन्यावारवायतीसोममपिस्रुताविदिदित्यस्यैतइदं ग्रावाणइव दन्तावदन्तीति विदित्वेन्द्रः पराङावर्तत तमब्रवीदसौयएषिवीरक इत्यादिनेति ॥ १ ॥

१. जल की ओर स्नान के लिए जाते समय कन्या (अपाला = मैं) ने इन्द्र को प्रसन्न करने के लिए (अपने चर्म-रोग-विनाश के निमित्त) मार्ग में सोम को प्राप्त किया। मैं उस सोम को घर ले आने के समय सोम से कहा—"इन्द्र के लिए तुम्हें मैं अभिषुत करती हूँ—समर्थ इन्द्र के लिए तुम्हें अभिषुत करती हूँ।"

असौयएषिवीरकोगृहंगृहंविचाकंशत्।
इमंजम्भंसुतंपिबधानावन्तंकरम्भिणमपूपवन्तमुक्थिनम् ॥२॥

असौ। यः। एषि। वीरकः। गृहम्ऽगृहम्। विऽचाकंशत्। इमम्। जम्भऽसुतम्। पिब। धानाऽवन्तम्। करम्भिणम्। अपूपऽवन्तम्। उक्थिनम् ॥ २ ॥

सा शक्रमब्रवीत्—हेइन्द्र वीरको वीरः समर्थस्त्वं योसौ त्वं विचाकशत् काश्यदीप्तौ। यङ्लुकि शतरि रूपं धातोर्ह्रस्वश्छान्दसः। अत्यर्थं दीप्यमानः सन् गृहंगृहं यजमानगृहंप्रति सोमपानाय त्वमेषि गच्छसि। अतस्त्वमत्रापि जंभसुतं ममदन्तैरभिषुतमिमं सोमं पिब। कीदृशं धानावन्तं धानाभृष्टयवास्तद्वन्तं करंभिणं सक्तुमन्तं अपूपवन्तं पुरोडाशादिसहितं उक्थिनं स्तोत्रादियुक्तमेतादृशं सोममत्रैव पिबेति। सा सोमेनसह धानादीनवेदयत् स्तोत्रंचाकार्षीदित्यर्थः॥२॥

२. इन्द्र, तुम वीर, अतीव दीप्तिमान् और प्रत्येक गृह में जानेवाले हो। भूने हुए जो (यव) के सत्तू पुरोडाशादि तथा उक्थ स्तुति से युक्त एवम् (मेरे) दाँतों के द्वारा अभिषुत सोम का पान करो।

आचनत्वाचिकित्सामोधिचनत्वानेमसि।
शनैरिवशनकैरिवेन्द्रायेन्दोपरिस्रव ॥ ३ ॥

आ। चन। त्वा। चिकित्सामः। अधि। चन। त्वा। न। इमसि। शनैःऽइव। शनकैःऽइव। इन्द्राय। इन्दो इति। परि। स्रव ॥ ३ ॥

पुनरपि सा तमनादृत्याह—हे इन्द्र चनेति निपातसमुदायोवधारणार्थे त्वा त्वामाचिकित्सामोज्ञातुमिच्छामएव ममगृहमागच्छ तं त्वामिन्द्रइति जानीमएव इहमार्गेएवागतं त्वा त्वां नाधीमसि नाधिगच्छामः। अत्रापि चनेत्यवधारणे। इह त्वामिन्द्रइति नजानीमः। इत्यपाला तमिन्द्रमुक्त्वा स्वास्येस्थितंसोमं प्रत्याह—हे इन्दो क्षरणशील सोम अस्माआगतायेन्द्राय तदर्थं पूर्वं शनैः मन्दंमन्दं ततः शनकैरिव कुत्सितार्थे अकच् कुत्सितं शनैः शनकैः क्षिप्रमित्यर्थः क्षिप्रमेव त्वं परिस्रव मदीयदंष्ट्राभिरभिषूयमाणःसन् परितः क्षरेति। तथा यज्ञेष्वपि ग्रावभिरभिषूयमाणः सोमः प्रथमं शनैः परिस्रवति ततः शनकैः क्षिप्रमिति तदभिप्रायेणोक्तं। ततइन्द्रः एतद्वाक्यं श्रुत्वा तदानीमेवमभिषुतं सोमं यज्ञस्थानीयादपालामुखादेवाधासीत्। उक्तार्थः शाट्यायनकब्राह्मणे स्पष्टमभ्यधायि—अनाद्रियमाणैव तमब्रवीदाचनत्वाचिकित्सामोधिचनत्वानेमसीति पुरामां सर्वयर्चापालास्तौतीत्युपपर्यावतर्त शनैरिव शनकैरिवेन्द्रायेन्दोपरिस्रवेति हवाअस्यैमुखात्सोमं निरधयत्सोमपीथइहवाअस्यभवति यएवंविद्वान् स्त्रीमुपजिघ्रतीति ॥ ३ ॥

३. इन्द्र, तुम्हें हम जानने की इच्छा करती हैं। इस समय तुम्हें हम नहीं प्राप्त होती हैं। सोम, इन्द्र के लिए पहले धीरे-धीरे, पीछे जोर से (दाँतों से) बहो। अथ चतुर्थी—

कुविच्छकंत्कुवित्करंत्कुविन्नोवस्यंसस्करंत् ।
कुवित्पतिद्विषोयतीरिन्द्रेणसंगमामहै ॥ ४ ॥

कुवित् । शकंत् । कुवित् । करंत् । कुवित् । नः । वस्यंसः । करंत् ।
कुवित् । पतिऽद्विषः । यतीः । इन्द्रेण । सम्ऽगमामहै ॥ ४ ॥

सोमं पीतवानिन्द्रोस्मानेवं करोत्वित्याह—सइन्द्रः कुविद्बहुवारमस्मान् शकत् शक्तान् समर्थान् करोतु । किंच कुवित् बहुचास्मभ्यं करत् करोतु। किंच सएवेन्द्रोनोस्मान् कुवित् बहुकृत्वा वस्यसः वसीयसः अतिशयेन वसुमतः करोतु। करोतेः शक्नोतेश्च लेटचडागमः। इदानीमानेयी अहमेवंकरिष्यामीति वदति पूर्वं कुविद्बहु पतिद्विषः त्वग्दोषात् पतिभिर्भर्तृभिः बहुवारं द्विष्टाः अतएव यतीः पतिभ्यः सकाशादितोगच्छन्त्योवयं कैश्चित् अप्यनूह्यमानाः सत्यः संप्रतीन्द्रेण सह संगमामहै संगच्छामहै सर्वत्र पूजार्थे बहुवचनं। संगमशब्देनेन्द्रोपालामचकमतेति ॥ ४ ॥

४. वह इन्द्र हमें (अपाला और स्तोता लोगों को) अथवा पूजार्थ अपाला के लिए बहुवचन समर्थ बनावें। हमें बहुसंख्यक करें। वे हमें अनेक बार धनी करें। हम पति के द्वारा छोड़ी जाकर यहाँ आई हैं। हम इन्द्र के साथ मिलेंगी।

इमानित्रीणिविष्टपातानीन्द्रविरोहय ।
शिरंस्ततस्योर्वरामादिदंमउपोदरे ॥ ५ ॥

इमानि । त्रीणि । विष्टपा । तानि । इन्द्र । वि । रोहय । शिरः ।
ततस्य । उर्वराम् । आत् । इदम् । मे । उप । उदरे ॥ ५ ॥

इन्द्रेण किंकामयसे तद्दास्यामीत्युक्ता सा वरमनया प्रार्थयते । हे इन्द्र इमानि त्रीणि विष्टपा विष्टपानि स्थानानि सन्ति तानि त्रीणि स्थानानि विरोहय उत्पादय । कानि तानि ततस्य मम पितुः रोमवर्जितं शिरः खलतिमित्यर्थः तच्चापगमय रोमशंकुर्वित्यर्थः । उर्वरां तस्यऊषरं क्षेत्रं सर्वसस्याढ्यं कुरु । आदनन्तरं मे मम उपोदरे उप उदरस्य समीपे यदिदं स्थानं गुह्यमित्यर्थः तच्च त्वग्दोषेसत्यसंजातरोमकं तदपि त्वग्दोषपरिहारेण रोमयुक्तं कुरु । एतानि त्रीणि स्थानानि । एषोर्थः शाट्यायनके प्रपंचेनोक्तः—तामब्रवीदपाले किं कामयसीति साब्रवीदिमानित्रीणि विष्टपेति खलतिर्हास्यैपिता सतंहाखलतिं चकारोर्वराहास्य नजज्ञे सोजज्ञ उपस्थेहास्यै रोमाणि नासुस्तान्युह जज्ञिरइत्यस्योत्तराभूयसे निर्वचनायासौचयानइति ॥ ५ ॥

५. इन्द्र, मेरे पिता का मस्तक (केश-रहित) और खेत तथा मेरे उदर के पास के स्थान (गुह्येन्द्रिय)—इन तीनों स्थानों को उत्पादक बनाओ।

अथ षष्ठी—

असौचयानउर्वरादिमांतन्वंमम ।
अथोततस्ययच्छिरःसर्वातारोमशाकृधि ॥ ६ ॥

असौ । च । या । नः । उर्वरा । आत् । इमाम् । तन्वम् । मम ।
अथो इति । ततस्य । यत् । शिरः । सर्वा । ता । रोमशा । कृधि ॥ ६ ॥

उक्तमेवार्थमनयाविवृणोति नोस्माकं पितुर्यासा उर्वरा यदिदमूषरं क्षेत्रमस्ति आदनन्तरं मम इमां तन्वं इदं त्वग्दोषदुष्टं गुह्यस्थानं अथो अथापिच ततस्य तातस्य यच्छिरोरोमवर्जितमस्ति एतानि सर्वा सर्वाणि तानीमानि त्रीणि स्थानानि रोमशा रोमशानि कृधि कुरु ॥ ६ ॥

६. हमारे पिता का जो ऊसर खेत है तथा मेरे शरीर (गोपनीय इन्द्रिय) और पिता का मस्तक (चर्म्मरोग के कारण लोम-शून्य है)—इन तीनों स्थानों को उर्वर और रोम-युक्त करो।

अथ सप्तमी—

खेरथस्यखेनसःखेयुगस्यशतक्रतो ।
अपालामिन्द्रत्रिष्पूत्व्यकृणोःसूर्यत्वचम् ॥ ७ ॥ १४ ॥

खे । रथस्य । खे । अनसः । खे । युगस्य । शतक्रतो इति शतऽक्रतो ।
अपालाम् । इन्द्र । त्रिः । पूत्वी । अकृणोः । सूर्यऽत्वचम् ॥ ७ ॥ १४ ॥

अनया अपालां सूर्यसदृशप्रभामकरोदित्याह—हे शतक्रतो हेशतसंख्याकयज्ञ बहुविधप्रज्ञवा हे इन्द्र रथस्य स्वकीयस्य खे पृथुतरेछिद्रे तथा अनसः शकटस्य खे तदपेक्षया अल्पे छिद्रे युगस्य खेच अल्पतरे सूक्ष्मे छिद्रे रथशकटयुगानां छिद्रेषु त्वग्दोषपरिहाराय त्रिः त्रिवारं निष्कर्षेण पूत्वी पूत्वा शोधयित्वा ततः अपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीं सूर्यंत्वचं सूर्यसमानत्वचमकृणोः अकरोः कल्याणतमरूपभाजमकरोरित्यर्थः । शाट्यायनब्राह्मणे स्पष्टमभिहितं—तांखेरथस्याध्यबृहत्सागोधाभवत्तां खेनसोत्यबृहत्सासंश्लिष्टकाभवत्तदेषाभ्यनूच्यते खेरथस्यखेनसइति तस्यैह यत्कल्याणतमं रूपाणां तद्रूपमासेति । त्वग्दोषापनयनायाक्षादिद्वारेष्वतिकर्षणमिति । यस्त्वग्दोषदूषितःसन् एतत्सूक्तं पठति तस्य त्वग्दोषमपगमय्य सूर्यंसदृशकान्तिमिन्द्रः करोतीति सूक्तंप्रशस्यते ॥ ७ ॥

७. शतसंख्यकयज्ञवाले इन्द्र ने अपने रथ के बड़े छिद्र, शकट के (कुछ छोटे छिद्र) और युग (जोड़) के छोटे छिद्र को निष्कर्षण (अपनयन) के द्वारा शोधन करके अपाला को सूर्य के समान, चर्म-युक्त किया था।

॥ इति षष्ठस्य षष्ठे चतुर्दशोवर्गः ॥ १४ ॥

पांतमावइति त्रयस्त्रिंशदृचं द्वादशं सूक्तं आंगिरसस्य श्रुतकक्षस्य सुकक्षस्यवार्षं ऐन्द्रं आद्यानुष्टुप् शिष्टागायत्र्यः तथानुक्रम्यते—पांतं त्रयस्त्रिंशच्छ्रुतकक्षः सुकक्षोवाद्यानुष्टुबिति । महाव्रते गायत्रतृचाशीतौ प्रथमावर्जमिदंसूक्तमुत्तरंच । पंचमारण्यके सूत्रितंच—पुरुहूतंपुरुष्टुतमिति शेषइति । प्रथमेरात्रिपर्याये होतुः शस्त्रे आद्यौ तृचौ स्तोत्रियानुरूपौ । सूत्रितंच—पांतमावो अंधसोपादुशिप्र्यंधसइति ।

तत्र प्रथमा—

पान्तमावोअन्धसइन्द्रमभिप्रगायत ।
विश्वासाहंशतक्रतुंमंहिष्ठंचर्षणीनाम् ॥ १ ॥

पान्तम् । आ । वः । अन्धसः । इन्द्रम् । अभि । प्र । गायत ।
विश्वऽसहम् । शतऽक्रतुम् । मंहिष्ठम् । चर्षणीनाम् ॥ १ ॥

हे ऋत्विजः वोयुष्मदीयं अंधसः सोमलक्षणमन्नं आपांतं आभिमुख्येन पिबतं । पा पाने छान्दसः शपोलुक् सर्वेविधयश्छन्दसिविकल्प्यन्तेइति नलोकाव्ययेति षष्ठीप्रतिषेधाभावः । ततोन्धसइत्यस्य कर्तृकर्मणोरितिषष्ठी । सोममाभिमुख्येन पिबन्तमेतादृशमिन्द्रं प्रगायत प्रकर्षेणाभिष्टुत । कीदृशं विश्वसहं सर्वेषां शत्रूणामभिभवितारं सर्वेषां भूतजातानां वा । अतएव श-

तक्रतुं बहुविधप्रज्ञानं बहुविधकर्माणं वा चर्षणीनां मनुष्याणां मंहिष्ठं धनस्यदातृतमं । यद्वा यजमानानां यष्टव्यत्वेन पूजनीयमिन्द्रं गायतेति समन्वयः ॥ १ ॥

१. ऋत्विको, अपने सोम-पाता इन्द्र की विशेष रूप से स्तुति करो। वे सबके पराभवकर्त्ता, शत-याज्ञिक और मनुष्यों को सर्वापेक्षा अधिक धन देनेवाले हैं।

पुरुहूतंपुरुष्टुतंगाथान्यं१सनंश्रुतम् । इन्द्रइतिब्रवीतन ॥ २ ॥

पुरुऽहूतम् । पुरुऽस्तुतम् । गाथान्यम् । सनंऽश्रुतम् ।
इन्द्रः । इति । ब्रवीतन ॥ २ ॥

हे ऋत्विग्यजमानाः पुरुहूतं यज्ञेषु बहुभिराहूतं पुरुष्टुतं बहुभिः स्तोत्रशस्त्रादिभिः स्तुतं अतएव गाथान्यं गानयोग्यं गातव्यं सनश्रुतं सनातनतया प्रसिद्धं एवंविधं देवं इन्द्रइति यूयं ब्रवीतन ब्रूयात । ब्रूञ् व्यक्तायां वाचि इत्यस्य लोटि व्यत्ययेन ध्वमस्तनबादेशः अतएवगुणः ॥२॥

२. तुम लोग बहुतों के द्वारा आहूत, अनेकों के द्वारा स्तुत, गानयोग्य और सनातन कहकर प्रसिद्ध देव को इन्द्र कहना।

इन्द्रइन्नोमहानांदातावाजानांनृतुः । महाँअभिज्ञ्वायमत् ॥ ३ ॥

इन्द्रः । इत् । नः । महानाम् । दाता । वाजानाम् । नृतुः ।
महान् । अभिऽज्ञु । आ । यमत् ॥ ३ ॥

इन्द्रइत पूर्वोक्तलक्षणइन्द्रएव नोस्मभ्यं महानां महतां वाजानामन्नानां यद्वा महानां वर्णव्यत्ययः मघानां धनानां वाजानामन्नानांच दाता भवतु । कीदृशः नृतुः नृतिशृध्योः कूरितिकूप्रत्ययः ह्रस्वश्छान्दसः । सर्वस्य नर्तयिता यद्वा नृनये औणादिकः तुमत्ययः धातोर्ह्रस्वश्छान्दसः स्तोतृभ्यो गवादिनेता अतएव महान् सइन्द्रः अभिज्ञु अभिगतजानुकं अस्मभ्यं आयमत् आयच्छतु ददातु । यद्वा सइन्द्रः अभिज्ञु अस्मदभिमुखं आगच्छत् धनं स्वहस्तयोः परिगृह्य अस्मान्नयतु धनं गृहीत्वा अस्मभ्यं ददात्वित्यर्थः ॥ ३ ॥

३. इन्द्र ही हमारे महान् धन के दाता, महान् अन्न के प्रदाता और सबको नचानेवाले हैं। महान् इन्द्र हमारे सम्मुख आकर हमें धन दें।

अथ चतुर्थी—

अपादुशिप्र्यन्धसःसुदक्षस्यप्रहोषिणः । इन्दोरिन्द्रोयवाशिरः॥४॥

अपात् । ऊँ इति । शिप्री । अन्धसः । सुऽदक्षस्य ।
प्रऽहोषिणः । इन्दोः । इन्द्रः । यवऽआशिरः ॥ ४ ॥

शिप्री शिप्रेहनूनासिकेवा शोभनहनुः यद्वा शिप्राः शीर्षण्याः सुशिरस्त्राणः सइन्द्रएव प्रहोषिणः प्रकर्षेण देवान् हविर्भिर्जुह्वतः सुदक्षस्य एतन्नामकस्य ऋषेः संबन्धि यवाशिरः श्रीञ्पाके आङ्पूर्वस्य अपस्पृधेथामानृचुरित्यादिना धातोः शिरादेशः यवैरामिश्रितं यवैः सह पक्वं इन्दोः सर्वतः पात्रेषु क्षरन्त अन्धसः सोमलक्षणमन्नमपादपिबत् । यद्वा अस्यसोमस्य भागमिन्द्रार्थं परिकल्पितं सोमांशमपिबत्। उइत्यवधारणे ॥ ४ ॥

४. सुन्दर शिरस्त्राणवाले इन्द्र ने होता और निपुण ऋषि के जो से मिले और चूनेवाले सोम को भली भाँति पिया था।

तम्वभिप्रार्चतेन्द्रंसोमस्यपीतये। तदिद्ध्यस्यवर्धनम् ॥ ५॥ १५॥

तम्। ऊँ इति। अभि। प्र। अर्चत। इन्द्रम्। सोमस्य।
पीतये। तत्। इत्। हि। अस्य। वर्धनम् ॥ ५ ॥ १५ ॥

हे ऋत्विजः तमु तमेवेन्द्रं अभ्याभिमुख्येन प्रार्चत प्रकर्षेण स्तुत। किमर्थं सोमपीतये अत्रागत्य सोमपानाय। किमर्थं सोमपानायेति विशेष्यते तदाह—तदित् तत्सोमपानमेव अस्येन्द्रस्य वर्धनं वर्धकं भवति खलु तस्मात्सोमपानजहर्षाय प्रार्चत ॥ ५॥

५. सोम-पान के लिए तुम लोग इन्द्र की विशेष रूप से पूजा करो। सोम ही इन्द्र को वर्द्धित करता है।

॥ इति षष्ठस्य षष्ठे पञ्चदशोवर्गः ॥ १५ ॥

अथ षष्ठी—

अस्यपीत्वामदानांदेवोदेवस्यौजसा। विश्वाभिभुवनाभुवत् ॥६॥

अस्य। पीत्वा। मदानाम्। देवः। देवस्य। ओजसा।
विश्वा। अभि। भुवना। भुवत् ॥ ६ ॥

देवोद्योतमानइन्द्रः अस्य अस्माभिर्दीयमानस्य सोमस्य मदानां मदकरान् रसान् पीत्वा पानं कृत्वा। यद्वा अस्य एतं सोमं पीत्वा। तथा मदानां मदसाधनादीनि भक्षयित्वा देवस्य गृहेषु शोभमानस्य। यद्वा देवनशीलस्य देवैः काम्यमानस्य सोमस्य पानजातेन ओजसा बलेन विश्वा भुवना सर्वाणि भुवनानि भूतजातानि अभिभुवत् अभिभवति। सोमस्य तामदइन्द्रश्चकारेत्यादिषु[1]। सोमपानमदे सर्वाणिवृत्रहननादिकर्माणि चकारेति। एवमत्रापि सर्वाणि भूताभिभवनादीनि कर्माण्यकार्षीदिति ॥ ६ ॥

६. प्रकाशमान इन्द्र सोम के मदकर रस को पीकर बल के द्वारा सारे भुवनों को दबाते हैं।

---

1 ऋ० सं० २. ६. १५.।

प्रथमेपर्याये होतुःशस्त्रे त्यमुवःसत्रासाहमित्यादि सूक्तशेषः । सूत्रितंच—त्यमुवःसत्रासाहमिति सूक्तशेषोभित्यंमेषमिति । अप्तोर्यामेच्छावाकातिरिक्तोक्थ्ये त्यमुवःसत्रासाहमिति तृचोवैकल्पिकःस्तोत्रियः । सूत्रितंच—त्यमुवःसत्रासाहं सत्रातेअनुकृष्टयइतिवा स्तोत्रियानुरूपाविति । व्यूढस्य दशरात्रस्य चतुर्थेहनि निष्केवल्ये एषएवतृचोनिविद्धानीयः । सूत्रितंच—इमंनुमायिनंहुवे त्यमुवःसत्रासाहमिति ।

तत्र प्रथमा सूक्ते सप्तमी—

**त्यमु॑वः॒सत्रा॒साहं॒विश्वा॑सुगी॒र्ष्वाय॑तम् । आच्या॑वयस्यू॒तये॑ ॥ ७ ॥**

त्यम् । ऊँ इति । वः । स॒त्रा॒ऽसह॑म् । विश्वा॑सु । गी॒र्षु । आऽय॑तम् । आ । च्य॒व॒य॒सि॒ । ऊ॒तये॑ ॥ ७ ॥

यजमानः स्तोतारं संबोध्याह हे स्तोतः सत्रासाहं सत्राशब्दोबहुवाची बहूनामभिभवितारं । यद्वा शत्रून् स्वबलेन संगत्य जेतारं वोयुष्मदीयेषु विश्वासु गीर्षु सर्वेषु स्तोत्रेषु आयतं विस्तृतं सर्वत्रेन्द्रएव स्तूयते तस्मात्तेषु विततं त्यं उइत्यवधारणे तमेवेन्द्रं ऊतये अस्मद्रक्षणाय आच्यावयसि । च्युङ् प्रुङ् गतौ । त्वदीयैः स्तोत्रैर्यज्ञं मत्याभिमुख्येनागमय ॥ ७ ॥

७. सबको दबानेवाले और तुम्हारे सारे स्तोत्रों में विस्तृत इन्द्र को ही, रक्षण के लिए, सामने बुलाओ।

**यु॒ध्मंसन्तं॑मन॒र्वाणं॑सोम॒पामन॑पच्युतम् । नर॑मवा॒र्यक्र॑तुम् ॥ ८ ॥**

यु॒ध्मम् । सन्त॑म् । अ॒न॒र्वाण॑म् । सो॒म॒ऽपाम् । अन॑पऽच्युतम् । नर॑म् । अ॒वा॒र्यऽक्र॑तुम् ॥ ८ ॥

एवंगुणोपेतं इन्द्रं आगमयेत्याह—युध्मं शत्रूणां संप्रहारकं सन्तं अतएवानर्वाणमन्यैरप्रत्यृतं अनभिगतं तस्मात् अनपच्युतं संग्रामेषु शत्रुभिरहिंसितं सोमपां सोमस्य पातारं अस्य सोमस्य मदे सति अवार्यक्रतुं भटैरनिवारणीयकर्माणं नरं सर्वस्य नेतारं एतादृग्गुणोपेतमिन्द्रमागमयेति पूर्वेणसह संबन्धः ॥ ८ ॥

८. इन्द्र शत्रुओं को मारनेवाले सत्, राक्षसों के द्वारा अगम्य, अहिंसित, सोम-पाता और सबके नेता हैं। इनके कर्म में कोई बाधा नहीं दे सकता।

अथ नवमी—

**शिक्षा॑णइन्द्रा॒यआपु॑रुवि॒द्वाँ॑ऋचीषम । अवा॑नः॒पार्ये॒धने॑ ॥ ९ ॥**

शिक्षं । नः । इन्द्र । रायः । आ । पुरु । विद्वान् ।
ऋचीषम । अवं । नः । पार्ये । धनें ॥ ९ ॥

हे ऋचीषम स्तुत्यासम यद्वा ईषगतिहिंसादर्शनेषु अस्मादम् प्रत्ययः सर्वैर्गन्तव्य दर्शनीय वा उक्तगुणोपेत हे इन्द्र विद्वान् सर्वविषयज्ञानवान् त्वं शत्रुभ्यआहृत्य रायोधनानि नोस्मभ्यं पुरु बहुवारं शिक्ष प्रयच्छ । यद्वा पुरुइति रायोविशेषणं बहूनि धनानि प्रयच्छ । किंच पार्ये पाराः शत्रवः तत्रभवे धने आजिहीर्षिते शत्रुधने नोस्मानव रक्ष शत्रून्हत्वा तद्धनेनास्मान्पालयेत्यर्थः॥९॥

९. स्तुति के द्वारा सम्बोधन के योग्य इन्द्र, तुम विद्वान् हो। शत्रुओं से लेकर हमें बहु बार धन दो। शत्रु-धन के द्वारा हमारी रक्षा करो।

अतंश्चिदिन्द्रणउपायाहिशतवाजया । इषासहस्रवाजया॥१०॥१६॥

अतः । चित् । इन्द्र । नः । उपं । आ । याहि । शतऽवाजया ।
इषा । सहस्रऽवाजया ॥ १० ॥ १६ ॥

हे इन्द्र अतश्चिदस्माद्द्युलोकादेव । यद्वा अस्माच्छत्रुस्थानात् शतवाजया शतसंख्याक-बलयुक्तेन तथा सहस्रवाजया वाजोन्नं सहस्रसंख्यान्नवता बहुबलान्नेन इषा अन्नरसेन युक्तः सन् नोस्मानुपायाहि अधिकं आभिमुख्येन आगच्छ ॥ १० ॥

१०. इन्द्र, इस द्युलोक से ही सौ और सहस्र बलों तथा अन्न से युक्त होकर हमारे समीप आओ।

॥ इति षष्ठस्य षष्ठे षोडशोवर्गः ॥ १६ ॥

अथैकादशी—

अयामधीवंतोधियोर्वद्भिःशक्रगोदरे । जयेमपृत्सुवज्रिवः ॥ ११॥

अयाम । धीऽवंतः । धियः । अर्वत्ऽभिः । शक्र ।
गोऽदरे । जयेम । पृत्ऽसु । वज्रिऽवः ॥ ११ ॥

हे शक्र समर्थेन्द्र धीवतः छन्दसीरइति मतुपोवत्वं कर्मकरणात् कर्मवन्तोवयं धियः युद्धजयार्थं कर्माणि अयाम गच्छाम । ततः गोदरे दृविदारणे अचइरितीप्रत्ययः गवां पर्वतानां दरयितः हे वज्रिवः वज्रवन् । यद्वा वजनं गमनं वज्रः तद्वान् कुलिशः तद्वन्निन्द्र पृत्सु संग्रामेषु अर्वद्भिः सर्वतोगन्तृभिः त्वया दत्तैरश्वैः जयेम वयं तवादातॄन् जेष्यामः ॥ ११ ॥

११. समर्थ इन्द्र, हम कर्मवाले हैं। युद्ध-विजय के लिए हम कर्म करेंगे। पर्वत-विदारक और वज्रधर इन्द्र, हम युद्ध में अश्वों के द्वारा जय लाभ करेंगे।

अथ द्वादशी—

वयमुंत्वाशतक्रतोगावोनयर्वसेष्वा । उक्थेषुरणयामसि ॥ १२॥

वयम् । ऊँ इति । त्वा । शतक्रतो इति शतऽक्रतो । गावः ।
न । यवसेषु । आ । उक्थेषु । रणयामसि ॥ १२ ॥

हे शतक्रतो बहुप्रज्ञान बहुकर्मवन् वा इन्द्र त्वा सर्वतः उ इत्यवधारणे त्वामेव उक्थेषु स्तोत्रशस्त्रादिकेषु वयं रणयामसि इदंतोमसिः । आरणयामः शब्दयामः रमयामइत्यर्थः । तत्रदृष्टान्तः—गावोन यथा गोपालो यवसेषु तृणविशेषेषु गावो गाः पशूनासमन्तात् रमयति तद्वत् । गावइति सर्वविधीनां छन्दसि विकल्पितत्वात् ओत्वाभावः ॥ १२ ॥

१२. जैसे गोपाल तृणों के द्वारा गायों को सन्तुष्ट करता है, वैसे ही हे बहुकर्मा इन्द्र, तुम्हें चारों ओर से उक्थ स्तोत्र के द्वारा हम सन्तुष्ट करेंगे।

अथ त्रयोदशी—

विश्वाहिमर्त्यत्वनानुकामाशतक्रतो । अगन्मवज्रिन्नाशसः॥१३॥

विश्वा । हि । मर्त्यऽत्वना । अनुऽकामा । शतक्रतो इति
शतऽक्रतो । अगन्म । वज्रिन् । आऽशसः ॥ १३ ॥

हे शतक्रतो बहुप्रज्ञेन्द्र मर्त्यत्वना मर्त्यत्वानि सुपांसुलुगिति विभक्तेराजादेशः संज्ञापूर्वकस्य विधेरनित्यत्वाद्दीर्घाभावः । विश्वाहि विश्वान्येव मर्त्यत्वानि अनुकामाकामानभिलाषाननुगतानि कामोपेतानीत्यर्थः । मनुष्याश्चैतानि कामयन्तइत्यर्थः । तथासति हे वज्रिन् वज्रवन्निन्द्र यष्टारोवयमपि आशसः आशंसनानि धनादिकामानगन्म अवगच्छामः । गमेर्लेटि बहुलंछन्दसीति शपोलुक् म्वोश्चेति मकारस्य नकारः ॥ १३ ॥

१३. शतक्रतु इन्द्र, सारा संसार अभिलाषी है। वज्रधर इन्द्र, हम भी धनादि अभिलाषाओं को प्राप्त करेंगे।

अथ चतुर्दशी—

त्वेसुपुत्रशवसोवृत्रन्कामकातयः । नत्वामिन्द्रातिरिच्यते ॥ १४॥

त्वे इति । सु । पुत्र । शवसः । अवृत्रन् । कामऽकातयः ।
न । त्वाम् । इन्द्र । अति । रिच्यते ॥ १४ ॥

हे शवसस्पुत्र बलनिमित्तमुत्पन्नत्वाद्बलस्यपुत्रेन्द्र कामकातयः कैगै शब्दे कामपराः कातयः शब्दायेषां भवन्ति ते तथोक्ताः तादृशामनुष्याः त्वे त्वयि स्ववृत्रन स्वस्वकामाभि-

पूरणार्थं सुष्ठु वर्तन्ते तस्मान्मर्त्यत्वानि कामोपेतानीत्युत्पन्नं । वृतुवर्तने लङि छान्दसोविकरण-स्यलुक् बहुलंछन्दसीति रुडागमः । यतएवं ततः हे इन्द्र त्वां कश्चिदपि देवोनातिरिच्यते बलेन धनेनवा अतिरिक्तः समर्थोनास्ति ॥ १४ ॥

१४. बल के पुत्र इन्द्र, अभिलाषा के कारण कातर शब्दवाले मनुष्य तुमको ही आश्रित करते हैं; इसलिए हे इन्द्र, कोई भी देव तुम्हें नहीं लांघ सकते। अथ पंचदशी—

सनोवृषन्त्सनिष्ठयासंघोरयाद्रवित्न्वा । धियाविड्ढिपुरंध्या ॥ १५॥१७॥

सः । नः । वृषन् । सनिष्ठया । सम् । घोरया । द्रवित्न्वा ।
धिया । अविड्ढि । पुरम्ऽध्या ॥ १५ ॥ १७ ॥

हे वृषन् कामानां वर्षितरिन्द्र सपूर्वोक्तलक्षणस्त्वं सनिष्ठया षणुदाने धनादेर्दातृतमया घोरया सपत्नानां भयकारिण्या अतएव द्रवित्न्वा द्रावयित्र्या शत्रूणां पलायित्र्या । द्रवतेरि-त्नुचूप्रत्ययः । पुरंध्या बहूनां धारयित्र्या पोषयित्र्या धिया तादृशेन कर्मणा नोस्मान् समवि-ड्ढि समन्तात्पालय । अवतेर्लेटि बहुलंछन्दसीति शपोलुक् बहुलवचनात्सिपइडागमः । अस्मान् धनदानादिना रक्षेत्यर्थः ॥ १५ ॥

१५. अभिलाषा-दाता इन्द्र, तुम सबकी अपेक्षा धन-दाता हो। तुम भयंकर शत्रु को दूर करनेवाले और अनेकों का धारण करने में समर्थ हो। तुम कर्म के द्वारा हमें पालन करो।

॥ इति षष्ठस्य षष्ठे सप्तदशोवर्गः ॥ १७ ॥

यस्तेनूनंशतक्रतविन्द्रद्युम्नितमोमदः । तेननूनंमदेमदेः ॥ १६ ॥

यः । ते । नूनम् । शतक्रतो इति शतऽक्रतो । इन्द्र ।
द्युम्निऽतमः । मदः । तेन । नूनम् । मदे । मदेरिति मदेः ॥ १६ ॥

अत्र सोमः स्तूयते—हे शतक्रतो शतविधप्रज्ञान हे इन्द्र द्युम्नितमः यशस्वितमः योमदः माद्यत्यनेनेति मदःसोमः यः सोमः नूनं पुरा ते त्वदर्थमस्माभिरभिषुतोस्ति । तेन अस्माभिः प्रदीयमानसोमेन नूनमिदानीं मदे तत्पानेन मदे तव संजाते सति अस्मानपि मदेः धनादिदा-नेन त्वं मादय । मदीहर्षे अत्रान्तर्णीतण्यर्थः । बहुलमितिशप् ॥ १६ ॥

१६. बहुविध-कर्मा इन्द्र, जिस सबसे अधिक यशस्वी सोम को, पूर्व-काल में, तुम्हारे लिए, हमने अभिषुत किया था, उसके द्वारा प्रमत्त होकर इस समय हमें प्रमत्त करो। अथ सप्तदशी—

यस्तेचित्रश्रवस्तमोयइन्द्रवृत्रहन्तमः । यओजोदातमोमदः ॥१७॥

यः । ते । चित्रश्रवःऽतमः । यः । इन्द्र । वृत्रहन्ऽतमः ।
यः । ओजःऽदातमः । मदः ॥ १७ ॥

हे इन्द्र चित्रश्रवस्तमः अतिशयेन नानाविधकीर्तिः योमदः सोमः ते त्वदर्थमस्माभिरभिषुतः यः सोमः वृत्रहन्तमः अतिशयेन पापानां हन्ता । किंच यः सोमः ओजोदातमः अतिशयेन बलस्य दाता तेनास्माभिर्दीयमानेन सोमेन त्वं माद्येरिति पूर्वेणसंबन्धः ॥ १७ ॥

१७. इन्द्र, तुम्हारी प्रमत्तता नाना प्रकार की कीर्त्तियों से युक्त है। वह हमारे द्वारा अभिषुत सोम सबसे अधिक पाप-नाशक और बल-दाता है।

विद्माहियस्तेअद्रिवस्त्वादत्तःसत्यसोमपाः । विश्वासुदस्मकृष्टिषु ॥ १८ ॥

विद्म । हि । यः । ते । अद्रिऽवः । त्वाऽदत्तः । सत्य । सोमऽपाः ।
विश्वासु । दस्म । कृष्टिषु ॥ १८ ॥

हे अद्रिवः अद्रिर्वज्रः तद्वन् हे सत्य यथार्थकर्मन् सोमपाः सोमस्यपातः दस्म दर्शनीय यद्वा शत्रूणामुपक्षपयितरिन्द्र विश्वासु कृष्टिषु सर्वेषु सोमस्यदातृषु यजमानेषु त्वादत्तः त्वयादत्तः ते त्वदीयोयोरयिरस्ति तं विद्महि यष्टारोवयं अपि जानीमएव । यद्वा हे इन्द्र सर्वेषु यष्टृषु मध्ये वयं ते त्वदीयमेव नान्यदीयमिति तं सोमं जानीमएव । यः सोमः त्वादत्तः अस्माभिस्त्वदर्थं दीयते अत्र त्वादेशश्छान्दसः ॥ १८ ॥

१८. वज्रधर, यथार्थकर्मा, सोमपाता और दर्शनीय इन्द्र, सारे मनुष्यों में जो तुम्हारा दिया हुआ धन है, उसे ही हम जानते हैं।

प्रथमेपर्यायेच्छावाकस्य इन्द्रायमद्वनेसुतमिति स्तोत्रियः । सूत्रितंच—इन्द्रायमद्वनेसुतमिन्द्रमिद्गाथिनो बृहदिति ।

तत्र प्रथमा सूक्ते एकोनविंशी—

इन्द्रायमद्वनेसुतंपरिष्टोभन्तुनोगिरः । अर्कमर्चन्तुकारवः ॥ १९ ॥

इन्द्राय । मद्वने । सुतम् । परि । स्तोभन्तु । नः ।
गिरः । अर्कम् । अर्चन्तु । कारवः ॥ १९ ॥

मद्वने माद्यतेः क्वनिप् मदनशीलायेन्द्राय तदर्थं सुतमभिषुतं सोमं नोस्मदीया गिरः स्तुतिलक्षणावाचः परिष्टोभन्तु स्तोभतिः स्तुतिकर्मा परितः सोमं स्तुवन्तु । ततः कारवः स्तुतिकारिणः स्तोतारश्च अर्कं सर्वैरर्चनीयं सोममर्चन्तु पूजयन्तु ॥ १९ ॥

१९. मत्त इन्द्र के लिए हमारे स्तुति-वचन अभिषुत सोम की स्तुति करें। स्तोता लोग पूजनीय सोम की पूजा करें।

अथ विंशी—

यस्मिन्विश्वाअधिश्रियोरणन्तिसप्तसंसदः। इन्द्रंसुतेहवामहे॥२०॥१८॥

यस्मिन्। विश्वाः। अधि। श्रियः। रणन्ति। सप्त।
सम्ऽसदः। इन्द्रम्। सुते। हवामहे॥ २०॥ १८॥

यस्मिन्निन्द्रे विश्वाः सर्वाः श्रियः कान्तयः अधि अधिकं भवन्ति अतिशयेन तेजस्वीत्यर्थः। किंच सप्त सप्तसंख्याकाः संसदः सम्यग्यज्ञेषु कर्मकरणार्थं सीदन्तीति संसदो होत्रकाः यस्मिन् रणन्ति सोमप्रदानार्थं रमन्ते। यद्वा यं शब्दयन्ति स्तुवन्ति तं पूर्वोक्तलक्षणमिन्द्रं सुते सोमेऽभिषुते सति हवामहे वयं सोमपानायाह्वयामः॥ २०॥

२०. जिन इन्द्र में सारी कान्तियाँ अवस्थित हैं और जिनमें सात होत्रक, सोम-प्रदान के लिए, प्रसन्न होते हैं, उन्हीं इन्द्र को, सोमाभिषव होने पर, हम बुलाते हैं।

॥ इति षष्ठस्य षष्ठेऽष्टादशोवर्गः॥ १८॥

त्रिकद्रुकेषुचेतनंदेवासोयज्ञमत्नत। तमिद्वर्धन्तुनोगिरः॥ २१॥

त्रिऽकद्रुकेषु। चेतनम्। देवासः। यज्ञम्। अत्नत।
तम्। इत्। वर्धन्तु। नः। गिरः॥ २१॥

हे देवासो देवा इन्द्रादयः त्रिकद्रुकेषु आभिप्लविकेष्वहस्सु ज्योतिर्गौरायुरिति त्रिकद्रुकाः तेषु चेतनं चितीसंज्ञाने चेतन्ति जानन्ति अनेन स्वर्गादिकमिति चेतनः ज्ञानसाधनं यज्ञं अत्नत अतन्वत स्वैः स्वैः कर्मभिः पालनैश्च विस्तारितवन्तः। तनुविस्तारे लङि बहुलंछन्दसीति विकरणस्यलुक् तनिपत्योश्छन्दसीति उपधालोपः। तमित् तमेव अस्मदीयं यज्ञं नोस्माकं गिरः स्तुतिलक्षणावाचो वर्धंतु वर्धयन्तु॥ २१॥

२१. देवो, तुम लोगों ने त्रिकद्रुक (ज्योति, गौ और आयु) के लिए ज्ञान-साधक यज्ञ का विस्तार किया था। हमारे स्तुति-वाक्य उसी यज्ञ को वर्द्धित करें।

अथ द्वाविंशी—

आत्वाविशन्त्विन्दवःसमुद्रमिवसिन्धवः। नत्वामिन्द्रातिरिच्यते॥२२॥

आ। त्वा। विशन्तु। इन्दवः। समुद्रम्ऽइव। सिन्धवः।
न। त्वाम्। इन्द्र। अति। रिच्यते॥ २२॥

हे इन्द्र इन्दवः स्रवन्तः अस्माभिर्दीयमानाः सोमाः त्वा त्वां आविशन्तु सर्वतः प्रविशन्तु । तत्रदृष्टान्तः—समुद्रमिवसिन्धवः स्यन्दमाना नद्योयथा समुद्रं जलाशयं सर्वतःप्रविशन्ति तद्वत् । यतएवं तस्मात् हे इन्द्र त्वां कश्चिदपि देवोबलेन धनेनवा नातिरिच्यते नातिरिक्तोस्ति सामर्थ्यवान् त्वत्तोधिकोनास्तीत्यर्थः ॥ २२ ॥

२२. जैसे नदियाँ समुद्र में जाती हैं, सारे सोम तुममें प्रविष्ट हों। इन्द्रहें कोई तुम नहीं लाँघ सकता।

विव्यक्थमहिनावृषन्भक्षंसोमस्यजागृवे । यइन्द्रजठरेषुते ॥ २३ ॥

विव्यक्थ । महिना । वृषन् । भक्षम् । सोमस्य ।
जागृवे । यः । इन्द्र । जठरेषु । ते ॥ २३ ॥

हे वृषन् कामानांवर्षितः हे जागृवे जागरणशीलेन्द्र त्वं तस्य सोमस्य भक्षं पानं प्रति महिना स्वमहिम्ना विव्यक्थ सर्वतो व्याप्तवानसि । व्यचेर्लिटि थलि अभ्यासस्योभयेषामिति संप्रसारणं । हे इन्द्र यः सोमः ते जठरेषु उदरेषु प्रविशति तस्य पानं व्याप्तवानसीतिशेषः ॥२३॥

२३. मनोरथ-पूरक और जागरणशील इन्द्र, तुम अपनी महिमा से सोमपान में व्याप्त हुए हो। वह सोम तुम्हारे उदर में पैठता है।

अरंतइन्द्रकुक्षयेसोमोभवतुवृत्रहन् । अरंधामभ्यइन्दवः ॥ २४॥

अरम् । ते । इन्द्र । कुक्षये । सोमः । भवतु । वृत्रऽहन् ।
अरम् । धामऽभ्यः । इन्दवः ॥ २४ ॥

हे वृत्रहन् वृत्रस्यापामावरकस्यासुरस्य पापस्यवा हन्तर्हे इन्द्र सोमोस्माभिर्दीयमानस्ते तव कुक्षये अरमलं पर्याप्तोभवतु । किंच इन्दवः सर्वतः क्षरणशीलाः सोमाः तवधामभ्यः नानाविधेभ्यः शरीरेभ्यः तव तेजोभ्योवा अरमलं पर्याप्ताभवन्तु । अनेन तेजसा हविर्भाक्त्वमस्तीति सूचितं । अस्मदीयाः सोमाएव तवकुक्षये देहेभ्योपि पर्याप्ताभवन्तु नान्यदीया इतिभावः ॥२४॥

२४. वृत्रघ्न इन्द्र, तुम्हारे उदर के लिए सोम पर्याप्त हो। चूनेवाला सोम तुम्हारे शरीर में यथेष्ट हो।

अथ पञ्चविंशी—

अरमश्वायगायतिश्रुतकक्षोअरंगवे । अरमिन्द्रस्यधाम्ने ॥ २५॥

अरम् । अश्वाय । गायति । श्रुतऽकक्षः । अरम् ।
गवे । अरम् । इन्द्रस्य । धाम्ने ॥ २५ ॥

श्रुतकक्षोनामऋषिः गवाश्वादिलाभार्थमिन्द्रं स्तौति—अयं श्रुतकक्षः एतन्नामकऋषिः अश्वाय इन्द्रेण दीयमानायाश्वाय एतदर्थं अरमलं गायति इन्द्रविषयं स्तोत्रं करोति। तथा गवे अरमलं गायति इन्द्रस्य इन्द्रकर्तृकाय धाम्ने गृहाय तदर्थंच अरं पर्याप्तं स्तौति। यदश्वादिकमिन्द्रः प्रयच्छति तस्मै गायतीति। यद्वा इन्द्रस्येति कर्मणि षष्ठी गवादिलाभार्थमिन्द्रं स्तौति॥ २५॥

२५. श्रुतकक्ष (मैं) अश्व-प्राप्ति के लिए, अतीव गान करता हूँ। इन्द्र के गृह के लिए खूब गाता हूँ।

अरं हि ष्मा सुतेषु णः सोमेष्विन्द्र भूषसि। अरं ते शक्र दावने॥ २६॥ १९॥

अरम्। हि। स्म। सुतेषु। नः। सोमेषु। इन्द्र। भूषसि।
अरम्। ते। शक्र। दावने॥ २६॥ १९॥

हे इन्द्र सुतेष्वभिषुतेषु नोस्मदीयेषु सोमेषु। हिष्मेत्यवधारणे त्वमेव तेषां पाने अलं पर्याप्तोभूषसि भवसि। यद्वा सोमेष्वभिषुतेषु सत्सु नोस्माकं पर्याप्तं धनं भूषसि। भूप्राप्तौ त्वं प्रापय। तथा हे शक्र समर्थेन्द्र दावने धनादिकस्य दात्रे ते तुभ्यं अस्माभिर्दीयमानाः सोमाः अरमलं पर्याप्ता भवन्तु॥ २६॥

२६. इन्द्र, सोमाभिषव होने पर, पान के लिए, तुम पर्याप्त हो। समर्थ इन्द्र, तुम्हीं धनद हो। तुम्हारे लिए सोम पर्याप्त हो।

॥ इति षष्ठस्य षष्ठे एकोनविंशोवर्गः॥ १९॥

अथ सप्तविंशी—

पराकात्ताच्चिदद्रिवस्त्वां नक्षन्त नो गिरः। अरं गमाम ते वयम्॥ २७॥

पराकात्तात्। चित्। अद्रिऽवः। त्वाम्। नक्षन्त। नः।
गिरः। अरम्। गमाम। ते। वयम्॥ २७॥

हे अद्रिवः वज्रवन्निन्द्र नोस्मदीयागिरः इतोनिर्गताः स्तुतयः पराकात्तात्। चिदप्यर्थः। अतिदूरादपि त्वां नक्षन्त व्याप्नुवन्तु किमुत समीपात्त्वां अश्नुवन्तामिति। नक्षतेर्व्याप्तिकर्मणो नशतेर्वा लेटि सिपि रूपं। एवं सति स्तोतारो वयं त्वदीयं धनमरमलं पर्याप्तं गमाम त्वत्तो गच्छाम॥ २७॥

२७. वज्रधर इन्द्र, हमारे स्तुति-वाक्य, दूर रहने पर भी, तुम्हें व्याप्त करें। हम स्तोता हैं। तुम्हारे पास से हम प्रचुर धन प्राप्त करेंगे।

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिन एवाह्यसिवीरयुरिति वैकल्पिकःस्तोत्रियः। सूत्रितंच—एवाह्यसिवीरयुरेवाह्यस्यसूनृतेति।

तस्मिन्प्रथमा सूक्तेष्टाविंशी—

एवाह्यसिवीरयुरेवाशूरउतास्थिरः । एवातेराध्यंमनः ॥ २८ ॥

एव । हि । असि । वीरऽयुः । एव । शूरः । उत ।
स्थिरः । एव । ते । राध्यम् । मनः ॥ २८ ॥

हे इन्द्र त्वं वीरयुः वीरान् युद्धकर्मणि समर्थान् शत्रून् हन्तुं कामयमानएवासि भवसि खलु । हि प्रसिद्धौ । अतएव त्वं शूरः सामर्थ्यवानेवभवसि । उतापिच स्थिरः संग्रामे धैर्यवान् भवसि एकत्रस्थित्वैव शत्रून् संप्रहरसीत्यर्थः।एवंसति ते तव मनोराध्यं स्तुतिभिराराधनीयमेव यतोनेन मनसा त्वं शत्रुवधं संग्रामे धैर्यादिकंच करोषीति तवमनएव सर्वैः स्तुत्यमित्यर्थः ॥२८॥ २८. इन्द्र, तुम वीरों की ही इच्छा करते हो। तुम शूर और धैर्यवाले हो। तुम्हारे मन की आराधना सबको करनी चाहिए।

एवारातिस्तुवीमघविश्वेभिर्धायिधातृभिः । अधाचिदिन्द्रमेसचा ॥ २९ ॥

एव । रातिः । तुविऽमघ । विश्वेभिः । धायि । धातृऽभिः ।
अध । चित् । इन्द्र । मे । सचा ॥ २९ ॥

हे तुविमघ तुविरिति बहुनाम बहुधनवन्निन्द्र विश्वेभिर्विश्वैर्धातृभिः कर्मधारकैः यद्वा देवानां हविर्दानेन पोषयितृभिः सर्वैर्यजमानैः तव रातिर्गवाश्वधनादिदानं धायि तैर्धार्यतएव । दधातेर्लुङि कर्मणिरूपं । चिदेवार्थे । अध अतएव हे इन्द्र एवंविध त्वं मे यष्टुर्ममापि सचा धनादिदानेन कर्मसहायोभव ॥ २९ ॥

२९. बहु-धनी इन्द्र, सारे यजमान तुम्हारे दान को धारण करते हैं। इन्द्र, तुम मेरे सहायक बनो।

अथ त्रिंशी—

मोषुब्रह्मेवतन्द्रयुर्भुवोवाजानांपते । मत्स्वासुतस्यगोमतः ॥ ३० ॥

मो इति । सु । ब्रह्माऽइव । तन्द्रयुः । भुवः । वाजानाम् ।
पते । मत्स्व । सुतस्य । गोऽमतः ॥ ३० ॥

हे वाजानांपते अन्नानांपते बलानां वा हे इन्द्र तन्द्रयुः निष्कारणं निवृत्तकर्मवत्वादालस्ययुक्तो ब्रह्मेव ब्राह्मणइव । अथापि तद्वदर्थे भाष्यतइति ।यास्कोक्तमनुसृत्य तंद्रयुकइत्युक्तं ।

अथवा यागादिकर्मपरित्यागेनालस्यमिच्छन् नास्तिको ब्राह्मणइव त्वं मोषु भुवः सुष्ठु मा भवः। सर्वदा अस्मत्कर्मान्वितो भवेत्याशासनं। तदेवाह—सुतस्याभिषुतस्य ततो गोमतः गव्येन क्षीरेण दध्नावा मिश्रणवतः सोमस्य पानेन मत्स्व माद्य। हृष्टोभव ॥ ३० ॥

३०. अन्नपति इन्द्र, तुम तन्द्रा-युक्त ब्राह्मण स्तोता के समान नहीं होना। अभिषुत और क्षीरादि से युक्त सोम के पान से हृष्ट होना।

मानइन्द्राभ्याऽदिशःसूरोअक्तुष्वायमन्। त्वायुजावनेमतत्॥३१॥

मा। नः। इन्द्र। अभि। आऽदिशः। सूरः। अक्तुषु।
आ। यमन्। त्वा। युजा। वनेम। तत्॥ ३१ ॥

हे इन्द्र आदिशः आदेष्टारः समन्तादायुधान्यतिविसृजन्तः सूरः सृगतौ सर्वत्र सरणशीलाराक्षसाः अक्तुषु रात्रिषु दिवापि नोस्माकं माभ्यायमन् आभिमुख्येन मा नियन्तारोभवन्तु। यद्यागताश्चेव् तदा तद्रक्षःकुलं त्वा त्वया युजा सहायेन वयं वनेम अहन्म। श्नथ क्नथ-क्रथ हिंसार्थाः। वनचेति पठितत्वात्सिद्धार्थः ॥ ३१ ॥

३१. इन्द्र, आयुध फेंकनेवाले सूर (राक्षस) रात्रि-काल में हमें नियन्त्रित न करें। तुम्हारी सहायता से हम उनका विनाश करेंगे।

त्वयेदिन्द्रयुजावयंप्रतिब्रुवीमहिस्पृधः। त्वमस्माकंतवस्मसि॥३२॥

त्वया। इत्। इन्द्र। युजा। वयम्। प्रति। ब्रुवीमहि।
स्पृधः। त्वम्। अस्माकम्। तव। स्मसि ॥ ३२ ॥

हे इन्द्र त्वयेव्। इदवधारणे। त्वयैव युजा सहायेन स्पृधः स्पर्धमानान् शत्रून् वयं प्रतिब्रुवीमहि निराकुर्वीमहि। प्रतिवचनं निराकरणं। उत्तरार्धेन इन्द्रसाहाय्यमेव प्रतिपादयति—हे इन्द्र त्वमस्माकं भवसि स्तुत्यस्तोतृयष्टृयष्टव्यतया त्वमस्माकं भवसि। वयं तवस्मसि भवामः। तथारण्यकं—त्वमिदं सर्वमसि तववयंस्मः त्वमस्माकमसीति। तस्मात्त्वया सहायेन शत्रून्हन्यामेति ॥ ३२ ॥

३२. इन्द्र, तुम्हारी सहायता प्राप्त करके हम शत्रुओं को दूर करेंगे। तुम हमारे हो और हम तुम्हारे हैं।

अथ त्रयस्त्रिंशी—

त्वामिद्धित्वायवोनुनोनुंवतश्चरान्। सखायइन्द्रकारवः॥३३॥२०॥

त्वाम् । इत् । हि । त्वाऽयवः । अनुऽनोनुवतः । चरान् ।
सखायः । इन्द्र । कारवः ॥ ३३ ॥ २० ॥

हे इन्द्र कर्मोपद्रवपरिहारादनन्तरं त्वायवः त्वां धनादिदानार्थं कामयमानाः अतएव अनुनोनुवतः नौतेर्यङ्लुगन्तस्य शतरिरूपं । अनुक्रमेण पुनःपुनः स्तुतिंकुर्वन्तः तस्माच्चव सखायः सखिभूताः कारवः स्तोतारः त्वामिव इदवधारणे त्वामेव चरान् स्तुतिभिः परिचरन्तु खलु । हीति प्रसिध्यर्थः । चरतेर्लेट्यडागमः । हियोगादनिघातः ॥ ३३ ॥

३३. इन्द्र, तुम्हारी अभिलाषा करके तथा बार-बार तुम्हारी स्तुति करके तुम्हारे बन्धु-स्वरूप स्तोता लोग तुम्हारी सेवा करते हैं।

॥ इति षष्ठस्य षष्ठे विंशोवर्गः ॥ २० ॥

उद्धेति चतुर्स्त्रिंशदृचं त्रयोदशंसूक्तं सुकक्षस्यार्षं गायत्रमैन्द्रं अन्त्यात्विन्द्रऋभुदेवताका । तथाचानुक्रान्तं—उद्धचतुस्त्रिंशत्सुकक्षोन्त्यैन्द्रार्भवीति । द्वितीयेपर्याये होतुःशस्त्रे उचप्रावर्जमेतत्सूक्तं । सूत्रितंच—उद्धेदभीत्युत्तमामुद्धरेदिति । महाव्रतेप्यस्यविनियोगः पूर्वसूक्तेनसहोक्तः । ज्योतिष्टोमे ब्राह्मणाच्छंसिशस्त्रे आद्यस्तृचः । सूत्रितंच—उद्धेदभीतिविस्त इन्द्रक्रतुविदंसुतमिति याज्येति । तथाप्तोर्यामे मैत्रावरुणातिरिक्तोक्थे अयंतृचोनुरूपः । सूत्रितंच—यदद्यकच्चवृत्रहन्नुद्धेदभिश्रुतामघमानोविश्वाभिरिति ।

तत्र प्रथमा—

उद्धेदभिश्रुतामघंवृषभंनर्यापसम् । अस्तारमेषिसूर्य ॥ १ ॥

उत् । घ । इत् । अभि । श्रुतऽमघम् । वृषभम् ।
नर्यऽअपसम् । अस्तारम् । एषि । सूर्य ॥ १ ॥

सुकक्ष इन्द्रगुणानाह—हे सूर्य द्वादशसु भानुषु इन्द्रोपि सूर्यात्मना पठितः तस्मात्सूर्यात्मक सुवीर्य हे इन्द्र श्रुतमघं सर्वदा देयत्वेन विख्यातधनं अतएव वृषभं याचमानानां धनस्य वर्षितारं नर्यापसं नरहितं नर्यं नरहितकर्माणं अस्तारं दानशौंडं औदार्यवन्तं एतादृशानुभावं अभितः उदेषि । इदवधारणे । त्वमेव तस्ययज्ञे सूर्यात्मना उद्गतोसि । घेति प्रसिद्धौ ॥ १ ॥

१. सुवीर्य (सूर्यात्मक) इन्द्र, प्रसिद्ध धनवाले, मनोरथ-पूरक, मनुष्य-हितैषी कर्मवाले और उदार यजमान के चारों ओर उदित होते हो।

अथ द्वितीया—

नवयोनवतिंपुरोबिभेदबाह्वोजसा । अहिंचवृत्रहावधीत् ॥ २ ॥

नव॑ । यः । न॒व॒तिम् । पुरः॑ । बि॒भेद॑ । बा॒हुऽओ॑जसा ।
अहि॑म् । च॒ । वृ॒त्र॒ऽहा । अव॑धी॒त् ॥ २ ॥

यइन्द्रः नव नवतिं नवनवतिसंख्याकाः एकोनशतसंख्याकाः शंबरस्य पुरः पुरीः बाह्वोजसा स्वबाहुबलेनैव बिभेद दिवोदासाय भिनत्तिस्म । तथाचमंत्रः—दिवोदासायनवतिंचनवेन्द्रःपुरोव्यैरच्छंबरस्येति[1] । सवृत्रहा वृत्रासुरस्यहन्ता सइन्द्रः अहिंच न केनाप्यहन्तव्यं मेघं अपामावरकं वृत्रं वा अवधीत् सइन्द्रोस्माकं धनं ददात्वित्युत्तरेण संबन्धः ॥ २ ॥

२. जिन्होंने बाहु-बल से ९९ पुरियों को (दिवोदास के लिए) विनष्ट किया और जिन वृत्रहन्ता इन्द्र ने मेघ का वध किया था—

अथ तृतीया—

सन॒इन्द्रः॑शि॒वःसखाश्वा॑व॒द्गोम॒द्यव॑मत् । उ॒रुधा॑रेवदोहते ॥ ३ ॥

सः । नः॒ । इन्द्रः॑ । शि॒वः । सखा॑ । अश्व॑ऽवत् । गोऽम॑त् ।
यव॑ऽमत् । उ॒रुधा॑राऽइव । दो॒ह॒ते ॥ ३ ॥

सपूर्वोक्तलक्षणः शिवः कल्याणतमः सखा यष्टृयष्टव्यस्तोतृस्तुत्यलक्षणेन संबन्धेनास्माकं मित्रभूतः एतादृशइन्द्रः अश्ववत् अश्वयुक्तं गोमत् पश्वादिसहितं यवमत् । अयवादिभ्यइति व प्रतिषेधान्मतुपो वत्वाभावः । यवइति धान्यविशेषः धान्ययुक्तं धनं नोस्मभ्यं दोहते । दोग्धु ददातु । दृष्टान्तः—उरुधारेव दोहनकाले प्रभूतपयोधारा यद्वा बहूनां पोषयित्री गौः यथा वत्सस्य पयोदोग्धि तथा प्रभूतं धनमस्माकं दोग्धु ददातु । दुहेर्लेटचडागमः ॥ ३ ॥

३. वे ही कल्याणकारी और बन्धु इन्द्र, हमारे लिए अश्व, गौ और जौ से युक्त धन को, यथेष्ट दूधवाली गाय के समान, दूहें।

अप्तोर्यामे मैत्रावरुणातिरिक्तोक्थे यदद्येतितृचःस्तोत्रियः सूक्तंतुपूर्वेण तृचेन सहोदाहृतम् ।

तस्मिन्प्रथमा सूक्ते चतुर्थी—

यद॒द्यकच्च॑वृत्रहन्नु॒दगा॑अ॒भिसू॑र्य । सर्वं॒तदि॑न्द्रते॒वशे॑ ॥ ४ ॥

यत् । अ॒द्य । कत् । च॒ । वृ॒त्र॒ऽह॒न् । उ॒त्ऽअगाः॑ । अ॒भि ।
सू॒र्य॒ । सर्व॑म् । तत् । इ॒न्द्र॒ । ते॒ । वशे॑ ॥ ४ ॥

1 ऋ० सं० २. ६. २४.।

हे वृत्रहन् वृत्रस्यापामावरकस्य मेघस्य हन्तः हे सूर्य सूर्यात्मकेन्द्र अद्यास्मिन्दिने यत् कच्च यत्किंचित् पदार्थजातमभि अभिमुखीकृत्य उदगाः इणूगतौ उत्पूर्वः तस्य लुङि गादेशः। स्वतेजसा उद्गतः प्रादुर्भूतोसि तदा तत्सर्वं स्थावरजंगमात्मकं जगत् ते तव वशेभवति त्वदधीनं भवति। उदितेसूर्ये त्वदर्थं प्राक्कर्म कुर्वन्ति जुह्वतिच ॥ ४ ॥

४. वृत्रघ्न और सूर्य इन्द्र, आज जो पदार्थ हैं, उनमें सामने प्रकट हुए हो। इस प्रकार सारा संसार तुम्हारे वश में हुआ है।

यद्वाप्रवृद्धसत्पतेनमराइतिमन्यसे। उतोतत्सत्यमित्तव ॥५॥२१॥

यत्। वा। प्रऽवृद्ध। सत्ऽपते। न। मरै इति। मन्यसे।
उतो इति। तत्। सत्यम्। इत्। तव ॥ ५ ॥ २१ ॥

वाशब्दः समुच्चये अपिच हे प्रवृद्ध स्वबलेन प्रवर्धमान सत्पते सतांपते स्वप्रकाशाधिक्येन सतां नक्षत्राणां पते हे इन्द्र नमरै इति मनुष्यवद्वार्धकेनाहं नम्रियै इति यद्यदि मन्यसे बुध्यसे। मृङ्प्राणत्यागे लेटचडागमः वैतोन्यत्रेत्यैकारः। उतो अपिच तव तत् नम्रियै इति मननं सत्यमित् यथार्थमेव। इन्द्रो नम्रियतइत्यर्थे मंत्रान्तरं—नह्यस्याअपरंचनजरसामरतेपर्तिरिति ॥५॥

५. प्रवृद्ध और सत्पति इन्द्र, यदि तुम अपने को अमर मानते हो, तो ठीक ही है। ॥ इति षष्ठस्य षष्ठे एकविंशोवर्गः ॥ २१ ॥

अथ षष्ठी—

येसोमासःपरावतियेअर्वावतिसुन्विरे। सर्वांस्ताँइन्द्रगच्छसि ॥६॥

ये। सोमासः। पराऽवति। ये। अर्वाऽवति। सुन्विरे।
सर्वान्। तान्। इन्द्र। गच्छसि ॥ ६ ॥

हे इन्द्र ये सोमासः सोमाः परावति विप्रकृष्टेतिदूरदेशे ये सोमाः अर्वावति अन्तिकतमे देशे च सुन्विरे छन्दसि द्विर्वचनस्य विकल्पितत्वादत्रद्विर्वचनाभावः सुनोतेः कर्मणि लिटि व्यत्ययेनश्लुः येसोमाः ऋत्विग्भिरभिषूयन्ते सर्वान् दूरे समीपेचाभिषूयमाणांस्तान् सोमान् गच्छसि तत्पानार्थं युगपत् प्राप्नोषि। अनेनेन्द्रस्य सर्वगतत्वं सूचितम् ॥ ६ ॥

६. दूर अथवा निकटवर्त्ती प्रदेश में जो सब सोम अभिषुत होते हैं, इन्द्र, तुम उनके सामने जाते हो।

अप्तोर्यामे ब्राह्मणाच्छंसिनोतिरिक्तोक्थ्ये तमिन्द्रंवाजयामसीति स्तोत्रियस्तृचः। सूत्रितं च—तमिन्द्रंवाजयामसि महाँइंद्रोयओजसेति। व्यूढस्य दशरात्रस्य पंचमेहनि निष्केवल्ये अयमेवतृचोनिविद्धानीयः। सूत्रितंच व्यूढस्येतिखंडे—मरुत्वांइन्द्रमीढ्वस्तमिन्द्रंवाजयामसीति।

१ ऋ० सं० ८.४.३.।

तत्र प्रथमा सूक्ते सप्तमी—

तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे। सवृषावृषभोभुवत् ॥ ७ ॥

तम्। इन्द्रम्। वाजयामसि। महे। वृत्राय। हन्तवे।
सः। वृषा। वृषभः। भुवत् ॥ ७ ॥

यजमानाआहुः तं पूर्वोक्तलक्षणमिन्द्रं वाजयामसि वाजयामः सोमेन स्तुतिभिर्वा वाजवन्तं बलवन्तं कुर्मः। किमर्थं महे महते वृत्राय अपामावरकं वृत्रासुरं हन्तवे हन्तुं सोमपानेन मत्तः स्तुतिभिर्वा स्तुतःसन् वृत्रहन्तवे वाजयामसि वाजवन्तं करोतीत्यर्थे तत्करोतीति णिच् णाविष्ठवदितिणेरिष्ठवद्भावात् टेरिति टिलोपः विन्मतोर्लुगितिवचनान्मतुपोलुक्। वृषा धनानां सेक्ता दाता सइन्द्रः वृषभः अस्माकं स्तोतॄणां सोमस्यदातॄणां धनादिसेचको दाता भुवत् भवतु ॥ ७ ॥

७. हम महान् वृत्र के वध के लिए उन इन्द्र को ही बली करेंगे। धन-वर्षक इन्द्र, अभिलाषावाला हो।

इन्द्रःसदामनेकृतओजिष्ठःसमदेहितः। द्युम्नीश्लोकीससोम्यः॥८॥

इन्द्रः। सः। दामने। कृतः। ओजिष्ठः। सः। मदे।
हितः। द्युम्नी। श्लोकी। सः। सोम्यः ॥ ॥ ८ ॥

सइन्द्रः दामने स्तोतृभ्यो धनादिदानायैवकृतः प्रजापतिना सृष्टः किंच ओजिष्ठः ओजस्वितमः सएवेन्द्रः मदे माद्यन्त्यनेनेति मदः सोमः तस्मिंश्च प्रजापतिना सृष्टिकाले हितः सोमपानार्थंच निहितइत्यर्थः। द्युम्नी द्युम्नं द्योततेर्यशोवाऽन्नंवेति। यशस्वी अन्नवान्वा अतएव श्लोकी श्लोकः स्तुतिः तद्वान् सइन्द्रः सोम्यः सोमार्होभवति ॥ ८ ॥

८. वे इन्द्र धनदान् के लिए प्रजापति के द्वारा सृष्ट हुए हैं। वे सबकी अपेक्षा ओजस्वी, सोमपान के लिए स्थापित, अतीव कीर्त्तिशाली, स्तुतिवाले और सोम-योग्य हैं।

अथ नवमी—

गिरावज्रोनसंभृतःसबलोअनपच्युतः। ववक्षऋष्वोअस्तृतः ॥९॥

गिरा। वज्रः। न। सम्ऽभृतः। सऽबलः। अनपऽच्युतः।
ववक्षे। ऋष्वः। अस्तृतः ॥ ९ ॥

गिरास्तुतिलक्षणया वाचा स्तोतृभिः संभृतः उत्पादितः तीक्ष्णीकृतः । तत्रदृष्टान्तः—वज्रोन वज्रायुधं यत्कर्तृभिर्निशितधारो यथाभवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या संभृतः अतएव सबलः बलसहितः तस्मादनपच्युतः परैरप्रच्युतः अनभिगतइत्यर्थः तादृशः ऋष्वोमहान् दीप्यमानोवा अस्तृतः युद्धे शत्रुभिरहिंसितइन्द्रः ववक्षे स्तोतृभ्योधनादिकं वोढुमिच्छति ॥ ९ ॥

९. स्तुति-वचनों के द्वारा वज्र के समान तेज, बली, अपराजित, महान् और अहिंसित इन्द्र धन आदि का वहन करने की इच्छा करते हैं।

दुर्गेचिन्नःसुगंकृधिगृणानइन्द्रगिर्वणः । त्वंचंमघवन्वशः॥१०॥२२॥

दुःऽगे । चित् । नः । सुऽगम् । कृधि । गृणानः । इन्द्र । गिर्वणः । त्वम् । च । मघऽवन् । वशः । १० ॥ २२ ॥

हे गिर्वणः गीर्भिर्वननीयेन्द्र गृणानः स्तोतृभिः स्तूयमानस्त्वं नोस्माकं दुर्गेचित् दुर्गमेपि मार्गे सुगं सुगमं पन्थानं कृधि तथाकुरु । हेमघवन् धनवन्निन्द्र त्वं चशब्दश्चेदर्थे यदि वशः सोमपानार्थं तत्प्रदातॄनस्मान् कामयेथाः तदा पन्थानं शोभनगमनं कुरुष्व वष्टेर्लेटयडागमः चशब्दयोगादनिघातः ॥ १० ॥

१०. स्तुति-योग्य इन्द्र, धनी इन्द्र, यदि तुम हमारी इच्छा करते हो, तो तुम स्तुत होकर दुर्गम स्थान में भी हमारे लिए सुगम पथ कर दो।

॥ इति षष्ठस्य षष्ठे द्वाविंशोवर्गः ॥ २२ ॥

अथैकादशी—

यस्यंतेनूचिदादिशंनमिनन्तिस्वराज्यम् । नदेवोनाध्रिगुर्जनः॥११॥

यस्य॑ । ते । नु । चित् । आऽदिश॑म् । न । मिनन्ति । स्वऽराज्य॑म् । न । देवः । न । अध्रिऽगुः । जनः ॥ ११ ॥

हे इन्द्र यस्य ते तव आदिशं आदिशति नयति सर्वत्र अनयेति आदिग्बलं औणादिकः करणेप्रत्ययः । यद्वा आदेशएवादिक् आज्ञा भावेक्विप् त्वदीयामाज्ञां नूचिदिदानीं पुराच नमिनन्ति केचिदपि न हिंसन्ति । किंच स्वराज्यं तव स्वभूतं राज्यंच यद्वा स्वशब्देन स्वर्गोभिधीयते स्वर्गस्वामित्वं च । नहिंसन्ति हिंसकानाह नदेवः त्वदन्योदेवोपिच तथाप्यध्रिगुःअधृतगमनः संग्रामेत्वरमाणो वीरोपि नच जनः प्रादुर्भूतोमनुष्योपि एते नमिनन्तीत्यर्थः ॥ ११ ॥

११. इन्द्र, आज भी तुम्हारे बल और तुम्हारे राज्य की कोई हिंसा नहीं करता। देवता भी हिंसा नहीं करते और संग्राम क्षिप्रकारी वीर भी तुम्हारी हिंसा नहीं करता।

अथ द्वादशी—

अधांतेअप्रंतिष्कुतंदेवीशुष्मंसपर्यतः । उभेसुंशिप्ररोदसी ॥ १२ ॥

अर्ध । ते । अप्रंतिऽस्कुतम् । देवी इतिं । शुष्मम् ।
सपर्यतः । उभे इतिं । सुऽशिप्र । रोदसी इतिं ॥ १२ ॥

हे सुशिप्र सुहनो शोभनशिरस्त्राणेन्द्र अधापिच देवी देव्यौ स्वतेजसा दीप्यमाने उभे-रोदसी द्यावापृथिव्यौ अप्रतिष्कुतं स्कुइति सौत्रोधातुः स्तंभनेवर्तते शत्रुभिरप्रतिरोधनीयं ते त्वदीयं शुष्मं परबलशोषकं बलं सपर्यतः पूजयतः त्वदधीनेएव भवतः ॥ १२ ॥

१२. शोभन जबड़ोंवाले इन्द्र, द्यावापृथिवी—दोनों देवी तुम्हारे न रोकने योग्य बल की पूजा करती हैं।

त्वमेतदंधारयःकृष्णासुरोहिंणीषुच । परुष्णीषुरुशत्पयः ॥ १३ ॥

त्वम् । एतत् । अधारयः । कृष्णासु । रोहिंणीषु ।
च । परुष्णीषु । रुशंत् । पयः ॥ १३ ॥

अस्य सामर्थ्यमेवोपपादयति हे इन्द्र कृष्णासु कृष्णवर्णासु गोषु तथा रोहिणीषु वर्णा-दनुदात्तात्तोपधात्तोनइतिङीप् रोहितवर्णासुच परुष्णीषु गोषु रुशत् रोचतेर्दीप्तिकर्मणः दीप्य-मानं श्वेतं एतत्परिदृश्यमानं पयः क्षीरं त्वमधारयः धारयसि तस्मात् त्वद्बलं पूजयतइति समन्वयः ॥ १३ ॥

१३. तुम काली और लाल गायों में प्रकाशमान दूध देते हो।

अथ चतुर्दशी—

वियदहेरधंत्विषोविश्वेंदेवासोअक्रंमुः । विदन्मृगस्यताँअमः ॥ १४ ॥

वि । यत् । अहेः । अर्ध । त्विषः । विश्वे । देवासः ।
अक्रंमुः । विदत् । मृगस्यं । तान् । अमः ॥ १४ ॥

अधापिच अहेः अहन्तव्यस्य वृत्रासुरस्य त्विषः तेजोरूपादुच्छ्वासाद्भीताः यद्वा तस्य प्रभावेन परिगमिता विश्वे सर्वे देवासो देवाः यद्यदा व्यक्रमुः विविधं पादविहरणमकुर्वन् स्व-स्थानं परित्यज्यान्यंदेशमगच्छन्नित्यर्थः। तदानीं मृगस्य। एवंतान् भीषयितुं वृत्रो मृगरूपोभवत्

तद्रूपस्य संबन्धि अमः सर्वतोगमनशीलं बलं तज्जातं भयंवा तान् सर्वान् देवान् विदत् अविन्दत् प्राप्नोदित्यर्थः। तस्यासुरस्येन्द्रो निवारकोहन्ता भवदित्युत्तरेण संबन्धः ॥ १४ ॥

१४. जिस समय सारे देवता वृत्रासुर के तेज से भाग गये थे और वे मृग-रूपी वृत्र से भीत हुए थे—

आदुंमेनिवरोभुंवद्वृत्रहादिष्टपौंस्यम्। अजातशत्रुरस्तृतः॥१५॥२३॥

आत्। ऊँ इति। मे। निऽवरः। भुवत्। वृत्रऽहा। अदिष्ट। पौंस्यम्। अजातऽशत्रुः। अस्तृतः॥ १५ ॥ २३ ॥

आत् उइत्यवधारणे देवानां भीत्या सर्वतोगमनानन्तरमेव मे स्तोतृस्तुत्यलक्षणेन संबन्धेन मम संबन्धी अयमिन्द्रः निवरः वृत्रासुरस्य निवारयिता हन्ता भुवत् अभवत्। ततो वृत्रहा वृत्रस्य हन्तेन्द्रः पौंस्यं पुंसः कर्म पौंस्यं। यद्वा स्त्रीपुंसाभ्यामिति भवार्थेस्नञ् नकारस्य यकारो वर्णव्यत्ययेन। पुंसीन्द्रेभवं। यद्वा बलनामैतत् स्वबलं अदिष्ट यस्य राज्ये दिशति निदधाति तद्राज्यं स्ववशमकरोत् इत्यर्थः। ततः प्रभृति इन्द्रः अजातशत्रुः अनुत्पन्नशत्रुः अस्तृतः संग्रामे परैरहिंसितश्चाभवत्॥ १५ ॥

१५. उस समय मेरे इन्द्रदेव वृत्र के हन्ता हुए थे। अजातशत्रु और वृत्रघ्न इन्द्र ने अपने पौरुष का प्रयोग किया था।

॥ इति षष्ठस्य षष्ठे त्रयोविंशोवर्गः॥ २३ ॥

अथ षोडशी—

श्रुतंवोंवृत्रहंतमंप्रशर्धंचर्षणीनाम्। आशुषेराधसेमहे ॥ १६ ॥

श्रुतम्। वः। वृत्रहन्ऽतमम्। प्र। शर्धम्। चर्षणीनाम्। आ। शुषे। राधसे। महे ॥ १६ ॥

हे ऋत्विग्यष्टारः श्रुतं बलवत्तया प्रसिद्धं अतएव वृत्रहन्तमं अतिशयेन वृत्रहन्तारं शर्धं बलभूतं वेगवन्तंवा एतादृशमिन्द्रं चर्षणीनां मनुष्याणां वोयुष्माकं आशुषे। अश्नोतेर्लेटि उत्तमइति सिप् व्यत्ययेन उप्रत्ययः बहुलंछन्दसीत्यडागमः। तमिन्द्रं स्तुतिभिः प्रीणयित्वा युष्मभ्यं प्रकर्षेण अश्नवै प्रयच्छामीत्यर्थः। किमर्थं महे महते राधसे धनाय धनं युष्मभ्यं दातुम् ॥१६॥

१६. ऋत्विको, प्रख्यात, वृत्रघ्न और बली इन्द्र की स्तुति करके मैं तुम्हारे लिए यथेष्ट दान दूँगा।

अथ सप्तदशी—

अयाधियाचगव्ययापुरुणामन्पुरुष्टुत। यत्सोमेसोमआभवः॥१७॥

अया। धिया। च। गव्यऽया। पुरुऽनामन्। पुरुऽस्तुत। यत्।
सोमेऽसोमे। आ। अभवः॥ १७॥

हे पुरुनामन् बहुविध शक्र वृत्रहादिनामोपेत। यद्वा बहुस्तुतिमन् नामयन्ति स्तुत्यं देवं वशं नयन्त्यनेनेति नाम स्तोत्रं। अतएव पुरुष्टुत बहुभिरभिष्टुतेन्द्र सोमेसोमे अस्मदीयेषु सोमेषु त्वं यद्यदा आभवः तेषां पानार्थं समन्तादभवः तदा वयमया अनया कीदृश्या गव्यया गाआत्मनइच्छन्त्या धिया अनया बुद्ध्या युक्ता भवेम सोमं पीतवति त्वयि वयं गवादियुक्ता भवेमेत्यर्थः॥ १७॥

१७. अनेक नामोवाले और बहुतों के द्वारा स्तुत इन्द्र, जब कि तुम प्रत्येक सोमपान में उपस्थित हुए हो। तब हम गौ चाहनेवाली बुद्धिवाले होंगे।

बोधिन्मनाइदस्तुनोवृत्रहाभूर्यासुतिः। शृणोतुशक्रआशिषम्॥१८॥

बोधित्ऽमनाः। इत्। अस्तु। नः। वृत्रऽहा। भूरिऽआसुतिः।
शृणोतु। शक्रः। आऽशिषम्॥ १८॥

अथ परोक्षकृतः वृत्रहा वृत्रहन्ता भूर्यासुतिः बहुषुदेशेषु इन्द्रार्थं सोमआसूयतेभिषूयत-इति तादृशः। यद्वा बहूनि सोमादिहवींषि इन्द्रार्थं आसूयन्ते हूयन्तेइति तादृशः बोधिन्मनाः बुधअवगमने औणादिकइनिप्रत्ययः यस्य मनः स्तोतॄणामभिमतं बुध्यते जानातीति तथोक्तः इदवधारणे नोस्माकं बोधिन्मना एवास्तु सर्वदास्मदभीप्सितानि जानात्वेवेत्यर्थः। यद्वा एतादृशइन्द्रो नोस्माकं यज्ञेभवत्विति। ततः शक्रः संग्रामे शत्रुहननसमर्थइन्द्रः आशिषं अस्मदीयां स्तुतिं आशासनं वा शृणोतु॥ १८॥

१८. वृत्र-हन्ता और अनेक अभिषवों से युक्त इन्द्र, हमारे मनोरथ को समझें। शक्र (युद्ध में शत्रु-वध समर्थ इन्द्र) हमारी स्तुति को सुनें।

ज्योतिष्टोमे चातुर्विंशिकेहनि माध्यन्दिने मैत्रावरुणस्य कयात्वंनऊत्येति तृचोनुरूपः सूत्रितंच—होत्रकाणां कयानश्चित्रआभुवत् कयात्वंनऊत्येति।

तत्र प्रथमा सूक्ते एकोनविंशी—

कयात्वंनऊत्याभिप्रमन्दसेवृषन्। कयास्तोतृभ्यआभर॥ १९॥

कया। त्वम्। नः। ऊत्या। अभि। प्र। मन्दसे।
वृषन्। कया। स्तोतृऽभ्यः। आ। भर॥ १९॥

हे वृषन् कामानां वर्षितरिन्द्र कया केन ऊत्या अव रक्षणादिषु गत्यर्थे ऊतियूतीत्यादिना निपातितः केनाभिगमनेन नोस्मानभि अभितः प्रमन्दसे प्रकर्षेण मादयसि अस्मदीयं यज्ञं प्रति सोमपानार्थमागमनेनवा त्वदीयस्तुतिश्रवणार्थमागमनेनवा कदास्मान् प्रमादयसीति। किंच कया केनाभिगमनेन स्तोतृभ्योस्मभ्यं धनमाभर आबिभार्षि इतीन्द्रं स्तोता पृच्छति ॥ १९ ॥

१९. अभीष्ट-वर्षक इन्द्र, तुम किस आश्रय अथवा सेवा के द्वारा हमें प्रमत्त करोगे? किस सेवा के द्वारा स्तोताओं को धन दोगे?

**कस्य॒वृषा॑सु॒तेसचा॑नि॒युत्वा॑न्वृष॒भोर॑णत्। वृ॒त्र॒हासोम॑पीतये॥२०॥२४॥**

कस्य॑। वृषा॑। सु॒ते। सचा॑। नि॒युत्वा॑न्। वृ॒ष॒भः।
रण॑त्। वृ॒त्र॒ऽहा। सोम॑ऽपीतये ॥ २० ॥ २४ ॥

वृषा इन्द्रः कस्य यजमानस्य सचा सुते ऋत्विग्भिः सहाभिषुते सोमे अनेन तद्वान्यज्ञो-लक्ष्यते कस्य यज्ञे सोमपीतये सोमपानाय तदर्थं रणत् रमते। कीदृशः नियुत्वान् नितरां युवन्ति मिश्रयन्ति स्वबलेन शत्रूनिति नियुतः मरुतः तद्वान्। यद्वा नियुतइति वायोर्वाहनाश्वाः सवायुः कदाचित्संग्रामे इन्द्राय स्वाश्वानदात् तद्वान् वृषभः धनानामपांवा वर्षकः वृत्रहा वृत्रस्य हन्तेन्द्रः कस्य यज्ञे रमते इदानीं नोस्मदीयं यज्ञं प्रत्यागच्छतु। यद्वा कस्याध्वरे रमते नक्वापि। किंतु अस्मद्यज्ञे एव सोमपानार्थं संक्रीडते ॥ २० ॥

२०. अभीष्टवर्षक, सेचक, वृत्रघ्न और मरुतोंवाले इन्द्र किसके यज्ञ में, सोमपान के लिए, ऋत्विकों के साथ, विहार करते हैं?

॥ इति षष्ठस्य षष्ठे चतुर्विंशोवर्गः ॥ २४ ॥

अथैकविंशी–

**अ॒भीषु॒णस्त्वंर॒यिंम॑न्दसा॒नःस॑ह॒स्रिण॑म्। प्र॒य॒न्ताबो॑धिदा॒शुषे॑॥२१॥**

अ॒भि। सु। नः॒। त्वम्। र॒यिम्। म॒न्द॒सा॒नः। स॒ह॒स्रिण॑म्।
प्र॒ऽय॒न्ता। बो॒धि॒। दा॒शुषे॑ ॥ २१ ॥

हे इन्द्र त्वं मन्दसानः अस्माभिर्दत्तेन सोमेन मोदमानः सन् सहस्रिणं सहस्रसंख्याकं रयिं धनं नोस्मभ्यं सु सुष्ठु अभ्याभर। तदेवाह–त्वं दाशुषे हविर्दत्तवते यजमानाय प्रयन्ता धनादेः प्रदाता कर्मणोनियन्तावा भवानीति बोधि बुध्यस्व। बुधअवगमने भौवादिकः लोटि छान्दसो विकरणस्यलुक् हेर्धिः धित्वेधकारलोपश्छान्दसः ॥ २१ ॥

२१. तुम मत्त होकर हमें सहस्र-संख्यक धन दो। तुम अपने को हव्यदाता नियन्ता समझो।

अथ द्वाविंशी—

पत्नीवन्तःसुताइमउशन्तोयन्तिवीतये। अपांजग्मिर्निचुंपुणः॥२२॥

पत्नी॑ऽवन्तः। सु॒ताः। इ॒मे। उ॒शन्त॑ः। य॒न्ति॒। वी॒तये॑।

अ॒पाम्। जग्मि॑ः। नि॒ऽचु॒म्पु॒णः॥ २२ ॥

पत्नीवन्तः सोमसेकार्थे पत्न्यः पालयित्र्यः आपोवसतीवर्य एकधनाश्च तद्वन्तः सुता अस्माभिरभिषुताः इमे गृहस्थाः चमसस्थाश्च सोमाः उशन्तः आत्मनः पानं कामयमानाः सन्तोयन्ति इन्द्रं गच्छन्ति। किमर्थं वीतये आत्मनः पानाय। किंच निचुंपुणः निचांतपृणइति यास्कः। चमुअदने निचांतोभक्षितः पृणः प्रीणयिता यद्वा निचमनेन प्रीणातीति भक्षणेन तर्पयतीति निचुंपुणः। अभिषुतस्य सोमस्य अप्सुप्रक्षेपासंभवात् सामर्थ्यादृजीषरूपः सोमोगृह्यते। तादृशः सोमः अपांजग्मिः अपामितिनलोकाव्ययेतिषष्ठीप्रतिषेधाभावश्छान्दसः अपइत्यर्थः। यद्वा अपांमध्यंवा अपःप्रतिवा जग्मिः गमनशीलः साधुगन्तावा सोमश्चेन्द्रं गच्छति सह्यवभृथकाले ऋजीषमप्सुप्रास्यन्तीति वचनादप्सु ऋजीषरूपः प्रक्षिप्यते। तदाह अपांजग्मिरिति॥२२॥

२२. यह सब जल-युक्त (ऋजीष-रूप) सोम अभिषुत हुआ है। इन्द्र पान करें—इसी इच्छा से सारा सोम इन्द्र के पास जाता है। पीने पर सोम प्रसन्नता देता है। सोम (ऋजीष-रूप) जल के पास जाता है।

अथ त्रयोविंशी—

इष्टाहोत्राअसृक्षतेन्द्रंवृधासोअध्वरे। अच्छावभृथमोजसा॥२३॥

इ॒ष्टाः। होत्रा॑ः। अ॒सृ॒क्ष॒त॒। इन्द्र॑म्। वृ॒धास॑ः। अ॒ध्व॒रे।

अच्छ॑। अ॒व॒ऽभृ॒थम्। ओज॑सा॥ २३ ॥

अपांजग्मिरिति सामर्थ्यादवभृथदिनएवकुर्वन्तीत्युक्तं तत्प्रसंगादाह—अध्वरेस्मदीये यज्ञे वृधासो हविर्भिरिन्द्रं वर्धयन्तः इष्टा इष्टवन्तो यागं कृतवन्तः सप्तसंख्याका होत्राः होत्रका अवभृथमन्त्यदिवसं अच्छ प्रति ओजसा स्वतेजसा सहिता इन्द्रमसृक्षत विसृजन्ति। यावदवभृथं सप्तहोत्रका यजन्तीति॥ २३॥

२३. यज्ञ में वर्द्धक और यज्ञ-कर्त्ता सात होता यज्ञ और दिन के अन्त में तेजस्वी होकर इन्द्र का विसर्जन करते हैं।

अथ चतुर्विंशी—

इहत्यासधमाद्याहरीहिरण्यकेश्या। वोह्लामभिप्रयोहितम्॥२४॥

---

१ नि ५, १७,।

इह । त्या । सधऽमाद्या । हरी इति । हिरण्यऽकेश्या ।
वोळ्हाम् । अभि । प्रयः । हितम् ॥ २४

एषाव्याख्याता । अत्रापि वाक्यार्थोविधीयते—सधमाद्या इन्द्रेणसह हविर्भिस्तर्पयितव्यौ यद्वा संग्रामे सहमाद्यन्तौ हिरण्यकेश्या हिरण्मयस्कन्धगतकेशवन्तौ त्या तौ प्रसिद्धौ हरी हरितवर्णावेतन्नामकावश्वौ इहास्मिन्यज्ञे हितं हितकरं प्रयो हवीरूपमन्नं अभिलक्ष्य वोळ्हां इन्द्रं वहतां प्रापयतामिति ॥ २४ ॥

२४. प्रख्यात इन्द्र के साथ प्रमत्त और सुवर्ण-केशवाले हरि नामक अश्व, हितकर अन्न की ओर, इन्द्र को ले जायें।

तुभ्यंसोमाःसुताइमेस्तीर्णंबर्हिर्विभावसो । स्तोतृभ्यइन्द्रमावह॥२५॥२५॥

तुभ्यम् । सोमाः । सुताः । इमे । स्तीर्णम् । बर्हिः । विभावसो इति विभाऽवसो । स्तोतृऽभ्यः । इन्द्रम् । आ । वह ॥ २५ ॥ २५ ॥

हे विभावसो विशेषेण भासमान वसुमन् यद्वा विशिष्टाभा विभाः प्रकृष्टदीप्तयः निवसन्ति अत्रेति विभावसुरग्निः हे तादृशाग्ने तुभ्यं त्वदर्थं इमे सोमाः सुताःअभिषुताः तथा बर्हिः स्तीर्णं तस्मात्स्तोतृभ्योस्मभ्यं अस्मदर्थं इन्द्रं सोमपानार्थमावह आहूय यज्ञं प्रति प्रापयेत्यर्थः ॥२५॥

२५. प्रकाशमान धनवाले अग्नि, तुम्हारे लिए यह सोम अभिषुत हुआ है। तुम्हारे लिए यह सोम अभिषुत हुआ है—कुश भी बिछाया हुआ है; इसलिए स्तोताओं के सोमपान के लिए इन्द्र को बुलाओ।

आतेदक्षंविरोचनादधद्रत्नाविदाशुषे । स्तोतृभ्यइन्द्रमर्चत ॥२६॥

आ । ते । दक्षम् । वि । रोचना । दधत् । रत्ना । वि ।
दाशुषे । स्तोतृऽभ्यः । इन्द्रम् । अर्चत ॥ २६ ॥

ऋषिर्ऋत्विग्यजमानान्प्रत्याह । हे यष्टः दाशुषे इन्द्राय हविर्दत्तवते ते तुभ्यं रोचना रोचनं दीप्यमानं दक्षं बलं आभिमुख्येन विदधत् इन्द्रोविदधातु यद्वा रोचनमिति स्वर्गः देवतेजसा दीप्तं रोचननामानं लोकं विदधातु । तथा रत्ना रत्नानि च तुभ्यं करोतु । डुधाञ्धारणपोषणयोः । लेटि घोर्लोपोलेटिचेत्याकारलोपः अडागमः । हे स्तोतारः स्तोतृभ्यः इन्द्रविषयस्तोत्रकारिभ्योयुष्मभ्यंच बलरत्नादिकं इन्द्रः कुरुतां तस्मात्तमिन्द्रं यूयमर्चत हविर्भिः स्तुतिभिश्च पूजयत ॥ २६ ॥

२६. ऋत्विग्-यजमानो, इन्द्र को हवि देनेवाले तुम्हारे लिए इन्द्र दीप्यमान बल भेजें—रत्न भेजे। स्तोताओं के लिए भी इन्द्र बल-रत्नादि प्रेरित करें। तुम इन्द्र की पूजा करो।

अथ सप्तविंशी—

आतेदधामीन्द्रियमुक्थाविश्वांशतक्रतो। स्तोतृभ्यइन्द्रमृळय॥२७॥

आ। ते। दधामि। इन्द्रियम्। उक्था। विश्वा। शतक्रतो इति शतऽक्रतो। स्तोतृऽभ्यः। इन्द्र। मृळय॥ २७॥

हे शतक्रतो इन्द्र ते तव इन्द्रियं वीर्यवन्तं सोमं विश्वा उक्था सर्वाणि स्तोत्राणि आदधामि संपादयामि। हे इन्द्र त्वं स्तोतृभ्यः मृळय सुखय॥ २७॥

२७. शतक्रतु (शतप्रज्ञ) इन्द्र, तुम्हारे लिए वीर्यवान् सोम और समस्त स्तोत्रों का मैं सम्पादन करता हूँ। इन्द्र, स्तोताओं को सुखी करो।

भद्रंभद्रंनआभरेषमूर्जंशतक्रतो। यदिन्द्रमृळयासिनः॥ २८॥

भद्रम्ऽभद्रम्। नः। आ। भर। इषम्। ऊर्जम्। शतक्रतो इति शतऽक्रतो। यत्। इन्द्र। मृळयासि। नः॥ २८॥

हे शतक्रतो शतविधकर्मन् शतप्रज्ञवा इन्द्र भद्रंभद्रं कल्याणतमं अथ सुखोत्पादकंवा धनं नोस्मभ्यमाभर आसंपादय देहि। तथा इषमन्नं ऊर्जमन्नरसं यद्वा बलवदन्नंच देहि नोस्मान् यद्यदि मृळयासि सुखयसि तर्हि तव धनादिकं देहीति। मृळसुखने ण्यन्तस्य लेट्यडागमः॥ २८॥

२८. इन्द्र, यदि तुम हमें सुखी करना चाहो, तो हे शतक्रतु, तुम हमें कल्याण दो, अन्न दो और बल दो।

सनोविश्वान्याभरसुवितानिशतक्रतो। यदिन्द्रमृळयासिनः॥२९॥

सः। नः। विश्वानि। आ। भर। सुवितानि। शतक्रतो इति शतऽक्रतो। यत्। इन्द्र। मृळयासि। नः॥ २९॥

हे शतक्रतो इन्द्र सपूर्वोक्तलक्षणस्त्वं विश्वानि सर्वाणि सुवितानि सुष्ठु ईर्यते प्राप्यते येष्विति सुवितानि मंगळानि सुपूर्वादेतेः क्तप्रत्यये उवङादेशः सर्वानभ्युदयान्नोस्मभ्यमाभर आहर। हे इन्द्र यदिनोस्मान् सुखयसि तर्हि धनादिसहितानभ्युदयान्देहीति॥ २९॥

२९. इन्द्र, यदि तुम हमें सुखी करना चाहते हो, तो हे शतक्रतु, हमारे लिए सारे मङ्गल ले आओ।

अथ त्रिंशी—

त्वामिद्वृ॑त्रहन्तम सु॒तावन्तो हवामहे । यदि॑न्द्र मृ॒ळया॑सि नः ॥ ३० ॥ २६ ॥

त्वाम् । इत् । वृ॒त्र॒ह॒न्ऽत॒म॒ । सु॒तऽव॑न्तः । ह॒वा॒म॒हे॒ ।
यत् । इ॒न्द्र॒ । मृ॒ळया॑सि । नः॒ ॥ ३० ॥ २६ ॥

हे वृत्रहन्तम अतिशयेन वृत्रस्यापामावरकस्य हन्तरिन्द्र सुतवन्तोभिषुतसोमवन्तो वयं त्वामित् त्वामेव हवामहे अस्मद्यज्ञमागत्य सोमपानायाह्वयामः । हे इन्द्र नोस्मान्यदि सुखयसि तर्हि आह्वयामइति ॥ ३० ॥

३०. इन्द्र, तुम हमें सुखी करने की इच्छा करते हो; इसलिए, हे श्रेष्ठ असुर-घातक, हम अभिषुत-सोम-युक्त होकर तुम्हें बुलाते हैं।

॥ इति षष्ठस्य षष्ठे षड्विंशोवर्गः ॥ २६ ॥

व्यूळ्हेदशरात्रस्य षष्ठेहनि निष्केवल्ये उपनोहरिभिरिति तृचोनिविद्धानीयः । सूत्रितंच—अयंहयेनवाइदमुपनोहरिभिःसुतमिति ।

तत्र प्रथमा सूक्ते एकत्रिंशी—

उप॑ नो॒ हरि॑भिः सु॒तं या॒हि म॑दानां पते । उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३१ ॥

उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् । या॒हि । म॒दा॒ना॒म् ।
प॒ते॒ । उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् ॥ ३१ ॥

हे मदानांपते माद्यन्तेनेनेति मदाः सोमाः मदोनुपसर्गे इति करणे अप्प्रत्ययः सोमानां स्वामिन्निन्द्र हरिभिः । आशतेनहरिभिरित्यादिषु । बहूनामश्वानां श्रुतेरत्रापि शतसहस्रसंख्याकैरश्वैः सह नोस्माकं यज्ञे सुतमभिषुतं सोममुपयाहि तत्पानार्थं शीघ्रमायाहि पुनरुपनइत्यादरार्थः ॥ ३१ ॥ सोमपति इन्द्र, हरि अश्वों की सवारी से हमारे अभिषुत सोम के पास आओ—हमारे अभिषुत सोम के पास आओ।

अथ द्वात्रिंशी—

द्विता यो वृ॑त्रहन्तमो वि॒द इन्द्रः॑ श॒तक्र॑तुः । उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३२ ॥

द्वि॒ता । यः । वृ॒त्र॒ह॒न्ऽत॑मः । वि॒दे । इन्द्रः॑ । श॒तऽक्र॑तुः ।
उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् ॥ ३२ ॥

---

१ ऋ० सं० २. ६. २२.।

वृत्रहन्तमोतिशयेन वृत्रस्यहन्ता शतक्रतुः नानाविधकर्मा यइन्द्रः द्विता द्विधाविदे वृत्रवधादौ उग्रकर्मा जगद्रक्षणकाले शान्तकर्मेति द्विप्रकारेण सर्वैर्ज्ञायते। विदज्ञाने कर्मणिविहितस्य क्प्रत्ययस्य लोपस्तआत्मनेपदेष्विति तल्लोपः सत्वं हरिभिः सह सुतं सोममुपयाहि ॥ ३२ ॥

३२. श्रेष्ठ, वृत्रघ्न और शतक्रतु इन्द्र दो प्रकार से जाने जाते हैं। इसलिए, वही तुम, हरियों की सवारी से हमारे अभिषुत सोम के पास आओ। अथ त्रयस्त्रिंशी—

त्वंहिवृ॑त्रहन्ने॒षांपा॒तासोमा॑ना॒मसि॑। उप॑नो॒हरि॑भिःसु॒तम् ॥ ३३ ॥

त्वम्। हि। वृ॒त्र॒ऽह॒न्। ए॒षा॒म्। पा॒ता। सोमा॑नाम्।
असि॑। उप॑। न॒ः। हरि॑ऽभिः। सु॒तम् ॥ ३३ ॥

हे वृत्रहन् वृत्रस्य पापस्यवा हन्तरिन्द्र हिशब्दोहेत्वर्थे यस्मात्त्वं एषामस्मदीयानां सोमानां पाता पानकर्तासि भवसि एषामिति इदमोन्वादेशे अशादेशः अनुदात्तश्च। अतस्त्वमश्वैः सह सोमं पातुमुपयाहि आगच्छ ॥ ३३ ॥

३३. वृत्रघ्न इन्द्र, तुम इस सोम के पान कर्त्ता हो; इसलिए हरियों के साथ अभिषुत सोम के पास आओ।

व्यूढस्य दशरात्रस्य नवमेहनि वैश्वदेवे अभिप्लवतृचस्य इन्द्रइषेददातुनस्तेनोरत्नानि धत्तनेति द्वेऋचावार्भव्यौ। सूत्रितंच—इन्द्रइषेददातुनस्तेनोरत्नानिधत्तनेत्येकाद्वेचेति।

सैषा सूक्ते चतुस्त्रिंशी—

इन्द्र॑इ॒षेद॑दातुनऋभु॒क्षण॑मृ॒भुंर॒यिम्। वा॒जीद॑दातुवा॒जिन॑म् ॥ ३४ ॥ २७ ॥

इन्द्र॑ः। इ॒षे। द॒दा॒तु॒। न॒ः। ऋ॒भु॒क्षण॑म्। ऋ॒भुम्।
र॒यिम्। वा॒जी। द॒दा॒तु॒। वा॒जिन॑म् ॥ ३४ ॥ २७ ॥

इन्द्रएव अस्माभिः स्तुतः इष्टःसन् ऋभुक्षणं वाषपूर्वस्येति दीर्घाभावः यागादिकर्मकरणेन महान्तं सर्वेषां भ्रातृणां श्रेष्ठंवा अथवा तृतीयसवने प्रजापतिसवित्रोर्मध्ये सोमपात्रत्वान्महान्तं रयिं दातारं ऋभुं सोमपानेनामर्त्यत्वं प्राप्तं तादृशं एतन्नामकं देवं नोस्मभ्यमिषे अन्नार्थं ददातु प्रयच्छतु। तथा वाजी बलवानिन्द्रः वाजिनं बलवन्तं अन्नवन्तंवा वाजनामानं कनीयांसं भ्रातरंच अस्माकमन्नलाभाय ददातु ॥ ३४ ॥

३४. इन्द्र अन्न के दाता और अमर ऋभुदेव को (अन्न-प्राप्ति के लिए) हमें दें। बलवान् इन्द्र वाज नामक उनके भ्राता को भी हमें दें।

॥ इति षष्ठस्य षष्ठे सप्तविंशोवर्गः ॥ २७ ॥

॥ इति अष्टमे मंडले नवमोनुवाकः ॥ ९ ॥

दशमेनुवाके दशसूक्तानि तत्र गौर्धयतीति द्वादशर्चमाद्यं सूक्तं आंगिरसस्य बिंदुनाम्नः पूतदक्षनाम्नोवा आर्षं गायत्रं मरुद्देवताकं। तथाचानुक्रम्यते—गौर्धयति द्वादशबिंदुः पूतदक्षोवा मारुतमिति सूक्तविनियोगोलैंगिकः। प्रातःसवने सोमातिरिक्तएकं शस्त्रमुपजायते तत्राद्यतृचोनुरूपः। सूत्रितंच—अस्तिसोमोअयंसुतो गौर्धयतिमरुतामिति स्तोत्रियानुरूपाविति।

तत्र प्रथमा—

गौर्ध॑यति म॒रुतां॑ श्रव॒स्युर्मा॒ता म॒घोना॑म्। यु॒क्ता वह्नी॒ रथा॑नाम् ॥ १॥

गौः। ध॒य॒ति॒। म॒रुता॑म्। श्र॒व॒स्युः। मा॒ता। म॒घोना॑म्।
यु॒क्ता। वह्निः॑। रथा॑नाम् ॥ १ ॥

मघोनां धनवतां मरुतां माता निर्मात्री गौः पृश्निरूपा। पृश्न्यैवैपयसोमरुतोजाताइति[1] श्रुतेः। यद्वा गौर्माध्यमिकीवाक् तत्रैव मध्यमस्थाने मरुतामपि वर्तनात् तेषां तत्पुत्रत्वमुपचर्यते धयति सोमं पिबति पाययतिवा स्वपुत्रान् मरुतः। किमिच्छन्ती श्रवस्युरन्नं कामयमाना कीदृशी रथानां मारुतानां वह्निः पृषतीभिर्वडवाभिर्वोढ्री संयोजयित्री सायुक्ता सर्वत्र समन्तात्पूज्या भवति ॥ १ ॥

१. धनी मरुतों की माता गौ अपने पुत्र मरुतों को सोम पान कराती है। वह गौ अन्नाभिलाषिणी, मरुतों को रथ में लगानेवाली और पूजनीया है।

यस्या॑ दे॒वा उ॒पस्थे॑ व्र॒ता विश्वे॑ धा॒रय॑न्ते। सू॒र्या॒मासा॑ दृ॒शे कम् ॥ २ ॥

यस्याः॑। दे॒वाः। उ॒प॒ऽस्थे॑। व्र॒ता। विश्वे॑। धा॒रय॑न्ते।
सू॒र्या॒मासा॑। दृ॒शे। कम् ॥ २ ॥

गौः सर्वदेवमयीत्याह यस्या मरुतां मातुः गोरुपस्थे वर्तमानाः विश्वे सर्वे देवाः व्रता व्रतानि स्वस्वकर्माणि धारयन्ते बिभ्रति इयमेवास्माकं स्वपयोमिश्रितस्य सोमस्य दात्रीति सर्वे तत्समीपे तिष्ठन्तीत्यर्थः। किंच सूर्यामासा माति स्वकलाभिस्तिथीनिति माश्चंद्रमाः देवताद्वंद्वेचेत्युभयपदप्रकृतिस्वरत्वं। सूर्याचन्द्रमसौ दृशे दर्शनाय सर्वलोकप्रकाशनायच यस्या गोः समीपे कं सुखेन वर्तमानौ भवतः सेयंगौः सोमं धयतीति पूर्वेण समन्वयः ॥ २ ॥

२. सारे देवगण गौ की गोद में वर्त्तमान रहकर अपने-अपने व्रत को धारण करते हैं। सूर्य और चन्द्रमा भी, सारे लोकों के प्रकाशन के लिए, इसके समीप रहते हैं।

६

---

१ तै० सं०२. २. ११।

अथ तृतीया—

तत्सुनोविश्वेअर्यआसदागृणन्तिकारवः। मरुतःसोमपीतये ॥३॥

तत् । सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति ।
कारवः । मरुतः । सोमऽपीतये ॥ ३ ॥

अर्यः स्तोत्रकरणार्थमितस्ततोगन्तारो नोस्मदीया विश्वे सर्वे कारवः स्तोतारः तन्मरुतां बलं सदा सर्वदा सु सुष्ठु आगृणन्ति आभिमुख्येन स्तुतिभिः स्तुवन्ति। किमर्थं सोमपीतये अस्माभिर्दीयमानं सोमं पातुं मरुतएतन्नामकादेवा अस्माभिराह्वातव्याः खलु ततः पुरस्तात्तद्बलं स्तुवन्तीत्यर्थः ॥ ३ ॥

३. हमारे सर्वत्रगामी स्तोता लोग सदा सोम-पान के लिए मरुतों की स्तुति करते हैं।

पूर्वमभिहितएवशस्त्रे अस्तिसोमइति स्तोत्रियस्तृचः। सूक्तंतु पूर्वेणसहोदाहृतम्।

तत्र प्रथमा सूक्ते चतुर्थी—

अस्तिसोमोअयंसुतःपिबन्त्यस्यमरुतः। उतस्वराजोअश्विना॥४॥

अस्ति । सोमः । अयम् । सुतः । पिबन्ति । अस्य ।
मरुतः । उत । स्वऽराजः । अश्विना ॥ ४ ॥

अयं पुरोवर्ती सोमः सुतोमरुदर्थं अस्माभिरभिषुतोस्ति विद्यते। तस्मादस्य अन्वादेशे एनं सुतं सोमं स्वराजः स्वयं दीप्यमानाः स्वतेजसा नान्यदीयेनेत्यर्थः तादृशाः मरुतः पिबन्ति। उतापिच अश्विना अश्विनौ च सोमं पिबतः ॥ ४ ॥

४. यह सोम अभिषुत हुआ है। स्वभावतः प्रदीप्त मरुद्गण और अश्विद्वय इसके अंश का पान करें।

पिबन्तिमित्रोअर्यमातनापूतस्यवरुणः। त्रिषधस्थस्यजावतः॥५॥

पिबन्ति । मित्रः । अर्यमा । तना । पूतस्य । वरुणः ।
त्रिऽसधस्थस्य । जाऽवतः ॥ ५ ॥

नकेवलं मरुतएव सोमपातारः। किंतु एतेपीत्याह—मित्रः सर्वेषां स्वस्वकर्मणि प्रवर्तकत्वात्सखिभूतः अर्यमाच वरुणः दुःखादीनां शत्रूणांवा वरिता निवारकः एतन्नामकास्त्रयोदेवाः तना ततमूर्णास्तुकेनेति तनं दशापवित्रं सुपांसुलुगिति तृतीयायाआदेशः तनाद्युदात्तः तनापूतस्य परिशोधितं त्रिसधस्थस्य सहतिष्ठन्त्यत्रेति सधस्थं स्थानं द्रोणकलशाधवनीयपूतभृदा-

स्थानि त्रीणि स्थानानि यस्य तत्तथोक्तं तादृशं जावतः स्तुत्यजनवन्तमिमं सोमं पिबन्ति। द्वितीयार्थेषष्ठ्यः ॥ ५॥

५. मित्र, अर्यमा और वरुण "दशापवित्र" के द्वारा शोधित तीन स्थानों (द्रोण, कलशाधवनीय और पूतभृत्) में स्थापित तथा जनवाले सोम का पान करें।

अथ षष्ठी—

उतोन्वंस्यजोषमाँइन्द्रंःसुतस्यगोमंतः। प्रातर्होतेवमत्सति॥६॥२८॥

उतो इति। नु। अस्य। जोषम्। आ। इन्द्रः। सुतस्य। गोऽमंतः। प्रातः। होताऽइव। मत्सति ॥ ६ ॥ २८ ॥

उतो अपिच इन्द्रः सुतस्य अस्माभिरभिषुतस्य गोमतः गव्यैर्मिश्रणवतः अस्य अन्वादेशः पूर्ववद्दशापवित्रेण पूतस्य सोमस्य जोषं पानरूपां सेवां प्रातः प्रातःसवने नु क्षिप्रं आमत्सति मदिस्तुत्यादिषु आभिमुख्येन स्तौति। यद्वा सोममेवकामयते। तत्रदृष्टान्तः—होतेव यथा होता प्रातःसवने देवानभिष्टौति देवान् स्तोतुं वाभिवांछति ॥ ६ ॥

६. इन्द्र प्रातःकाल में, होता के समान, अभिषुत और गव्य (क्षीरादि) से युक्त सोम की सेवा की प्रशंसा करते हैं।

॥ इति षष्ठस्य षष्ठेष्टाविंशोवर्गः ॥ २८ ॥

अथ सप्तमी—

कदंत्विषन्तसूरयंस्तिरआपंइवस्त्रिधंः। अर्षन्तिपूतदंक्षसः ॥ ७ ॥

कत्। अत्विषन्त। सूरयंः। तिरः। आपंःऽइव। स्त्रिधंः। अर्षन्ति। पूतऽदंक्षसः ॥ ७ ॥

ऋषिर्मरुतो बहुवारंस्तुत्वेदानीमात्मानं वितर्कयति सूरयः प्राज्ञाः आपइव उदकानीव तिरः यथा उदकानि तिर्यग्गच्छन्ति तद्वत्तिरश्चीनगतयः सन्तः कत्कदा अत्विषन्त त्विषदीप्तौ अन्तरिक्षे कदादीप्यन्ते। किंच स्त्रिधः शत्रूणां शोषकाहन्तारः तइमे मरुतः पूतदक्षसः शुद्धबलाः सन्तः कदावा अर्षन्ति अस्मदीयं यज्ञं प्रत्यागच्छन्ति ॥ ७ ॥

७. प्राज्ञ मरुद्गण, सलिल के सदृश, टेढ़ी गतिवाले होकर, कब प्रदीप्त होंगे? शत्रुहन्ता मरुद्गण, शुद्ध-बल होकर, कब हमारे यज्ञ में आवेंगे?

कद्वोअद्यमहानांदेवानामवोवृणे। त्मनांचदस्मवर्चसाम् ॥ ८ ॥

कत्। वः। अद्य। महानाम्। देवानाम्। अवंः। वृणे। त्मनां। च। दस्मऽवर्चसाम् ॥ ८ ॥

हे मरुतः महानां मंहनीयानां महतां वा त्मनाच आत्मनैव अलंकरणैर्विनापि दस्मवर्चसां दर्शनीयतेजस्कानां अतएव देवानां द्योतमानानां वोयुष्माकमवः पालनं कत्र कदाहं वृणे संभजे। वृङ्संभक्तौ क्रैयादिकः ॥ ८ ॥

८. मरुतो, तुम लोग महान् हो और दर्शनीय तेजवाले हो। तुम द्युतिमान् हो। मैं कब तुम्हारा पालन पाऊँगा?

आयेविश्वापार्थिवानिपप्रथन्रोचनादिवः। मरुतःसोमंपीतये ॥ ९ ॥

आ। ये। विश्वा। पार्थिवानि। पप्रथन्। रोचना। दिवः। मरुतः। सोमऽपीतये ॥ ९ ॥

ये मरुतः विश्वा विश्वानि पार्थिवानि पृथिव्यां भवानि भूतजातानि दिवः द्युलोकस्य रोचना रोचमानानि ज्योतींषि च आपप्रथन् सर्वत्र विस्तारितान्यकार्षुः। प्रथप्रख्याने ण्यन्तस्य चङि अवस्मृदृत्वरप्रथम्रदस्तृस्पशामिति अभ्यासस्य अदादेशः चङ्यन्यतरस्यामितिङित् स्वरेणमध्योदात्तः तादृशान् मरुतोदेवान् सोमपीतये सोमपानायाहमाह्वयामि ॥ ९ ॥

९. जिन मरुतों ने सारी पार्थिव वस्तुओं और द्युलोक की ज्योतियों को सर्वत्र विस्तारित किया है, सोम-पान के लिए, उन्हीं को मैं बुलाता हूँ।

त्यान्नुपूतदक्षसोदिवोवोमरुतोहुवे। अस्यसोमस्यपीतये ॥ १० ॥

त्यान्। नु। पूतऽदक्षसः। दिवः। वः। मरुतः। हुवे। अस्य। सोमस्य। पीतये ॥ १० ॥

हे मरुतो मितराविण एतन्नामकादेवाः पूतदक्षसः परिशुद्धबलान् दिवः स्वतेजसा दीप्यमानान् यद्वा दिवः द्युलोकस्थितान् त्यान् तान् प्रसिद्धान् वोयुष्मान् नु क्षिप्रं हुवे आह्वयामि। किमर्थं अस्यास्मदीयस्य सोमस्य पीतये पानाय ॥ १० ॥

१०. मरुतो, तुम्हारा बल पवित्र है। तुम अतीव द्युतिमान् हो। इस सोम के पान के लिए तुम्हें शीघ्र बुलाता हूँ।

अथैकादशी–

त्यान्नुयेविरोदसीतस्तभुर्मरुतोहुवे। अस्यसोमस्यपीतये ॥ ११ ॥

त्यान्। नु। ये। वि। रोदसी इति। तस्तभुः। मरुतः। हुवे। अस्य। सोमस्य। पीतये ॥ ११ ॥

ये मरुतः रोदसी द्यावापृथिव्यौ वितस्तभुः स्वबलेनैव अत्यर्थं स्तब्धे चक्रुः ते रोदसी स्वाधीने अकार्षुरित्यर्थः । त्यान् तान् सर्वतः प्रसिद्धान् नु क्षिप्रं अहं हुवे आह्वयामि । किमर्थं अस्येत्यादि ॥ ११ ॥

११. जिन्होंने द्यावापृथिवी को स्तब्ध किया है उन्हीं को इस सोम के पान के लिए, मैं बुलाता हूँ।

अथ द्वादशी—

त्यंनुमारु॑तंग॒णंगि॑रि॒ष्ठांवृष॑णंहुवे । अ॒स्यसोम॑स्यपी॒तये॑ ॥ १२ ॥ २९॥

त्यम् । नु । मारु॑तम् । ग॒णम् । गि॒रि॒ऽस्थाम् । वृष॑णम् ।
हु॒वे । अ॒स्य । सोम॑स्य । पी॒तये॑ ॥ १२ ॥ २९ ॥

त्यं तं सर्वत्रविस्तृतं गिरिष्ठां गिरिषु मेघेषु पर्वतेषु वा तिष्ठन्तं वृषणं उदकानां कामानां वा वर्षितारं मारुतं मरुत्संबन्धिनं गणं संघं नु क्षिप्रं हुवे बिंदुरहमाह्वयामि । किं प्रयोजनं अस्य अस्मदीयस्य सोमस्य पीतये पानाय ॥ १२ ॥

१२. चारों ओर विस्तृत, पर्वत पर स्थित और जल-वर्षक मरुतों को, इस सोम के पान के लिए, मैं बुलाता हूँ।

॥ इति षष्ठस्य षष्ठे एकोनत्रिंशोवर्गः ॥ २९ ॥

आत्वेति नवर्चं द्वितीयंसूक्तं आनुष्टुभमैन्द्रं तिरश्चीनामांगिरसऋषिः । तथाचानुक्रम्यते— आत्वानव तिरश्चीरांगिरस आनुष्टुभमिति । आभिप्लविकेषूक्थ्येषु तृतीयसवनेच्छावाकस्यात्वागिरइति तृचोवैकल्पिकोनुरूपः सूत्र्यतेहि—गायन्तित्वागायत्रिण आत्वागिरोरथीरिवेति ।

तत्र प्रथमा—

आत्वा॒गिरो॑र॒थीरि॒वास्थुः॑सु॒तेषु॑गिर्वणः ।
अ॒भित्वा॒सम॑नूष॒तेन्द्र॑व॒त्संनमा॒तरः॑ ॥ १ ॥

आ । त्वा॒ । गिरः॑ । र॒थीःऽइ॑व । अस्थुः॑ । सु॒तेषु॑ । गिर्व॒ण॒ः ।
अ॒भि । त्वा॒ । सम् । अ॒नू॒ष॒त । इन्द्र॑ । व॒त्सम् । न । मा॒तरः॑ ॥ १ ॥

हे गिर्वणः गीर्भिर्वननीयेन्द्र सुतेषु सोमेषु अभिषुतेषु सत्सु गिरोस्माकं स्तुतिलक्षणा-वाचः त्वा त्वां आस्थुः आभिमुख्येन शीघ्रं तिष्ठन्ति ।तत्रदृष्टान्तः—रथीरिव यथा रथवान् रथेन गच्छन् वीरः प्राप्यं देशं क्षिप्रं गच्छति तद्वदस्माभिरपिगन्तव्यं त्वां स्तुतयोभिगच्छन्ति । किंच हे इन्द्र अस्मदीयागिरः त्वा त्वामभिलक्ष्य समनूषत सम्यक् शब्दायन्ते स्तुवन्तीत्यर्थः । नूस्तवने

कुटादिः तस्य लुङ्रूपं। तत्रदृष्टान्तः—वत्संन मातरः यथा मातरोगावः वत्सं अभिलक्ष्य हंभारवादिशब्दं कुर्वन्ति तद्वत् ॥ १ ॥

१. स्तुति-पात्र इन्द्र, सोमाभिषव होने पर हमारे स्तुति-वचन, रथवाले वीर के समान, तुम्हारी ओर स्थित होते हैं। जैसे गायें बछड़ों को देखकर शब्द करती हैं, वैसे ही हमारे स्तोत्र तुम्हारी स्तुति करते हैं।

आत्वांशुक्राअंचुच्यवुःसुतासइन्द्रगिर्वणः।
पिबात्व१स्यान्धंसइन्द्रविश्वांसुतेहितम् ॥ २ ॥

आ। त्वा। शुक्राः। अचुच्यवुः। सुतासः। इन्द्र। गिर्वणः।
पिर्ब। तु। अस्य। अन्धंसः। इन्द्रं। विश्वांसु। ते। हितम् ॥ २ ॥

हे गिर्वणोगीर्भिर्वननीयेन्द्र शुक्राः ग्रहेषु पात्रेषुच दीयमानाः सुतासोस्माभिरभिषुताः सोमाः त्वा त्वां आचुच्यवुः आगच्छन्तु। च्युङ्प्लुङ्गतौ लुङि बहुलंछन्दसीति शपःश्लुः ततस्त्वमस्माभिर्दीयमानस्यास्यांधसः सोमस्य भवदीयं भागं तु क्षिप्रं पिब। यद्वा क्रियाग्रहणंकर्तव्यमिति संप्रदानं चतुर्थ्यर्थे बहुलंछन्दसीति षष्ठी तदिदंसोमरूपमन्नं शीघ्रं पिब। तदेवोपपादयति—हे इन्द्र विश्वासु सर्वासु दिक्षु ते त्वदर्थं सोमपुरोडाशादिहविर्हितं निहितं भवति ॥ २ ॥

२. स्तुत्य इन्द्र, पात्रों में दिये जाते हुए और अभिषुत सोम तुम्हारे पास आवें। इस सोम-भाग को शीघ्र पियो। इन्द्र, चारों दिशाओं में तुम्हारे लिए चरु-पुरोडाश आदि रक्खे हुए हैं।

पिबासोमंमदायकमिन्द्रश्येनाभृतंसुतम्।
त्वंहिशश्वंतीनांपतीराजांविशामसि ॥ ३ ॥

पिर्ब। सोमंम्। मदाय। कम्। इन्द्रं। श्येनऽआंभृतम्। सुतम्।
त्वम्। हि। शश्वंतीनाम्। पतिः। राजा। विशाम्। असिं ॥ ३ ॥

हे इन्द्र त्वं श्येनाभृतं हग्रहोर्भश्छन्दसीति हकारस्यभकारः द्युलोकात् श्येनरूपया गायत्र्या आहृतं सुतमभिषुतं सोमं मदाय हर्षाय पिब कमितिपूरणः सुखार्थेवा सुखेन सोमं पिब। हिशब्दो हेतौ हि यस्मात्त्वं शश्वतीनां बह्वीनां विशां मरुद्गणानां सर्वेषां देवगणानां च पतिः पालयिता स्वामी असि भवसि तथा राजा स्वतेजसा दीप्यमानश्चासि अतस्त्वं पूर्वं सोमं पिबेति ॥ ३ ॥

३. इन्द्र, श्येन-रूपिणी गायत्री के द्वारा द्युलोक से लाये गये और अभिषुत सोम का पान, हर्ष के लिए, सरलता से, करो; क्योंकि तुम सब मरुतों और देवों के स्वामी हो।

आभिप्लविकेषूक्थ्येषु तृतीयसवनेच्छावाकस्य श्रुधीहवंतिरश्च्याइति वैकल्पिकः स्तोत्रियः । सूत्रितंच—श्रुधीहवंतिरश्च्या आश्रुत्कर्णश्रुधीहवमिति ।

श्रुधीहवंतिरश्च्याइन्द्रयस्त्वासपर्यति ।
सुवीर्यस्यगोमतोरायस्पूर्धिमहाँअसि ॥ ४ ॥

श्रुधि । हवम् । तिरश्च्याः । इन्द्र । यः । त्वा । सपर्यति ।
सुऽवीर्यस्य । गोऽमतः । रायः । पूर्धि । महान् । असि ॥ ४ ॥

हे इन्द्र यः त्वा त्वां सपर्यति सपरशब्दः कंड्वादिः हविर्भिः परिचरति तादृशस्य तिरश्च्यः एतन्नामकस्य ऋषेः मम हवं स्तुतिभिः त्वद्विषयमाह्वानं श्रुधि शृणु । श्रुत्वाच हे इन्द्र त्वं सुवीर्यस्य शोभनवीर्योपेतस्य यद्वा वीरे पुत्रे भवं वीर्यं सुपुत्रवतः गोमतः गवादिपशुमतः रायोधनस्यदानेन पूर्धि अस्मान्पूरय । एतत्सामर्थ्यं कुतइत्यतआह— त्वं महान् गुणाधिकः देवानां श्रेष्ठश्चासि भवसि खलु ॥ ४ ॥

४. जो तिरश्ची (मैं) हवि के द्वारा तुम्हारी पूजा करता है, उसका आह्वान सुनो। तुम सुपुत्र और गौ आदिवाले धन के प्रदान से हमें पूर्ण करो। तुम श्रेष्ठ देव हो।

इन्द्रयस्तेनवीयसींगिरंमन्द्रामजीजनत् ।
चिकित्विन्मनसंधियंप्रत्नामृतस्यपिप्युषीम् ॥ ५ ॥ ३० ॥

इन्द्र । यः । ते । नवीयसीम् । गिरम् । मन्द्राम् । अजीजनत् ।
चिकित्वित्ऽमनसम् । धियम् । प्रत्नाम् । ऋतस्य । पिप्युषीम् ॥ ५ ॥ ३० ॥

हे इन्द्र योयजमानो नवीयसीं नवतरां पुनःपुनः क्रियमाणतया मन्द्रां मदकरीं गिरं स्तुतिलक्षणां वाचं ते त्वदर्थं अजीजनत् उदपीपदत् अकार्षीदित्यर्थः । तस्मै स्तोत्रे त्वं प्रत्नां पुरातनं ऋतस्य सत्यस्य संबन्धि यद्वा तृतीयार्थे षष्ठी सत्येन पिप्युषी प्रवृद्धं लिडचङोश्चेति प्यायतेःपीभावः तादृशं चिकित्विन्मनसं । कितज्ञाने क्वसौ रूपं आकारस्येकारश्छान्दसः चिकित्वांसि ज्ञातानि सर्वेषां हृदयानियियेति अमायया क्रियमाणं यत्तवरक्षणं सर्वेषां हृदयं प्रज्ञापयतीति तत्अतीन्द्रियार्थदर्शकं धियं त्वदीयं रक्षणाख्यं तस्मै कुरु ॥ ५ ॥

५. जिस यजमान ने नवीन और मदकर वाक्य, तुम्हारे लिए, उत्पन्न किया है, उसके लिए तुम प्राचीन, सत्ययुक्त, प्रवृद्ध और सबके हृदयग्राही रक्षण-कार्य को करो।

॥ इति षष्ठस्य षष्ठे त्रिंशोवर्गः ॥ ३० ॥

अथ षष्ठी–

तमुंष्टवामयंगिरइन्द्रंमुक्थानिवावृधुः ।
पुरूण्यस्यपौंस्यासिषासन्तोवनामहे ॥ ६ ॥

तम् । ऊँ इति । स्तवाम । यम् । गिरः । इन्द्रम् । उक्थानि ।
ववृधुः । पुरूणि । अस्य । पौंस्या । सिसासन्तः । वनामहे ॥ ६ ॥

ऋषयः परस्परमाहुः तं पूर्वोक्तलक्षणं उइत्यवधारणे तमेवेन्द्रं स्तवाम स्तुतिभिः स्तुमः। यं इन्द्रं गिरोस्माकं स्तुतयः उक्थानि शस्त्राणिच वावृधुः प्रावर्धयन् तं स्तुमः। ततोवयं अस्येन्द्रस्य पुरूणि बहूनि पौंस्या वीर्याणि सिसासन्तः षणसंभक्तौ सनीडभावपक्षे आत्वेकृते सनोतेरनइति सांहितिकं षत्वं तानि वीर्याणि संभक्तुमिच्छन्तः सन्तः वनामहे तमिन्द्रं स्तुतिभिः संभजामहे ॥ ६ ॥

६. जिन इन्द्र ने हमारी स्तुति और उक्थ (शस्त्र) को वर्द्धित किया है, उन्हीं की हम स्तुति करते हैं। हम इन इन्द्र के अनेक पौरुषों को सम्भोग करने की इच्छा से उनका भजन करेंगे।

अथ सप्तमी–

एतोन्विन्द्रंस्तवामशुद्धंशुद्धेनसाम्ना ।
शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ ७ ॥

एतो इति । नु । इन्द्रम् । स्तवाम । शुद्धम् । शुद्धेन । साम्ना ।
शुद्धैः । उक्थैः । ववृध्वांसम् । शुद्धः । आशीःऽवान् । ममत्तु ॥ ७ ॥

अत्रेतिहासमाचक्षते–पुराकिलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादिदोषेणात्मानमपरिशुद्धमित्यमन्यत ततस्तद्दोषपरिहारायेन्द्रः ऋषीनवोचत् अपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्तेच शुध्युत्पादकेन साम्ना शस्त्रैश्च परिशुद्धमकार्षुः पश्चात्पूतायेन्द्राय यागादिकर्माणि सोमादीनि हवींषि प्रादुरिति । एषोर्थः शाट्यायनकब्राह्मणे प्रतिपादितः–इन्द्रोवासुरान्हत्वापूतइवामेध्योमन्यत सोकामयत शुद्धमेव मासंतं शुद्धेन साम्ना स्तुयुरिति । सऋषीनब्रवीव स्तुतमेति ततऋषयःसामापश्यन्तेनास्तुवन्नेतोन्विन्द्रमिति । ततोवाइन्द्रः पूतः शुद्धोमेध्योभवदिति। तथाचास्या ऋचोयमर्थः–ऋषयः परस्परं ब्रुवन्ति नु क्षिप्रमेतो-आगच्छतैव आगत्यच शुद्धेन शुध्युत्पादकेन साम्ना तथा शुद्धैः शुद्धिहेतुभिरुक्थैः शस्त्रैश्चेन्द्रं शुद्धमपापिनं कृत्वा स्तवाम स्तुयाम ततः सामशस्त्रैश्च वावृध्वांसं पापराहित्येन वर्धमानं तमिम-

मिन्द्रं शुद्धः दशापवित्रेण आशीर्वान् आश्रयणवान् गव्यादिभिः छन्दसीरइति मतुपोवत्वं तादृशः सोमोममत्तु इन्द्रं मादयतु । मदायतेश्छान्दसः श्लुः ॥ ७॥

७. ऋषियो, शीघ्र आओ। हम शुद्ध साम-गान और शुद्ध उकथ मन्त्रों के द्वारा (वृत्र-वध-जन्य ब्रह्महत्या से) विशुद्ध इन्द्र की स्तुति करेंगे। दशापवित्र के द्वारा शोधित सोम वर्द्धित इन्द्र को हृष्ट करें।

इन्द्रंशुद्धोनआगंहिशुद्धःशुद्धाभिरूतिभिः ।
शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ ८ ॥

इन्द्रं । शुद्धः । नः । आ । गहि । शुद्धः । शुद्धाभिः । ऊतिऽभिः ।
शुद्धः । रयिम् । नि । धारय । शुद्धः । ममद्धि । सोम्यः ॥ ८ ॥

हे इन्द्र शुद्धः अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं नोस्मानागहि आगच्छ। शुद्धाभिरूतिभिः ऊतयोमरुतः अवन्ति सर्वत्रगच्छन्तीतिवा तेपि सामभिः शस्त्रैः परिपूताः तैर्मरुद्भिः सह शुद्धः पापरहि स्त्वमागहि आगत्यच शुद्धस्त्वं रयिं धनमस्मासु निधारय नितरां स्थापय। किंच शुद्धस्त्वं सोम्यः सोमार्होभूत्वा ममद्धि सोमेन माद्य। मदीहर्षे लोटि बहुलंछन्दसीति शपःश्लुः ॥ ८ ॥

८. इन्द्र, तुम शुद्ध हो। आओ। परिशुद्ध रक्षणों और मरुतों के साथ आओ। तुम शुद्ध हो। हममें धन स्थापित करो। तुम शुद्ध हो; सोम-योग्य हो; मत्त होओ।

अथ नवमी—

इन्द्रंशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ।
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषासासि ॥ ९ ॥ ३१ ॥

इन्द्रं । शुद्धः । हि । नः । रयिम् । शुद्धः ।
रत्नानि । दाशुषे । शुद्धः । वृत्राणि । जिघ्नसे ।
शुद्धः । वाजम् । सिसाससि ॥ ९ ॥ ३१ ॥

हे इन्द्र शुद्धः हिरवधारणे शुद्धएव त्वं रयिं धनं नोस्मभ्यं प्रयच्छ। तथा शुद्धस्त्वं दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनादीनिच देहि। ततः शुद्धः पापरहितस्त्वं वृत्राणि अपामावरकान् कर्मविघ्नकारिणः शत्रून् पापानिवा जिघ्नसे हंसि। ततः शुद्धः शत्रुहननदोषपरिहाराय अस्मदीयैः सामभिः शस्त्रैः परिशुद्धस्त्वं वाजमन्नं अस्मभ्यं सिसाससि प्रदा-

तुमिच्छसि। यदा यदा शत्रूनह हन्यां तदातदा शुद्ध्युत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेति अस्मभ्यमन्नं दातुं इच्छसीत्यर्थः॥ ९॥

९. इन्द्र, तुम शुद्ध हो। हमें धन दो। तुम शुद्ध हो। हव्यदाता को रत्न दो तुम शुद्ध हो। वृत्रादि शत्रुओं का वध करते हो। तुम शुद्ध हो। हमें अन्न देने की इच्छा करते हो।

॥ इति षष्ठस्य षष्ठे एकत्रिंशोवर्गः॥ ३१॥

अस्माइत्येकविंशत्यृचं तृतीयं सूक्तं। अत्रानुक्रम्यते—अस्मैसैका द्युतानोवा मारुतस्त्रैष्टुभं चतुर्थीविराळिष्यामीति मारुतः पादः ऐन्द्राबार्हस्पत्येति। द्युतानाख्यो मरुतांपुत्रऋषिः तिरश्चीर्नामांगिरसोवा। चतुर्थीविराट् शिष्टास्त्रिष्टुभः इन्द्रोदेवता इष्यामिवोमरुतइतिपादोमरुद्देवत्यः अवद्रप्सइत्येषात्विन्द्राबृहस्पतिदेवताका सूक्तविनियोगोलिंगादवगन्तव्यः।

अस्माउषासआतिरन्तयाममिन्द्रायनक्तमूर्म्याःसुवाचः।
अस्माआपोमातरःसप्ततस्थुर्नृभ्यस्तरायसिन्धवःसुपाराः॥ १॥

अस्मै। उषसः। आ। अतिरन्त। यामम्। इन्द्राय। नक्तम्।
ऊर्म्याः। सुऽवाचः। अस्मै। आपः। मातरः। सप्त। तस्थुः।
नृऽभ्यः। तराय। सिन्धवः। सुऽपाराः॥ १॥

इन्द्रसामर्थ्याद्व भीताउषसः उषःकालाः अस्मैपूर्वोक्तगुणोपेतायेन्द्राय यामं स्वस्वगमनं आ अतिरन्त तिरतिर्वर्धनकर्मा समन्तादवर्धयन्त। यथा पूर्वमुद्यन्ति तथेदानीमपि अस्मै उद्गताअभवन्। तथा ऊर्म्याः रात्रिनामैतत् ऋगतिप्रापणयोः अर्तेरूच्चेति मिप्रत्ययः भवेछन्दसीतियत् सर्वैरभिगन्तव्याः रात्रौहि सर्वे स्वनिवासं गच्छन्ति स्वनिलयप्राप्तिहेतुभूताः रात्रयः नक्तं अपररात्रिकाले सुवाचः शोभनवाचोभवन्ति तस्मिन्काले हि सर्वे वेदाध्ययनानि शास्त्रश्रवणचिन्तनादीनि कुर्वन्ति तस्मात्कल्याणवाचोभवन् इन्द्रेनुशासति वेदाद्यनुमाने निरताअभवन्। तथा आपः आप्लृव्याप्तौ सर्वतोव्याप्तामातरः जगतांनिर्मात्र्यः सप्त सप्तसंख्याकाः सिन्धवः स्यन्दमाना गंगाद्यानद्यः यद्वा सर्पणशीलाः सिन्धवः सरितः तासामावरकस्य अहेः हननेनोत्पादकत्वादस्माइन्द्राय तस्थुः नृभ्यस्तराय मनुष्याणां सुखेन तरणार्थं सुपाराः शोभनपाराः सुखेन तर्तुं योग्याः अभवन्नित्यर्थः॥ १॥

१. इन्द्र के डर के मारे उषायें अपनी गति को चढ़ाये हुई हैं। सारी रात्रियां, इन्द्र के लिए, आगामिनी रात्रि में सुन्दर वाक्यवाली होती हैं। इन्द्र के लिए सर्वत्र व्याप्त और मातृ-रूप गङ्गा आदि सात नदियां मनुष्यों के पार जाने के लिए सरलता से पार-योग्य होती हैं।

अथ द्वितीया–

अतिविद्धाविथुरेणाचिदस्त्रात्रिःसप्तसानुसंहितागिरीणाम्।
नतद्देवोनमर्त्यस्तुतुर्याद्यानिप्रवृद्धोवृषभश्चकार॥ २॥

अतिऽविद्धा। विथुरेण। चित्। अस्त्रा। त्रिः। सप्त।
सानु। सम्ऽहिता। गिरीणाम्। न। तत्। देवः। न। मर्त्यः।
तुतुर्यात्। यानि। प्रऽवृद्धः। वृषभः। चकार॥ २॥

विथुरेण। वर्णव्यत्ययः। चिदप्यर्थे विधुरेण असहायेनापि अस्त्रा अस्तुक्षेपणे ताच्छीलिकस्तृन् शत्रुक्षेपणशीलेनेन्द्रेण। यद्वा अस्त्रा अस्त्रेण वज्रेण त्रिःसप्त एकविंशतिसंख्यानि संहिता संहितानि एकत्र संघीभूतानि गिरीणां सप्तानां पर्वतानां सानु सानूनि अतिविद्धा अतिविद्धानि अतीत्य ताडितानि तेन मुक्तोवज्रपातः तानि भित्वागमदित्यर्थः। अत्र तैत्तिरीयकं ब्राह्मणं–दर्भपुंजीलमुद्धृत्य सप्तगिरीन् भित्वा तमहन्नित्यादि[1]। तस्येन्द्रस्य तत्तानि सानुभेदनानि कर्माणि देवइन्द्राद्व्यतिरिक्तोदेवो मर्त्यो मनुष्योवा नतुतुर्यात् नतरेत् तथाकर्तुं नशक्नोतीत्यर्थः। तॄप्लवनतरणयोः लिङिछान्दसः शपःश्लुः बहुलंछन्दसीत्युत्वं। यद्वा तुरत्वरणे जौहोत्यादिकः। प्रवृद्धः सोमपानेन बलेनवा प्रवृद्धः वृषभः कामानामुदकानांवा वर्षकः इन्द्रः यानि कर्माणि चकार कृतवान् तानि देवो मनुष्योवा नतुतुर्यात् नहन्यात् हन्तुं शक्तोनभवेत्। अस्मिन्पक्षे तूरी गतिहिंसात्वरणयोरित्येतस्यरूपं। यथायोग्यं दीर्घाभावोह्रस्वश्छान्दसः न तथाकर्तुं शक्नोतीत्यर्थः॥ २॥

२. असहाय होकर भी इन्द्र ने, अस्त्रों के द्वारा, एकत्र हुए इक्कीस पर्वत-तटों को तोड़ा था। अभिलाषा-दाता और प्रवृद्ध इन्द्र ने जो कार्य किये, उन्हें मनुष्य अथवा देवता नहीं कर सकते।

अथ तृतीया–

इन्द्रस्यवज्रआयसोनिमिश्लइन्द्रस्यबाह्वोर्भूयिष्ठमोजः।
शीर्षन्निन्द्रस्यक्रतवोनिरेकआसन्नेषन्तश्रुत्याउपाके॥ ३॥

इन्द्रस्य। वज्रः। आयसः। निऽमिश्लः। इन्द्रस्य। बाह्वोः।
भूयिष्ठम्। ओजः। शीर्षन्। इन्द्रस्य। क्रतवः। निरेके।
आसन्। आ। ईषन्त। श्रुत्यै। उपाके॥ ३॥

---

[1] तै० सं० ६. २. ४.

उक्तगुणस्य इन्द्रस्य वज्रआयसः अयसा निर्मितः अयोमयइत्यर्थः सवज्रः इन्द्रेण स्व-हस्ते निमिश्लः संमिश्रः अत्यन्तं संबद्धःकृतः अतएव इन्द्रस्य बाह्वोर्भुजयोर्भूयिष्ठं बहुतममोजोवीर्यमस्ति। तथानिरेके निपूर्वाद्रिच्यतेर्वा निस्पूर्वादेतेर्वेति संदेहादनवग्रहः। निर्गमने यदा युद्धार्थमिन्द्रोनिर्गच्छति तदानीमिन्द्रस्य शीर्षन् शिरसि क्रतवः कर्माणि शिरस्त्राणनिधानादीनि। यद्वा शिरइति गलप्रभृत्यूर्ध्वमंगमुच्यते तत्रत्याभ्यामक्षिभ्यां दर्शनप्रेरणादीनि कर्माणि भवन्ति। तथा आसन् आस्यस्य आसन्नादेशः आस्येच यानि कर्माणि युद्धार्थं वाजिनो गजान् संनाहयतेत्यादीनि भवन्ति। किंच श्रुत्यै संग्रामाय निर्गच्छतोनुशासत इन्द्रस्य वाक्यश्रवणार्थं सर्वे उपजीविनो भृत्याः उपाके अन्तिके एषन्त। अयमिंद्रोस्मान् कुत्रकुत्र कार्ये नियोक्ष्यतीत्येतेन मनसा तदन्तिके समन्तादागच्छन्ति। ईषगतिहिंसादर्शनेषु भौवादिकः॥ ३॥

३. इन्द्र का वज्र लोहे का बना हुआ है। वह वज्र उनके हाथ में संबद्ध है; इसलिए उनके हाथ में बहुत बल है। युद्ध-गमन-समय में इन्द्र के मस्तक में शिरस्त्राण आदि रहते हैं। इन्द्र की आज्ञा सुनने के लिए सब उनके समीप आते हैं।

मन्ये॑त्वा य॒ज्ञियं॑य॒ज्ञियानां॒मन्ये॑त्वा॒च्यव॑न॒मच्यु॑तानाम्।
मन्ये॑त्वा॒सत्व॑नामिन्द्रके॒तुंमन्ये॑त्वावृष॒भंच॑र्षणी॒नाम्॥ ४॥

मन्ये॑। त्वा॒। य॒ज्ञिय॑म्। य॒ज्ञिया॑नाम्। मन्ये॑। त्वा॒। च्यव॑नम्। अच्यु॑तानाम्। मन्ये॑। त्वा॒। सत्व॑नाम्। इ॒न्द्र॒। के॒तुम्। मन्ये॑। त्वा॒। वृ॒ष॒भम्। च॒र्ष॒णी॒नाम्॥ ४॥

एतदादयः प्रत्यक्षाः हे इन्द्र त्वा त्वां यज्ञियानां यज्ञार्हाणां देवानामपि यज्ञियं पुरस्तादेव यज्ञार्हमितिमन्ये अवबुध्ये। तथा त्वा त्वां अच्युतानां च्युतिरहितानामपि पर्वतानां च्यवनं च्यावयितारं वज्रेण विभेदकमिति मन्ये जानामि। यद्वा अच्युतानां बलेनच्यावयितुमशक्यानां बलिनां वीराणां अपि स्वबलेन विद्रावयितारमिति जाने। किंच हेइन्द्र सत्वनां सत्वानां षणसंभक्तौ क्वनिप् संभजमानानां भटानां केतुमुच्छ्रितमिति मन्ये। यद्वा सत्वनां स्तुतिभिर्हविर्भिर्वा संभक्तॄणां यष्टॄणां केतुं आत्मनः प्रज्ञापकं तेषां पूजनीयमितिवा मन्ये। तथा त्वा त्वां चर्षणीनां मनुष्याणां वृषभं अभिमतफलवर्षकमिति मन्ये जानामि॥ ४॥

४. इन्द्र मैं तुम्हें यज्ञार्हों में भी यज्ञ-योग्य समझता हूँ। तुम्हें मैं पर्वतों का भेदक समझता हूँ। तुम्हें मैं सैन्यों का पताका समझता हूँ। तुम्हें मैं मनुष्यों का अभिमत-फल-दाता समझता हूँ।

आयद्वज्रं॑बा॒ह्वोरि॑न्द्र॒धत्से॑मद॒च्युत॒महं॑ये॒हन्त॒वाउ॑।
प्रपर्व॑ता॒अन॑वन्त॒प्रगावः॒प्रब्र॒ह्माणो॑अभि॒नक्ष॑न्त॒इन्द्र॑म्॥ ५॥ २२॥

आ । यत् । वज्रम् । बाह्वोः । इन्द्र । धत्से । मदऽच्युतम् ।
अहये । हन्तवै । ऊँ इति । प्र । पर्वताः । अनवन्त । प्र । गावः ।
प्र । ब्रह्माणः । अभिऽनक्षन्तः । इन्द्रम् ॥ ५॥ ३२ ॥

हे इन्द्र बाह्वोर्वज्रमायुधं कीदृशं मदच्युतं शत्रूणां मदस्य च्यावयितारं यद्यदा आधत्से आदधासि । किमर्थं अहये अहिनामानमसुरं मेघंवा हन्तवै उइत्यवधारणे हन्तुमेव। किंच यदावा इन्द्रेणं अहिनामके असुरे हते सति पर्वता जगदापूरकामेघाः प्रानवन्त नुशब्दे प्रकर्षेणाशब्दयन् यदावा । गावः तत्रस्थान्युदकानि च प्रकर्षेण ध्वनिमकुर्वन् । उदकान्यध्वनयन्नित्यत्र याजुषो-निगमः—यददः संप्रयन्तीरहावनदताहते तस्मादानद्योनामस्थेति । तुरीयःपादः परोक्षः तदानीम-भिनक्षन्तः अभितइन्द्रं स्तुतिभिर्हविर्भिर्गच्छन्तो ब्रह्माणो ब्राह्मणाइन्द्रं पर्यचरन् । यद्वा ब्रह्माणः वृहवृद्धौ प्रवृद्धाः पर्वतादयः इन्द्रमस्तुवन् इति ॥ ५ ॥

५. इन्द्र, तुम जिस समय दोनों बाहुओं से शत्रुओं का गर्व चूर्ण करते हो, जिस समय वृत्रवध के लिए वज्र धारण करते हो, जिस समय मेघ और जल शब्द करते हैं, उस समय चारों ओर से इन्द्र के पास जाते हुए स्तोता लोग इन्द्र की सेवा करते हैं।

॥ इति षष्ठस्य षष्ठे द्वात्रिंशोवर्गः ॥ ३२ ॥

तमुंष्टवामयइमाजजानविश्वाजातान्यवराण्यस्मात् ।
इन्द्रेणमित्रंदिधिषेमगीर्भिरुपोनमोभिर्वृषभंविशेम ॥ ६ ॥

तम् । ऊँ इति । स्तवाम । यः । इमा । जजान । विश्वा । जातानि ।
अवराणि । अस्मात् । इन्द्रेण । मित्रम् । दिधिषेम । गीःऽभिः ।
उपो इति । नमःऽभिः । वृषभम् । विशेम ॥ ६ ॥

परस्परं स्तोतारआहुः तमु तमेवेन्द्रं वयं संहत्य स्तवाम स्तोत्रं करवाम । यइन्द्रः इमा इमानि भूतानि जजान जनयामास तस्मादस्मादिन्द्रादेव विश्वा विश्वानि सर्वाणि वस्तुजातानि सर्वाणि जगन्तिवा अवराणि अवरकालीनानि पश्चाद्भवानि भवन्ति तेनानेनेन्द्रेण वयं गीर्भिः स्तुतिभिः मित्रं लुप्तभावे प्रत्ययेन निर्देशः मैत्रीं दिधिषेम धारयेम । दिधिष धारणेइति धातुं केचिद्वदन्ति यद्वा मित्रं छान्दसमेकवचनं वयमिन्द्रेणसह मित्राणि सुहृदोभवामेति गीर्भिरिन्द्रं शब्दयेम । धिषशब्दे जौहोत्यादिकः अत्रव्यत्ययेन द्विविकरणाता श्लुश्च शप्च । ततोनमोभिः क्रियमाणै-र्नमस्कारैः दीयमानैर्हविर्भिर्वा वृषभं कामानांवर्षकमिन्द्रं उपोविशेम अस्मदभिमुखमेव कुर्याम॥६॥

६. जिन इन्द्र ने इन प्राणियों को उत्पन्न किया और जिनके पीछे सारी वस्तुएं उत्पन्न हुईं, स्तुति-द्वारा उन्हीं इन्द्र को हम मित्र बनावेंगे और नमस्कार के द्वारा काम-दाता इन्द्र को अपने सामने करेंगे।

---

अथ सप्तमी–

वृत्रस्य॑त्वाश्व॒सथा॒दीष॑माणा॒विश्वे॑दे॒वाअ॑जहु॒र्ये॑सखा॑यः ।
म॒रुद्भि॑रिन्द्रस॒ख्यं॑तेअ॒स्त्वथे॒माविश्वा॒ःपृत॑नाजयासि ॥ ७ ॥

वृ॒त्रस्य॑ । त्वा॒ । श्व॒सथा॑त् । ईष॑माणाः । विश्वे॑ । दे॒वाः । अ॒जहु॒ः ।
ये । सखा॑यः । म॒रुत्ऽभिः॑ । इ॒न्द्र॒ । स॒ख्यम् । ते॒ । अ॒स्तु॒ । अथ॑ ।
इ॒माः । विश्वा॑ः । पृत॑नाः । ज॒या॒सि॒ ॥ ७ ॥

हे इन्द्र तव ये विश्वेदेवाः प्राक्सखायः संग्रामे सखित्वं कुर्यामिति मित्राणि अभवन् ते सर्वे देवाः वृत्रस्य वृत्रासुरस्य श्वसथात् श्वसेरौणादिकोथप्रत्ययः सर्वानागच्छतोदृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वासमकार्षीत् श्वासाद्भीताः सन्तः अतएव ईषमाणाः सर्वतः पलाय-मानाः त्वा त्वामजहुः संग्राममेत्यक्तवन्तः एवंसति हेइन्द्र मरुद्भिः सह सख्यं सखिभावस्ते त-वास्तु । ये मरुतस्त्वां नपरित्यजन्ति तैः सहेति । अथानंतरं इमा विश्वाः पृतनाः शत्रुसेना ज-यासि स्वबलेनाभिभवसि अनेन वृत्रघ्नं तमिन्द्रमाह। अत्र इन्द्रोवैवृत्रंहनिष्यन् इत्यादिब्राह्मणमनु-संधेयम्[1] ॥ ७ ॥

७. इन्द्र, जो विश्वदेव तुम्हारे सखा हुए थे, उन्होंने वृत्रासुर के श्वास से डरकर भागते हुए तुम्हें छोड़ दिया था। मरुतों के साथ तुम्हारी मैत्री हुई। अनन्तर तुमने सारी शत्रु-सेना को जीता।

अथाष्टमी–

त्रिःष॒ष्टिस्त्वा॑म॒रुतो॑वावृधा॒नाउ॒स्राइ॑वरा॒शयो॑य॒ज्ञिया॑सः ।
उप॑त्वेमःकृ॒धिनो॑भाग॒धेयं॒शुष्मं॑तए॒नाह॒विषा॑विधेम ॥ ८ ॥

त्रिः । ष॒ष्टिः । त्वा॒ । म॒रुतः॑ । व॒वृ॒धा॒नाः । उ॒स्राःऽइ॑व । रा॒शयः॑ ।
य॒ज्ञिया॑सः । उप॑ । त्वा॒ । आ । इ॒म॒ः । कृ॒धि । न॒ः । भा॒ग॒ऽधेय॑म् ।
शुष्म॑म् । ते॒ । ए॒ना । ह॒विषा॑ । वि॒धे॒म ॥ ८ ॥

प्रसंगादेतावन्तोमरुतः सहायाअभवन्नित्याह—हे इन्द्र त्रिः त्रयः जसः सुपांसुलुगितिसुः षष्टिः षष्ट्युत्तरं त्रिसंख्याका मरुतः। तेच तैत्तिरीयके—ईदृङ्चान्यादृङ्चेत्यादिना नवसुगणेषु सप्तसप्तनिपादिताः । तत्र आदिपंचगणाः संहितायामाम्नायन्ते स्वतवांश्च प्रघासीच सांतपनश्च

---

1 ऐ०ब्रा० ३. २०।

गृहमेधीच क्रीडीच शाकीचोज्जषीचेति। खैलिकः षष्ठोगणः ततोधुनिश्च ध्वान्तश्चेत्याद्यास्त्रयोरण्येनुवाक्याः। इत्थं त्रयः षष्टिसंख्याकाः उस्राइवराशयः गावइव संघीभूतास्ते त्वा त्वां वावृधानाः स्वबलेन वर्धितवन्तः तेमरुतः यज्ञियासो यज्ञार्हाअभवन्। तं मरुत्सहायमिन्द्रं त्वा त्वां वयं एमः उपगच्छामः ततस्त्वं नोस्मभ्यं भागधेयं भजनीयं धनं कृधिकुरु। पश्चाद्वयमपि एना एनेन सोमलक्षणेन हविषा ते तुभ्यं शुष्मं शत्रूणां शोषकं बलं विधेम। विधविधाने विदध्म कुर्मइत्यर्थः ॥ ८ ॥

८. इन्द्र, ६३ मरुतों ने, एकत्र गो-यूथ के समान, तुम्हें वर्द्धित किया था। इसी लिए वे यजनीय हुए थे। हम उन्हीं इन्द्र के पास जायँगे। इन्द्र, हमें भजनीय अन्न दो। हम भी तुम्हें शत्रु-घातक बल देंगे।

तिग्ममायुधंमरुतामनीकंकस्तइन्द्रप्रतिवज्रंदधर्ष।
अनायुधासोअसुराअदेवाश्चक्रेणताँअपवपऋजीषिन् ॥ ९ ॥

तिग्मम्। आयुधम्। मरुताम्। अनीकम्। कः। ते। इन्द्र। प्रति। वज्रम्। दधर्ष। अनायुधासः। असुराः। अदेवाः। चक्रेण। तान्। अप। वप। ऋजीषिन् ॥ ९ ॥

हे इन्द्र ते तव स्वभूतं तिग्मं तीक्ष्णमायुधं आयुध्यतेनेनेति आयुधं धनुः तत्र मरुतां त्रयःषष्टिसंख्याकानां त्वत्सहायानां अनीकं संघंच त्वदीयं वज्रंच कः कोवा देवोमनुष्योवा प्रतिदधर्ष प्रतिकूलमभिभवति अभिभावुकोनास्तीत्यर्थः। धृषप्रसहने। आधृषाद्वेति विभाषितणिचि तदभावे लिटिरूपं। अतएव अनायुधासः धनुराद्यायुधवर्जिता अदेवाः देववर्जिता देवद्विषोये असुराः सन्ति हे ऋजीषिन् अपार्जितोभिषुत्यः सोम ऋजीषी तद्वन्निन्द्र तानसुरान् चक्रेण चक्रसमानवीर्येण चक्ररूपेण वज्रेण वा अपवप अपगतान्कुरु अपनुदेत्यर्थः ॥ ९ ॥

९. इन्द्र, तुम्हारे हथियार तेज हैं; तुम्हारी सेना मरुत है। तुम्हारे वज्र का विरुद्धाचरण कौन कर सकता है? हे सोमवाले इन्द्र, चक्र के द्वारा आयुध-शून्य और देव-द्रोही असुरों को दूर कर दो।

अथ दशमी—

महउग्रायतवसेसुवृक्तिंप्रेरयशिवतमायपश्वः।
गिर्वाहसेगिरइन्द्रायपूर्वीर्धेहितन्वेकुविदङ्गवेदत् ॥ १० ॥ ३३ ॥

महे। उग्राय। तवसे। सुऽवृक्तिम्। प्र। ईरय। शिवऽतमाय। पश्वः। गिर्वाहसे। गिरः। इन्द्राय। पूर्वीः। धेहि। तन्वे। कुवित्। अङ्ग। वेदत् ॥ १० ॥ ३३ ॥

हे स्तोतः महे महते गुणैः उग्राय बलेनोद्गूर्णाय तवसे तुइति धातुर्वृद्ध्यर्थः । प्रवृद्धाय शिवतमाय कल्याणतमायेन्द्राय सुवृक्तिंशोभनां स्तुतिं प्रेरय चोदय कुरु । किमर्थं पश्वः पशोः द्विपाच्च चतुष्पाच्च पशोर्मम अस्मदीयाय गवेवा यद्वा पशोरतीन्द्रियार्थं द्रष्टुर्मम धनादिकं दातुं गवे सुखादिकं प्रदातुमिन्द्राय स्तुतिं प्रेरय । एतदेवाह हे स्तोतः गिर्वाहसे गीर्भिः स्तुतिभिरुह्यमानायेन्द्राय पूर्वीर्बह्वीः गिरः स्तुतीः धेहि कुरु । ततः सइन्द्रः तन्वे तनोति कुलमिति तनूस्तनयः तस्मै पुत्राय स्वशरीराय आत्मनेवा कुवित् बहुनामैतत् बहुधनं अंग क्षिप्रं वेदत् लंभयतु ददातु । विद्लृलाभे लेटचडागमः कुविच्छन्दयोगादनिघातः ॥ १० ॥

१०. स्तोता, पशु-प्राप्ति के लिए महान्, उग्र, प्रवृद्ध और कल्याणमय इन्द्र की सुन्दर स्तुति करो। स्तुतिपात्र इन्द्र के लिए अनेक स्तुतियाँ करो। पुत्र के लिए इन्द्र प्रचुर धन भेजें।

॥ इति षष्ठस्य षष्ठे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

उक्थवाहसेविभ्वेमनीषांद्रुणानपारमीरयानदीनाम् ।
निस्पृशधियातन्विश्रुतस्यजुष्टतरस्यकुविदङ्गवेदत् ॥ ११ ॥

उक्थऽवाहसे । विऽभ्वे । मनीषाम् । द्रुणा । न । पारम् । ईरय । नदीनाम् । नि । स्पृश । धिया । तन्वि । श्रुतस्य । जुष्टऽतरस्य । कुवित् । अङ्ग । वेदत् ॥ ११ ॥

हे स्तोतः उक्थवाहसे उक्थैः स्तोत्रशस्त्रादिभिरुह्यमानाय अतएव विभ्वे महते यद्वा शत्रूणामभिभवित्रे इन्द्राय इन्द्रार्थं मनीषां मनसईषां स्तुतिं ईरय प्रेरय । तत्रदृष्टान्तः—द्रुणानयथा नाविकः नदीनां नदमानानां सरितां पारं तीरंप्रति पथिकं द्रुणा नावा प्रापयति तद्वदिंद्रंप्रति स्तुतिं गमयेति । किंच निस्पृश नितरां धनं स्पर्शय गमय तन्वि आत्मनि पुत्रेवा । कीदृशं श्रुतस्य सर्वत्र विश्रुतस्य प्रसिद्धस्य जुष्टतरस्य अत्यर्थं प्रीणयितुरिन्द्रस्य स्वभूतं धनं धिया त्वदीयया स्तुत्या कर्मणावा आत्मानं गमय ततस्त्वयाभिष्टुतइन्द्रः कुविद्बहुधनं अंग क्षिप्रं वेदत् लंभयतु ददातु ॥ ११ ॥

११. मन्त्रों के द्वारा प्राप्त और महान् इन्द्र के लिए, नदी को पार करनेवाली नौका के समान, स्तुति करो। बहु-प्रसिद्ध और प्रसन्नता-दायक इन्द्र धन दें। पुत्र के लिए इन्द्र बहुत धन दें।

अथ द्वादशी—

तद्विविड्ढियत्तइन्द्रोजुजोषत्स्तुहिसुष्टुतिंनमसाविवास ।
उपभूषजरितर्मारुवण्यश्रावयावाचंकुविदङ्गवेदत् ॥ १२ ॥

तत् । विविड्ढि । यत् । ते । इन्द्रः । जुजोषत् । स्तुहि । सुऽस्तुतिम् ।
नमसा । आ । विवास । उप । भूष । जरितः । मा । रुवण्यः ।
श्रवय । वाचम् । कुवित् । अङ्ग । वेदत् ॥ १२ ॥

हे ऋत्विक् तत्सोमादिहविः स्तोत्रंवा विविड्ढि व्यापय तानीन्द्रार्थं कुर्वित्यर्थः। ते तव स्वभूतं यद्धविः स्तोत्रंवा इन्द्रोजुजोषव् स्वीकुर्याव तत्कुरु । जुषीप्रीतिसेवनयोः लेटिशपःश्लुः अडागमश्छान्दसत्वाव् श्नाभ्यस्तस्येति गुणप्रतिषेधाभावः । हे स्तोतः सुष्टुतिं सुस्तुतिं शोभनास्तुतिर्यस्य सतथोक्तः तादृशमिन्द्रं स्तुहि । तथा नमसा स्तोत्रेण हविषावा आविवास इन्द्रमाभिमुख्येन परिचर । विवासतिःपरिचरणकर्मा लोटिरूपं । हे जरितः स्तोतः उपभूष भूषअलंकारे अलंकृतोभव मारुवण्यः धनाभावाव् मा ध्वनयः मारोदीरित्यर्थः । धनागमने कारणमाह—हे स्तोतः वाचं स्तुतिं इन्द्रं श्रावय ज्ञापय ततस्त्वया स्तुतइन्द्रः तुभ्यं कुविव् बहुधनं क्षिप्रं प्रयच्छतु ॥ १२ ॥

१२. इन्द्र जो चाहते हैं, वह करो। सुन्दर स्तुति का वाचन करो। स्तोत्र के द्वारा इन्द्र की सेवा करो। स्तोता, अलंकृत होओ। दरिद्रता के कारण मत रोओ। इन्द्र को अपनी स्तुति सुनाओ। इन्द्र तुम्हें बहुत धन देंगे।

पृष्ठ्यषडहगतेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे अवद्रप्सइतितृचः । सूत्रितंच—अवद्रप्सोअंशुमतीमतिष्ठदिति तिस्रोच्छामइन्द्रमिति नित्यमैकाहिकमिति ।

तत्र प्रथमा सूक्ते त्रयोदशी—

अवद्रप्सोअंशुमतीमतिष्ठदियानःकृष्णोदशभिःसहस्रैः ।
आवत्तमिन्द्रःशच्याधमन्तमपस्नेहितीर्नृमणाअधत्त ॥ १२ ॥

अव । द्रप्सः । अंशुऽमतीम् । अतिष्ठत् । इयानः । कृष्णः । दशऽभिः ।
सहस्रैः । आवत् । तम् । इन्द्रः । शच्या । धमन्तम् । अप ।
स्नेहितीः । नृऽमनाः । अधत्त ॥ १२ ॥

अत्रेतिहासमाचक्षते—किलकृष्णोनामासुरः दशसहस्रसंख्यैरसुरैः परिवृतःसन् अंशुमतीनामधेयाया नद्यास्तीरे अतिष्ठव । तत्र तं कृष्णमुदकमध्ये स्थितं इन्द्रोबृहस्पतिनासहागच्छव आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पतिसहायोजघानेति । केचिदन्यथावदन्ति—तेषां कथाहेतुः द्रप्सइति उदककणोभिधीयते सतुसोमः । द्रप्सश्चस्कन्देत्यादिषु । सोमपरत्वेनोक्तत्वादेतव-

---

१ ऋ० सं० ७. ६. २५ ।

पदमाश्रित्याहुः—अपक्रम्यतुदेवेभ्यः सोमोवृत्रभयार्दितः। नदीमंशुमतींनाम अभ्यतिष्ठत्कुरून्प्रति १ तंबृहस्पतिनैकेन सोभ्ययाद्वृत्रहासह। योत्स्यमानंसुसंहृष्टैर्मरुद्भिर्विविधायुधैः २ दृष्ट्वा तानायतःसोमः स्वबलेनव्यवस्थितः। मत्वानोवृत्रमायान्तं जिघांसुमरिसेनया ३ व्यवस्थितंधनुष्मन्तं तमुवाचबृहस्पतिः। मरुत्पतिरयंसोम: प्रेहिदेवान्पुनर्विभो ४ सोब्रवीन्नेतितंशक्रः ओजसैवबलाद्बली। इयायदेवानादाय तंपपुर्विधिवत्सुराः ५ जघ्नुःपीत्वाचदैत्यानां समरेनवतीर्नव। तदवद्रप्सइत्यस्मिन्नृचेसर्वंनिगद्यते ६ एतदनार्षत्वेनादरणीयंभवति। एषोर्थः क्रमेणऋक्षुवक्ष्यते। तथाचास्याऋचोयमर्थः—द्रप्सः द्रुतं सरति गच्छतीतिद्रप्सः पृषोदरादिः द्रुतं गच्छन् दशभिः सहस्रैः दशसहस्रसंख्यैरसुरैः इयानः कृष्णः एतन्नामकःअसुरः अंशुमतीं नामनदीं अवातिष्ठत् अवतिष्ठते ततः शच्या कर्मणा प्रज्ञानेनवा धमन्तं उदकस्यान्तरुच्छ्वसन्तं यद्वा जगद्भीतिकरं शब्दं कुर्वन्तं तं कृष्णासुरं इन्द्रोमरुद्भिःसह आवत् प्रापोत्। पश्चात् तं कृष्णासुरं तस्यानुचरांश्च हतवानित्याह—नृमनाः नृषु मनोयस्यसः यद्वा कर्मनेतृषु ऋत्विक्षु एकविधं मनोयस्य सतथोक्तः तादृशः सन् स्नेहितीः स्नेहितिर्वधकर्मसुपठितः सर्वस्यहिंसित्रीस्तस्यसेनाः अपाधत्त अपधानं हननं अवधीदित्यर्थः। अपस्नीहितिं नृमणाअधद्राइति छन्दोगाः पठंति। तस्यानुचरान्हत्वा तं द्रुतं गच्छन्तमसुरं अपाधत्त हतवान्॥ १३॥

१३. दस सहस्र सेनाओं के साथ शीघ्र जानेवाला कृष्ण नाम का असुर अंशुमती नदी के किनारे रहता था। बुद्धि के द्वारा इन्द्र ने उस शब्द करनेवाले असुर को प्राप्त किया। पीछे इन्द्र ने, मनुष्यों के हित के लिए, कृष्णासुर की हिंसक सेना का वध कर डाला।

अथ चतुर्दशी—

द्रप्समपश्यंविषुणेचरन्तमुपह्वरेनद्योअंशुमत्याः।
नभोनकृष्णमवतस्थिवांसमिष्यामिवोवृषणोयुध्यताजौ॥ १४॥

द्रप्सम्। अपश्यम्। विषुणे। चरन्तम्। उपऽह्वरे। नद्यः। अंशुऽमत्याः।
नभः। न। कृष्णम्। अवतस्थिऽवांसम्। इष्यामि। वः।
वृषणः। युध्यत। आजौ॥ १४॥

चतुर्थः पादोमारुतः मरुतः प्रति यद्वाक्यमिन्द्रउवाच। तदत्रकीर्त्यते हे मरुतः द्रप्सं द्रुतगामिनं कृष्णमहमपश्यं अदर्शं। कुत्रवर्तमानं विषुणे विष्वगंचने सर्वतोविस्तृतेदेशे यद्वा विषुणे विषमे परैरदृश्ये गुहारूपे देशे चरन्तं परितोगच्छन्तं किंच अंशुमत्याः एतन्नामिकायानद्यो नद्याः उपह्वरे अत्यन्तंगूढे स्थाने नभोन नभसि यथादित्योदीप्यते तद्वत्तत्र दीप्यमानं अवतस्थिवांसं उदकस्यान्तरवस्थितं कृष्णं एतन्नामकं असुरं अपश्यं तस्मिन् दृष्टेसति हे वृषणः कामानामुदकानांवा सेकारोमरुतः वोयुष्मान् युद्धार्थं इष्यामि अहमिच्छामि। ततोयूयं तमिमं कृष्णं

आजौ अजन्ति गच्छन्त्यत्रयोद्धारः आयुधानि प्रक्षेपयन्तीतिवा आजिः संग्रामः तस्मिन् युध्यत संहरत वाक्यभेदादनिघातः। केचिदिष्यामिवोमरुतइतिपठन्ति[1]। तत्र हेमरुतः वोयुष्मानिच्छामीत्यर्थोभवति ॥ १४ ॥

१४. इन्द्र ने कहा—"द्रुतगामी कृष्ण को मैंने देखा है। वह अंशुमती नदी के तट पर, गूढ़ स्थान में, विस्तृत प्रदेश में, विचरण करता और सूर्य के समान अवस्थान करता है। अभिलाषा-दाता मरुतो, मैं चाहता हूँ कि तुम लोग युद्ध करो और युद्ध में उसका संहार करो।

अधंद्रप्सोअंशुमत्याउपस्थेधारयत्तन्वंतित्विषाणः।
विशोअदेवीरभ्याचरन्तीर्बृहस्पतिनायुजेन्द्रःससाहे ॥१५॥३४॥

अधं। द्रप्सः। अंशुऽमत्याः। उपऽस्थे। अधारयत्। तन्वम्। तित्विषाणः। विशः। अदेवीः। अभि। आऽचरन्तीः। बृहस्पतिना। युजा। इन्द्रः। ससहे ॥ १५ ॥ ३४ ॥

अध अथ द्रप्सोद्रुतगामी कृष्णः अंशुमत्यानद्याः उपस्थे समीपे तित्विषाणो दीप्यमानः सन् तन्वं आत्मीयं शरीरं अधारयत् परैराहिंस्यत्वेन बिभर्ति। यद्वा बलमास्यर्थं स्वशरीरमाहारादिभिरपोषयत् तत्र इन्द्रोगत्वा बृहस्पतिना एतन्नामकेन देवेन युजा सहायेन अदेवीः अद्योतमानाः कृष्णरूपाइत्यर्थः। यद्वा पापयुक्तत्वादस्तुत्याः आचरन्तीः आगच्छन्तीर्विशः असुरसेनाः अभिससहे जघान। तमवधीदित्यर्थः प्रसंगादवगम्यते ॥१५॥

१५. द्रुतगामी कृष्ण अंशुमती नदी के पास दीप्तिमान् होकर, शरीर धारण करता है। इन्द्र ने बृहस्पति की सहायता से, देव-शून्य और आनेवाला सेना का वध, कृष्ण के साथ, कर डाला।

॥ इति षष्ठस्य षष्ठे चतुस्त्रिंशोवर्गः ॥ ३४ ॥

अथ षोडशी—

त्वंहत्यत्सप्तभ्योजायमानोशत्रुभ्योअभवःशत्रुरिन्द्र।
गूळ्हेद्यावापृथिवीअन्वविन्दोविभुमद्भ्योभुवनेभ्योरणंधाः ॥ १६ ॥

त्वम्। ह। त्यत्। सप्तऽभ्यः। जायमानः। अशत्रुऽभ्यः। अभवः। शत्रुः। इन्द्र। गूळ्हे इति। द्यावापृथिवी इति। अनु। अविन्दः। विभुमत्ऽभ्यः। भुवनेभ्यः। रणम्। धाः ॥ १६ ॥

---

[1] पाठान्तरे।

हे इन्द्र त्वं खलु त्यत् तत् कर्म कृतवानसि । किंतत् उच्यते—जायमानस्त्वं प्रादुर्भवन्नेव अशत्रुभ्यः शत्रुरहितेभ्यः सप्तभ्यः कृष्णवृत्रनमुचिशंबरादिसप्तभ्योबलवद्भ्यः शत्रुभ्यः तदर्थं शत्रुरभवः । यद्वा सप्तभ्यः सप्तैवांगिरसः । सप्तभ्यः अंगिरोभ्यः गवानयनार्थं प्रादुर्भवन्नेवाशत्रुभ्योबलवद्भ्यः पणिभ्यः शत्रुरभवः । किंच हे इन्द्र त्वं गूळ्हे तमसा गूढे संवृते द्यावापृथिवी द्यावापृथिव्यौ सूर्यात्मना ते प्रकाश्य अनुक्रमेण अविन्दः अलभथाः । तथा विभुमद्भ्यः महत्त्वयुक्तेभ्योभुवनेभ्योलोकेभ्यः रणं रमणं धाः धारयसि विदधासीत्यर्थः ॥ १६ ॥

१६. इन्द्र, तुमने ही वह कार्य किया है। जन्म के साथ ही तुम ही शत्रु-शून्य कृष्ण, वृत्र, नमुचि, शम्बर, शुष्ण, पणि आदि सात शत्रुओं के शत्रु हुए थे। तुम अन्धकारमयी द्यावापृथिवी को प्राप्त हुए हो। तुमने मरुतों के साथ, भुवनों के लिए, आनन्द को धारण किया है।

त्वंहत्यदंप्रतिमानमोजोवज्रेणवज्रिन्धृषितोजघंथ ।
त्वंशुष्णस्यावातिरोवधत्रैस्त्वंगाइन्द्रशच्येदविन्दः ॥ १७ ॥

त्वम् । ह । त्यत् । अप्रतिऽमानम् । ओजः । वज्रेण । वज्रिन् ।
धृषितः । जघन्थ । त्वम् । शुष्णस्य । अव । अतिरः । वधत्रैः ।
त्वम् । गाः । इन्द्र । शच्या । इत् । अविन्दः ॥ १७ ॥

हे इन्द्र त्वंह त्वंखलु त्यदेतत्कर्माकार्षीः । किंतत् अभिधीयते—यतः हेवज्रिन् वज्रवन्निन्द्र धृषितः धृष्टः संग्रामेषु शत्रुहनने कुशलःसन् । यद्वा धृष्टोधीरःसन् अप्रतिमानं प्रतिमानमुपमा । निरुपमं अस्य सदृशं अन्यदीयं वीर्यं नास्तीत्यर्थः । तादृशं शुष्णस्य ओजोबलं वज्रेणायुधेन जघंथ हतवानसि । अभ्यासाच्चेति हंतेर्घत्वं । पूर्वं शुष्णस्य बलं विनाश्य इदानीं शुष्णमपिहतवानित्याह—त्वं वधत्रैः हननसाधनैः आयुधैः शुष्णस्य । क्रियाग्रहणं कर्तव्यमिति संप्रदानसंज्ञा चतुर्थ्यर्थे बहुलमिति षष्ठी । शुष्णमवातिरः कुत्साय राजर्षये अवाङ्मुखं कृत्वा अवधीः । तथाचनिगमः—कुत्सायशुष्णमशुषंनिबर्हीरिति[1] । तथा हे इन्द्र त्वं शच्या स्वकीयया प्रज्ञया कर्मणावा गाः शत्रून्हत्वा तेषां गाअविन्दः अलभथाः । यद्वा अंगिरसां गाः पणीन् संप्रहृत्य लब्धवानसि ॥ १७ ॥

१७. इन्द्र, तुमने वह कार्य किया है। वज्रधर इन्द्र, संग्राम में कुशल होकर तुमने वज्र के द्वारा शुष्ण के अनुपम बल को नष्ट किया है। तुमने ही आयुधों के द्वारा शुष्ण को, कुत्स राजर्षि के लिए, निम्नमुख करके मार डाला है। अपने कर्म के द्वारा तुमने गो-प्राप्ति की है।

त्वंहत्यद्वृषभचर्षणीनांघनोवृत्राणांतविषोबभूथ ।
त्वंसिंधूँरसृजस्तस्तभानान्त्वमपोअजयोदासपत्नीः ॥ १८ ॥

---

१ ऋ० सं० ३. ५. १९. ।

त्वम् । ह । त्यत् । वृषभ । चर्षणीनाम् । घनः । वृत्राणाम् ।
तविषः । बभूथ । त्वम् । सिन्धून् । असृजः । तस्तभानान् ।
त्वम् । अपः । अजयः । दासऽपत्नीः ॥ १८ ॥

त्वंखलु त्यत् तत्कर्मकृतवानसि । किंतव हे वृषभ कामानां वर्षितरिन्द्र चर्षणीनां यष्ट्रणां मनुष्याणां भावितानां वृत्राणां उपद्रवाणां घनोहन्ता । अमूर्त्यर्थेपि छन्दोविषयत्वान्निपातनं । तादृशस्त्वं तविषः प्रवृद्धोबलवान्वा बभूथ बभूविथ । बभूथाततंथेति इडभावोनिपात्यते । ततस्त्वं तस्तभानान् असुरैर्विरुध्यमानाः सिन्धून् सप्तगंगाद्यानदीः सरणायासृजः पश्चात् त्वंदासपत्नीः दासाउपक्षपयितारः शत्रवः तेपतयः स्वामिनोयासांताः । नित्यंसपत्न्यादिष्वित्यत्र दासाच्चेत्युपसंख्यानात् ङीप् । असुरस्वामिकाः अपः अजयः जितवानसि तानसुरान् जित्वा उदकानिच प्रासृज इत्यर्थः ॥ १८ ॥

१८. इन्द्र तुमने ही वह कार्य किया है। मनोरथ-प्रद इन्द्र, तुम मनुष्यों को उपद्रव के विनाशक हो; इसलिए तुम प्रवृद्ध हुए थे। तुमने रोकी गई सिन्धु आदि नदियों को बहने के लिए जाने दिया था। अनन्तर दासों के अधिकृत जल को तुमने जीत लिया था।

ससुक्रतूरणितायःसुतेष्वनुत्तमन्युर्योअहेवरेवान् ।
यएकइन्नर्यपांसिकर्तासवृत्रहाप्रतीदन्यमाहुः ॥ १९ ॥

सः । सुऽक्रतुः । रणिता । यः । सुतेषु । अनुत्तऽमन्युः ।
यः । अहाऽइव । रेवान् । यः । एकः । इत् । नरि । अपांसि ।
कर्ता । सः । वृत्रऽहा । प्रति । इत् । अन्यम् । आहुः ॥ १९ ॥

अथ परोक्षकृतः सइन्द्रः सुक्रतुः शोभनप्रज्ञः शोभनकर्मा वा भवति । यः सुतेष्वभिषुतेषु सोमेषु रणिता तत्पानार्थं रमणशीलः । किंच अनुत्तमन्युः परैरनुन्नक्रोधः शत्रुभिर्नेतुमशक्यः तादृशोयः इन्द्रः रेवान् धनवान् । तत्रदृष्टान्तः—अहेव यथा अहानि दिवसाः धनवन्तः दिवसेषुहि धनानि प्रादुर्भवंति न रात्रिषु तद्वत् । तथा यइन्द्रः एकइव् असहायएव नरि कर्मनेतरि मनुष्ये अपांसि कर्माणि कर्ता कर्तुंशीलोभवति ताच्छीलिकस्तृन् अतएव षष्ठीप्रतिषेधः । सपूर्वोक्तगुणोपेतइन्द्रः वृत्रहा अपामावरकस्यासुरस्योपद्रवस्य वा हन्तृत्वात् वृत्रहेति सर्वैः श्रूयते तमेवेन्द्रं अन्यं प्रति इदवधारणे अन्यंप्रत्येवाहुः इन्द्रः सर्वमन्यं शत्रुसंघं प्रतिभवति अभिभवत्येवेति वदन्ति ॥ १९ ॥

वेही इन्द्र शोभन प्रज्ञावाले हैं वे अभिषुत सोम के पान के लिए आनन्दित हैं। इन्द्र के क्रोध को कोई नहीं सह सकता। दिन के समान इन्द्र धनी हैं। वे असहाय होकर भी मनुष्यों के कार्य-कर्त्ता हैं। वे वृत्रघ्न हैं। वे सारे शत्रु-सैन्यों के विनाशक हैं। १९

अथ विंशी–

सवृत्रहेन्द्रश्चर्षणीधृत्तंसुष्टुत्याहव्यंहुवेम ।
सप्राविताम॒घवानोधिव॒क्तासवाजस्यश्रवस्यस्यदा॒ता ॥ २० ॥

सः । वृ॒त्र॒ऽहा । इन्द्रः॑ । च॒र्ष॒णि॒ऽधृत् । तम् । सु॒ऽस्तु॒त्या । हव्य॑म् ।
हु॒वे॒म॒ । सः । प्र॒ऽअ॒वि॒ता । म॒घऽवा॑ । नः॒ । अ॒धि॒ऽव॒क्ता ।
सः । वाज॑स्य । श्र॒व॒स्य॑स्य । दा॒ता ॥ २० ॥

वृत्रहा वृत्रस्य हन्ता सइन्द्रश्चर्षणीधृत् मनुष्याणां धनादिदानेनपोषकोभवति तमिन्द्रं हव्यं आह्वातुं योग्यं वयं सष्टुत्या शोभनया स्तुत्या हुवेम अस्मद्यज्ञेष्वाह्वयामः । किमर्थं यूयमाह्वयथेतिचेत् कारणं ब्रूमः–सइन्द्रः प्राविता प्रकर्षेणास्माकं रक्षिताभवति । किंच मघवा धनवानिन्द्रः नोस्माकमधिवक्ता अधिकं वक्ता बहुमानेन वक्ता भवति । यद्वा धनदानेनास्मानधिकं वक्तुमर्हति । अर्हेकृत्यतृचश्चेति तृच् । किंच सएवेन्द्रः श्रवस्यस्य श्रवसः कीर्तेर्निमित्तस्य वाजस्यान्नस्य । यद्वा श्रवसोन्नस्य हिताय वाजस्य बलस्य दाता भवतिखलु । तस्मादेवंगुणमिन्द्रं वयमाह्वयामः ॥ २० ॥

२०. इन्द्र वृत्रघ्न हैं। वे मनुष्यों के पोषक हैं। वे आह्वान के योग्य हैं। हम शोभन स्तुति से उन्हें अपने यज्ञ में बुलाते हैं। वे हमारे विशेष रक्षक, धनवान्, आदर के साथ बोलनेवाले तथा अन्न और कीर्त्ति के दाता हैं।

अथैकविंशी–

सवृत्रहेन्द्रऋभुक्षाःस॒द्योजज्ञा॒नोहव्योबभूव ।
कृ॒ण्वन्नपांसिन॒र्यापुरूणि॒सोमो॒नपी॒तोहव्य॒ःसखिभ्यः॥२१॥३५॥

सः । वृ॒त्र॒ऽहा । इन्द्रः॑ । ऋ॒भु॒क्षाः । स॒द्यः । ज॒ज्ञा॒नः । हव्यः॑ ।
ब॒भू॒व॒ । कृ॒ण्वन् । अपां॑सि । नर्या॑ । पु॒रूणि॑ । सोमः॑ । न ।
पी॒तः । हव्यः॑ । सखि॑ऽभ्यः ॥ २१ ॥ ३५ ॥

ऋभुक्षाः समहान् । यद्वा ऋभुशब्देन ऋभ्वादयस्त्रयोगृह्यन्ते ऋभुभिः सह क्षियति निवसतीति तादृशः । वृत्रहा सइन्द्रः सद्यस्तदानीमेव जज्ञानः प्रादुर्भवन् हव्यः सर्वैःस्तोतृभिर्यष्टृभिराह्वातव्योबभूव । किंच नर्या नर्याणि नरा मनुष्याः कर्मनेतारः तेभ्योहितानि पुरूणि बहूनि अपांसि कर्माणि कृण्वन् कुर्वन् सखिभ्यः हविःप्रदानेनोपकारकत्वात् मित्रेभ्यः ऋत्विग्भ्यः

ह्व्यः आह्वातव्यः हवनयोग्योवा बभूव। तत्रदृष्टान्तः—सोमोन यथा पीतःसोमः यष्टृभ्यः स्वर्गादिफलानि कुर्वन् देवैराह्वातव्योभवति तद्वत्॥ २१॥

२१. वृत्रघ्न इन्द्र महान् हैं। जन्म के साथ इन्द्र सबके लिए बुलाने योग्य हो गये। वे मनुष्यों के लिए अनेक हितकर कार्य करते हुए, पिये गये सोम के समान, सखाओं के आह्वान के योग्य हुए थे।

॥ इति षष्ठस्य षष्ठे पंचत्रिंशोवर्गः॥ ३५॥

याइन्द्रेति पंचदशर्चं चतुर्थं सूक्तं काश्यपस्य रेभस्यार्षमैन्द्रं।दशम्यतिजगती द्वापंचाशदक्षरा। एकादशीद्वादश्यावुपरिष्टाद्बृहत्यौ त्र्यष्टकांतद्वादशकवत्यौ त्रयोदश्यतिजगती चतुर्दशीत्रिष्टुप् पंचदशी जगती शिष्टाबृहत्यः।तथाचानुक्रम्यते—याइन्द्रपंचोना रेभः काश्यपो बार्हतमतिजगत्युपरिष्टाद्बृहत्यावतिजगतीत्रिष्टुप् जगतीत्यन्ततइति।सूक्तविनियोगोलैंगिकः। महाव्रते निष्केवल्ये बार्हततृचाशीतौ याइन्द्रेत्यादिनवर्चः। तथैवपंचमारण्यके सूत्र्यते—याइन्द्रभुजआभरइति नव सुददोहाइति। चातुर्विंशिकेहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनो वैकल्पिकानुरूपतृचस्य याइन्द्रेत्यादिके द्वे द्वितीयातृतीये। सूत्र्यतेच—तमिन्द्रंजोहवीमि याइन्द्रभुजआभर इत्येकाद्वेचेति।

तत्र प्रथमा—

याइन्द्रभुजआभरःस्वर्वाँअसुरेभ्यः।
स्तोतारमिन्मघवन्नस्यवर्धययेचत्वेवृक्तबर्हिषः॥ १॥

याः। इन्द्र। भुजः। आ। अभरः। स्वःऽवान्। असुरेभ्यः।
स्तोतारम्। इत्। मघऽवन्। अस्य। वर्धय। ये।
च। त्वे इति। वृक्तऽबर्हिषः॥ १॥

ऋषिरिन्द्रं प्रार्थयते हे इन्द्र स्वर्वान् सुखवान् स्वर्गवान्वा अथवा स्वशब्दः सर्वपर्यायः सर्वभूतजातमात्मनएवोत्पन्नत्वात् तद्वान् एवंगुणस्त्वं याः यानि भुजो भोक्तव्यानि धनानि असुरेभ्यो बलवद्भ्यो राक्षसेभ्यः आभरः आहरः तान् हत्वा आहृतवानसि। हृग्रहोरितिभकारादेशः। अतएव हे मघवन् धनवन्निन्द्र अस्य अन्वादेशे अशादेशः एतस्यास्य धनस्यदानेन स्तोतारमित् तवस्तोत्रकारिणमेव वर्धय वृद्धिमन्तंकुरु। येचान्ये यष्टारः त्वे त्वदर्थं वृक्तबर्हिषः स्तीर्णबर्हिषोभवन्ति अतस्तांश्च धनेन वर्धय॥ १॥

१. इन्द्र, तुम सुखवाले हो। तुम जो असुरों के पास से भोग के योग्य धन ले आये हो, धनी इन्द्र, उससे स्तोता को वर्द्धित करो। स्तोता कुश बिछाये हुए हैं।

अथ द्वितीया—

यमिन्द्रदधिषेत्वमश्वंगांभागमव्ययम्।
यजमानेसुन्वतिदक्षिणावतितस्मिन्तंधेहिमापणौ॥ २॥

यम् । इन्द्र । दधिषे । त्वम् । अश्वम् । गाम् । भागम् ।
अव्ययम् । यजमाने । सुन्वति । दक्षिणाऽवति ।
तस्मिन् । तम् । धेहि । मा । पणौ ॥ २ ॥

हे इन्द्र त्वं यमश्वं गमनसाधनान् हरीन् गां अग्निहोत्रकर्मणि पयःप्रदानेनोपकारिका- गाः अव्ययं व्ययरहितं अविनश्वरं भागं भजनीयं धनं सर्वत्रैकत्वमविवक्षितं एतान् शत्रुभ्यः आहृत्य दधिषे धत्से बिभर्षि । तं सर्वं सुन्वति सोमाभिषवं कुर्वति दक्षिणावति यज्ञे ऋत्विग्भ्योदक्षिणादेयत्वेन तद्वति यजमाने यागंकुर्वाणे तस्मिन् त्वं धेहि । सर्वत्रधनादिदानं माकुर्वित्याह मापणौ पणव्यवहारे द्रव्यव्यवहारादयष्टाजनः पणिः तस्मिन् एतत्सर्वं मादेहि ॥ २ ॥

२. इन्द्र, तुम जो गौ, अश्व और अविनाशी धन को धारण किये हुए हो, सो सब सोमाभिषव और दक्षिणावाले यजमान को दो। यज्ञ-विहीन पणि को नहीं देना।

यइन्द्रसस्त्यव्रतोनुष्वापमदेवयुः ।
स्वैःषएवैर्मुमुरत्पोष्यंरयिंसनुतर्धेहितंततः ॥ ३ ॥

यः । इन्द्र । सस्ति । अव्रतः । अनुऽस्वापम् । अदेवऽयुः ।
स्वैः । सः । एवैः । मुमुरत् । पोष्यम् । रयिम् । सनुतः ।
धेहि । तम् । ततः ॥ ३ ॥

हे इन्द्र अदेवयुः देवान् युष्मानकामयमानः अव्रतोव्रतरहितः कर्मरहितोभूत्वा अनुस्वापं अनुवृत्तस्वप्नं यथाभवति तथा यः सस्ति स्वपिति षसस्वापे आदादिकः सजनः स्वैरात्मीयैः एवैर्गमनैरेव पोष्यं पोषणीयं रयिं स्वीयं धनं मुमुरत् मारयतु विनाशयतु । अमार्गैर्द्यूतादिभिः तस्यधनं नश्यतु नतु देवानां हविःप्रदानेनेति । ततः त्वं तमयष्टारं जनं सनुतरित्यन्तर्हितनाम सनुतः अन्तर्हिते कर्मरहिते कस्मिंश्चिद्देशे धेहि स्थापय ॥ ३ ॥

३. देवाभिलाष-शून्य तथा व्रत-रहित जो व्यक्ति स्वप्न के वश होकर निद्रित होता है, वह अपनी गति (कर्म) के द्वारा ही अपने पोष्य धन का विनाश करे, उसे कर्म-शून्य स्थान में रखो।

अथ चतुर्थी—

यच्छक्रासिपरावतियदर्वावतिवृत्रहन् ।
अतस्त्वागीर्भिर्द्युगदिन्द्रकेशिभिःसुतावाँआविवासति ॥४॥

यत् । शक्र । असि । पराऽवति । यत् । अर्वाऽवति ।
वृत्रऽहन् । अंतः । त्वा । गीःऽभिः । द्युऽगत् । इन्द्र ।
केशिऽभिः । सुतऽवान् । आ । विवासति ॥ ४ ॥

हे शक्र शत्रुहननसमर्थेन्द्र यद्यदा परावति विप्रकृष्टेतिदूरे द्युलोके देशे असि विद्यसे हे वृत्रहन् वृत्रस्य हन्तरिन्द्र यद्यदि अर्वावति अर्वाचीने तस्मादधस्तात् स्थिते तदपेक्षया समीपेदेशेन्तरिक्षे भवसि । तस्मादपि अतोस्माद्भूलोकाद्वा द्युगत् गम्लृगतौ क्विपि गमःक्वाविति अनुनासिकलोपः तुक् सुपांसुलुगितिलुक् । द्युलोकंप्रति गच्छद्भिः स्वभासा सर्वतोगच्छद्भिः केशिभिः केशवद्भिः हरिभिरिवस्थिताभिर्गीर्भिः स्तुतिभिः त्वा त्वां सुतवानभिषुतसोमवान्यजमान आविवासति आत्मीयं यज्ञं प्रत्यागमयति त्वामेतैः स्तोत्रैःपरिचरतीतिवा ॥ ४ ॥

४. शत्रु-हन्ता और वृत्रघ्न इन्द्र, तुम दूर देश में रहो अथवा समीप के देश में, इस भूलोक से द्युलोक को जाते हुए केशवाले हरि अश्वों के समान तुम्हें, इस स्तोत्र के द्वारा, अभिषुत सोमवाला यजमान यज्ञ में ले आता है ।

अथ पञ्चमी—

यद्वासिरोचनेदिवःसंमुद्रस्याधिविष्टपि ।
यत्पार्थिवेसदनेवृत्रहन्तमयदन्तरिक्षआगहि ॥ ५ ॥३६॥

यत् । वा । असि । रोचने । दिवः । समुद्रस्य । अधि ।
विष्टपि । यत् । पार्थिवे । सदने । वृत्रहन्ऽतम ।
यत् । अन्तरिक्षे । आ । गहि ॥ ५ ॥ ३६ ॥

हे इन्द्र यद्वा यदिवा दिवोद्युलोकस्य रोचने दीपनशीले स्थाने असि भवसि । यद्वा समुद्रस्य मध्ये अधि अधिगते विष्टपि विष्टपे तत्संबद्धे कस्मिंश्चित्स्थाने भवसि । हे वृत्रहन्तम अतिशयेन वृत्रस्यासुरस्य पापस्य वा हन्तरिन्द्र यद्यदिवा पार्थिवे पृथिव्यांभवे सदने स्थाने विद्यसे यदिवा अन्तरिक्षे तस्मिन् लोके वर्तसे यत्रकुत्र भवसि तथापि अस्मदीयं यज्ञं प्रत्यागहि आगच्छ ॥ ५ ॥

५. इन्द्र, यदि तुम स्वर्ग के दीप्त स्थान में हो, यदि समुद्र के बीच में किसी स्थान पर हो, यदि पृथ्वी के किसी स्थान में हो अथवा अन्तरिक्ष में हो, (जहाँ कहीं भी हो, हमारे यज्ञ में) हे वृत्रघ्न, आओ ।

॥ इति षष्ठस्य षष्ठे षट्त्रिंशोवर्गः ॥ ३६ ॥

अथ षष्ठी—

सनःसोमेषुसोमपाःसुतेषुंशवसस्पते ।
मादयस्वराधसासूनृतांवतेन्द्ररायापरीणसा ॥ ६ ॥

सः । नः । सोमेषु । सोमऽपाः । सुतेषु । शवसः । पते । मादयस्व ।
राधसा । सूनृताऽवता । इन्द्र । राया । परीणसा ॥ ६ ॥

हे सोमपाः सोमस्यपातः हेशवसस्पते बलस्यपालयितरिन्द्र सपूर्वोक्तलक्षणस्त्वं सुतेष्वस्माभिरभिषुतेषु सोमेषु नोस्मान् राधसा बलसाधनान्नेन सूनृतावता अनृतरहितत्वोपेतेन । यद्वा सूनृतेति वाङ्नाम शोभनवाक्ययुक्तेन । अनेन पुत्रादिकं लक्ष्यते पुत्रोपेतेनान्नेन परीणसा बहुनामैतत् बहुना राया धनेनच नोस्मान्मादयस्व मोदय सोमस्य प्रदातृभ्योस्मभ्यमन्नपुत्रधनादिकं देहीत्यर्थः ॥ ६ ॥

६. सोमपा और बलपति इन्द्र, सोमाभिषव होने पर बहुत धन और सुन्दर वाक्य से युक्त तथा बल-साधक अन्न के द्वारा हमें आनन्दित करो ।

मानंइन्द्रपराँवृणग्भवानःसधमाद्यः ।
त्वंनऊतीत्वमिन्नआप्यंमानंइन्द्रपराँवृणक् ॥ ७ ॥

मा । नः । इन्द्र । परा । वृणक् । भव । नः । सधऽमाद्यः ।
त्वम् । नः । ऊती । त्वम् । इत् । नः । आप्यम् । मा ।
नः । इन्द्र । परा । वृणक् ॥ ७ ॥

हे इन्द्र नो हविषांप्रदातॄनस्मान्मापरावृणक् मापरित्याक्षीः वृजीवर्जने रौधादिकः लङि रूपं । तदेवाह—त्वं नोस्माकं सोमेन सधमाद्यः सहमादनशीलोभव । किंच हे इन्द्र नोस्मान् त्वमेव ऊती ऊत्यां स्थापय । यद्वा ऊती व्यत्ययेन कर्तरि क्तिचि वा निपातितः त्वमेवास्माकं रक्षिता खलु । तथा त्वमित् इदवधारणे त्वमेवास्माकमाप्यं ज्ञातेयं त्वमेव बन्धुरित्यर्थः । अतएव मानइन्द्रपरावृणगिति एषगतोर्थः ॥ ७ ॥

७. इन्द्र, हमें नहीं छोड़ना । तुम हमारे साथ एकत्र सोमपान से प्रमत्त होओ । तुम हमें अपने रक्षण में रखो । तुम्हीं हमारे बन्धु हो । तुम हमें नहीं छोड़ना ।

अथाष्टमी—

अ॒स्मेइ॑न्द्र॒सचा॑सु॒तेनिष॑दापी॒तये॒मधु॑ ।
कृ॒धीज॑रि॒त्रेम॑घव॒न्नवो॑म॒हद॒स्मेइ॑न्द्र॒सचा॑सु॒ते ॥ ८ ॥

अ॒स्मे इति॑ । इ॒न्द्र॒ । सचा॑ । सु॒ते । नि । स॒द॒ । पी॒तये॑ ।
मधु॑ । कृ॒धि । ज॒रि॒त्रे । म॒घ॒ऽव॒न् । अवः॑ । म॒हत् ।
अ॒स्मे इति॑ । इ॒न्द्र॒ । सचा॑ । सु॒ते ॥ ८ ॥

हे इंद्र अस्मे अस्माभिः सचा सह सुतेभिषुतेसोमे निषद अस्मदीये यज्ञेनिषीद । किमर्थं मधुपीतये मधुनः सुपांसुलुगिति ङसोलुक् मदकरस्य सोमस्य पीतये पानाय । किंच हे मघवन् धनवन्निन्द्र महदवोरक्षणं जरित्रे कृधि कुरु कस्मिन्सति अस्मेइन्द्रसचासुतइति व्याख्यातःपादः ॥ ८ ॥

८. इन्द्र, हमारे साथ, मदकर सोम के पान के लिए, सोमाभिषव होने पर बैठो। धनी इन्द्र, स्तोता को महती रक्षा प्रदान करो। सोमाभिषव होने पर हमारे साथ बैठो।

नत्वा॑दे॒वास॑आशत॒नमर्त्या॑सोअद्रिवः ।
विश्वा॑जा॒ता॒नि॒शव॑साभि॒भूर॑सि॒नत्वा॑दे॒वास॑आशत ॥ ९ ॥

न । त्वा॒ । दे॒वासः॑ । आ॒श॒त॒ । न । मर्त्या॑सः । अ॒द्रि॒ऽवः॒ ।
विश्वा॑ । जा॒तानि॑ । शव॑सा । अ॒भि॒ऽभूः । अ॒सि॒ । न ।
त्वा॒ । दे॒वासः॑ । आ॒श॒त॒ ॥ ९ ॥

हे अद्रिवो वज्रवन्निन्द्र त्वा त्वां देवासः त्वदन्ये सर्वे देवाः नाशत स्वकर्मणा स्वबलेन वा नव्यामुवन्ति । नमर्त्यासो मर्त्या मनुष्याश्च न व्यामुवन्ति । कुतएतदवसीयते तदाह—विश्वा विश्वानि सर्वाणि जातानि भूतजातानि शवसा स्वबलेनैवाभिभूरसि अभिभावुकोसि भवसि । तस्मात् नत्वादेवासआशतेतिगतार्थः ॥ ९ ॥

९. वज्रधर इन्द्र, देवता लोग तुम्हें नहीं व्याप्त कर सकते—मनुष्य भी नहीं व्याप्त कर सकते। अपने बल के द्वारा समस्त भूतों को तुम अभिभूत किये हुए हो। देवता तुम्हें नहीं व्याप्त कर सकते।

चातुर्विंशिकेहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनो विश्वाःपृतनाइति वैकल्पिकःस्तोत्रियः । सूत्रितंच—विश्वाःपृतनाअभिभूतरंनरं तमिन्द्रंजोहवीमीति ।

तत्र प्रथमा सूक्ते दशमी—

विश्वाः॒पृत॑नाअभि॒भूत॑रं॒नरं॑स॒जूस्त॑तक्षु॒रिन्द्रं॑जज॒नुश्च॑रा॒जसे॑।
क्रत्वा॒वरि॑ष्ठं॒वर॑आ॒मुरि॑मु॒तोग्रमोजि॑ष्ठं॒तव॒सं॑तर॒स्विन॑म् ॥ १०॥ ३७॥

विश्वाः॑ । पृत॑नाः । अ॒भि॒ऽभूत॑रम् । नर॑म् । स॒ऽजूः । त॒त॒क्षुः ।
इन्द्र॑म् । ज॒ज॒नुः । च॒ । रा॒जसे॑ । क्रत्वा॑ । वरि॑ष्ठम् । वरे॑ ।
आ॒ऽमुरि॑म् । उ॒त । उ॒ग्रम् । ओजि॑ष्ठम् । त॒वस॑म् ।
त॒र॒स्विन॑म् ॥ १० ॥ ३७ ॥

विश्वाः सर्वान्व्याप्तावा पृतनाः। पृङ्व्यायामे। व्याप्रियन्तइति पृतनाः सेनाः सजूः परस्परं संगताः सत्यः अभिभूतरं शत्रूणामत्यर्थं अभिभवितारं नरं सर्वस्यनेतारमिन्द्रं ततक्षुः आयुधादिभिस्तीक्ष्णीकुर्वन्ति आयुधवंतमश्ववंतंच चक्रुरित्यर्थः । यद्वा पृतनाइति संग्रामाः व्याप्रियन्ते अत्रेति पृतनाः संग्रामाः सर्वानेव संग्रामानभिभावुकमिन्द्रं स्तोतारः अन्योन्यं संगताः स्तुतिभिस्तीक्ष्णमकुर्वन् स्तुतं सति बलवान् भवतीति । यद्वा यष्टारो हविःप्रदानेन वीर्यवन्तं कुर्वन्तीति । किंच स्तोतारः राजसे राजतेः तुमर्थे असे प्रत्ययः। आत्मनोविराजनार्थं प्रकाशनार्थं सूर्यात्मानमिन्द्रं जजनुः जनयामासुः स्तोत्रेण यज्ञेप्रादुरभावयन्नित्यर्थः। उतापिच क्रत्वा स्वीयवृत्रवधादि कर्मणैव वरिष्ठं उरुतमं आमुरिं शत्रूणामाभिमुख्येन मारयितारमिन्द्रं वरे वरणीये धने स्तोतारश्चक्रुः आत्मनां धनलाभार्थं स्तुवन्तीत्यर्थः। कीदृशं उग्रं उद्गूर्णबलं अतएव ओजिष्ठं आोजस्वितमं तवसं प्रवृद्धं तरस्विनं संग्रामे शत्रुवधार्थं वेगवन्तं इन्द्रं धनार्थं स्तुवन्ति ॥ १० ॥

१०. सारी सेना, परस्पर मिलकर शत्रुओं के विजेता और नेता इन्द्र को आयुध आदि के द्वारा तेज करती हैं। स्तोता लोग अपने प्रकाशन के लिए यज्ञ में सूर्यरूप इन्द्र की सृष्टि करते हैं। कर्म के द्वारा बलिष्ठ और शत्रुओं के सामने विनाशक, उग्र, ओजस्वी, प्रवृद्ध और वेगवान् इन्द्र की धन के लिए स्तोता लोग स्तुति करते हैं।

॥ इति षष्ठस्य षष्ठे सप्तत्रिंशोवर्गः ॥ ३७ ॥

अथैकादशी—

समीं॑रे॒भासो॑अस्वर॒न्निन्द्रं॒सोम॑स्यपी॒तये॑।
स्व॑र्पतिं॒यदीं॑वृ॒धेधृ॒तव्र॑तो॒ह्योज॑सा॒सम॒तिभिः॑ ॥ ११ ॥

सम् । ई॒म् । रे॒भासः॑ । अ॒स्व॒र॒न् । इन्द्र॑म् । सोम॑स्य । पी॒तये॑ ।
स्वः॑ऽपतिम् । यत् । ई॒म् । वृ॒धे । धृ॒तऽव्र॑तः । हि । ओज॑सा ।
सम् । ऊ॒तिऽभिः॑ ॥ ११ ॥

रेभासः रेभृशब्दे शब्दयितारः स्तोतारः यद्वा रेभासः कश्यपपुत्रारेभाः एतन्नामकाऋषयः ईमेनमिन्द्रं समस्वरन् सम्यगशब्दयन् समस्तुवन् । किमर्थं सोमस्य पीतये सोमपानाय । किंच स्वर्पतिं स्वर्गस्यपालयितारं धनस्यस्वामिनंवा ईमेनमिन्द्रं यद्यदा वृधे हविर्भिर्वर्धनाय संस्तुवन्ति तदा धृतव्रतो धृतकर्मेन्द्रः ओजसा बलेन स्तोतृभिः ऊतिभिर्मरुद्भिः पालनैश्चसह संगच्छते स्तुतिभिर्बलंमरुद्भिः पालनं चेन्द्रस्य भवतीत्यर्थः ॥ ११ ॥

११. सोमपान के लिए रेभ नामक ऋषियों ने इन्द्र की भली भाँति स्तुति की थी। जब लोग स्वर्ग के पालक इन्द्र की वर्द्धन के लिए स्तुति करते हैं, तब व्रतधारी इन्द्र बल और पालन के द्वारा मिलित होते हैं।

ने॒मिं॑नमन्ति॒चक्ष॑सामे॒षंविप्रा॑अ॒भिस्व॑रा ।
सु॒दी॒तयो॑वोअ॒द्रुहोऽपि॒कर्णे॑तर॒स्विनः॒सम्ऋक्व॑भिः ॥ १२ ॥

ने॒मिम् । न॒म॒न्ति॒ । चक्ष॑सा । मे॒षम् । विप्राः॑ । अ॒भि॒ऽस्व॑रा ।
सु॒ऽदी॒तयः॑ । वः॒ । अ॒द्रुहः॑ । अपि॑ । कर्णे॑ । त॒र॒स्विनः॑ ।
सम् । ऋक्व॑ऽभिः ॥ १२ ॥

नेमिं अरान् यथा नेमिर्व्याप्नोति तद्वत्सर्वं व्याप्नुवन्तु तादृशं नवनशीलमिन्द्रं चक्षसा दर्शनमात्रेणैव नमन्ति काश्यपारेभाः स्तोतारोवा नमस्कुर्वन्ति ततोविप्रामेधाविनः मेषं इन्द्रोमेषोभूत्वा मेधातिथिं स्वर्गमनयत् तस्मान्मेधातिथेर्मेषभूतमिन्द्रं अभिस्वरा अभिस्वरेण स्तोत्रेण प्रणमन्ति इदानीं यजमानः स्तोतॄनाह—अपिच सुदीतयः शोभनदीप्तयः अद्रुहः कस्याप्यद्रोग्धारो वोयूयं छान्दसोवसादेशः तरस्विनः कर्मसु स्तोत्रेषुवा त्वरायुक्ताः सन्तः इन्द्रस्य कर्णे श्रोत्रसमीपे ऋक्वभिः अर्चनयुक्तैर्मंत्रैः यद्वा ऋचोबह्वचो येषुसन्ति तैः शस्त्रादिभिः संस्तुतइन्द्रोयथा युष्मदीयानि स्तोत्रशस्त्रादीनि शृणोति तथा सम्यगभिष्टुतेत्यर्थः ॥ १२ ॥

१२. कश्यपगोत्रीय रेभ लोग, नेमि के समान, देखने के साथ ही इन्द्र को नमस्कार करते हैं। मेधावी (विप्र) लोग मेष (भेड़ के समान उपकारी) इन्द्र का, स्तोत्र के द्वारा, नमस्कार करते हैं। स्तोताओ, तुम लोग शोभन दीप्तिवाले और द्रोह-शून्य हो। क्षिप्रकारी तुम लोग इन्द्र के कानों के पास पूजा-युक्त मन्त्रों से इन्द्र की स्तुति करो।

पूर्वोक्तएवशस्त्रे वैकल्पिकस्यानुरूपतृचस्य तमिन्द्रमित्याद्याः । सूत्रमुदाहृतं ।

सैषा सूक्ते त्रयोदशी—

तमिन्द्रं॑जोहवीमिम॒घवा॑नमु॒ग्रंस॒त्रादधा॑न॒मप्र॑तिष्कुतं॒शवां॑सि ।
मंहि॑ष्ठोगी॒र्भिराचं॑य॒ज्ञियो॑व॒वर्त॑द्रा॒येनो॒विश्वा॑सु॒पथा॑कृणोतुव॒ज्री ॥ १३ ॥

तम् । इन्द्र॑म् । जो॒ह॒वी॒मि॒ । म॒घऽवा॑नम् । उ॒ग्रम् । स॒त्रा ।
द॒धा॑नम् । अप्र॑तिऽस्कुतम् । शवां॑सि । मंहि॑ष्ठः । गीः॒ऽभिः॑ ।
आ । च॒ । य॒ज्ञियः॑ । व॒वर्त॑त् । रा॒ये । नः॒ । विश्वा॑ । सु॒ऽपथा॑ ।
कृ॒णो॒तु॒ । व॒ज्री ॥ १३ ॥

तं पूर्वोक्तगुणोपेतमिन्द्रं जोहवीमि यष्टाहं पुनःपुनराह्वयामि ह्वयतेरभ्यस्तस्यचेति संप्रसारणं । कीदृशं मघवानं मंहनीयधनवन्तं उग्रं उद्गूर्णबलं सत्रा सत्यं यथार्थमेवशवांसि बलानि दधानं अतएवाप्रतिष्कुतं शत्रुभिरप्रतिरोधनीयं आह्वयामि । किंच मंहिष्ठः पूज्यतमः दातृतमोवा यज्ञियोयज्ञार्हइन्द्रो गीर्भिरस्मदीयाभिः स्तुतिभिराववर्तच्च यज्ञेषु आभिमुख्येन वर्ततांच । वर्ततेर्ण्यन्तस्य चङिरूपं चवायोगे प्रथमेति ननिघातः चङ्यन्यतरस्यामितिस्वरः । ततोवज्री वज्रवानिन्द्रः नोस्माकं राये धनाय विश्वा विश्वानि सर्वाण्येव सुपथा सुमार्गाणि कृणोतुच करोतु धनं सर्वदिक्स्थमस्मान्प्राप्नोत्वित्यर्थः ॥१३॥

१३. उस उग्र, धनी, यथार्थतः बल धारण करनेवाले और शत्रुओं के द्वारा न रोके जाने योग्य इन्द्र को मैं बुलाता हूँ। पूज्यतम और यज्ञयोग्य इन्द्र हमारी स्तुतियों के द्वारा यज्ञाभिमुख हों। वज्रधर इन्द्र हमारे धन के लिए सारे मार्गों को सुपथ बनावें।

अथ चतुर्दशी—

त्वंपुर॑इन्द्रचि॒किदे॑ना॒व्योज॑साशविष्ठशक्रनाश॒यध्यै॑ ।
त्वद्विश्वा॑नि॒भुव॑नानिवज्रि॒न्द्यावा॑रेजेतेपृथि॒वीचं॑भी॒षा ॥ १४ ॥

त्वम् । पुरः॑ । इ॒न्द्र॒ । चि॒कित् । ए॒नाः॒ । वि । ओज॑सा ।
श॒वि॒ष्ठ॒ । श॒क्र॒ । ना॒श॒यध्यै॑ । त्वत् । विश्वा॑नि । भुव॑नानि ।
व॒ज्रि॒न् । द्यावा॑ । रे॒जे॒ते॒ इति॑ । पृ॒थि॒वी इति॑ । च॒ । भी॒षा ॥ १४ ॥

हे शविष्ठ बलवत्तम अतएव हे शक्र शत्रुहननसमर्थ हे इन्द्र त्वं एना अन्वादेशे एतानि पुरः शंबरस्य पुराणि ओजसास्वीयेनैवतेजसा विनाशयध्यै विनाशयितुं चिकिद् ज्ञाताभवसि। नशेर्ण्यन्तात् शध्यैप्रत्ययः। पुनरपि सामर्थ्यं प्रशंसति हे वज्रिन् वज्रवन्निन्द्र विश्वानि सर्वाणि भुवनानि भूतजातानि त्वत् त्वत्तोभीत्या कंपंते। तथा द्यावापृथिवी दिवोद्यावेति द्यावादेशः आद्युदात्तश्च पृथिवी ङीषन्तत्वेनान्तोदात्तः देवताद्वंद्वेचेत्युभयपदप्रकृतिस्वरत्वं विप्रकर्षस्तु छान्दसः। द्यावापृथिवीच भीषा त्वत्तोभीत्या रेजेते कंपेते। अरेजेतांरोदसीइतिनिगमः। सर्वेत्वदधीनाइत्यर्थः॥ १४॥

१४. बलिष्ठ और शत्रुहनन-समर्थ (शक्र) इन्द्र, शम्बर की इन सब पुरियों को, बल के द्वारा, विनष्ट करने के लिए, ज्ञाता होते हो। वज्रधर इन्द्र, तुम्हारे डर से सारे भूत और द्यावापृथिवी काँपती हैं।

अथ पंचदशी—

तन्मं॑ऋ॒तमि॑न्द्रशूर॒चित्र॑पात्व॒पोन॑व॑ज्रिन्दुरि॒ताति॑पर्षि॒भूरि॑।
क॒दान॑इन्द्र॒राय॒आद॑शस्येर्वि॒श्वप्स्न्य॑स्यस्पृह॒याय्य॑स्यराजन्॥१५॥३८॥

तत्। मा। ऋतम्। इन्द्र। शूर। चित्र। पातु। अपः। न। वज्रिन्। दुःऽइता। अति। पर्षि। भूरि। कदा। नः। इन्द्र। रायः। आ। दशस्येः। विश्वऽप्स्न्यस्य। स्पृहयाय्यस्य। राजन्॥ १५॥ ३८॥

हे शूर बलवन् चित्र चायनीय विविधरूपवा। इन्द्रामायोभिःपुरुरूपईयतइत्यादिषुदृष्टत्वात्। बहुविधरूप हे इन्द्र तत् प्रशस्तं त्वदीयं ऋतं सत्यं मा मां पातु सर्वतोरक्षतु। किंच हे वज्रिन् वज्रवन्निन्द्र भूरि सुपोलुक् भूरीणि बहूनि दुरिता दुरितानि पापानि अतिपर्षि अतीत्य पारय। तत्रदृष्टान्तः—अपोन यथा नाविकउदकानि मनुष्यान्पारयति तद्वदस्मान्पापानि पारय। हे राजन् दीप्यमान हे इन्द्र विश्वप्स्न्यस्य प्सइति रूपनाम रूपे साधु प्स्यं नकारोपजनश्छान्दसः। बहुरूपं तव स्पृहयाय्यस्य सर्वैः स्पृहणीयं रायः क्रियाग्रहणमिति संप्रदानसंज्ञा चतुर्थ्यर्थे बहुलमिति षष्ठी। तद्धनं नोस्मभ्यं आ आभिमुख्येन कदा दशस्येः कस्मिन्काले प्रय-

१ ऋ० सं० १. २. ३२। २ ऋ० सं० ४. ७. ३४।

च्छेः तदा तव स्वभूतं सत्यं मां रक्षतु मह्यं धनं दत्वा कर्माणि च कारयित्वा मया हेतुभूतेन तुष्टाव्य मां पापरहितं कुर्वित्यर्थः ॥ १५ ॥

१५. बली और विविध-रूप इन्द्र, तुम्हारा प्रशंसनीय सत्य मेरी रक्षा करे। वज्री इन्द्र, नाविक के द्वारा जल के समान अनेक पापों से हमें पार करो। राजा इन्द्र, विविध-रूप और अभिलषणीय धन, हमारे सामने, कब प्रदान करोगे ?

॥ इति षष्ठस्य षष्ठेऽष्टत्रिंशोवर्गः ॥ ३८ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके षष्ठोध्यायः ॥ ६ ॥

## ॥श्रीगणेशायनमः॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममे तमहं वन्दे विद्यातीर्थंमहेश्वरम्॥१॥

अथ षष्ठस्य सप्तमोध्यायआरभ्यते तत्र इन्द्रायेति द्वादशर्चं पंचमं सूक्तं आंगिरसस्य नृमेधस्यार्षं ऐन्द्रं सप्तमी दशम्येकादश्यौ च तिस्रः ककुभः। मध्यमपादस्य द्वादशाक्षरत्वात् मध्यमश्चेत्ककुबितिहि तल्लक्षणं।नवमीद्वादश्यौ पुरउष्णिहौ प्रथमपादस्य द्वादशाक्षरत्वात् आद्यश्चेत्पुरउष्णिगितिहि तल्लक्षणं। शिष्टाउष्णिहः। तथाचानुक्रम्यते–इन्द्रायद्वादश नृमेधऔष्णिहं सप्तम्युपान्त्येच ककुभोन्त्यानवम्यौ पुरउष्णिहाविति। महाव्रते औष्णिहतृचाशीताविदंसूक्तं। तथैवपंचमारण्यकेसूत्रितं–इन्द्रायसामगायत सखायआशिषामहीति। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिन इन्द्रायसामगायतेति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितंच–इन्द्रायसामगायत सखायआशिषामहीति। पूर्वोक्तस्यैव ब्राह्मणाच्छंसिन आभिप्लविकेषूक्थ्येष्वेन्द्रनोगधीति वैकल्पिकःस्तोत्रियः। सूत्रितंच–एन्द्रनोगध्येदुमध्वोमदिन्तरमिति। उक्थे तृतीयसवनेच्छावाकस्याधाहीन्द्रेति स्तोत्रियस्तृचः। सूत्रितंच–अधाहीन्द्रगिर्वण इयंतइन्द्रगिर्वणइति। पूर्वोक्तएवशस्त्रे त्वंनइन्द्राभरेतितृचो वैकल्पिकःस्तोत्रियः। सूत्रितंच–त्वंनइन्द्राभर वयमुत्वामपूर्व्य योनइदमिदंपुरेति।

तत्र प्रथमा–

ॐम् इन्द्रा॑यसाम॑गायत॒विप्रा॑यबृह॒तेबृ॒हत्।
धर्म॒कृते॑विप॒श्चिते॑पन॒स्यवे॑॥ १॥

इन्द्रा॑य। साम॑। गा॒य॒त॒। विप्रा॑य। बृ॒ह॒ते। बृ॒हत्।
ध॒र्म॒ऽकृते॑। वि॒प॒ःऽचिते॑। प॒न॒स्यवे॑॥ १॥

हे उद्गातारः विप्राय मेधाविने बृहते महते धर्मकृते कर्मणः कर्त्रे विपश्चिते विदुषे पनस्यवे स्तुतिमिच्छते इन्द्राय बृहत् बृहन्नामकं साम गायत पठत॥ १॥

१. उद्गाताओ, मेधावी, विशाल, कर्म-कर्त्ता, विद्वान् और स्तोत्राभिलाषी इन्द्र के लिए बृहत् स्तोत्र का गान करो।

अथ द्वितीया—

त्वमिन्द्राभिभूरसित्वंसूर्यमरोचयः ।
विश्वकर्माविश्वदेवोमहाँअसि ॥ २ ॥

त्वम् । इन्द्र । अभिऽभूः । असि । त्वम् । सूर्यम् । अरोचयः ।
विश्वऽकर्मा । विश्वऽदेवः । महान् । असि ॥ २ ॥

हे इन्द्र त्वं अभिभूः शत्रूणामभिभवितासि भवसि । किंच त्वं सूर्यमादित्यमरोचयः तेजोभिरदीपयः । किंच विश्वकर्मा विश्वस्य कर्तासि विश्वदेवः सर्वदेवश्चासि । तथाच यजुर्ब्राह्मणं—अग्निर्वा अन्वन्यादेवता इन्द्रमन्वन्याइति । अतोमहान् सर्वाधिकोसि ॥ २ ॥

२. इन्द्र, तुम शत्रुओं को दबानेवाले हो। तुमने आदित्य को तेज के द्वारा प्रदीप्त किया है। तुम विश्वकर्त्ता, सर्वदेव और सर्वाधिक हो।

विभ्राजञ्ज्योतिषास्व १ रगच्छोरोचनंदिवः ।
देवास्तइन्द्रसख्यायर्येमिरे ॥ ३ ॥

विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् ।
दिवः । देवाः । ते । इन्द्र । सख्याय । येमिरे ॥ ३ ॥

हे इन्द्र त्वं ज्योतिषा तेजसा दिवआदित्यस्य रोचनं प्रकाशकमधिकरणत्वेन स्वः स्वर्गं विभ्राजन् प्रकाशयन् अगच्छः अप्राप्नोः । किंच देवाः सर्वे ते तव सख्याय मित्रत्वाय येमिरे स्वंस्वमात्मानं नियमितवन्तः । अस्माकमिन्द्रः सखा यथास्यादिति सर्वे देवाः प्रयत्नमकार्षुरित्यर्थः ॥ ३ ॥

३. इन्द्र, ज्योति के द्वारा तुम आदित्य के प्रकाशक हो। तुम स्वर्ग को प्रकाशित करते हुए गये थे। देवों ने तुम्हारी मैत्री के लिए प्रयत्न किया था।

अथ चतुर्थी—

एन्द्रंनोगधिप्रियःसत्राजिदगोह्यः ।
गिरिर्नविश्वतस्पृथुःपतिर्दिवः ॥ ४ ॥

आ । इन्द्र । नः । गधि । प्रियः । सत्राऽजित् । अगोह्यः ।
गिरिः । न । विश्वतः । पृथुः । पतिः । दिवः ॥ ४ ॥

---

1 तै० ब्रा० ३. ७. १.

हे इन्द्र प्रियः प्रियतमः सत्राजित् महतां जेता अगोह्यः केनापि गूहितुमशक्यो गिरिर्न पर्वतइव विश्वतः सर्वतः पृथुः पृथुतमोदिवः स्वर्गस्य पतिरीश्वरस्त्वं नोस्मानागधि आगच्छ॥४॥

४. इन्द्र, तुम प्रियतम और महान् व्यक्तियों के विजेता हो। तुम्हारा कोई गोपन नहीं कर सकता। तुम पर्वत के समान चारों ओर व्यापक और स्वर्ग के स्वामी हो। हमारे पास आओ।

अभिहिसत्यसोमपाउभेबभूथरोदसी ।
इन्द्रासिसुन्वतोवृधःपतिर्दिवः ॥ ५ ॥

अभि । हि । सत्य । सोमऽपाः । उभे इति । बभूथ । रोदसी इति । इन्द्र । असि । सुन्वतः । वृधः । पतिः । दिवः ॥ ५ ॥

हे सत्य सोमपाः सोमस्य पातरिन्द्र यस्त्वं उभे रोदसी द्यावापृथिव्यौ अभि बभूथ सामर्थ्येनाभिभवसि सत्वं सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य वृधोवर्धकोसि दिवः स्वर्गस्यापि पतिरीश्वरोसि ॥ ५ ॥

५. सत्य-स्वरूप और सोमपाता इन्द्र, तुमने द्यावापृथिवी को अभिभूत किया है; इसलिए तुम अभिषव करनेवाले के वर्द्धक और स्वर्गाधिपति हो।

त्वंहिशश्वतीनामिन्द्रदर्तापुरामसि ।
हन्तादस्योर्मनोर्वृधःपतिर्दिवः ॥ ६ ॥ १ ॥

त्वम् । हि । शश्वतीनाम् । इन्द्र । दर्ता । पुराम् । असि । हन्ता । दस्योः । मनोः । वृधः । पतिः । दिवः ॥ ६ ॥ १ ॥

हे इन्द्र त्वं शश्वतीनां बह्वीनां पुरां शत्रुनगरीणां दर्तासि दारयिता भवसि। किंच दस्योः उपक्षपयितुरसुरस्य हंतासि घातकोभवसि मनोर्मनुष्यस्य यागादिकं कुर्वतो वृधोवर्धकश्चासि दिवः स्वर्गस्यापि पतिरीश्वरोसि ॥ ६ ॥

६. इन्द्र, तुम अनेक शत्रु-पुरियों के भेदक हो। तुम दस्यु-घातक, मनुष्य के वर्द्धक और स्वर्ग के पति हो।

॥ इति षष्ठस्य सप्तमे प्रथमोवर्गः ॥ १ ॥

अथ सप्तमी—

अधाहीन्द्रगिर्वणउपत्वाकामान्महःससृज्महे ।
उदेवयन्तउदभिः ॥ ७ ॥

अर्ध । हि । इन्द्र । गिर्वणः । उप । त्वा । कामान् । महः ।
ससृज्महे । उदाऽइव । यन्तः । उदऽभिः ॥ ७ ॥

हे गिर्वणो गीर्भिर्वननीयेन्द्र अधाहि संप्रतिहि त्वा त्वां महोमहतः कामान् कमनीयान् स्तोमान् उपससृज्महे उपसृजामः प्रापयामइत्यर्थः । तत्र दृष्टान्तमाह—उदेव यथा उदकेन यन्तोगच्छन्तः उदभिः अञ्जलिनोत्क्षिप्योदकैः समीपस्थान् पुरुषान् क्रीडार्थं संसृजन्ति तद्वदित्यर्थः ॥ ७ ॥

७. स्तुत्य इन्द्र, जैसे क्रीड़ा के लिए लोग जल में अपने पास के व्यक्तियों पर जल फेंका करते हैं, वैसे ही हम आज तुम्हारे लिए महान् और कमनीय स्तोम (मन्त्र) प्राप्त करते हैं।

वार्णत्वायव्याभिर्वर्धन्तिशूरब्रह्माणि ।
वावृध्वांसंचिदद्रिवोदिवेदिवे ॥ ८ ॥

वाः । न । त्वा । यव्याभिः । वर्धन्ति । शूर । ब्रह्माणि ।
ववृध्वांसम् । चित् । अद्रिऽवः । दिवेऽदिवे ॥ ८ ॥

हे अद्रिवो वज्रिन् शूरेन्द्र वार्ण यथोदकमुदकस्थानं यव्याभिर्नदीभिः। अवनयः यव्याः इति नदीनामसुपाठात् । वर्धन्ति वर्धयन्ति । तथा ब्रह्माणि स्तोत्रैर्ववृध्वांसं चित् यथा निरुदकं देशं नदीभिस्तथा न। किंतु प्रवृद्धमेव त्वां दिवेदिवे अन्वहं वर्धयन्ति स्तोतारोवर्धयन्ति ॥८॥

८. वज्रधर और शूर इन्द्र, जैसे नदियां जल-स्थान को बढ़ाती हैं, वैसे ही स्तोत्रों के द्वारा प्रवृद्ध तुम्हें स्तोता लोग प्रतिदिन वर्द्धित करते हैं।

युञ्जन्तिहरीइषिरस्यगाथयोरौरथउरुयुगे ।
इन्द्रवाहावचोयुजा ॥ ९ ॥

युञ्जन्ति । हरी इति । इषिरस्य । गाथया ।
उरौ । रथे । उरुऽयुगे । इन्द्रऽवाहा । वचःऽयुजा ॥ ९ ॥

इषिरस्य गमनशीलस्य इन्द्रस्य उरुयुगे महायुगे उरौ महति रथे इन्द्रवाहा इन्द्रस्य वाहनभूतौ वचोयुजा वचनमात्रेणैव युज्यमानौ हरी अश्वौ गाथया स्तोत्रेण स्तोतारोयुञ्जन्ति योजयन्ति ॥ ९ ॥

९. गतिपरायण इन्द्र के महान् युगों (जोड़ों) से युक्त विशाल रथ में इन्द्र के वाहक और कहने के साथ ही जुट जानेवाले हरि नामक दोनों अश्वों को, स्तोत्र के द्वारा स्तोता लोग जोतते हैं।

अथ दशमी—

त्वंनइन्द्राभरँओजोनृम्णंशतक्रतोविचर्षणे।
आवीरंपृतनाषहम् ॥ १० ॥

त्वम्। नः। इन्द्र। आ। भर। ओजः। नृम्णम्। शतक्रतो
इति शतऽक्रतो। विऽचर्षणे। आ। वीरम्। पृतनाऽसहम् ॥ १० ॥

हे शतक्रतो बहुकर्मन् विचर्षणे विद्रष्टरिन्द्र त्वं नोस्मभ्यमोजोबलं नृम्णं धनं। गयः नृम्णमिति धननामसुपाठात्। आभराहर। वीरं वीर्योपेतं पृतनासहं सेनासहं सेनामभिभवितारं त्वामा याचामहइति शेषः ॥ १० ॥

१०. बहुकर्मा, प्रवीण, वीर्यशाली और सेना को जीतनेवाले इन्द्र, तुम हमें बल और धन दो।

त्वंहिनःपितावसोत्वंमाताशतक्रतोबभूविथ।
अधातेसुम्नमीमहे ॥ ११ ॥

त्वम्। हि। नः। पिता। वसो इति। त्वम्। माता। शतक्रतो
इति शतऽक्रतो। बभूविथ। अध। ते। सुम्नम्। ईमहे ॥ ११ ॥

हे वसो वासयितः शतक्रतो बहुकर्मन्निन्द्र त्वं नोस्माकं पिता पितृवत्पालको बभूविथ भव। त्वं माता मातृवद्धारकश्च बभूविथ। अध अथच वयं ते तव स्वभूतं सुम्नं सुखमीमहे याचामहे ॥ ११ ॥

११. निवास-दाता और बहुकर्मा इन्द्र, तुम हमारे पिता के सदृश पालक और माता के समान धारक बनो। अनन्तर हम तुम्हारे सुख की याचना करेंगे।

अथ द्वादशी—

त्वांशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेशतक्रतो।
सनोरास्वसुवीर्यम् ॥ १२ ॥ २ ॥

त्वाम्। शुष्मिन्। पुरुऽहूत। वाजऽयन्तम्। उप। ब्रुवे।
शतक्रतो इति शतऽक्रतो। सः। नः। रास्व। सुऽवीर्यम् ॥ १२ ॥ २ ॥

हे शुष्मिन् बलवन् पुरुहूत बहुभिर्यजमानैराहूत शतक्रतो बहुकर्मन्निन्द्र वाजयन्तं बलमिच्छन्तं त्वामुपब्रुवे उपस्तौमि। सत्वं नोस्मभ्यं सुवीर्यं धनं रास्व देहि ॥ १२ ॥

१२. बली, अनेक के द्वारा आहूत और बहुकर्मा इन्द्र, बल की अभिलाषा करनेवाले तुम्हारी में स्तुति करता हूँ। तुम हमें सुन्दर वीर्यसंयुक्त धन दो। ॥ इति षष्ठस्य सप्तमे द्वितीयोवर्गः ॥ २ ॥

त्वामिदाह्यइत्यष्टर्चं षष्ठं सूक्तं नृमेधस्यार्षं अयुजोबृहत्यः युजः सतोबृहत्यः तथाचानुक्रान्तं—त्वामिदाष्टौप्रागाथमिति। चातुर्विंशिकेहनि माध्यन्दिनसवनेच्छावाकस्य त्वामिदाह्यइतिवैकल्पिकःस्तोत्रियः प्रगाथः। महाव्रतेपि निष्केवल्ये बार्हततृचाशीतावयं प्रगाथः। तथैव पंचमारण्यके सूत्रितं—त्वामिदाह्योनरइत्येतं प्रगाथं प्रत्यवदधातीति। चातुर्विंशिकेहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनः आयन्तइवेति वैकल्पिकःस्तोत्रियःप्रगाथः। सूत्रितंच—आयन्तइवसूर्यं बण्महाँअसिसूर्येति। चातुर्विंशिकेहनि माध्यन्दिने त्वमिन्द्रप्रतूर्तिषु त्वमिन्द्रयशाअसीति। तस्मिन्नेवाहनि निष्केवल्ये वैराजयोनिभूतोयं प्रगाथः शंसनीयः। सूत्रितंच—तयोरक्रियमाणस्य योनिंशंसेद्वैरूपवैराजशाक्वररैवतानां चेति।

तत्र प्रथमा—

त्वामिदाह्योनरोऽपीप्यन्वज्रिन्भूर्णयः।
सइन्द्रस्तोमवाहसामिहश्रुध्युपस्वसरमागहि ॥ १ ॥

त्वाम्। इदा। ह्यः। नरः। अपीप्यन्। वज्रिन्। भूर्णयः।
सः। इन्द्र। स्तोमऽवाहसाम्। इह। श्रुधि। उप। स्वसरम्।
आ। गहि ॥ १ ॥

हे वज्रिन् इन्द्र यं त्वां भूर्णयो हविर्भिर्भरणशीलाः नरः कर्मणां नेतारोयजमाना इदा अद्य ह्यश्च अपीप्यन् सोममपाययन् सत्वं स्तोमवाहसां स्तोत्रवाहकानामस्माकं स्तोत्रं इह यज्ञे श्रुधि शृणु। स्वसरं गृहंच। दुर्याः स्वसराणीति गृहनामसु पाठात्। उपागहि उपागच्छ॥१॥

१. वज्रधर इन्द्र, हवि से भरण करनेवाले नेताओं ने तुम्हें आज और कल सोमपान कराया है। तुम इस यज्ञ में हम स्तोत्र-वाहकों का स्तोत्र सुनो और हमारे गृह में पधारो।

अथ द्वितीया—

मत्स्वासुशिप्रहरिवस्तदीमहेत्वेआभूषन्तिवेधसः।
तवश्रवांस्युपमान्युक्थ्यासुतेष्विन्द्रगिर्वणः ॥ २ ॥

मत्स्वं । सुऽशिप्र । हरिऽवः । तत् । ईमहे । त्वे इति । आ ।
भूषन्ति । वेधसः । तवं । श्रवांसि । उपऽमानि ।
उक्थ्या । सुतेषुं । इन्द्र । गिर्वणः ॥ २ ॥

हे सुशिप्र शोभनहनो शोभनोष्णीषिन् वा हरिवः अश्ववन् गिर्वणो गीर्भिर्वननीयेन्द्र त्वे त्वयि वेधसः परिचारका आभूषन्त्याभवन्ति । मत्स्व सोमेन मादयात्मानं । किंच तव त्वां वयमीमहे याचामहे । किंयाच्यमित्यत्राह—सुतेषु सोमेषु अभिषुतेषु सत्सु तव श्रवांस्यन्नानि उपमानि उपमानभूतानि उक्थ्या प्रशंस्यानि च सन्त्विति ॥ २ ॥

२. सुन्दर चादरवाले, अश्ववाले और स्तुतिवाले इन्द्र, परिचारक लोग तुम्हारे लिए सोमाभिषव करते हैं। तुम पीकर मत्त होओ। हम तुम्हारे पास प्रार्थना करते हैं। सोमाभिषव होने पर तुम्हारे अन्न उपमेय और प्रशस्य हों।

अथ तृतीया—

आयन्तइववसूर्यंविश्वेदिन्द्रस्यभक्षत ।
वसूनिजातेजनमानओजसाप्रतिभागंनदीधिम ॥ ३ ॥

आयन्तःऽइव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत । वसूनि ।
जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम ॥ ३ ॥

हे अस्मदीयाजनाः आयन्तइव सूर्यं यथा समाश्रितारश्मयः सूर्यं भजन्ते तथेन्द्रस्य विश्वेत् विश्वान्येव धनानि भक्षत भजत । सच यानि वसूनि धनानि जाते उत्पन्ने जनमाने जनिष्यमाणे चौजसा बलेन करोति । अतः भागंन पित्र्यं भागमिव तानि धनानि प्रतिदीधिम प्रतिधारयेमेति । यद्वा आयन्तइव सूर्यं यथा समाश्रितारश्मयः सूर्यमुपतिष्ठन्ते तथेन्द्रस्य विश्वा विश्वानि विभक्तुमिच्छन्तः समाश्रितामरुतः इन्द्रमुपतिष्ठन्तइतिशेषः । उपस्थायच मरुतो वसून्युदकलक्षणानि धनानि जाते जाताय जनमाने जनिष्यमाणायच मनुष्यायच ओजसा बलेन भक्षत विभजन्ते । तत्रचास्माकं योभागः तं भागं । नेतिसंप्रत्यर्थे । प्रतीत्येष अनु इत्येतस्य स्थाने । अनुदीधिम वयं अनुध्यायाम । तथाचयास्कः—समाश्रिताः सूर्यमुपतिष्ठन्ते अपिवोपमार्थे स्यात्सूर्यमिवेन्द्रमुपतिष्ठन्तइति । सर्वाणीन्द्रस्यधनानि विभक्ष्यमाणाः सयथा धनानि विभजति जातेच जनिष्यमाणेच तं वयं भागमनुध्यायेमेति ॥ ३ ॥

३. जैसे आश्रित किरणें सूर्य का भजन करती हैं, वैसे ही तुम इन्द्र के सारे धनों का भजन करो। इन्द्र बल के द्वारा उत्पन्न और उत्पन्न होनेवाले धनों के जनक हैं। हम उन धनों को पैतृक भाग के समान धारण करेंगे।

---

१ नि० ६. ८.

अथ चतुर्थी—

अनर्शरातिंवसुदामुपस्तुहिभद्राइन्द्रस्यरातयः ।
सोअस्यकामंविधतोनरोषतिमनोदानायचोदयन् ॥ ४ ॥

अनर्शऽरातिम् । वसुऽदाम् । उप । स्तुहि । भद्राः ।
इन्द्रस्य । रातयः । सः । अस्य । कामम् । विधतः ।
न । रोषति । मनः । दानाय । चोदयन् ॥ ४ ॥

हे स्तोतारः अनर्शरातिं अपापकदानं अपापिष्ठस्य दातारमित्यर्थः । तथाचयास्कः—अनर्शरातिमनश्लीलदानमश्लीलं पापकमिति[1] । वसुदां धनस्यदातारमिन्द्रं उपस्तुहि यतइन्द्रस्य रातयोदानानि भद्राः कल्याणानि महदैश्वर्यकारीणीत्यर्थः । यतश्च सइन्द्रः स्वकीयं मनोदानाय अभीष्टप्रदानाय चोदयन् प्रेरयन् विधतः परिचरतोस्य स्तोतुः काममिच्छां नरोषति नहिनस्ति ॥ ४ ॥ ४. पाप-रहित व्यक्ति के लिए जो दान-शील और धनद हैं, उन्हीं इन्द्र की स्तुति करो; क्योंकि इन्द्र का दान कल्याणवाहक है । इन्द्र अपने मन को अभीष्ट प्रदान के लिए प्रेरित करके परिचारक की इच्छा को बाधा नहीं देते ।

त्वमिन्द्रप्रतूर्तिष्वभिविश्वाअसिस्पृधः ।
अशस्तिहाजनिताविश्वतूरसित्वंतूर्यतरुष्यतः ॥ ५ ॥

त्वम् । इन्द्र । प्रऽतूर्तिषु । अभि । विश्वाः । असि ।
स्पृधः । अशस्तिऽहा । जनिता । विश्वऽतूः । असि । त्वम् ।
तूर्य । तरुष्यतः ॥ ५ ॥

हे इन्द्र त्वं प्रतूर्तिषु संग्रामेषु विश्वाः सर्वाः स्पृधोयुद्धकारिणीः शत्रुसेनाः अभ्यसि अभिभवसि । किंच हे तूर्य शत्रूणां बाधकेन्द्र त्वं अशस्तिहा दैत्यानामशस्तीनां हन्तासि । जनिता असुरेभ्यः अशस्तीनां जनिताचासि । विश्वतूः विश्वतः सर्वस्य शत्रुवर्गस्य हिंसिताचासि तरुष्यतो बाधकांश्च बाधमानोसि ॥ ५ ॥

५. इन्द्र, तुम युद्ध में सारी सेनाओं को दबाते हो । शत्रु-बाधक इन्द्र तुम दैत्यों के नाशक, उनके जनक शत्रुओं के हिंसक और बाधकों के बाधक हो ।

---

[1] नि० ६, २३ ।

अथ षष्ठी—

अनुतेशुष्मंतुरयन्तमीयतुःक्षोणीशिशुंनमातरा ।
विश्वास्तेस्पृधःश्नथयन्तमन्यवेवृत्रंयदिन्द्रतूर्वसि ॥ ६ ॥

अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणी इति । शिशुम् । न । मातरा । विश्वाः । ते । स्पृधः । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥ ६ ॥

हे इन्द्र ते तव शुष्मं बलं तुरयन्तं हिंसन्तं शत्रुं क्षोणी द्यावापृथिव्यौ मातरा मातरौ शिशुंन शिशुमिव अन्वीयतुः अनुगच्छतः । गमनमात्रे दृष्टान्तः । किंच हेइन्द्र त्वं यद्यस्माद्वृत्रं शत्रुं तूर्वसि हंसि अतस्ते तव मन्यवे क्रोधाय विश्वाः सर्वाः स्पृधः संग्रामकारिण्यः सेनाः श्नथयन्त श्नथिताः खिन्नाभवन्ति ॥ ६ ॥

६. इन्द्र, जैसे माता शिशु का अनुगमन करती है, वैसे ही तुम्हारे बल की हिंसा करनेवाले शत्रु का अनुगमन द्यावापृथिवी करती हैं। तुम वृत्र का वध करते हो; इसलिए सारी युद्धकारिणी सेना तुम्हारे क्रोध के लिए खिन्न होती है।

इतऊतीवोअजरंप्रहेतारमप्रहितम् ।
आशुंजेतारंहेतारंरथीतममतूर्तंतुग्र्यावृधम् ॥ ७ ॥

इतः । ऊती । वः । अजरम् । प्रऽहेतारम् । अप्रऽहितम् । आशुम् । जेतारम् । हेतारम् । रथिऽतमम् । अतूर्तम् । तुग्र्यऽवृधम् ॥ ७ ॥

हे अस्मदीयजनाः वोयूयं अजरं जरारहितं प्रहेतारं शत्रूणां प्रेरकं अप्रहितं केनाप्यप्रेषितं आशुं वेगवन्तं जेतारं शत्रूणां हेतारं गन्तारं रथीतमं रथिनां श्रेष्ठं अतूर्तं केनाप्यहिंसितं तुग्र्यावृधं उदकस्य वर्धयितारमिन्द्रं ऊती ऊत्यै रक्षणाय इतः कुरुत पुरस्कुरुतेतियावत् ॥ ७ ॥

७. अजर, शत्रु-प्रेरक, किसी से न भेजे गये, वेगवान्, जेता, गन्ता, रथिश्रेष्ठ, अहिंसक और जल-वर्द्धक इन्द्र को, रक्षण के लिए, आगे करो।

अथाष्टमी—

इष्कर्तारमनिष्कृतंसहस्कृतंशतमूतिंशतक्रतुम् ।
समानमिन्द्रमवसेहवामहेवसवानंवसूजुवम् ॥ ८ ॥ ३ ॥

इष्कुर्तारम् । अनिःऽकृतम् । सहःऽकृतम् । शतम्ऽऊतिम् ।
शतऽक्रतुम् । समानम् । इन्द्रम् । अवसे । हवामहे ।
वसवानम् । वसुऽजुवम् ॥ ८ ॥ ३ ॥

इष्कर्तारं शत्रूणां संस्कर्तारं अनिष्कृतं स्वयमन्यैरसंस्कृतं सहस्कृतं बलेनकृतं शतमूर्तिं बहुरक्षणं शतक्रतुं बहुप्रज्ञं बहुकर्माणं वा समानं बहूनां साधारणं वसवानं धनान्याच्छादयन्तं वसूजुवं यजमानेभ्योवसूनां प्रेरयितारमिन्द्रं अवसे रक्षणाय वयं हवामहे ह्वयामः ॥ ८ ॥

८. शत्रुओं के संस्कर्त्ता, दूसरों के द्वारा असंस्कृत, बलकृत, बहुरक्षण-वाले, शत-यज्ञवाले, साधारण धनाच्छादक और धन-प्रेरक इन्द्र को, रक्षण के लिए, हम बुलाते हैं।

॥ इति षष्ठस्य सप्तमे तृतीयोवर्गः ॥ ३ ॥

अयंतइति द्वादशर्चं सप्तमं सूक्तं भृगुगोत्रस्य नेमस्यार्षं अयमस्मिजरितरिति द्वृचेनेन्द्रोनेमसमीपमेत्य स्वकीयं माहात्म्यमवोचत् अतस्तस्य द्वृचस्य सएवऋषिः यस्यवाक्यं सऋषिरिति न्यायात्। षष्ठी जगती सप्तम्याद्यास्तिस्रोनुष्टुभः शिष्टास्त्रिष्टुभः इन्द्रोदेवता यद्वाग्वदन्ती देवींवाचमित्येते वाग्देवत्ये शिष्टाऐन्द्र्यः। तथाचानुक्रान्तं—अयंतेद्वादश नेमोभार्गवस्त्रैष्टुभं षष्ठीजगती परास्तिस्रोनुष्टुभः अयमितिद्वृचेनेन्द्र आत्मानमस्तौदुपान्त्येवाच्याविति। वाग्देवत्ये पशौ यद्वाग्वदन्तीति वपायाअनुवाक्या। सूत्रितंच—यद्वाग्वदन्त्यविचेतनानि पतंगोवाचंमनसाबिभर्तीति। पूर्वोक्तएव पशौ देवींवाचमिति हविषोयाज्या। सूत्रितंच—देवींवाचमजनयन्तदेवा जनीयन्तोन्वग्रवइति तिस्रइति। प्रयाणसमये वयसाममनोज्ञावाचः श्रुत्वा एतांजपेत्। सूत्रितंच— कनिक्रदज्जनुषं प्रब्रुवाणइति सूक्ते जपेद्देवींवाचमजनयन्तदेवाइतिचेति।

तत्र प्रथमा—

अयंतएमितन्वापुरस्ताद्विश्वेदेवाअभिमायन्तिपश्चात्।
यदामह्यंदीधरोभागमिन्द्रादिन्मयाकृणवोवीर्याणि ॥ १ ॥

अयम् । ते । एमि । तन्वा । पुरस्तात् । विश्वे । देवाः । अभि । मा ।
यन्ति । पश्चात् । यदा । मह्यम् । दीधरः । भागम् । इन्द्र । आत् ।
इत् । मया । कृणवः । वीर्याणि ॥ १ ॥

हे इन्द्र ते तव पुरस्तात् अग्रतः तन्वा पुत्रेणसह अयमहमेमि शत्रूनभिभवितुं गच्छामि। तवाग्रतोगच्छन्तं मां विश्वेदेवाः त्वया सह पश्चादभियन्ति अभिगच्छन्ति यदा त्वं मह्यं भार्गवाय नेमाय भागं शत्रुषु स्थितं भागं दीधरः धारयसि आदित् अनन्तरमेव मया सह म-

च्छत्रून् जेतुं वीर्याणि पौरुषाणि कृणवः कुरु। यदि शत्रुषु स्थितं धनं मह्यं दित्ससि तर्हि शत्रुजयार्थं गच्छतः सपुत्रस्य मम साहाय्यं कुर्विंतिभावः ॥ १ ॥

१. इन्द्र, पुत्र के साथ मैं शत्रु को जीतने के लिए, तुम्हारे आगे-आगे जाता हूँ। सारे देवता मेरे पीछे-पीछे जाते हैं। तुम शत्रु-धन का अंग मुझे देते हो; इसलिए मेरे साथ पुरुषार्थ करो।

दधामितेमधुनोभक्षमग्रेहितस्तेभागःसुतोअस्तुसोमः।
असश्चत्वंदक्षिणतःसखामेधावृत्राणिजङ्घनावभूरि ॥ २ ॥

दधामि। ते। मधुनः। भक्षम्। अग्रे। हितः। ते। भागः। सुतः।
अस्तु। सोमः। असः। च। त्वम्। दक्षिणतः। सखा। मे।
अध। वृत्राणि। जङ्घनाव। भूरि ॥ २ ॥

हे इन्द्र ते तुभ्यं मधुनो मदकरस्य सोमस्य भक्षमग्रे प्रथमं दधामि धारयामि। सुतो-भिषुतोभागो भजनीयः सोमस्ते तव हृदये हितोनिहितोस्तु भवतु। अपिच त्वं मे मम दक्षिणतो दक्षिणपार्श्वे सखासन् असः स्थितोभव। अध अथ भूरि बहूनि वृत्राण्यस्मदीयान् शत्रून् जंघनाव। त्वमहंचोभावावां हन्वः ॥ २ ॥

२. तुम्हारे लिए पहले मैं मदकर सोमरूप अन्न (भक्षण) देता हूँ। तुम्हारे हृदय में अभिषुत सोम निहित हो। तुम मेरे दक्षिण भाग में मित्र-रूप होकर अवस्थित होओ। पश्चात् हम दोनों अनेक असुरों का वध करेंगे।

प्रसुस्तोमंभरतवाजयन्तइन्द्रायसत्यंयदिसत्यमस्ति।
नेन्द्रोअस्तीतिनेमउत्वआहकईंददर्शकमभिष्टवाम ॥ ३॥

प्र। सु। स्तोमम्। भरत। वाजऽयन्तः। इन्द्राय। सत्यम्। यदि।
सत्यम्। अस्ति। न। इन्द्रः। अस्ति। इति। नेमः। ऊँ इति। त्वः।
आह। कः। ईम्। ददर्श। कम्। अभि। स्तवाम ॥ ३ ॥

हे जना वाजयन्तः संग्राममिच्छन्तोयूयं। पौंस्ये वाजे इति संग्रामनामसु पाठात्। इन्द्राय सत्यं सत्यभूतं स्तोमं सु सुष्ठु प्रभरत इन्द्रोस्तीत्येतत् यदि सत्यमस्ति भवति। इन्द्रास्तित्वे कः संदेहः तत्राह—नेमउ भार्गवोनेम एवेन्द्रोनाम त्वः कश्चिन्नास्तीत्याह। तत्र कारणं दर्शयति—कः ईमेनमिन्द्रं ददर्श अद्राक्षीत् नकोप्यपश्यत् अतः कं वयमभिष्टवाम अभिष्टुमः। तस्मादिन्द्रोनाम कश्चिद्विद्यते इतिवादमात्रं नतु तत्सत्यमित्यर्थः ॥ ३ ॥

३. युद्धेच्छुको, यदि इन्द्र की सत्ता सच्ची हो, तो इन्द्र के लिए सत्य-रूप सोम का उच्चारण करो। भार्गव नेम ऋषि का मत है कि इन्द्र नाम का कोई नहीं है। इन्द्र को किसी ने देखा है? फलतः हम किसकी स्तुति करें?

अयमस्मिजरितःपश्यमेहविश्वाजातान्यभ्यस्मिमह्ना ।
ऋतस्यमाप्रदिशोवर्धयन्त्यादर्दिरोभुवनादर्दरीमि ॥ ४ ॥

अयम् । अस्मि । जरितरिति । पश्य । मा । इह । विश्वा । जातानि । अभि । अस्मि । मह्ना । ऋतस्य । मा । प्रऽदिशः । वर्धयन्ति । आऽदर्दिरः । भुवना । दर्दरीमि ॥ ४ ॥

एवं नेमस्यर्षेर्वचनमाकर्ण्य इन्द्रस्तस्य समीपमाजगाम । आगत्य चात्मानमनेन तृचेन स्तौति—हे जरितः स्तोतः अयमहमस्मि इह तवसमीपे स्थितं मा मां पश्य। विश्वा सर्वाणि जातानि भुवनानि मह्ना महत्त्वेन अभ्यस्मि अहमभिभवामि। किंच मा मां ऋतस्य सत्यस्य यज्ञस्य वा प्रदिशः प्रदेष्टारोविद्वांसः स्तोत्रैर्वर्धयन्ति। अपिच आदर्दिरः आदरणशीलोहं भुवना भुवनानि शत्रुभूतानि दर्दरीमि भृशं विदारयामि ॥ ४ ॥

४. स्तोता नेम, यह मैं तुम्हारे पास आगया हूँ। मुझे देखो मैं सारे संसार को, महिमा के द्वारा, दवाता हूँ। सत्य यज्ञ के द्रष्टा मुझे वर्द्धित करते हैं। मैं विदारण-परायण हूँ। मैं सारे भुवनों को विदीर्ण करता हूँ।

आयन्मावेनाअरुहन्नृतस्यँएकमासीनंहर्यतस्यपृष्ठे ।
मनश्चिन्मेहृदआप्रत्यवोचदचिक्रदञ्छिशुमन्तःसखायः॥५॥

आ । यत् । मा । वेनाः । अरुहन् । ऋतस्य । एकम् । आसीनम् । हर्यतस्य । पृष्ठे । मनः । चित् । मे । हृदे । आ । प्रति । अवोचत् । अचिक्रदन् । शिशुऽमन्तः । सखायः ॥ ५ ॥

यद्यदा ये ऋतस्य यज्ञस्य यज्ञं कर्मणिषष्ठी वेनाः कामयमानाः हर्यतस्य कान्तस्यान्तरिक्षस्य पृष्ठे आसीनं उपविष्टं एकं मा मां आ अरुहन् तेषां भवतां आरोहं मनश्चित् मनएव मम हृदे हृदयाय प्रत्यवोचत् अब्रवीत्। अज्ञाशिषंच तदाह्वानं। शिशुमन्तः पुत्रयुक्ताः सखायः प्रियाअमी अचिक्रदन् मां क्रन्दन्तीति ॥ ५ ॥

५. जिस समय यज्ञाभिलाषियों ने कमनीय अन्तरिक्ष की पीठ पर अकेले बैठे हुए मुझे चढ़ाया था, उस समय उन लोगों के मन ने ही मेरे हृदय में उत्तर दिया था कि पुत्र-युक्त प्रिय मेरे लिए रो रहे हैं।

अथ षष्ठी—

विश्वेत्ताते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते ।
पारावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऋषिबन्धवे ॥ ६॥४॥

विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या । या । चकर्थ । मघऽवन् । इन्द्र । सुन्वते । पारावतम् । यत् । पुरुऽसंभृतम् । वसु । अपऽअवृणोः । शरभाय । ऋषिऽबन्धवे ॥ ६ ॥ ४ ॥

स्वसमीपमागतमिन्द्रं दृष्ट्वा सन्तुष्टऋषिरिन्द्रस्य विविधानि कर्माणि दानंच विश्वेत्तातइत्यनेन द्वृचेन स्तौति—हे मघवन्निन्द्र त्वं सवनेषु यज्ञेषु सुन्वते सोमाभिषवं कुर्वते यजमानाय या यानि कर्माणि चकर्थ अकरोः ते तव ता तानि कर्माणि प्रवाच्या प्रवक्तव्यानि विश्वेत् अनन्तान्येव । किंच त्वं पारावतं परावन्नामकस्य कस्यचिच्छत्रोः स्वभूतं यद्वसु धनमस्ति तत् ऋषिबन्धवे शरभाय शरभनाम्ने ऋषये अपावृणोः अपवृतवानसि पुरुसंभृतं यथा बहुसंभृतं भवति ॥ ६ ॥

६. धनी इन्द्र, यज्ञ में सोमाभिषव करनेवालों के लिए तुमने जो कुछ किया है, वह सब कहने योग्य है । परावत् नाम के शत्रु का जो धन है, उसे तुमने ऋषिमित्र शरभ के लिए, यथेष्ट रूप में, प्रकट किया था ।

॥ इति षष्ठस्य सप्तमे चतुर्थोवर्गः ॥ ४ ॥

अथ सप्तमी—

प्रनूनंधावतापृथङ्नेहयोवोअवावरीत् ।
निषींवृत्रस्यमर्मणिवज्रमिन्द्रोअपीपतत् ॥ ७ ॥

प्र । नूनम् । धावत । पृथक् । न । इह । यः । वः । अवावरीत् । नि । सीम् । वृत्रस्य । मर्मणि । वज्रम् । इन्द्रः । अपीपतत् ॥ ७ ॥

यः शत्रुर्नूनमिदानीं प्रधावत् प्रधावति पृथगिह पृथक् न तिष्ठति च वोयुष्मान्नावावरीत् न विवारयतिच तस्य वृत्रस्य शत्रोर्मर्मणि मर्मस्थाने इन्द्रोवज्रं कुलिशं न्यपीपतत् नितरां अपातयत् ॥ ७ ॥ जो शत्रु इस समय दौड़ रहा है—पृथक् नहीं ठहरता और जो तुम्हें नहीं रुकता, उसके मर्म-स्थान में इन्द्र ने वज्रपात किया है । ॥७॥

अथाष्टमी—

मनोजवा अयमान आयसीमतरत्पुरम् ।
दिवंसुपर्णोगत्वायसोमंवज्रिणआभरत् ॥ ८ ॥

मनःऽजवाः । अयमानः । आयसीम् । अतरत् । पुरम् । दिवम् ।
सुऽपर्णः । गत्वाय । सोमम् । वज्रिणे । आ । अभरत् ॥ ८ ॥

सुपर्णो गरुत्मान् मनोजवाः मनोवेगः अयमानोगच्छन् आयसीं हिरण्मयीं पुरं नगरीं अतरत् अतारीत्। ततोदिवं स्वर्गं गत्वाय गत्वा वज्रिणे इन्द्राय सोममाभरदाहरच्च ॥८॥

८. मन के समान वेगवान् और गमनशील सुपर्ण (गरुड़) लौहमय नगर के पार गये। अनन्तर स्वर्ग में जाकर इन्द्र के लिए सोम ले आये।

समुद्रेअन्तःशयतउद्नावज्रोअभीवृतः।
भरन्त्यस्मैसंयतःपुरःप्रस्रवणाबलिम् ॥ ९ ॥

समुद्रे । अन्तरिति । शयते । उद्ना । वज्रः । अभिऽवृतः । भरन्ति ।
अस्मै । सम्ऽयतः । पुरःऽप्रस्रवणाः । बलिम् ॥ ९ ॥

योवज्रः समुद्रेअन्तः समुद्रस्यमध्ये शयते शेते यश्च उद्ना उदकेन अभिवृतः अस्मै वज्राय संयतः संग्रामस्य। मग्मन् संयतइति संग्रामनामसु पाठात्। पुरः प्रस्रवणाः पुरस्ताद्गच्छन्तः शत्रवो बलिं उपहारं भरन्ति धारयन्ति तस्य छेद्या भवन्तीत्यर्थः ॥ ९ ॥

९. जो वज्र समुद्र के बीच सोता है और जो जल में ढका हुआ है, उसी वज्र के लिए संग्राम में आगे जानेवाले शत्रु (आत्म-बलि-रूप) उपहार धारण करते हैं।

अथ दशमी—

यद्वाग्वदन्त्यविचेतनानिराष्ट्रीदेवानांनिषसादमन्द्रा।
चतस्रऊर्जंदुदुहेपयांसिक्वस्विदस्याःपरमंजगाम ॥१०॥

यत् । वाक् । वदन्ती । अविऽचेतनानि । राष्ट्री । देवानाम् । निऽससाद ।
मन्द्रा । चतस्रः । ऊर्जम् । दुदुहे । पयांसि । क्व । स्वित् ।
अस्याः । परमम् । जगाम ॥ १० ॥

राष्ट्री राजनशीला देवानां मन्द्रा मादयित्री वा यद्यदा वाक् अविचेतनानि विज्ञानरहितान् अप्रज्ञातान् अर्थान् वदन्ती प्रज्ञापयन्ती निषसाद यज्ञेनिषीदति तदा चतस्रोदिशः प्रति ऊर्जमन्नं पयांसि तत्कारणभूतान्युदकानि दुदुहे अस्यामाध्यमिकायावाचः स्वभूतं यत्परमं श्रेष्ठं तत् क्वस्वित् क्वजगाम क्वगच्छतीति नदृश्यतइत्यर्थः। तथाचयास्कः—यद्वाग्वदन्त्यविचेतनान्यवि-

ज्ञातानि राष्ट्रीदेवानां निषसाद मन्द्रा मदनाच्चतस्रोनुदिशऊर्जं दुदुहे पयांसि क्वस्विदस्याः परमं जगामेति यत्पृथिवीं गच्छतीतिवा यदादित्यरश्मयो हरन्तीतिवेति ॥ १० ॥

१०. राष्ट्री (प्रदीपक) और देवों को आनन्द-मग्न करनेवाला वाक्य जिस समय अज्ञानियों को ज्ञान देते हुए यज्ञ में बैठता है, उस समय चारों ओर के लिए अन्न और जल का दोहन करता है। उस (माध्यमिकी वाक्) में जो श्रेष्ठ है, वह कहाँ जाता है?

देवींवाचमजनयन्तदेवास्तांविश्वरूपाःपशवोवदन्ति ।
सानोमन्द्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ ११ ॥

देवीम् । वाचम् । अजनयन्त । देवाः । ताम् । विश्वऽरूपाः । पशवः । वदन्ति । सा । नः । मन्द्रा । इषम् । ऊर्जम् । दुहाना । धेनुः । वाक् । अस्मान् । उप । सुऽस्तुता । आ । एतु ॥ ११ ॥

एषा माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माभिवादिनी भवतीति विभूतिमुपदर्शयति । यां देवीं द्योतमानां माध्यमिकां वाचं देवामाध्यमिका अजनयन्त जनयन्ति तां वाचं विश्वरूपाः सर्वरूपाः व्यक्तवाचः अव्यक्तवाचश्च पशवोवदन्ति तत्पूर्वकत्वाद्वाक्प्रवृत्तेः । सा वाग्देवी मन्द्रा मदना स्तुत्या हर्षयित्री वा वृष्टिप्रदानेन नोस्मभ्यं इषमन्नं ऊर्जं पयोघृतादिरूपं रसं च दुहाना क्षरन्ती धेनुः धेनुभूता सुष्टुताऽस्माभिःस्तुताऽस्मान् नेमान् उपैतु उपगच्छतु वर्षणायोद्युक्ता भवत्वित्यर्थः । तथाचयास्कः—देवींवाचमजनयन्तदेवास्तांविश्वरूपाः पशवोवदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सानोमदनान्नंच रसंच दुहाना धेनुर्वागस्मानुपैतुसुष्टुतेति ॥ ११ ॥

११. देवता लोग जिस दीप्तिमान् वाग्देवी को उत्पन्न करते हैं, उसे ही सभी प्रकार के पशु भी बोलते हैं। वह हर्ष देनेवाली वाक्, अन्न और रस देनेवाली धेनु के समान हमसे स्तुत होकर, हमारे पास आवे।

सखेविष्णोवितरंविक्रमस्वद्यौर्देहिलोकंवज्रायविष्कभे ।
हनावत्रंरिणचावसिन्धूनिन्द्रस्ययन्तुप्रसवेविसृष्टाः ॥१२॥५॥

सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व । द्यौः । देहि । लोकम् । वज्राय । विऽस्कभे । हनाव । वृत्रम् । रिणचाव । सिन्धून् । इन्द्रस्य । यन्तु । प्रऽसवे । विऽसृष्टाः ॥ १२ ॥ ५ ॥

---

१ नि ११. २८. । २ नि० ११. २९. ।

हे सखे विष्णो त्वं वितरमत्यन्तं विक्रमस्व विक्रमं कुरु। हे द्यौः त्वं वज्राय वज्रस्य विष्कभे विष्कंभनाय लोकं अवकाशं देहि प्रयच्छ। हे विष्णो त्वं चाहं चोभावावां वृत्रमसुरं हनावः हन्वः। सिन्धून् वृत्रावष्टब्धाः नदीश्च रिणचाव नयावः तेमी विसृष्टाः सिन्धवइन्द्रस्य प्रसवे यन्तु प्रेरणे गच्छन्तु॥ तमिममर्थं संगृह्य श्लोकैः शौनकोदर्शयति—त्रीन्लोकानभिवृत्यैतान् वृत्रस्तस्थौस्वयात्विषा। तंनाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोब्रवीत् (१) वृत्रंहनिष्ये तिष्ठस्व विक्रम्याद्य ममान्तिके। उद्यतस्यतुवज्रस्य द्यौर्ददातुममान्तरं (२) तथेतिविष्णुस्तच्चक्रे द्यौश्चास्यविवरंददौ। तदेतदखिलंप्रोक्तं सखेविष्णोइतिसृचेति (३)॥ १२॥

१२. मित्र विष्णु, तुम अत्यन्त पाद-विक्षेप करो। द्युलोक, तुम वज्र के गमन के लिए अवकाश प्रदान करो। तुम और मैं वृत्र का वध करूँगा और नदियों को (समुद्र की ओर) ले जाऊँगा। नदियाँ इन्द्र की आज्ञा के अनुसार गमन करें।

॥ इति षष्ठस्य सप्तमे पंचमोवर्गः॥ ५॥

ऋधगिति षोडशर्चमष्टमं सूक्तं। अत्रानुक्रम्यते—ऋधक्षोळशजमदग्निर्भार्गवो मैत्रावरुणं प्रागाथं त्रित्रिष्टुबन्तं तृतीयादिगायत्री परासतोबृहती स्तोत्रंराजस्वृक्सपादादित्याश्विव्यौ वायव्ये सौर्यौ बृहत्युषस्या सूर्यप्रभास्तुतिर्वा पावमानी गव्येइति। भृगुगोत्रोजमदग्निर्ऋषिः। चतुर्दश्याद्यास्तिस्रस्त्रिष्टुभः त्रयोदशीबृहती शिष्टानामयुजोबृहत्यः युजःसतोबृहत्यः तृतीयागायत्री-स्तोत्रंराजसुगायतेतिपादेनसहिता तेहिन्विरेइत्यादित्यदेवताका। आमेवचांसीतिद्वे अश्विनीदेवताके। आनोयज्ञंदिविस्पृशमितिद्वे वायुदेवत्ये। बण्महाँअसिसूर्येतिद्वे सूर्यदेवताके। इयंयानीत्येषा उषोदेवत्या। यद्वा सूर्यप्रभा अनयातूयते अतःसैवदेवता। प्रजाहतिस्रइत्येषापवमानदेवताका। मातारुद्राणामितिद्वे गोदेवत्ये शिष्टाः पंचर्चोमैत्रावरुण्यः। सूक्तविनियोगोलैंगिकः। संग्रामार्थं राज्ञः संनहने प्रयोवांमित्रावरुणेतिद्वे राजानंवाचयेत्। सूत्रितंच—अभीवर्तंवाचयति प्रयोवांमित्रावरुणेतिचद्वेइति। पृष्ठ्यस्य पंचमेहनि प्रउगे वायव्यतृचस्य आनोयज्ञमित्यादिके द्वेऋचावाद्ये। सूत्रितंच—आनोयज्ञंदिविस्पृशमितिद्वे आनोवायोमहेतनइत्येकेति। आश्विनं शंसिष्यन् होता बण्महाँअसीति द्वाभ्यांअग्निंजुहुयात्। सूत्रितंच—बण्महाँअसिसूर्येति द्वाभ्यां इन्द्रंवोविश्वतस्परीतिचेति। माध्यन्दिनसवने सोमातिरेके एकंशस्त्रमुपजायते तत्र बण्महाँअसीति प्रगाथः स्तोत्रियः। सूत्रितंच—बण्महाँअसिसूर्योदुत्यद्दर्शतंवपुरिति प्रगाथौ स्तोत्रियानुरूपाविति। अयमेवप्रगाथश्चातुर्विंशिकेहनि माध्यन्दिने ब्राह्मणाच्छंसिनो वैकल्पिकोनुरूपः। सूत्रितंच—श्रायन्तइवसूर्यं बण्महाँअसिसूर्येति। मधुपर्केगामुत्सृज्य मातारुद्राणामिति जपेत्। सूत्रितंच—मातारुद्राणां दुहितवसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन्निति।

तत्र प्रथमा—

ऋधंगित्थासमर्त्यःशशमेदेवतांतये ।
योनूनंमित्रावरुणावभिष्टंयआचक्रेहव्यदातये ॥ १ ॥

ऋधंक् । इत्था । सः । मर्त्यः । शशमे । देवऽतांतये । यः । नूनम् ।
मित्रावरुणौ । अभिष्टंये । आऽचक्रे । हव्यऽदांतये ॥ १ ॥

यो मनुष्यो नूनं क्षिप्रं हव्यदातये हविषां प्रदात्रे यजमानाय मित्रावरुणौ अभिष्टये अभिमतसिध्यर्थं आचक्रे अभिमुखौ करोति । समर्त्यो मनुष्यः ऋधक् सत्यं इत्था इत्थं देवतातये यज्ञार्थं शशमे हविः संस्करोति ॥ १ ॥

१. जो मनुष्य हविःप्रदाता यजमान के लिए, अभिमत की सिद्धि के लिए, मित्र और वरुण का सम्बोधन करता है, वह सचमुच इस प्रकार यज्ञ के लिए हवि का संस्कार करता है ।

वर्षिष्ठक्षत्राउरुचक्षसानरारजानादीर्घश्रुत्तमा ।
ताबाहुतानदंसनारथर्यतःसाकंसूर्यस्यरश्मिभिः ॥ २ ॥

वर्षिष्ठऽक्षत्रौ । उरुऽचक्षसा । नरा । राजाना । दीर्घश्रुत्ऽतमा । ता ।
बाहुता । न । दंसना । रथर्यतः । साकम् । सूर्यस्य । रश्मिऽभिः ॥ २ ॥

वर्षिष्ठक्षत्रौ अतिशयेनवृद्धबलौ उरुचक्षसा महादर्शनौ नरा नेतारौ कर्मणां राजाना दीप्यमानौ दीर्घश्रुत्तमा अतिशयेन विद्वांसौ ता तौ मित्रावरुणौ बाहुता न भुजाविव सूर्यस्यरश्मिभिः करणैः साकं सह दंसना दंसनानि कर्माणि । अपः अमः दंस इति कर्मनामसु पाठात् । रथर्यतः प्राप्नुतः यथा बाहू सह कर्म प्राप्नुतः तथा मित्रावरुणौ सह यज्ञं प्राप्नुतइत्यर्थः ॥ २ ॥

२. अतीव वर्द्धित-बल महादर्शन, नेता, दीप्तिमान् तथा अतीव विद्वान् वे मित्र और वरुण, दोनों बाहुओं के समान, सूर्य-किरणों के साथ, कर्म प्राप्त करते हैं ।

अथ तृतीया—

प्रयोवांमित्रावरुणाजिरोदूतोअद्रवत् ।
अयःशीर्षामदेरघुः ॥ ३ ॥

प्र । यः । वाम् । मित्रावरुणा । अजिरः । दूतः ।
अद्रवत् । अयःऽशीर्षा । मदेऽरघुः ॥ ३ ॥

हे मित्रावरुणौ वां युवां अजिरो गमनशीलो यो यजमानः प्राद्रवत् अभिगच्छति सदेवानां दूतोभवति । अयःशीर्षा हिरण्यालंकृतशिराश्च भवति । मदेरघुः मदकरे धने गन्ताच भवति ॥३॥

३. मित्र और वरुण, जो गमनशील यजमान तुम्हारे सामने जाता है, वह देवों का दूत होता है। उसका मस्तक सुवर्ण-मण्डित होता है और वह मदकर सोम प्राप्त करता है।

नयःसंपृच्छेनपुनर्हवीतवेनसंवादायरमंते ।
तस्मान्नोअद्यसमृतेरुरुष्यतंबाहुभ्यांनउरुष्यतम् ॥ ४ ॥

न । यः । सम्ऽपृच्छे । न । पुनः । हवीतवे । न । सम्ऽवादाय ।
रमंते । तस्मात् । नः । अद्य । सम्ऽऋतेः । उरुष्यतम् ।
बाहुऽभ्याम् । नः । उरुष्यतम् ॥ ४ ॥

यः शत्रुः संपृच्छे संप्रश्नाय न रमते न क्रीडते । नच पुनःपुनर्हवीतवे हवनाय रमते । नच-संवादाय रमते । तस्माच्छत्रोः समृतेः संग्रामात् नोस्मान् अद्य उरुष्यतं हे मित्रावरुणौ युवां रक्षतं । किंच तस्य शत्रोर्बाहुभ्यां नोस्मानुरुष्यतं रक्षतम् ॥ ४ ॥

४. जो शत्रु बार-बार पूछने पर भी आनन्वित नहीं होता, जो बार-बार बुलाने पर भी आनन्दित नहीं होता और जो कथोपकथन पर भी आनन्दित नहीं होता, उसके युद्ध से हमें आज बचाओ, उसके बाहुओं से हमें बचाओ।

प्रमित्रायप्रार्यम्णेसचथ्यमृतावसो ।
वरूथ्यं१वरुणेछन्द्यंवचःस्तोत्रंराजसुगायत ॥ ५ ॥ ६ ॥

प्र । मित्राय । प्र । अर्यम्णे । सचथ्यम् ।
ऋतवसो इत्यृतऽवसो । वरूथ्यम् । वरुणे । छन्द्यम् ।
वचः । स्तोत्रम् । राजऽसु । गायत ॥ ५ ॥ ६ ॥

हे ऋतवसो यज्ञधन मित्राय सचथ्यं सेवार्हं वरूथ्यं यज्ञगृहभवं च स्तोत्रं प्रगायत प्रकर्षेण गायत अर्यम्णेच प्रगायत वरुणे छन्द्यं प्रीणनसाधनं चैतादृशं वचः प्रगायत । प्रगायतेति बहुवचनं पूजार्थं । एतदेव दर्शयति राजसु मित्रादिषु राजसु स्तोत्रं गायत पठत मित्रादीन् त्रीन् राज्ञः स्तुतेति समुदायार्थः ॥ ५ ॥

५. यज्ञ-धन, मित्र के लिए सेवनीय और यज्ञगृहोत्पन्न स्तोत्र का गान करो। अर्यमा के लिए गाओ। वरुण के लिए प्रसन्नता-दायक गान करो। मित्र आदि तीन राजाओं के लिए गाओ।

अथ षष्ठी—

तेहिंन्विरेअरुणंजेन्यंवस्वेकंपुत्रंतिसृणाम्।
तेधामान्यमृतामर्त्यानामदब्धाअभिचक्षते ॥ ६ ॥

ते। हिन्विरे। अरुणम्। जेन्यम्। वसु। एकम्।
पुत्रम्। तिसृणाम्। ते। धामानि। अमृताः। मर्त्यानाम्।
अदब्धाः। अभि। चक्षते ॥ ६ ॥

अरुणमरुणवर्णं जेन्यं जयसाधनं वसु वासकं तिसृणां पृथिव्यादीनामेकं पुत्रं ते देवाहिन्विरे प्रेरयन्ति त्रैलोक्यस्य तमोनिवारणाय। किंच अदब्धाः केनाप्यहिंसिताः अमृताः मरणरहितास्तेदेवाः मर्त्यानां मनुष्याणां धामानि स्थानानि अभिचक्षते अभिपश्यन्ति ॥ ६ ॥

६. अरुणवर्ण, जयसाधन और वासप्रद पृथिवी, अन्तरिक्ष तथा आकाश (द्युलोक) आदि तीनों के लिए देवता लोग एक पुत्र (सूर्य) को प्रेरित करते हैं। अहिंसित और अमर देवगण मनुष्यों के स्थान देखते हैं।

आमेवचांस्युद्यताद्युमत्तमानिकर्त्वा।
उभायातंनासत्यासजोषसाप्रतिहव्यानिवीतये ॥ ७ ॥

आ। मे। वचांसि। उत्ऽयता। द्युमत्ऽतमानि।
कर्त्वा। उभा। यातम्। नासत्या। सऽजोषसा।
प्रति। हव्यानि। वीतये ॥ ७ ॥

हे नासत्या नासत्यौ सत्यस्य प्रणेतारौ सजोषसा संगतौ उभा उभौ युवां मे जमदग्नेर्मम उद्यता उद्यतानि द्युमत्तमानि दीप्ततमानि वचांसि स्तोत्ररूपाणि वाक्यानि कर्त्वा कर्माणि चायातं। किंच हव्यानि हवींषि वीतये भक्षणाय प्रतिगच्छतम् ॥ ७ ॥

७. सत्य-प्रणेता अश्विद्वय, मेरे उच्चारित और दीप्त वाक्यों और कर्मों के लिए आओ। हव्य-भक्षण के लिए आओ।

अथाष्टमी—

रातिंयद्वामरक्षसंहवामहेयुवाभ्यांवाजिनीवसू।
प्राचींहोत्रांप्रतिरन्ताावितंनरागृणानाजमदग्निना ॥ ८ ॥

रातिम् । यत् । वाम् । अरक्षसम् । हवामहे । युवाभ्याम् ।
वाजिनीवसू इति वाजिनीऽवसू । प्राचीम् । होत्राम् ।
प्रऽतिरन्तौ । इतम् । नरा । गृणाना । जमत्ऽअग्निना ॥ ८ ॥

हे वाजिनीवसू अन्नधनावश्विनौ वां युवयोः संबन्धि यदरक्षसं रक्षोवर्जितं दानमस्ति तद्यदा हवामहे याचामहे। एतदेव विशदयति युवाभ्यां क्रियमाणां रातिं दानं हवामहे इति तदानीं प्राचीं प्राङ्मुखां होत्रां स्तुतिं प्रतिरन्तौ वर्धयन्तौ नरा नेतारौ जमदग्निना ऋषिणा गृणाना स्तूयमानौ सन्तौ इतं आगच्छतम् ॥ ८ ॥

८. अन्न और धनवाले, अश्विद्वय, तुम लोगों का राक्षस-शून्य जो दान है, उसको जिस समय हम माँगेंगे, उस समय तुम लोग जमदग्नि के द्वारा स्तुत होकर तथा पूर्व मुख और स्तुति-वर्द्धक नेता होकर आना।

आनोयज्ञंदिविस्पृशंवायोयाहिसुमन्मभिः ॥।
अन्तःपवित्रउपरिश्रीणानोऽयंशुक्रोअयामिते ॥ ९ ॥

आ । नः । यज्ञम् । दिविऽस्पृशम् । वायो इति । याहि ।
सुमन्मऽभिः । अन्तरिति । पवित्रे । उपरि । श्रीणानः ।
अयम् । शुक्रः । अयामि । ते ॥ ९ ॥

हे वायो त्वं नोस्माकं दिविस्पृशं तं यज्ञमायाहि । किमर्थमागमनमित्यत्राह—सुमन्मभिः सुष्टुतिभिः अन्तः पवित्रे पवित्रस्यमध्ये उपरिश्रीणानः श्रयमाणो निषिच्यमाणोयं शुक्रः सोमस्ते तुभ्यं अयामि नियतआसीदिति ॥ ९ ॥

९. वायु, तुम हमारी सुन्दर स्तुति से स्वर्ग-स्पर्शी यज्ञ में आना। पवित्र (घृत, वेद-मन्त्र, कुश आदि) के बीच आश्रित यह शुभ्र सोम तुम्हारे लिए नियत हुआ था।

अथ दशमी—

वेत्यध्वर्युःपथिभीरजिष्ठैःप्रतिहव्यानिवीतये ।
अधानियुत्वउभयस्यनःपिबशुचिंसोमंगवाशिरम् ॥ १० ॥ ७ ॥

वेति । अध्वर्युः । पथिऽभिः । रजिष्ठैः । प्रति । हव्यानि ।
वीतये । अध । नियुत्वः । उभयस्य । नः । पिब ।
शुचिम् । सोमम् । गोऽआशिरम् ॥ १० ॥ ७ ॥

हे नियुत्वः नियुत्संज्ञकाश्ववन्वायो अध्वर्युः हविर्धानाव रजिष्ठैः ऋजुतमैः पथिभिर्मार्गैः वेतिगच्छति वीतये भक्षणाय। तव भक्षणानि हव्यानि हवींषिच प्रतिनयतीतिशेषः। अध अथ नोस्माकं संबन्धिनं उभयस्य उभयविधं सोमं कर्मणिषष्ठी पिब। उभयविधत्वं दर्शयति शुचिं शुद्धं सोमं गवाशिरं गव्येन पयसा मिश्रितं चेति ॥ १० ॥

१०. नियुत् अश्वोंवाले वायु, अध्वर्यु सरलतम मार्ग से जाता है। वह तुम्हारे भक्षण के लिए हवि ले जाता है। हमारे लिए दोनों प्रकार के (शुद्ध और दुग्ध-मिश्रित) सोम का पान करो।

॥ इति षष्ठस्य सप्तमे सप्तमोवर्गः ॥ ७ ॥

अथैकादशी—

बण्महाँअसिसूर्यबळादित्यमहाँअसि।
महस्तेसतोमहिमापनस्यतेद्धादेवमहाँअसि ॥ ११ ॥

बट्। महान्। असि। सूर्य। बट्। आदित्य। महान्।
असि। महः। ते। सतः। महिमा। पनस्यते।
अद्धा। देव। महान्। असि ॥ ११ ॥

हे सूर्य त्वं महान् तेजसाधिकोसि बट् सत्यं नैतन्मिथ्येत्यर्थः। हे आदित्य अदितेः पुत्र त्वं महान् बलेनाप्यधिकोसि बट् सत्यं। महो महतः सतोभवतः ते महिमा महत्त्वं पनस्यते स्तोतृभिः स्तूयते। हे देव द्योतनादिगुणयुक्त सूर्य त्वं महान् वीर्येणाप्यधिकोसि भवसि। अद्धा सत्यमेव अत्र नसंशयइत्यर्थः। बट् सत्रा अद्धेति सत्यनामसु पाठाव ॥ ११ ॥

११. सूर्य, सचमुच तुम महान् हो, आदित्य, तुम महान् हो, यह बात सच्ची है। तुम महान् हो, तुम्हारी महिमा स्तुत होती है। देव, तुम महान् हो, यह बात सच्ची है।

बट्सूर्यश्रवसामहाँअसिसत्रादेवमहाँअसि।
मह्नादेवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यम् ॥ १२ ॥

बट्। सूर्य। श्रवसा। महान्। असि। सत्रा। देव। महान्।
असि। मह्ना। देवानाम्। असुर्यः। पुरःऽहितः। विऽभु।
ज्योतिः। अदाभ्यम् ॥ १२ ॥

हे सूर्य त्वं श्रवसा श्रवणेन महान् सर्वाधिकोसि बट् सत्यं। हे देव द्योतमान सूर्य त्वं देवानां मध्ये मह्ना महत्त्वेन महान् अधिकोसि। सत्रा सत्यमेव असुर्यः असुराणां हन्ताचा-

सि। किंच त्वं देवानां पुरोहितो हितोपदेष्टासि। किंच ते ज्योतिस्तेजोविभु महत् अदाभ्यं केनाप्यहिंस्यं च ॥ १२ ॥

१२. तुम सुनने में महान् हो, यह बात सच्ची है। देवों में, तुम महिमा के द्वारा महान् हो, यह बात सत्य है। तुम शत्रु-विनाशक हो और तुम देवों के हितोपदेशक हो। तुम्हारा तेज महान् और अहिंसनीय है।

इयंयानीच्यर्किणीरूपारोहिण्याकृता।
चित्रेवप्रत्यंदर्श्यायत्य१न्तर्दशसुबाहुषु ॥ १३ ॥

इयम्। या। नीची। अर्किणी। रूपा। रोहिण्या।
कृता। चित्राऽइव। प्रति। अदर्शि। आऽयती। अन्तः।
दशऽसु। बाहुषु ॥ १३ ॥

अस्यामृच्युषसःस्तुतिः। सूर्यप्रभायावा। येयं नीची अवाङ्मुखी अर्किणी स्तुतिमती रूपा रूपवती रोहिण्या प्रकाशयुक्ता कृता उषाः सूर्यप्रभावोत्पादिता सा अन्तर्ब्रह्मांडस्यमध्ये बाहुषु बाहुस्थानीयासु दशसु दशसंख्याकासु दिक्षु आयती आगच्छती चित्रेव चित्रागौरिव प्रत्यदर्शि सर्वैरदृश्यत ॥ १३ ॥

१३. यह जो निम्नमुखी, स्तुतिमती, रूपवती और प्रकाशवती उषा, सूर्य-प्रभाव के द्वारा, उत्पादित हुई है, वह ब्रह्माण्ड की बहु-स्थानीय दसों दिशाओं में आती हुई, चित्रा गाय के समान, देखी जाती है।

अथ चतुर्दशी—

प्रजाहतिस्रोअत्यायमीयुर्न्य१न्याअर्कमभितोविविश्रे।
बृहद्धतस्थौभुवनेष्वन्तःपवमानोहरितआविवेश ॥ १४ ॥

प्रऽजाः। ह। तिस्रः। अतिऽआयम्। ईयुः। नि। अन्याः।
अर्कम्। अभितः। विविश्रे। बृहत्। ह। तस्थौ। भुवनेषु।
अन्तरिति। पवमानः। हरितः। आ। विवेश ॥ १४ ॥

यास्तिस्रः प्रजाः अत्यायमीयुः अत्यायमायन् अन्यास्ताइमाः प्रजाः अर्कमर्चनीयमग्निं अभितोनिविविश्रे अभितोनिविष्टाः ततोनपराबभूवुः। भुवनेष्वन्तर्मध्ये बृहत् महानसावादित्यः प्रजापतिरित्येके तस्थौ प्रकाशयन्नतिष्ठत् हरितोदिशःपवमानोवायुराविवेश आविष्टः। हौ पूरणौ। तथाचैतस्यब्राह्मणं—प्रजाहतिस्रोअत्यायमीयुरिति यावैताइमाः प्रजास्तिस्रोअत्यायमायंस्तानीमानि वयांसि वंगावगधाश्चेररपादान्यन्या अर्कमभितोविविश्रइति ताइमाः प्रजा अर्कमभितोनिविष्टा

इममेवाग्निं बृहद्धतस्थौ भुवनेष्वन्तरित्यदउ एवबृहद्भुवनेष्वन्तरसावादित्यः पवमानोहरित आविवेशेति वायुरेव पवमानो दिशोहरित्त आविष्टइति । वाजसनेयिनोप्यामनन्ति—सतपोतप्यत सप्रजाअसृजत ताअस्यप्रजाः सृष्टाः पराबभूवुः तानीमानिवयांसीत्युपक्रम्य प्रजाहतिस्रोअत्यायमीयुरिति याअमूः प्रजाअत्यायन न्यन्याअर्कमभितोविविश्रइति अग्निर्वाअर्कस्तमिमाः प्रजाअभितोनिविष्टास्ताइमाः पराभूता बृहद्धतस्थौभुवनेष्वन्तरिति प्रजापतिमेवैतदभ्यनूक्तं पवमानो हरितआविवेशेति दिशोवैहरितस्ता अयं पवमानआविष्टइति ॥ १४ ॥

१४. तीन प्रजायें अतिक्रमण करके चली गई थीं। अन्य प्रजायें पूजनीय अग्नि के चारों ओर आश्रित हुई थीं। भुवनों में आदित्य महान् होकर अवस्थित हुए थे। पवमान (वायु) दिशाओं में घुस गये।

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ १५ ॥

माता । रुद्राणाम् । दुहिता । वसूनाम् । स्वसा । आदित्यानाम् ।
अमृतस्य । नाभिः । प्र । नु । वोचम् । चिकितुषे । जनाय ।
मा । गाम् । अनागाम् । अदितिम् । वधिष्ट ॥ १५ ॥

अस्मिन् दृचे गौःस्तूयते—या गौः रुद्राणां रुद्रपुत्राणां मरुतां माता जननी वसूनां दुहिता पुत्री आदित्यानां स्वसा भगिनी अमृतस्य पयसोनाभिः आवासस्थानं तां अनागां अनागसं अदितिमदीनां गां गोरूपां देवीं मावधिष्ट हे जना माहिंसिष्टेति चिकितुषे चेतनावते जनाय नु इदानीं प्रवोचं अहं प्रावोचमिति शुश्रूषमाणेभ्यउपदेशः ॥ १५ ॥

१५. जो गौ रुद्रों की माता, वसुओं की पुत्री, आदित्यों की भगिनी और दुग्ध का निवास-स्थान है, मनुष्यो, उस निरपराध और अदीन (अदिति) गो-देवी का वध नहीं करना। मैंने इस बात को बुद्धिमान् मनुष्य से कहा था। अथ षोडशी—

वचोविदं वाचमुदीरयन्तीं विश्वाभिर्धीभिरुपतिष्ठमानाम् ।
देवीं देवेभ्यः पर्येयुषीं गामा मावृक्त मर्त्यो दभ्रचेताः ॥ १६ ॥ ८ ॥

वचःऽविदम् । वाचम् । उत्ऽईरयन्तीम् । विश्वाभिः । धीभिः ।
उपऽतिष्ठमानाम् । देवीम् । देवेभ्यः । परि । आऽईयुषीम् ।
गाम् । आ । मा । अवृक्त । मर्त्यः । दभ्रऽचेताः ॥ १६ ॥ ८ ॥

वचोविदं वचसोलंभयित्रीं वाचमुदीरयन्तीं पयः पीत्वा पश्चाद्वाचमुदीरयन्तीं । क्षुधितोहि जनो न वाचमुदीरयति भुक्त्वा पश्चादुदीरयति । विश्वाभिः सर्वाभिर्धीभिर्वाग्भिः उपतिष्ठमानां दे-

वीं द्योतमानां देवेभ्यो देवार्थं मा मां एयुषीं अवगच्छन्तीं गां दभ्रचेता अल्पबुद्धिर्मर्त्यो मनुष्यः पर्यावृक्त परिवर्जयति ॥ १६ ॥

१६. वाक्य-दात्री, वचन उच्चारण करनेवाली, सारे वाक्यों के साथ उपस्थित, प्रकाशमाना और देवता के लिए मुझे जाननेवाली गो-देवी को छोटी बुद्धि का मनुष्य ही परिवर्जित करता है।

॥ इति षष्ठस्य सप्तमेऽष्टमोवर्गः ॥ ८ ॥

त्वमग्नइति द्वाविंशत्यृचं नवमं सूक्तं गायत्रमाग्नेयं। भृगुगोत्रः प्रयोगोनामऋषिः बार्हस्पत्यः पावकविशेषण विशिष्टोऽग्न्याख्योवा। यद्वा सहोनाम्नःपुत्रौ गृहपतियविष्ठसंज्ञकौ द्वावग्नी तौ सहेदं सूक्तमपश्यतां तस्मादस्य तावृषी। अथवा तयोरन्यतरः। तथाचानुक्रान्तं—त्वमग्नेद्व्यधिका भार्गवः प्रयोगो बार्हस्पत्योवाग्निःपावकः सहसस्सुतयोर्वाऽग्न्योर्गृहपतियविष्ठयोर्वान्यतर आग्नेयंत्विति। प्रातरनुवाकस्याग्नेयेक्रतौ गायत्रेछन्दसि आदितोऽष्टादशर्चः। सूत्रितंच—त्वमग्नेबृहद्वयइत्यष्टादशार्चन्तस्त्वेविसूक्तेइति। देवसुवांहविःष्वग्नेर्गृहपतेरनुवाक्या त्वमग्नेबृहद्वयइत्येषा। सूत्रितंच—त्वमग्नेबृहद्वयो हव्यवाळग्निरजरःपितानइति। अन्वारंभणीयायामग्नेर्भगिनोनुवाक्या आसवंसवितुरित्येषा। सूत्रितंच—आसवंसवितुर्यथा सनोराधांस्याभरेति। आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणस्याग्निंवोवृधन्तमिति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितंच—अग्निंवोवृधन्तमग्नेयंयज्ञमध्वरमिति। दशमेहनि इमंनोयज्ञमिति स्तोकसूक्तस्य द्वितीयस्यस्थाने अग्नेघृतस्येत्येषा। सूत्रितंच—स्तोकसूक्तस्य द्वितीयतृतीययोःस्थानेऽग्नेघृतस्यधीतिभिरुमेसुश्चन्द्रसर्पिषइत्येते इति।

तत्र प्रथमा—

त्वमग्नेबृहद्वयोदधासिदेवदाशुषे। कविर्गृहपतिर्युवा ॥ १ ॥

त्वम्। अग्ने। बृहत्। वयः। दधासि। देव। दाशुषे। कविः। गृहऽपतिः। युवा ॥ १ ॥

हे देव द्योतमानाग्ने कविः क्रान्तकर्मा गृहपतिः गृहपालको युवा नित्यतरुणस्त्वं दाशुषे हविषांप्रदात्रे यजमानाय बृहद्वयः महदन्नं दधासि प्रयच्छसीत्यर्थः ॥ १ ॥

१. प्रकाशमान अग्नि, तुम कवि (क्रान्तकर्मा), गृहपालक और नित्य तरुण हो। तुम हव्यदाता यजमान को महान् अन्न देते हो।

अथ द्वितीया—

सनइळानयासहदेवाँअग्नेदुवस्युवा। चिकिद्विभानवावह ॥ २ ॥

सः। नः। इळानया। सह। देवान्। अग्ने। दुवस्युवा। चिकित्। विभानो इति विऽभानो। आ। वह ॥ २ ॥

हे विभानो विशिष्टदीप्ते अग्ने सत्वं चिकित् ज्ञातासन् नोस्माकं दुवस्युवा परिचरणशीलया ईळानया स्तुवत्या वाचासह देवानावह ॥ २ ॥

२. विशिष्ट दीप्तिवाले अग्नि, तुम ज्ञाता होकर हमारे वाक्य से देवों को ले आओ। हम स्तुति और परिचर्या करते हैं।

त्वयाँहस्विद्युजावयंचोदिष्ठेनयविष्ठ्य। अभिष्मोवाजसातये॥३॥

त्वया। ह। स्वित्। युजा। वयम्। चोदिष्ठेन।
यविष्ठ्य। अभि। स्मः। वाजऽसातये ॥ ३ ॥

हे यविष्ठ्य युवतमाग्ने चोदिष्ठेनातिशयेन धनानां प्रेरयित्रा त्वया युजा स्विद्ध सहायेनैव वयं भार्गवाः प्रयोगाः बार्हस्पत्याः पावकाः अग्नयोवा वाजसातये अन्नलाभायाभिष्मः शत्रूनभिभवेम ॥ ३ ॥

३. युवतम अग्नि, तुम अतीव धनप्रेरक हो, तुम्हें सहायक पाकर हम, अन्न-लाभ के लिए, शत्रुओं को दबावेंगे।

और्वभृगुवच्छुचिमप्नवानवदाहुवे। अग्निंसमुद्रवाससम् ॥ ४ ॥

और्वभृगुऽवत्। शुचिम्। अप्नवानऽवत्।
आ। हुवे। अग्निम्। समुद्रऽवाससम् ॥ ४ ॥

समुद्रवाससं समुद्रमध्यवर्तिनं वाडवं शुचिं शुद्धमग्निं और्वभृगुवत् यथा और्वभृगुः अप्नवानवत् यथा अप्नवानः तथा हुवे आह्वयाम्यहं ॥ ४ ॥

४. मैं समुद्र-मध्यस्थित और शुद्ध अग्नि को, और्व भृगु और अप्नवान के समान, बुलाता हूँ।

हुवेवातस्वनंकविंपर्जन्यक्रन्द्यंसहः। अग्निंसमुद्रवाससम् ॥५॥९॥

हुवे। वातऽस्वनम्। कविम्। पर्जन्यऽक्रन्द्यम्। सहः।
अग्निम्। समुद्रऽवाससम् ॥ ५ ॥ ३ ॥

वातस्वनं वातसदृशध्वनिं कविं क्रान्तकर्माणं पर्जन्यक्रन्द्यं पर्जन्यसदृशक्रन्दनं सहः सहस्विनं वाडवमग्निं हुवे आह्वयामि। अन्यद्गतम् ॥ ५ ॥

५. वायु के समान ध्वनिवाले, मेघ के समान क्रन्दन करनेवाले, कवि, बली और समुद्रशायी अग्नि को मैं बुलाता हूँ।

॥ इति षष्ठस्य सप्तमे नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

आसवंसवितुर्यथाभगस्येवभुजिंहुवे । अग्निंसमुद्रवाससम् ॥ ६ ॥

आ । सवम् । सवितुः । यथा । भगस्यऽइव ।

भुजिम् । हुवे । अग्निम् । समुद्रऽवाससम् ॥ ६ ॥

सवितुः प्रेरकस्य देवस्य सवं यथा प्रसवं इव भगस्येव भुजिं भगाख्यस्य देवस्य भोगमिव च समुद्रवाससमग्निं आहुवे आह्वयामि ॥ ६ ॥

६. सूर्य के प्रसव के समान और भग देवता के भोग के समान समुद्रशायी अग्नि को मैं बुलाता हूँ।

अग्निंवोवृधन्तमध्वराणांपुरूतमम् । अच्छानप्त्रेसहस्वते ॥ ७ ॥

अग्निम् । वः । वृधन्तम् । अध्वराणाम् ।

पुरुऽतमम् । अच्छ । नप्त्रे । सहस्वते ॥ ७ ॥

अध्वराणामहिंस्यानां बलिनां नप्त्रे बन्धुं सहस्वते बलवन्तं विभक्तिव्यत्ययः वृधन्तं ज्वालाभिर्वर्धमानं पुरुतमं अतिशयेन बहुमग्निं ऋत्विजोवोयूयं अच्छ अभिगच्छत ॥ ७ ॥

७. अहिंसनीय, (अध्वर) लोगों के बन्धु, बली, वर्द्धमान और बहुतम अग्नि की ओर ऋत्विको, तुम जाओ।

अयंयथानआभुवत्त्वष्टारूपेवतक्ष्या । अस्यक्रत्वायशस्वतः ॥८॥

अयम् । यथा । नः । आऽभुवत् । त्वष्टा ।

रूपाऽइव । तक्ष्या । अस्य । क्रत्वा । यशस्वतः ॥ ८ ॥

अयमग्निर्नोस्मान् तक्ष्या विकर्तव्यानि रूपेव त्वष्टा रूपाणि वर्धकिरिव यथा येनप्रकारेण आभुवत् आभवति तथैवमग्निं अभिगच्छतेत्यर्थः।किंच वयं अस्याग्नेः क्रत्वा प्रज्ञानेन युक्ताः यशस्वतो यशस्वन्तो भवेमेति शेषः ॥ ८ ॥

८. यही अग्नि हमारे कर्त्तव्य को बनाते हैं। हम अग्नि के प्रज्ञान से यशस्वी होंगे।

अथ नवमी—

अयंविश्वाअभिश्रियोग्निर्देवेषुपत्यते । आवाजैरुपनोगमत् ॥ ९॥

अयम् । विश्वाः । अभि । श्रियः । अग्निः ।

देवेषु । पत्यते । आ । वाजैः । उप । नः । गमत् ॥ ९ ॥

मनुष्याणां विश्वाः सर्वाः श्रियः संपदः देवेषु देवानां मध्ये योयमग्निरभिपत्यते अ-भिगच्छति सोग्निर्नोस्मानपि वाजैरन्नैरुपागमदुपागच्छतु ॥ ९ ॥

९. देवों के बीच अग्नि ही मनुष्यों की सारी सम्पदायें प्राप्त करते हैं। अग्नि, अन्न के साथ, हमारे पास आवें।

विश्वेषामिहस्तुहिहोतॄणांयशस्तमम् । अग्निंयज्ञेषुपूर्व्यम् ॥१०॥१०॥

विश्वेषाम् । इह । स्तुहि । होतॄणाम् ।
यशःऽतमम् । अग्निम् । यज्ञेषु । पूर्व्यम् ॥ १० ॥ १० ॥

विश्वेषां सर्वेषां होतॄणांमध्ये यशस्तमं यशस्वितमं यज्ञेषु पूर्व्यं मुख्यं अग्निमिहास्मदीये यज्ञे हे स्तोतः स्तुहि ॥ १० ॥

१०. स्तोता, सारे होताओं में अधिक यशस्वी और यज्ञ में प्रधान अग्नि की, इस यज्ञ में, स्तुति करो।

॥ इति षष्ठस्य सप्तमे दशमोवर्गः ॥ १० ॥

अथैकादशी--

शीरंपावकशोचिषंज्येष्ठोयोदमेष्वा । दीदायदीर्घश्रुत्तमः ॥ ११ ॥

शीरम् । पावकऽशोचिषम् । ज्येष्ठः । यः ।
दमेषु । आ । दीदाय । दीर्घश्रुत्ऽतमः ॥ ११ ॥

ज्येष्ठो देवानांमुख्यो दीर्घश्रुत्तमो अतिशयेनविद्वानग्निः दमेषु यज्विनां गृहेषु आदीदाय आदीप्यते तं शीरं अनुशायिनं । तथाचयास्कः—अनुशायिनमितिवा शिनमितिवेति[1] । पावकशोचिषं पावकदीप्तिं स्तुहीत्यर्थः ॥ ११ ॥

११. देवों के बीच प्रधान और अतिशय विद्वान् अग्नि याज्ञिकों के गृह में प्रदीप्त होते हैं। पवित्र दीप्तिवाले और शयन करनेवाले अग्नि की स्तुति करो।

अथ द्वादशी—

तमर्वन्तंनसानसिंगृणीहिविप्रशुष्मिणम् । मित्रंनयातयज्जनम् ॥१२॥

तम् । अर्वन्तम् । न । सानसिम् । गृणीहि ।
विप्र । शुष्मिणम् । मित्रम् । न । यातयत्ऽजनम् ॥ १२ ॥

---

1 नि० ४. १४.।

हे विप्र मेधाविन् स्तोतः अर्वन्तं अश्वमिव सानसिं संभजनीयं शुष्मिणं बलिनं मित्रं न सखायमिव यातयजनं हतशत्रुजननं तमग्निं गृणीहि स्तुहि ॥ १२ ॥

१२. मेधावी स्तोता, अश्व के समान भोग-योग्य, बली और मित्र के समान शत्रु-निधन-कारी अग्नि की स्तुति करो।

**उप॑त्वाजा॒मयो॒गिरो॒दे॑दिश॑तीर्ह॑वि॒ष्कृत॑ः। वा॒योरनी॑के अस्थिरन् ॥१३॥**

उप॑। त्वा॒। जा॒मय॑ः। गिर॑ः। दे॑दिशतीः। ह॒वि॒ःऽकृत॑ः।
वा॒योः। अनी॑के। अ॒स्थि॒र॒न् ॥ १३ ॥

हे अग्ने हविष्कृतो यजमानार्थं गिरः स्तुतयः जामयः स्वसारइव देदिशतीः तवगुणान् दिशन्त्यः त्वा त्वामुपतिष्ठन्ते वायोरनीके समीपे त्वां समेधयन्त्यः अस्थिरन् अतिष्ठंश्च ॥१३॥

१३. अग्नि, यजमान के लिए स्तुतियाँ, भगिनियों के समान, तुम्हारे गुण गाते हुए तुम्हारी सेवा करती हैं। तुम्हें वायु के समीप स्थापित भी करती हैं।

**यस्य॑त्रि॒धात्ववृ॑तंब॒र्हिस्त॒स्थावसं॑दिनम्। आप॑श्चि॒न्निद॑धाप॒दम् ॥१४॥**

यस्य॑। त्रि॒ऽधातु॑। अवृ॑तम्। ब॒र्हिः। त॒स्थौ।
अस॑म्ऽदिनम्। आप॑ः। चि॒त्। नि। द॒ध॒। प॒दम् ॥ १४ ॥

यस्याग्नेस्त्रिधातु त्रिवृतं अनावृतंच असंदिनं अबद्धंच प्रस्तरणकालेहि बर्हिरबद्धं भवति बर्हिस्तस्थौ आसनार्थं तिष्ठति। तस्मिन्नग्नावापश्चित् आपोपि पदं स्थानं निदध निदधति आन्तरिक्ष्यामाध्यमिके पदं निदधतीत्यर्थः ॥ १४ ॥

१४. जिन अग्नि के तीन छिपे और न बँधे हुए कुश हैं, उन अग्नि में जल भी स्थान पाता है। अथ पंचदशी—

**प॒दंदे॒वस्य॑मी॒ळ्हुषो॒नाधृ॑ष्टाभिरू॒तिभि॑ः। भ॒द्रासूर्य॑इवोप॒दृक् ॥१५॥११॥**

प॒दम्। दे॒वस्य॑। मी॒ळ्हुष॑ः। अना॑धृष्टाभिः।
ऊ॒तिऽभि॑ः। भ॒द्रा। सूर्य॑ःऽइव। उ॒प॒ऽदृक् ॥ १५ ॥ ११ ॥

मीळ्हुषः कामानां सेक्तुर्देवस्य द्योतमानस्याग्नेः पदं स्थानं अनाधृष्टाभिः शत्रुभिरनाधृष्टाभिः ऊतिभीरक्षाभिः भजनीयं भवतीत्यर्थः तथैवास्योपदृक् उपद्रष्टिरपि सूर्यइव यथा सूर्यस्तद्वद्भद्रा मनुष्यैर्भजनीयाभवति ॥ १५ ॥

१५. अभीष्ट-वर्षक और प्रकाशमान अग्नि का स्थान सुरक्षित और भोग्य है। उनकी दृष्टि भी, सूर्य के समान मंगलमयी है।

॥ इति षष्ठस्य सप्तमे एकादशोवर्गः ॥ ११ ॥

अथ षोडशी–

अग्नेघृतस्यधीतिभिस्तेपानोदेवशोचिषा। आदेवान्वक्षियक्षिच ॥१६॥

अग्ने। घृतस्य। धीतिऽभिः। तेपानः। देव।
शोचिषा। आ। देवान्। वक्षि। यक्षि। च ॥ १६ ॥

हे देव द्योतमानाग्ने घृतस्य दीप्तिसाधनस्याज्यस्य धीतिभिः निधानैः तेपानः तपन् शोचिषा ज्वालया देवान् मत्यावक्षि आवह यक्षि यज च ॥ १६ ॥

१६. अग्निदेव, दीप्ति-साधक घी के निधान (आगार) के द्वारा तृप्त होकर ज्वाला के द्वारा देवों को बुलाओ और यज्ञ करो।

तंत्वांजनन्तमातरःकविंदेवासोअङ्गिरः। हव्यवाहममर्त्यम् ॥१७॥

तम्। त्वा। अजनन्त। मातरः। कविम्। देवासः।
अङ्गिरः। हव्यऽवाहम्। अमर्त्यम् ॥ १७ ॥

हे अंगिरोग्ने कविं क्रान्तकर्माणं अमर्त्यं मंरणरहितं हव्यवाहं हविषां वोढारं तं प्रसिद्धं त्वा त्वां देवासोदेवाः मातरइवाजनन्त जनयन्ति ॥ १७ ॥

१७. अंगिरा अग्नि, कवि, अमर, हव्यदाता और प्रसिद्ध अग्नि को, (तुमको) देवों ने, माताओं के समान; उत्पन्न किया है।

प्रचेतसंत्वाकवेग्नेदूतंवरेण्यम्। हव्यवाहंनिषेदिरे॥ १८ ॥

प्रऽचेतसम्। त्वा। कवे। अग्ने। दूतम्। वरेण्यम्।
हव्यऽवाहम्। नि। सेदिरे ॥ १८ ॥

हे कवे क्रान्तकर्मन्नग्ने प्रचेतसं प्रकृष्टबुद्धिं वरेण्यं वरणीयं दूतं देवानां हव्यवाहं हविषां वोढारं त्वा त्वां निषेदिरे देवानिषीदन्ति ॥ १८ ॥

१८. कवि अग्नि, तुम प्रकृष्टबुद्धि, वरणीय दूत और देवों के हव्य-वाहक हो। तुम्हारे चारों ओर देवता लोग बैठते हैं।

अथैकोनविंशी–

नहिमेअस्त्यघ्न्यानस्वधितिर्वनन्वति। अथैतादृग्भरामिते ॥१९॥

नहि। मे। अस्ति। अघ्न्या। न। स्वऽधितिः। वनन्ऽवति।
अथ। एतादृक्। भरामि। ते ॥ १९ ॥

हे अग्ने मे मम भार्गवस्य प्रयोगस्य ऋषेः अघ्न्या गौः। अघ्न्या उस्रेति गोनामसु पाठात्। नह्यस्ति नविद्यते। यस्याः पयसाज्येनच त्वां यजेय। किंच स्वधितिः परशुः नहि वनन्वति काष्ठानि हन्ति यैःकाष्ठैः त्वां समिन्धीय। अथैतादृक् अग्निहोत्रार्थं पयसोदोग्ध्रीं गां इन्धनसाधनानि काष्ठानि चैतत्सर्वं ते तुभ्यं अहं भरामि॥ १९॥

१९. अग्नि, मेरे (ऋषि के) पास गाय नहीं है, काठ को काटनेवाला फरसा भी नहीं है। यह सब मैं तुमको दे चुका।

यदंग्नेकानिकानिंचिदातेदारूंणिदुध्मसिं। ताजुंषस्वयविष्ठ्य॥२०॥

यत्। अग्ने। कानिं। कानिं। चित्। आ। ते। दारूंणि।
दुध्मसिं। ता। जुषस्व। यविष्ठ्य॥ २०॥

पूर्वस्यामृच्युक्तार्थस्य विवरणमत्र। हे यविष्ठ्य युवतमाग्ने तुभ्यं यद्यदा कानि कानिचित् यानिकान्यपि दारूणि काष्ठानि आदध्मसि आधारयामि। तदा ता तानि अपरशुवृक्णान्यपि जुषस्व सेवस्व। तथाच यजुर्ब्राह्मणं—नहस्मवै पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोगएव ऋषिरस्वदयद्यदग्ने यानि कानिचेति समिधमादधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदतइति[1]॥ २०॥

२०. युवकतम अग्नि, तुम्हारे लिए जब मैं कोई कोई कार्य करता हूँ, तब तुम अपरशु-छिन्न काष्ठों की ही सेवा करते हो।

अथैकविंशी—

यदत्त्युंपजिह्विकायद्वम्रोअंतिसर्पंति। सर्वंतदंस्तुतेघृतम्॥ २१॥

यत्। अत्तिं। उपऽजिह्विका। यत्। वम्रः। अतिऽसर्पंति॥
सर्वंम्। तत्। अस्तु। ते। घृतम्॥ २१॥

हे अग्ने यत् काष्ठादिकं उपजिह्विका उपजिघ्रतीत्युपजिह्विका अत्ति भक्षयति यच्च काष्ठादिकं वम्रः वमत्युदकमितिवम्रः। उपजिह्विकावम्रशब्दौ यद्यपि पर्यायौ तथापि पृथगुपादानात् वम्रशब्दस्तद्विशेषे पर्यवस्यति। सोप्यतिसर्पति अतिगच्छति तत्सर्वं ते तव घृतं घृतसदृशमस्तु यथा घृतं तव प्रियकरं भवति तथा प्रियकरं भवत्वित्यर्थः॥ २१॥

२१. जिन काठों को तुम्हारी ज्वाला जलाती है और जिनको तुम्हारी जीभ (ज्वाला) लाँघकर जाती है, वह सब काठ घी के समान हों।

---

[1] तै० सं० ५. १. १०.।

अथ द्वाविंशी—

अ॒ग्निमि॒न्धानो॒मन॑सा॒धियं॑सचेत॒मर्त्यः॑ ।
अ॒ग्निमी॑धेवि॒वस्व॑भिः ॥ २२ ॥ १२ ॥

अ॒ग्निम् । इ॒न्धानः॑ । मन॑सा । धिय॑म् । स॒चे॒त॒ । मर्त्यः॑ ।
अ॒ग्निम् । ई॒धे॒ । वि॒वस्व॑ऽभिः ॥ २२ ॥ १२ ॥

मर्त्योमनुष्योऽग्निमिन्धानः काष्ठैःप्रज्वलन् मनसैव श्रद्दधानो धियंकर्मसचेत काले भजेत । विवस्वभिः ऋत्विग्भिश्चाग्निमेव ईधे प्रज्वलति ॥ २२ ॥

२२. मनुष्य काठ के द्वारा अग्नि को जलाते हुए मन के द्वारा कर्म का आचरण करता है और ऋत्विकों के द्वारा अग्नि को समिद्ध करता है।

॥ इति षष्ठस्य सप्तमे द्वादशोवर्गः ॥ १२ ॥

अदर्शीति चतुर्दशर्चं दशमं सूक्तं काण्वस्य सोभरेरार्षं । अत्रानुक्रम्यते—अदर्शिपळूना सोभरिर्बार्हतं पंचमीविराड्रूपा सप्तम्याद्ययुजः सतोबृहत्यः अष्टम्यादियुजः ककुब्न्यसीयसी ककुबनुष्टुबन्त्याग्निमारुतीति । पंचमीसप्तमीनवम्येकादशीत्रयोदश्यः पंचसतोबृहत्यः अष्टमीद्वादश्यौककुभौ दशमी गायत्री चतुर्दश्यनुष्टुप् शिष्टाबृहत्यः।आग्नेयंत्वित्युक्तत्वादग्निर्देवता अन्त्यायास्त्वग्निर्मरुतश्च। प्रातरनुवाकस्याग्नेयेक्रतौ बार्हतेछन्दस्यादितः सप्तर्चः ।सूत्रितंच—अदर्शिगातुवित्तमइति सप्तेतिबार्हतं। आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य प्रमंहिष्ठायेति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितंच—प्रमंहिष्ठायगायतप्रसोअग्नेतवोतिभिरिति । अध्यायोपाकरणोत्सर्जनयोः मण्डलान्त्यहोमे आग्नेयाहीत्येषा। सूत्रितंच—माचिदाग्नयोहिमरुत्सखा यत्तेराजन्नग्नेइति।

तत्र प्रथमा—

अद॑र्शिगातु॒वित्त॑मो॒यस्मि॑न्व्र॒तान्या॑द॒धुः ।
उपो॒षुजा॒तमार्य॑स्य॒वर्ध॑नम॒ग्निंन॑क्षन्तनो॒गिरः॑ ॥ १ ॥

अद॑र्शि । गा॒तु॒वित्ऽत॑मः । यस्मि॑न् । व्र॒तानि॑ । आ॒ऽद॒धुः ।
उपो॒ इति॑ । सु । जा॒तम् । आर्य॑स्य । वर्ध॑नम् ।
अ॒ग्निम् । न॒क्ष॒न्त॒ । नः॒ । गिरः॑ ॥ १ ॥

यस्मिन्नग्नौ व्रतानि कर्माणि आदधुः यजमानाः आदधन् गातुवित्तमोतिशयेन मार्गाणां ज्ञाता सोग्निरदर्शि प्रादुरभूत्। किंच सुजातं सम्यक् प्रादुर्भूतं अस्यार्यस्य उत्तमवर्णस्य वर्धनं वर्धयितारमग्निं नोस्माकं गिरः स्तुतिरूपावाचः उपोनक्षन्त उपगच्छन्त्येव। नक्षगताविति धातुः॥१॥

१. जिन अग्नि में सारे कर्मों का, यजमानों के द्वारा, आधान होता है, अतिशय मार्गज्ञाता वही अग्नि प्रकट हुए। आर्यों के वर्द्धक अग्नि के सम्यक् प्रादुर्भूत होने पर हमारी स्तुतियाँ अग्नि के पास जाती हैं।

प्रदैवोदासोअग्निर्देवाँअच्छानमज्मना।
अनुंमातरंपृथिवींविवावृतेतस्थौनाकस्यसानवि॥ २॥

प्र। दैवःऽदासः। अग्निः। देवान्। अच्छं। न। मज्मना।
अनु। मातरम्। पृथिवीम्। वि। ववृते। तस्थौ।
नाकस्य। सानवि॥ २॥

दैवोदासः दिवोदासेनाहूयमानोग्निः मातरं। सर्वस्य लोकस्य धारकत्वात् पृथिवी माता। तां पृथिवीमच्छ प्रति देवान् तस्य दिवोदासस्य यज्ञे देवान् अनु प्रति हविर्वोढुं नप्रविववृते यस्मादेनमग्निं दिवोदासो मज्मना बलेनाजुहाव तस्मादयमग्निः नाकस्य स्वर्गस्य सानवि समुच्छ्रिते देशे स्वायतनएव तस्थावतिष्ठत्॥ २॥

२. दिवोदास के द्वारा आहूत अग्नि माता पृथ्वी के सामने देवों के लिए हव्यवहन करने में प्रवृत्त नहीं हुए; क्योंकि दिवोदास ने बलपूर्वक अग्नि का आह्वान किया था; इसलिए अग्नि स्वर्ग के पास ही रहे। अथ तृतीया—

यस्माद्रेजन्तकृष्टयश्चर्कृत्यानिकृण्वतः।
सहस्रसांमेधसाताविवत्मनाग्निंधीभिःसपर्यत॥ ३॥

यस्मात्। रेजन्त। कृष्टयः। चर्कृत्यानि। कृण्वतः। सहस्रऽसाम्।
मेधसातौऽइव। त्मना। अग्निम्। धीभिः। सपर्यत॥ ३॥

यस्मात्कारणात् चर्कृत्यानि कर्तव्यानि कर्माणि कृण्वतः कुर्वाणान् मनुष्यान् कृष्टयः इतरेमनुष्या रेजन्त कंपन्ते तस्मादिदानीं हे जना यूयं सहस्रसां गवां धनानांच सहस्रस्य दातारमग्निं मेधसातौ यज्ञे धीभिः कर्तव्यैः कर्मभिः त्मना आत्मनैव सपर्यत परिचरत॥ ३॥

३. कर्त्तव्य-परायण मनुष्यों के यहाँ अन्य मनुष्य काँपते हैं। फलतः हे मनुष्यो, तुम इस समय सहस्र धनों के दाता अग्नि की, यज्ञ में कर्त्तव्य कर्म के द्वारा. स्वयं सेवा करो।

प्रयंरायेनिनीषसिमर्तोयस्तेवसोदाशत् ।
सवीरंधत्तेअग्नउक्थशंसिनंत्मनासहस्रपोषिणम् ॥ ४ ॥

प्र । यम् । राये । निनीषसि । मर्तः । यः । ते । वसो इति । दाशत् ।
सः । वीरम् । धत्ते । अग्ने । उक्थऽशंसिनम् । त्मना ।
सहस्रऽपोषिणम् ॥ ४ ॥

हे वसो वासकाग्ने त्वं यं तव स्तोतारं राये धनार्थं प्रनिनीषसि प्रनेतुमिच्छसि । यश्चमर्तो मनुष्यस्ते तुभ्यं दाशत् हवींषि प्रयच्छति समनुष्यः उक्थशंसिनं उक्थानां शंसितारं त्मना आत्मनैव सहस्रपोषिणं बहुधनं वीरं पुत्रं धत्ते धारयति ॥ ४ ॥

४. निवास-दाता अग्नि, धन-दान के लिए तुम जिसे शिक्षित करते हो और जो मनुष्य तुम्हें हव्य देता है, वह मनुष्य मन्त्र-प्रशंसक और स्वयं सहस्र-पोषक पुत्र को प्राप्त करता है।

सदृह्ळेचिदभितृणत्तिवाजमर्वतासधत्तेअक्षितिश्रवः ।
त्वेदेवत्रासदापुरूवसोविश्वावामानिधीमहि ॥ ५ ॥ १३ ॥

सः । दृह्ळे । चित् । अभि । तृणत्ति । वाजम् । अर्वता । सः ।
धत्ते । अक्षिति । श्रवः । त्वे इति । देवऽत्रा । सदा । पुरुवसो इति
पुरुऽवसो । विश्वा । वामानि । धीमहि ॥ ५ ॥ १३ ॥

हे पुरूवसो बहुधनाग्ने यस्तुभ्यं हवींषि प्रयच्छति सयजमानो दृह्ळेचिव दृढेपि शत्रुपुरे स्थितं वाजमन्नं अर्वताश्वेन अभितृणत्ति हिनस्ति । यथा सयजमानः अक्षिति अक्षीणं श्रवोन्नं धत्ते धारयति। तथाचसति तुभ्यं हविषां प्रदातारो वयमपि देवत्रा देवे त्वयि स्थिता विश्वा सर्वा सर्वाणि वामानि वननीयानि धनानि सदा सर्वदा धीमहि धारयामः ॥ ५ ॥

५. बहुत धनवाले अग्नि, जो तुम्हारे लिए हव्य देता है, वह वृढ़ शत्रु—नगर में स्थित अन्न को, अश्व की सहायता से, नष्ट करता है—वह वर्द्धित अन्न को धारण करता है। हम भी देव-स्वरूप तुम्हारे लिए हव्य देते हुए तुममें स्थित सब प्रकार के धन को धारण करेंगे।

॥ इति षष्ठस्य सप्तमे त्रयोदशोवर्गः ॥ १३ ॥

योविश्वादयतेवसुहोतामन्द्रोजनानाम् ।
मधोर्नपात्राप्रथमान्यस्मैप्रस्तोमायन्त्यग्नये ॥ ६ ॥

यः । विश्वा । दयते । वसु । होता । मन्द्रः । जनानाम् । मधोः ।
न । पात्रा । प्रथमानि । अस्मै । प्र । स्तोमाः । यन्ति । अग्नये ॥ ६ ॥

होता देवानामाह्वाता मन्द्रो मोदमानोयोऽग्निः विश्वा सर्वाणि वसु वसूनि धनानि जनानां जनेभ्यो दयते प्रयच्छति तस्मा अस्मा अग्नये मघोर्नं मदकरस्य सोमस्येव प्रथमानि मुख्यानि पात्रा पात्राणि स्तोमाः प्रयन्ति प्रगच्छन्ति ॥ ६ ॥

६. जो अग्नि देवों को बुलानेवाले और आनन्दमय हैं और जो मनुष्यों को अन्न देते हैं, उन्हीं अग्नि के लिए मदकर सोम के प्रथम पात्र जाते हैं।

अश्वंनगीर्भीरथ्यंसुदानवोमर्मृज्यन्तेदेवयवः ।
उभेतोकेतनयेदस्मविश्पतेपर्षिराधोमघोनाम् ॥ ७ ॥

अश्वम् । न । गीःऽभिः । रथ्यम् । सुऽदानवः ।
मर्मृज्यन्ते । देवऽयवः । उभे इति । तोके इति । तनये ।
दस्म । विश्पते । पर्षि । राधः । मघोनाम् ॥ ७ ॥

हे दस्म दर्शनीय विश्पते विशांपते अग्ने यं त्वां सुदानवः शोभनदानाः देवयवो देवानात्मनइच्छन्तो यजमानाः रथ्यं रथस्य वोढारं अश्वंन अश्वमिव गीर्भिः स्तुतिभिः मर्मृज्यन्ते परिचरन्ति। त्वमस्माकं यजमानानां तोके पुत्रे तनये पौत्रे चोभे उभयस्मिन् मघोनां धनवतां यो धनं पर्षि प्रयच्छ ॥ ७ ॥

७. दर्शनीय और लोकपालक अग्नि, सुन्दर दानवाले और देवाभिलाषी यजमान, रथ-वाहक अश्व के समान, स्तुति के द्वारा तुम्हारी परिचर्या करते हैं, वही तुम हमारे पुत्रों और पौत्रों के लिए धनियों का दान दो। अथाष्टमी—

प्रमंहिष्ठायगायतऋताव्नेबृहतेशुक्रशोचिषे ।
उपस्तुतासोअग्नये ॥ ८ ॥

प्र । मंहिष्ठाय । गायत । ऋतऽव्ने । बृहते ।
शुक्रऽशोचिषे । उपऽस्तुतासः । अग्नये ॥ ८ ॥

ये यूयं उपस्तुतासः उपस्तोतारो मंहिष्ठाय दातृतमाय ऋताव्ने यज्ञवते सत्यवते वा बृहते महते शुक्रशोचिषे दीप्ततेजसे अग्नये प्रगायत स्तोत्रं पठत ॥ ८ ॥

८. स्तोताओ, तुम सर्व-श्रेष्ठदाता, यज्ञवाले, सत्यवाले, विशाल और प्रदीप्त तेजवाले अग्नि के लिए स्तोत्र पढ़ो।

आवंसतेमघवावीरवद्यशःसमिद्धोद्युम्न्याहुतः ।
कुविन्नोअस्यसुमतिर्नवीयस्यच्छावाजेभिरागमत् ॥ ९ ॥

आ। वंसते। मघऽवा। वीरऽवत्। यशः। सम्ऽइद्धः।
द्युम्नी। आऽहुतः। कुवित्। नः। अस्य। सुऽमतिः।
नवीयसी। अच्छ। वाजेभिः। आऽगमत्॥ ९॥

मघवा धनवान् द्युम्नी अन्नवान् यशस्वीवा। तथाचयास्कः—द्युम्नंद्योततेर्यशोवान्नंवेति[1]। समिद्धः संदीप्तः वीरवत् पराक्रमोपेतः आहुतः ऋत्विगादिभिराहूतोग्निः यशोयशस्करं अन्नमा-वंसते यजमानेभ्यः आप्रयच्छति। अस्याग्नेः नवीयसी नवतरासुमतिः अनुग्रहबुद्धिः नोस्मान् अच्छ प्रति वाजेभिः अन्नैः सह कुवित् बहुवारं सलिलं कुविदिति बहुनामसुपाठात् आगमत् आगच्छतु॥ ९॥

९. धनी और अन्नवाले अग्नि सन्दीप्त, वीर के समान प्रताप से युक्त और बुलाये जाने पर यशस्कर अन्न प्रदान करते हैं। उनकी अभि-नव अनुग्रह-बुद्धि, अन्न के साथ, अनेक बार हमारे पास आवे।

प्रेष्ठमुप्रियाणांस्तुह्यासावातिथिम्। अग्निंरथानांयमम्॥ १०॥ १४॥

प्रेष्ठम्। ऊँ इति। प्रियाणाम्। स्तुहि। आऽसाव।
अतिथिम्। अग्निम्। रथानाम्। यमम्॥ १०॥ १४॥

हे आसाव स्तोतः प्रियाणां प्रेष्ठं प्रियतमं अतिथिं अभ्यागतं रथानां यमं यन्तारं अग्निमेव स्तुहि॥ १०॥

१०. स्तोता, प्रियों में प्रियतम, अतिथि और रथों के नियामक अग्नि की स्तुति करो।

॥ इति षष्ठस्य सप्तमे चतुर्दशोवर्गः॥ १४॥

अथैकादशी—

उदितायोनिदितावेदितावस्वायज्ञियोववर्तति।
दुष्टरायस्यप्रवणेनोर्मयोधियावाजंसिषासतः॥ ११॥

उत्ऽइता। यः। निऽदिता। वेदिता। वसु। आ।
यज्ञियः। ववर्तति। दुस्तराः। यस्य। प्रवणे। न।
ऊर्मयः। धिया। वाजम्। सिसासतः॥ ११॥

---

1 नि० ५.५.

वेदिता वेत्ता यज्ञियोयज्ञार्होऽग्निः उदिता उदितानि उद्गतानि निदिता निन्दितानि श्रुतानिच वसु वसूनि धनानि आववर्तति आवर्तयति। धिया कर्मणा वाजं संग्रामं सिषासतः संभक्तुमिच्छतः यस्याग्नेर्ज्वालाः प्रवणेनोर्मयः प्रवणाभिमुखाः समुद्रस्यतरंगाइव दुष्टराः तर्तुमशक्याः तमग्निं हे स्तोतः स्तुहीत्यर्थः॥ ११॥

११. ज्ञानी और यज्ञ-योग्य जो अग्नि उदित और श्रुत जिस धन को आवर्त्तित करते हैं और कर्म-द्वारा युद्धेच्छुक जिन अग्नि की ज्वाला निम्न मुखगामी समुद्र-तरंग के समान दुस्तर हैं, उन्हीं अग्नि की स्तुति करो।

मानो॑हृणीता॒मति॑थि॒र्वसु॑र॒ग्निःपु॑रुप्रश॒स्तए॒षः।
यःसु॒होता॑स्वध्व॒रः॥ १२॥

मा। नः॒। हृ॒णी॒ता॒म्। अति॑थिः। वसुः॑। अ॒ग्निः।
पु॒रु॒ऽप्र॒श॒स्तः। ए॒षः। यः। सु॒ऽहोता॑। सु॒ऽअ॒ध्व॒रः॥ १२॥

वसुर्वासकः अतिथिरतिथिवत्प्रियः पुरुप्रशस्तः बहुभिः स्तुतः सुहोता सुष्ठु देवानामाह्वाता स्वध्वरः सुयज्ञश्च योऽग्निः सएषोऽग्निः नोऽस्मभ्यं माहृणीतां केनापि नरुध्यतां।केनाप्यनवरुद्धः सन् अग्निः अस्मभ्यमभीष्टं प्रयच्छत्वित्यर्थः॥ १२॥

१२. वासप्रद, अतिथि, बहु-स्तुत, देवों के उत्तम आह्वानकर्त्ता और सुन्दर यज्ञवाले अग्नि हमारे लिए किसी के द्वारा रोके न जायें।

मोतेरि॑षन्येअच्छो॑क्तिभि॒र्वसो॑ऽग्ने॒केभि॑श्चि॒दे॒वैः।
कीरि॑श्चि॒द्धित्वामी॒ट्टेदू॒त्या॑यरा॒तह॑व्यःस्वध्व॒रः॥ १३॥

मो इति॑। ते। रि॒ष॒न्। ये। अच्छो॑क्तिऽभिः।
व॒सो॒ इति॑। अग्ने॑। केभिः॑। चि॒त्। एवैः॑। की॒रिः॑। चि॒त्।
हि। त्वाम्। ईट्टे॑। दू॒त्या॑य। रा॒तऽह॑व्यः। सु॒ऽअ॒ध्व॒रः॥ १३॥

हे वसो वासकाग्ने त्वां ये मनुष्याः अच्छोक्तिभिः अभिष्टुतिभिः केभिः कैः सुखकरैः एवैश्चित् अभिगमनैरपि ते स्तोतारो मोरिषन् मैव हिंसन्तां। रातहव्यो दत्तहविष्कः स्वध्वरः शोभनयज्ञः कीरिश्चित् स्तोतापि दूत्याय हविर्वहनादिलक्षणाय दूतकर्मणे त्वामीट्टेहि स्तौतिखलु॥ १३॥

१३. वासप्रद अग्नि, जो मनुष्य स्तुति के द्वारा और सुखावह अनुगामिता से तुम्हारी सेवा करते हैं, वे मारे न जायें। सुन्दर यज्ञवाले और हव्यदाता स्तोता भी, दूत-कर्म के लिए, तुम्हारी स्तुति करता है।

आग्ने॑याहिम॒रुत्स॑खारु॒द्रेभि॒ःसोम॑पीतये।
सोभ॑र्या॒उप॑सुष्टु॒तिंमा॒दय॑स्व॒स्व॑र्णरे॥ १४॥ १५॥

आ । अग्ने । याहि । मरुत्ऽसंखा । रुद्रेभिः ।
सोमंऽपीतये । सोभंर्याः । उपं ।
सुऽस्तुतिम् । मादयंस्व । स्वंःऽनरे ॥ १४ ॥ १५ ॥

हे अग्ने मरुत्सखा मरुतांप्रियस्त्वं स्वर्नरे अस्माकं यजनलक्षणे कर्मणि सोमपीतये सोमपानाय रुद्रेभीरुद्रैः मरुद्भिः सह आयाहि आगच्छ। सोभर्याः सोभरेर्मम सुष्टुतिं शोभनां स्तुतिं चोपागच्छ । मादयस्व स्तुतिं श्रुत्वा सोमं पीत्वा आत्मानं मादयच ॥ १४ ॥

१४. अग्नि, तुम मरुतों के प्रिय हो। हमारे यज्ञ-कर्म में, सोमपान के लिए, मरुतों के साथ आओ। सोभरि की (मेरी) शोभन स्तुति के पास आओ। सोम पीकर मत्त होओ।

॥ इति षष्ठस्य सप्तमे पञ्चदशोवर्गः ॥ १५ ॥

॥ इत्यष्टमे मण्डले दशमोनुवाकः ॥ १० ॥

॥ इति प्रागाथमष्टमं मण्डलं समाप्तम् ॥ ८ ॥

अथ पावमान्यं नवमं मण्डलं तत्र सप्तानुवाकाः तत्र प्रथमेनुवाके चतुर्विंशतिसंख्याकानि सूक्तानि। तत्र स्वादिष्ठयेति दशर्चं प्रथमं सूक्तं। अत्रानुक्रम्यते—स्वादिष्ठयादश मधुच्छन्दाइति। वैश्वामित्रोमधुच्छन्दाऋषिः प्राग्वत्सप्रीयपरिभाषया गायत्रीछन्दः। नवमंमण्डलं पावमानंसौम्यमिति वचनात् पवमानगुणविशिष्टः सोमोदेवता। ग्रावस्तोत्रे अर्बुदसूक्तं प्रागुत्तमाया इदमादिकं सर्वं पावमानं विकल्पेनावपनीयं। सूत्रितंच—प्रैतेवदन्त्वित्यर्बुदं प्रागुत्तमाया आवक्रंजसे प्रवोग्रावाणइति सूक्तयोरन्तरोपरिष्टात् पुरस्ताद्वा पावमानीरोप्ययथार्थमावापग्रहणादिति। उपाकर्मणि मंडलादिग्रहणे आद्या। सूत्रं पूर्वमेवोदाहृतम्।

तत्र प्रथमा—

**स्वादिष्ठयामदिष्ठयापवस्वसोमधारया। इन्द्रायपातवेसुतः ॥१॥**

स्वादिष्ठया। मदिष्ठया। पवस्व। सोम।
धारया। इन्द्राय। पातवे। सुतः ॥ १ ॥

हे सोम इन्द्राय पातवे पातुं सुतोभिषुतस्त्वं स्वादिष्ठया स्वादुतमया मदिष्ठया अतिशयेन मादयित्र्या धारया पवस्व क्षर ॥ १ ॥

१. सोम, इन्द्र के पान के लिए तुम अभिषुत होकर स्वादुतम और अतीव मदकर धारा से क्षरित होओ।

**रक्षोहाविश्वचर्षणिरभियोनिमयोहतम्। द्रुणासधस्थमासदत्॥२॥**

रक्षःऽहा। विश्वऽचर्षणिः। अभि। योनिम्।
अयःऽहतम्। द्रुणा। सधऽस्थम्। आ। असदत् ॥ २ ॥

रक्षोहा रक्षसां हन्ता विश्वचर्षणिः विश्वस्यद्रष्टा सोमः अयोहतं हिरण्येनहतं। तथाच ब्राह्मणं—हिरण्यपाणिरभिषुणोतीति। द्रुणा द्रोणकलशेन अधिषवणफलकाभ्यां वा सधस्थं सहस्थानं योनिं अभिषवस्थानं अभ्यासदत् अभ्यासीदति ॥ २ ॥

२. राक्षसों के विनाशक और सबके दर्शक सोम लोहे से पिसे जाकर और ३२ सेरवाले कलस से युक्त होकर अभिषवण-स्थान में बैठते हैं।

अथ तृतीया—

**वरिवोधातमोभवमंहिष्ठोवृत्रहन्तमः। पर्षिराधोमघोनाम् ॥ ३ ॥**

वरिवःऽधातमः। भव। मंहिष्ठः। वृत्रहन्ऽतमः।
पर्षि। राधः। मघोनाम् ॥ ३ ॥

हे सोम त्वं वरिवोधातमः अतिशयेन धनानां दाता भव। वेदः वरिव इति धननामसुपाठात्। मंहिष्ठो दातृतमश्च भव सर्वदातृत्वमत्रोच्यत इत्यपुनरुक्तिः। वृत्रहन्तमोतिशयेन शत्रूणां हन्ता भव। किंच मघोनां धनवतां शत्रूणां राधोधनंच पर्षि अस्मभ्यं प्रयच्छ ॥ ३ ॥

३. सोम तुम प्रचुर दान करो, सारे पदार्थों को दान करो और विशेष रूप से वृत्र का वध करो। धनी शत्रुओं का धन हमें दो।

अ॒भ्य॑र्ष म॒हानां॑ दे॒वानां॑ वी॒तिमन्ध॑सा। अ॒भि वाज॑मु॒त श्रवः॑ ॥ ४ ॥

अ॒भि। अ॒र्ष॒। म॒हाना॑म्। दे॒वाना॑म्। वी॒तिम्। अन्ध॑सा।
अ॒भि। वाज॑म्। उ॒त। श्रवः॑ ॥ ४ ॥

हे सोम त्वं महानां महतां देवानां वीतिं यज्ञं अन्धसा धानाद्यन्नेनसह अभ्यर्ष अभिगच्छ। उतापिच अभिगच्छंस्त्वं वाजं बलं श्रवोन्नं वा अभिगमयास्मानित्यर्थः ॥ ४ ॥

४. तुम महान् हो। देवों के यज्ञ की ओर, अन्न के साथ, जाओ। बल और अन्न दो।

त्वामच्छा॑ चरामसि॒ तदिदर्थं॑ दि॒वेदि॑वे। इन्दो॒ त्वे न॑ आ॒शसः॑ ॥ ५ ॥ १६ ॥

त्वाम्। अच्छ॑। च॒रा॒म॒सि॒। तत्। इत्। अर्थ॑म्। दि॒वेऽदि॑वे।
इन्दो॒ इति॑। त्वे इति॑। न॒ः। आ॒ऽशसः॑ ॥ ५ ॥ १६ ॥

हे इन्दो यागेषु क्लिद्यमान सोम त्वामच्छ त्वां प्रति चरामसि वयं चरामः। दिवेदिवे प्रतिदिनं अस्माकं तदित् तदेव तत्परिचरणमेवार्थं कार्यं नान्यत्कारणमस्ति। नोस्माकं आशसः आशंसनान्यपि त्वे त्वय्येव। नान्यत्र ॥ ५ ॥

५. इन्दु, हम तुम्हारी सेवा करते हैं; प्रतिदिन यही हमारा काम है।

॥ इति षष्ठस्य सप्तमे षोडशोवर्गः ॥ १६ ॥

पु॒नाति॑ ते परि॒स्रुतं॒ सोमं॒ सूर्य॑स्य दु॒हि॒ता। वारे॑ण॒ शश्व॑ता॒ तना॑ ॥ ६ ॥

पु॒नाति॑। ते॒। प॒रि॒ऽस्रुत॑म्। सोम॑म्। सूर्य॑स्य। दु॒हि॒ता।
वारे॑ण। शश्व॑ता। तना॑ ॥ ६ ॥

हे सोम ते तव परिस्रुतं क्षरन्तं सोमं सोमरसं सूर्यस्य दुहिता श्रद्धादेवी वारेण बलेन शश्वता शश्वतेन तना विस्तृतेन पुनाति। तथाच वाजसनेयिनआमनन्ति—श्रद्धावैसूर्यस्यदुहिता श्रद्धाह्येनंपुनातीति ॥ ६ ॥

६. सूर्य की पुत्री श्रद्धा तुम्हारे क्षरणशील रस को विस्तृत और नित्य दशा पवित्र के द्वारा पवित्र करती हैं।

तमीमण्वीःसमर्यआगृभ्णन्तियोषणोदश। स्वसारःपार्येदिवि॥७॥

तम्। ईम्। अण्वीः। सऽमर्ये। आ। गृभ्णन्ति। योषणः। दश। स्वसारः। पार्ये। दिवि॥७॥

समर्ये समनुष्ये यज्ञे पार्ये दिवि सौत्येहनि योषणः स्त्रियः स्वसारः स्वयंसरन्त्यो दशसंख्याकाः अण्वीः अण्व्योंगुलयः। अग्रुवः अण्व्यइत्यंगुलिनामसुपाठात्। तमीं तमेनं सोमं आगृभ्णन्ति आगृह्णन्ति॥७॥

७. अभिषव (सोम चुलाने) के समय यज्ञ में भगिनियों के समान दश-अंगुलि-रूपिणी स्त्रियां उस सोम को सबसे पहले ग्रहण करती हैं।

तमींहिन्वन्त्यग्रुवोधमन्तिबाकुरंदृतिम्। त्रिधातुवारणंमधु॥८॥

तम्। ईम्। हिन्वन्ति। अग्रुवः। धमन्ति। बाकुरम्। दृतिम्। त्रिऽधातु। वारणम्। मधु॥८॥

तमीं एनं सोमं अग्रुवोंगुलयोहिन्वन्ति अभिषवदेशं प्रति प्रेरयन्ति। प्रेरयित्वाच बाकुरं भासमानं दृतिं दृतिसदृशांशुमेनं सोमं धमन्ति अभिषुण्वन्तिच। यद्यपि धमतिरभिषवणकर्मा नभवति तथाप्यौचित्यादत्राभिषवपरोभविष्यति। तदेतत्सोमात्मकं मधु वस्तु त्रिधातु त्रिस्थानं। द्रोणकलशः आधवनीयः पूतभृदिति त्रिधातवः। वारणं शत्रूणां वारकंच भवति॥८॥

८. अँगुलियां उसी सोम को प्रेरित करती हैं। यह सोमात्मक मधु तीन स्थानों में (द्रोण-कलस, आधवनीय और पूतभृत् में) रहता है और शत्रुओं की प्रतिबन्धकता करता है।

अभीऽमम्घ्याउतश्रीणन्तिधेनवःशिशुम्। सोममिन्द्रायपातवे॥९॥

अभि। इमम्। अघ्न्याः। उत। श्रीणन्ति। धेनवः। शिशुम्। सोमम्। इन्द्राय। पातवे॥९॥

उतापिच इममेनं शिशुं बालं सोमं अघ्न्याः अहन्तव्या धेनवोगावः इन्द्राय पातवे पातुमभिश्रीणन्ति स्वकीयेन पयसा संस्कुर्वन्तीत्यर्थः॥९॥

९. न मारने योग्य गायें इस बालक सोम को, इन्द्र के पान के लिए, दूध के द्वारा संस्कृत करती हैं।

अस्येदिन्द्रोमदेष्वाविश्वावृत्राणिजिघ्नते। शूरोमघाचमंहते॥१०॥१७॥

अस्य । इत् । इन्द्रः । मदेषु । आ । विश्वा । वृत्राणि ।
जिघ्नते । शूरः । मघा । च । मंहते ॥ १० ॥ १७ ॥

शूरो वीरइन्द्रः अस्येव् अस्य सोमस्यैव मदेषु विश्वा विश्वानि वृत्राणि शत्रून् आजिघ्नते आहन्ति । मघा मघानि धनानिच मंहते यजमानेभ्यः प्रयच्छति ॥ १० ॥

१०. शूर इन्द्र, इस सोमपान से मत्त होकर सारे शत्रुओं का विनाश करते और यजमानों को धन देते हैं।

॥ इति षष्ठस्य सप्तमे सप्तदशोवर्गः ॥ १७ ॥

पवस्वेति दशर्चं द्वितीयं सूक्तं काण्वस्य मेधातिथेरार्षं गायत्रं पवमानसोमदेवताकं । तथाचानुक्रान्तं—पवस्वमेध्यातिथिरिति । उक्तोविनियोगः ।

पवस्वदेववीरतिपवित्रंसोमरंह्या । इन्द्रमिन्दोवृषाविश ॥ १ ॥

पवस्व । देवऽवीः । अति । पवित्रम् । सोम । रंह्या ।
इन्द्रम् । इन्दो इति । वृषा । आ । विश ॥ १ ॥

हे सोम देववीः देवकामस्त्वं रंह्या वेगेन पवित्रं यथा भवति तथा अतिपवस्व अतिक्षर। किंच हे इन्दो वृषा सेचकस्त्वं इन्द्रमाविश प्रविश ॥ १ ॥

१. सोम, तुम देवकामी होकर वेग और पवित्र भाव के साथ, गिरो। अभीष्ट-वर्षक इन्द्र, तुम सोम के बीच पैठ जाओ।

अथ द्वितीया—

आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः । आयोनिंधर्णसिःसदः ॥२॥

आ । वच्यस्व । महि । प्सरः । वृषा । इन्दो इति ।
द्युम्नवत्ऽतमः । आ । योनिम् । धर्णसिः । सदः ॥ २ ॥

हे इन्दो सोम महि महान् वृषा कामानां वर्षको द्युम्नवत्तमो यशस्वितमो धर्णसिर्धर्तात्वं प्सरः पानीयं मधु आवच्यस्व अस्मान् प्रत्यागमय । योनिं स्वकीयं स्थानमासदः आसीद च॥२॥

२. सोम, तुम महान्, अभीष्टवर्षक, अतीव यशस्वी और धारक हो। तुम जल को प्रेरित करो। अपने स्थान पर बैठो।

अथ तृतीया—

अधुक्षतप्रियंमधुधारासुतस्यवेधसः । अपोवसिष्टसुक्रतुः ॥ ३ ॥

अधुक्षत । प्रियम् । मधु । धारा । सुतस्य । वेधसः ।
अपः । वसिष्ट । सुऽक्रतुः ॥ ३ ॥

सुतस्याभिषुतस्य वेधसोभिलषितस्य विधातुर्यस्य सोमस्य धारा प्रियं प्रीतिकरं मधु अ-मृतं अधुक्षत दुग्धे सुक्रतुः शोभनकर्मा सोमः अपोवसतीवरीर्वसिष्ट आच्छादयति ॥ ३ ॥

३. अभिषुत और अभिलाषा-दाता सोम की धारा प्रिय मधु को दुहती है। शोभनकर्मा सोम जल का आच्छादन करते हैं।

**महान्तंत्वामहीरन्वापोअर्षन्तिसिन्धवः। यद्गोभिर्वासयिष्यसे ॥४॥**

महान्तम्। त्वा। महीः। अनु। आपः। अर्षन्ति।
सिन्धवः। यत्। गोभिः। वासयिष्यसे ॥ ४ ॥

हे सोम त्वं यद्यदा यज्ञे गोभिः गोविकारैः पयोभिः वासयिष्यसे आच्छादयिष्यसे तत्त-दा महान्तं त्वा त्वामनु प्रति सिन्धवः स्यन्दमानाः महीर्महत्यः आपःअर्षन्ति गच्छन्ति ॥ ४ ॥

४. जिस समय तुम गव्य के द्वारा आच्छादित होते हो, उस समय हे महान् सोम, तुम्हारे सामने क्षरणशील महान् जल जाता है।

**समुद्रोअप्सुमामृजेविष्टंभोधरुणोदिवः। सोमःपवित्रेअस्मयुः ॥५॥१८॥**

समुद्रः। अप्ऽसु। ममृजे। विष्टम्भः। धरुणः। दिवः।
सोमः। पवित्रे। अस्मऽयुः ॥ ५ ॥ १८ ॥

समुद्रः समुद्रवन्त्यस्माद्रसाइति समुद्रः विष्टंभोदिवः स्वर्गस्य धरुणोधारकश्च अस्मयुर-स्मत्कामः सोमोप्सूदकेषु ममृजे मृज्यते पवित्रे अभिषिच्यतइत्यर्थः ॥ ५ ॥

५. सोम से रस उत्पन्न होता है। सोम स्वर्ग का धारण करते, संसार को रोके रहते, हमारी अभिलाषा करते और जल के बीच संस्कृत होते हैं।

॥ इति षष्ठस्य सप्तमेष्टादशोवर्गः ॥ १८ ॥

**अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः। संसूर्येणरोचते ॥ ६ ॥**

अचिक्रदत्। वृषा। हरिः। महान्। मित्रः। न। दर्शतः।
सम्। सूर्येण। रोचते ॥ ६ ॥

वृषा कामानां वर्षको हरिर्हरितवर्णो महान् सर्वोत्तमो मित्रोन यथासखा तद्वत् दर्शतो दर्शनीयो योयंसोमः अचिक्रदत् शब्दंकरोति सोयंसोमः सूर्येणसह संरोचते दिवि प्रकाशते ॥६॥

६. अभीष्टवर्षक, हरितवर्ण, महान् और मित्र के समान दर्शनीय सोम शब्द करते और सूर्य के साथ प्रदीप्त होते हैं।

गिरस्तइन्दओजसामर्मृज्यन्तेअपस्युवः। याभिर्मदायशुंभसे ॥७॥

गिरः। ते। इन्दो इति। ओजसा। मर्मृज्यन्ते। अपस्युवः।

याभिः। मदाय। शुंभसे ॥ ७ ॥

हे इन्दो ते तव ओजसा बलेन अपस्युवः कर्मेच्छासंबन्धिन्यः ता गिरः स्तुतयो मर्मृज्यन्ते शोध्यन्ते। याभिर्गीर्भिस्त्वं मदाय क्षरन् शुंभसे अलंक्रियसे ॥ ७ ॥

७. इन्दु, जिन स्तुतियों से मत्तता के लिए तुम अलंकृत होते हो, वे ही कर्मेच्छा-सम्बन्धी स्तुतियाँ तुम्हारे बल के प्रताप से संशोधित होती हैं।

तंत्वामदायघृष्वंयउलोककृत्नुमीमहे। तवप्रशस्तयोमहीः ॥ ८ ॥

तम्। त्वा। मदाय। घृष्वये। ऊँ इति। लोकऽकृत्नुम्।

ईमहे। तव। प्रऽशस्तयः। महीः ॥ ८ ॥

हे सोम यस्य तव प्रशस्तयः प्रशंसाः महीर्महत्यः घृष्वये उ त्वत् प्रसादात् शत्रूणां धर्षणशीलाय यजमानायैव लोककृत्नुं उत्तमस्य लोकस्य कर्तारं तं त्वां सोमं मदाय ईमहे वयं याचामहे ॥ ८ ॥

८. तुम्हारी प्रशंसायें महती हैं। तुमने शत्रुओं को रगड़नेवाले यजमान के लिए उत्तम लोक की सृष्टि की है। हम तुम्हारे पास मत्तता की याचना करते हैं।

अस्मभ्यमिन्दविन्द्रयुर्मध्वःपवस्वधारया। पर्जन्योवृष्टिमाँइव ॥९॥

अस्मभ्यम्। इन्दो इति। इन्द्रऽयुः। मध्वः। पवस्व।

धारया। पर्जन्यः। वृष्टिमान्ऽइव ॥ ९ ॥

हे इन्दो सोम इन्द्रयुः इन्द्रकामस्त्वं मध्वोमदकरस्यामृतस्य धारया पर्जन्यो वृष्टिमान् इव यथा वर्षवान् पर्जन्योमेघः तथास्मभ्यं मेधातिथिभ्यः पवस्व क्षर ॥ ९ ॥

९. इन्दु (सोम), इन्द्र के अभिलाषी होकर, वर्षक मेघ के समान, मधुर धारा से हमारे सामने गिरो।

अथ दशमी—

गोषाइन्दोनृषाअस्यश्वसावाजसाउत। आत्मायज्ञस्यपूर्व्यः॥ १० ॥ १९ ॥

गोऽसाः। इन्दो इति। नृऽसाः। असि। अश्वऽसाः। वाजऽसाः।

उत। आत्मा। यज्ञस्य। पूर्व्यः ॥ १० ॥ १९ ॥

हे इन्दो यज्ञस्य पूर्व्यः प्रत्नः आत्मा आत्मभूतस्त्वं गोषाः अस्मभ्यं गवां दातासि भव-सि । नृषाः पुत्राणां दाताचासि । अश्वसाः अश्वानां दाताचासि । उतापिच वाजसाः अन्ना-नां दाताचासि ॥१०॥

१०. इन्दु, तुम यज्ञ की पुरानी आत्मा हो। तुम गौ, पुत्र, अन्न और अश्व प्रदान करो।

॥ इति षष्ठस्य सप्तमे एकोनविंशोवर्गः ॥१९॥

एषदेवइति दशर्चं तृतीयं सूक्तं आजीगर्तेः शुनःशेपस्यार्षं गायत्रं पवमानसोमदेवताकं । अनुक्रान्तंच—एषशुनःशेपइति । उक्तोविनियोगः ।

एषदेवोअमर्त्यःपर्णवीरिवदीयति । अभिद्रोणान्यासदम् ॥ १ ॥

एषः । देवः । अमर्त्यः । पर्णवीःऽइव । दीयति ।
अभि । द्रोणानि । आऽसदम् ॥ १ ॥

देवोद्योतमानः अमर्त्योमरणरहितः एषसोमो द्रोणानि द्रोणकलशानि अभि अभिलक्ष्य आसदं आसदनार्थं पर्णवीरिव यथा पक्षी तथा वेगेन दीयति गच्छति ॥ १ ॥

१. ये अमर सोम द्रोण-कलस के सामने बैठने के लिए पक्षी के समान जाते हैं।

एषदेवोविपाकृतोतिह्वरांसिधावति । पवमानोअदाभ्यः ॥ २ ॥

एषः । देवः । विपा । कृतः । अति । ह्वरांसि । धावति ।
पवमानः । अदाभ्यः ॥ २ ॥

विपा अंगुल्या । विपः कक्ष्याः इत्यंगुलिनामसुपाठात् । कृतोभिषुतः एषसोमोदेवः पवमानः क्षरन् अदाभ्यः केनाप्यहिंसितश्चसन् ह्वरांसि शत्रूनतिधावति हन्तुमतिगच्छति ॥ २ ॥

२. अंगुलि के द्वारा अभिषुत ये सोम क्षरित और अभिषुत होकर जाते हैं।

अथ तृतीया—

एषदेवोविपन्युभिःपवमानऋतायुभिः । हरिर्वाजायमृज्यते ॥ ३ ॥

एषः । देवः । विपन्युऽभिः । पवमानः । ऋतयुऽभिः ।
हरिः । वाजाय । मृज्यते ॥ ३ ॥

पवमानः क्षरन्नेष सोमोदेवोविपन्युभिः स्तोतृभिः ऋतायुभिः यज्ञकामैर्वा हरिरश्वइव वाजाय संग्रामार्थं मृज्यते स्तुतिभिरलंक्रियते ॥ ३ ॥

३. यज्ञाभिलाषी स्तोता लोग क्षरणशील इन सोमदेव को अश्व के समान युद्ध के लिए अलंकृत करते हैं।

एषविश्वानिवार्याशूरोयन्निवसत्वभिः। पवमानःसिषासति ॥ ४ ॥

एषः। विश्वानि। वार्या। शूरः। यन्ऽइव। सत्वऽभिः।
पवमानः। सिसासति ॥ ४ ॥

पवमानः क्षरन् शूरोवीर एषसोमो विश्वानि सर्वाणि वार्या वरणीयानि धनानि सत्वभिर्बलैः यन्निव गच्छन्निव सिषासति अस्मदर्थं संभक्तुमिच्छति ॥ ४ ॥

४. क्षरणशील ये वीर सोम अपने बल से गमनकर्त्ता के समान सारे धनों को बाँटने की इच्छा करते हैं।

एषदेवोरथर्यतिपवमानोदशस्यति। आविष्कृणोतिवग्वनुम् ॥५॥ २०॥

एषः। देवः। रथर्यति। पवमानः।
दशस्यति। आविः। कृणोति। वग्वनुम् ॥ ५ ॥ २० ॥

पवमानः क्षरन्नेष सोमोदेवो रथर्यति अस्मदीयं यागं प्रत्यागमनाय रथं कामयते। दशस्यति आगत्यच अस्मभ्यमभिलषितं प्रयच्छति। वग्वनुं शब्दं आविः कृणोति अभिषूयमाणः प्रकटयति ॥ ५ ॥

५. क्षरणशील ये सोम रथ की इच्छा करते हैं, मनोरथ पूर्ण करते हैं और शब्द करते हैं।

॥ इति षष्ठस्य सप्तमे विंशोवर्गः ॥ २० ॥

अथषष्ठी—

एषविप्रैरभिष्टुतोपोदेवोविगाहते। दधद्रत्नानिदाशुषे ॥ ६ ॥

एषः। विप्रैः। अभिऽस्तुतः। अपः। देवः।
वि। गाहते। दधत्। रत्नानि। दाशुषे ॥ ६ ॥

विप्रैर्मेधाविभिः स्तोतृभिः अभिष्टुतः परितः स्तुतः एषसोमोदेवो दाशुषे हविषां प्रदात्रे यजमानाय रत्नानि रमणीयानि धनानि दधत् धारयन् प्रयच्छन् अपोवसतीवरीर्विगाहते प्रविशति ॥ ६ ॥

६. मेधावियों के द्वारा इस सोम के स्तुति करने पर ये सोम हव्य-दाता को रत्न-दान करते हुए जल के बीच पैठते हैं।

एषदिवंविधावतितिरोरजांसिधारया। पवमानःकनिक्रदत् ॥ ७ ॥

एषः। दिवम्। वि। धावति। तिरः। रजांसि।
धारया। पवमानः। कनिक्रदत् ॥ ७ ॥

धारया पवमानः क्षरन्नेषसोमः कनिक्रदत् अभिषूयमाणः शब्दंकुर्वन् रजांसि लोकान् तिरः तिरस्कुर्वन् यागाद्दिवं स्वर्गं विधावति गच्छति ॥ ७ ॥

७. क्षरणशील ये सोम शब्द करके और सारे लोकों को हराकर स्वर्ग को जाते हैं।

एषदिवंव्यासरत्तिरोरजांस्यस्पृतः। पवमानःस्वध्वरः ॥ ८ ॥

एषः। दिवम्। वि। आ। असरत्। तिरः।
रजांसि। अस्पृतः। पवमानः। सुऽअध्वरः ॥ ८ ॥

पवमानः क्षरन्नेषसोमः स्वध्वरः सुयज्ञः अस्पृतः केनाप्यहिंसितश्चसन् रजांसि लोकान् तिरः तिरस्कुर्वन् यज्ञाद्दिवं प्रतिव्यासरत् विसरति गच्छति ॥ ८ ॥

८. क्षरणशील ये सोम सुन्दर, याज्ञिक और अहिंसित होकर सारे लोकों को पराभूत करते हुए स्वर्ग में जाते हैं।

एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः। हरिःपवित्रेअर्षति ॥ ९ ॥

एषः। प्रत्नेन। जन्मना। देवः। देवेभ्यः।
सुतः। हरिः। पवित्रे। अर्षति ॥ ९ ॥

हरिर्हरितवर्णोदेवः द्योतमानः एषसोमः प्रत्नेन पुराणेन जन्मना जननेन देवेभ्यो देवार्थं सुतोभिषुतः सन् पवित्रे स्थातुं अर्षति गच्छति ॥ ९ ॥

९. हरितवर्ण ये सोमदेव प्राचीन जन्म से देवों के लिए अभिषुत होकर दशापवित्र में रहने के लिए जाते हैं।

एषउस्यपुरुव्रतोजज्ञानोजनयन्निषः। धारयापवतेसुतः॥१०॥२१॥

एषः। ऊँ इति। स्यः। पुरुऽव्रतः। जज्ञानः।
जनयन्। इषः। धारया। पवते। सुतः ॥ १० ॥ २१ ॥

स्यः एषउ ससोमएव पुरुव्रतो बहुकर्मा जज्ञानो जायमानएव इषोन्नानि जनयन् उत्पादयन् सुतोभिषुतःसन् धारया पवते क्षरति ॥ १० ॥

१०. यह बहुकर्मा सोम ही उत्पन्न होने के साथ ही अन्न को उत्पन्न करके और अभिषुत होकर धारा के रूप में क्षरित होते हैं।

॥ इति षष्ठस्य सप्तमे एकविंशोवर्गः ॥ २१ ॥

सनाचेति दशर्चं चतुर्थं सूक्तं आंगिरसकुलस्य हिरण्यस्तूपस्यार्षं गायत्रं पवमानसोमदेवताकं। अनुक्रान्तंच—सनहिरण्यस्तूपइति। उक्तोविनियोगः।

सनाचसोमजेषिचपवमानमहिश्रवः। अथानोवस्यसस्कृधि ॥ १॥

सन॑। च॒। सो॒म॒। जेषि॑। च॒। पव॑मान।
महि॑। श्रव॑ः। अथ॑। न॒ः। वस्य॑सः। कृ॒धि॒ ॥ १॥

हे महिश्रवः महदन्न पवमानसोम सनास्मद्यागे यजनीयान् देवान् भज जेषिच यागविध्वंसकारिणोराक्षसांश्च जय। अथ देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं नोस्मान् वस्यसः श्रेयस्कृधि कुरु श्रेयोस्मभ्यं देहीत्यर्थः ॥ १ ॥

१. महान् अन्न और पवमान सोम, भजन करो, जय करो और पश्चात् हमारे मङ्गल का विधान करो।

अथ द्वितीया—

सनाज्योतिःसनास्व१र्विश्वाचसोमसौभगा। अथानोवस्यसस्कृधि ॥२॥

सन॑। ज्योति॑ः। सन॑। स्व१॑ः। विश्वा॑। च॒। सो॒म॒।
सौभ॑गा। अथ॑। न॒ः। वस्य॑सः। कृ॒धि॒ ॥ २ ॥

हे सोम त्वं ज्योतिस्तेजः सन अस्मभ्यं प्रयच्छ। अपिच स्वः स्वर्गं सन अस्मभ्यं देहि। विश्वा विश्वानि सौभगा सौभाग्यानि च सन। सिद्धमन्यत् ॥ २ ॥

२. सोम ज्योति दो, स्वर्ग का दान करो और सारे सौभाग्य का दान करो। अनन्तर हमारे लिए मङ्गल करो।

अथ तृतीया—

सनादक्षमुतक्रतुमपसोममृधोजहि। अथानोवस्यसस्कृधि ॥ ३ ॥

सन॑। दक्ष॑म्। उ॒त। क्रतु॑म्। अप॑। सो॒म॒। मृध॑ः।
ज॒हि॒। अथ॑। न॒ः। वस्य॑सः। कृ॒धि॒ ॥ ३ ॥

हे सोम त्वं दक्षं बलं सनास्मभ्यं देहि। उतापिच क्रतुं प्रज्ञानं सन। मृधोहिंसकान् शत्रून् अपजहि। मारय। सिद्धमन्यत्॥ ३॥

३. सोम, बल और कर्म का दान करो, हिंसकों का वध करो। अनन्तर हमारे लिए कल्याण करो।

पवीतारःपुनीतनसोममिन्द्रायपातवे। अथानोवस्यंसस्कृधि॥४॥

पवितारः। पुनीतन। सोमम्। इन्द्राय।
पातवे। अथ। नः। वस्यंसः। कृधि॥ ४॥

हे पवीतारः सोमाभिषवकर्तारोयूयं इन्द्राय पातवे पातुं सोमं पुनीतन अभिषुणुत। सिद्धमन्यत्॥ ४॥

४. सोम का अभिषव करनेवालो तुम लोग इन्द्र के पान के लिए सोम का अभिषव करो। अनन्तर हमारा कल्याण करो।

अथ पञ्चमी—

त्वंसूर्येनआभंजतवक्रत्वातवोतिभिः। अथानोवस्यंसस्कृधि॥५॥२२॥

त्वम्। सूर्ये। नः। आ। भज। तव। क्रत्वा। तव।
ऊतिऽभिः। अथ। नः। वस्यंसः। कृधि॥ ५॥ २२॥

हे सोम त्वं तव क्रत्वा तवोतिभिः त्वत्कर्तृकेण कर्मणा त्वत्कर्तृकाभीरक्षाभिश्च नोस्मान् सूर्ये आभज प्रापय। सिद्धमन्यत्॥ ५॥

५. सोम, अपने कार्य और रक्षण के द्वारा हमें सूर्य की प्राप्ति कराओ। अनन्तर हमारा कल्याण करो।

॥ इति षष्ठस्य सप्तमे द्वाविंशोवर्गः॥ २२॥

तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्यम्। अथानोवस्यंसस्कृधि॥६॥

तव। क्रत्वा। तव। ऊतिऽभिः। ज्योक्।
पश्येम। सूर्यम्। अथ। नः। वस्यंसः। कृधि॥ ६॥

हे सोम तव क्रत्वा प्रज्ञानेन तवोतिभीरक्षाभिश्च ज्योक् चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः। सिद्धमन्यत्॥ ६॥

६. तुम्हारे कर्म और रक्षण के द्वारा हम चिरकाल तक सूर्य का दर्शन करेंगे। अनन्तर हमारा कल्याण करो।

अथ सप्तमी—

अ॒भ्य॑र्ष स्वायुध॒ सोम॑ द्वि॒बर्ह॑सं र॒यिम्। अथा॑ नो॒ वस्य॑सस्कृधि ॥ ७ ॥

अ॒भि। अ॒र्ष॒। सु॒ऽआ॒यु॒ध॒। सोम॑। द्वि॒ऽबर्ह॑सम्।
र॒यिम्। अथ॑। न॒ः। वस्य॑सः। कृ॒धि॒ ॥ ७ ॥

हे स्वायुध शोभनायुध सोम त्वं द्विबर्हसं द्वयोर्द्यावापृथिव्योः स्थानयोः परिवृढं रयिं धनं अभ्यर्ष अस्मानभिगमय। सिद्धमन्यत् ॥ ७ ॥

७. शोभन अस्त्रवाले सोम, तुम स्वर्ग और पृथिवी पर वर्द्धित धन दो। अनन्तर हमारा कल्याण करो।

अ॒भ्य१॒॑र्षान॑पच्युतो र॒यिं स॒मत्सु॑ सास॒हिः। अथा॑ नो॒ वस्य॑सस्कृधि ॥ ८ ॥

अ॒भि। अ॒र्ष॒। अन॑पऽच्युतः। र॒यिम्। स॒मत्ऽसु॑।
स॒स॒हिः।। अथ॑। न॒ः। वस्य॑सः। कृ॒धि॒ ॥ ८ ॥

हे सोम समत्सु संग्रामेषु अनपच्युतः शत्रुभिरनाहतः सासहिः शत्रुणामभिभविता त्वं रयिं धनं अभ्यर्ष अस्मानभिगमय। सिद्धमन्यत् ॥ ८ ॥

८. लड़ाइयों में तुम स्वयं आहत नहीं होते। तुम शत्रुओं को हराते हो। धन दान करो। अनन्तर हमारा कल्याण करो।

त्वां य॒ज्ञैर॑वीवृध॒न्पव॑मान॒ विध॑र्मणि। अथा॑ नो॒ वस्य॑सस्कृधि ॥ ९ ॥

त्वाम्। य॒ज्ञैः। अ॒वी॒वृ॒ध॒न्। पव॑मान।
वि॒ऽध॑र्मणि। अथ॑। न॒ः। वस्य॑सः। कृ॒धि॒ ॥ ९ ॥

हे पवमान सोम यजमानानां विधारणाय प्रवृत्तं त्वां यज्ञैः विधर्मणि आत्मनोविधारणार्थं अवीवृधन् यजमानावर्धयन्ति। सिद्धमन्यत् ॥ ९ ॥

९. क्षरणशील सोम, यजमान लोग रक्षण के लिए, तुम्हें यज्ञ में वर्द्धित करते हैं। अनन्तर हमारा कल्याण करो।

र॒यिं न॑श्चि॒त्रम॒श्विन॒मिन्दो॑ वि॒श्वायु॒मा भ॑र।
अथा॑ नो॒ वस्य॑सस्कृधि ॥ १० ॥ २३ ॥

र॒यिम् । न॒: । चि॒त्रम् । अ॒श्विन॑म् । इन्दो॒ इति॑ । वि॒श्वऽआ॑युम् ।
आ । भ॒र॒ । अथ॑ । न॒: । व॒स्य॑सः । कृ॒धि॒ ॥ १० ॥ २३ ॥

हे इन्दो यागेषु क्लिद्यमान सोम त्वं चित्रं नानाविधं अश्विनं अश्ववन्तं च विश्वायुं सर्वंगामिनं रयिं नोस्मभ्यं आभर आहर । सिद्धमन्यत् ॥ १० ॥

१०. इन्द्र, तुम हमें नाना प्रकार के अश्वोंवाले और सर्वगामी धन दो। अनन्तर हमारा कल्याण करो।

॥ इति षष्ठस्य सप्तमे त्रयोविंशोवर्गः ॥ २३ ॥

समिद्धइत्येकादशर्चं पंचमं सूक्तं काश्यपासितस्य देवलस्यवार्षं अष्टम्याद्याश्चतस्रोनुष्टुभः शिष्टाः सप्तगायत्र्यः नराशंसवर्जिताः समिद्धआदयः क्रमेण प्रत्यृचंदेवताः । तथाचानुक्रान्तं—समिद्धएकादश काश्यपोसितोदेवलोवा विंशतिः सूक्तान्याद्यमाप्रियश्चतुरनुष्टुबन्तमिति । काश्यपस्य पावमानमिदमाप्रीसूक्तं । सूत्रितंच—समिद्धोअद्येति सर्वेषांयथाऋषिवेति ।

समि॑द्धो वि॒श्वत॒स्पति॒: पव॑मानो॒ वि रा॑जति । प्री॒णन्वृषा॒ कनि॑क्रदत् ॥१॥

सम्ऽइ॑द्धः । वि॒श्वत॑: । पति॑: । पव॑मानः । वि । रा॒ज॒ति॒ ।
प्री॒णन् । वृषा॑ । कनि॑क्रदत् ॥ १ ॥

आप्रीयसोमस्तुतिरत्र समिद्धः सम्यग्दीप्तः विश्वतस्पतिः सर्वतः स्वामी वृषा कामानां वर्षिता पवमानः सोमः कनिक्रदत् अभिषूयमाणः शब्दंकुर्वन् प्रीणन् देवान् प्रीणयन् विराजति यागेषु प्रकाशते ॥ १ ॥

१. भली भाँति दीप्त, सबके पति और काम-वर्षक पवमान सोम शब्द करके और देवों को प्रसन्न करके विराजित होते हैं।

तनू॒नपा॒त्पव॑मान॒: शृङ्गे॒ शिशा॑नो अर्षति । अ॒न्तरि॑क्षेण॒ रार॑जत् ॥२॥

तनू॒ऽनपा॑त् । पव॑मानः । शृङ्गे॒ इति॑ । शिशा॑नः । अ॒र्ष॒ति॒ ।
अ॒न्तरि॑क्षेण । रार॑जत् ॥ २ ॥

तंनूनपात् पवमानः सोमः तनूनपादत्रसोमोभवति । तथाचश्रूयते—अद्भ्योंशवोजायन्ते ततः सोमोजायतइति । शृंगे दीप्तउन्नतप्रदेशे । घृणिः शृंगाणीति ज्वलनामसुपाठात् । शिशानस्तीक्ष्णीकुर्वन् अन्तरिक्षेण रारजत् अर्षति द्रोणकलशंप्रति गच्छति । तथाचाम्नायते—द्वाभ्यांधाराभ्यां आग्रयणंगृह्णातीति ॥ २ ॥

२. जल-पौत्र पवमान (क्षरणशील=गिरनेवाले) सोम उन्नत प्रदेश में तीक्ष्ण होकर और अन्तरिक्ष में प्रदीप्त होकर जाते हैं।

ईळेन्यः पवमानो रयिर्वि राजति द्युमान्। मधोर्धाराभिरोजसा ॥३॥

ईळेन्यः। पवमानः। रयिः। वि। राजति। द्युऽमान्। मधोः। धाराभिः। ओजसा ॥ ३ ॥

ईळेन्यः स्तुत्यः पवमानः सोमः रयिः अभीष्टस्यदाता द्युमान् दीप्तिमांश्चसन् मधोरुदकस्य धाराभिः सहक्षरन् ओजसा बलेन विराजति प्रकाशते ॥ ३ ॥

३. स्तुत्य, अभीष्टदाता और दीप्तिमान् पवमान सोम मधु-धारा के साथ तेजोबल से विराजित होते हैं।

बर्हिः प्राचीनमोजसा पवमानः स्तृणन्हरिः। देवेषु देव ईयते ॥ ४ ॥

बर्हिः। प्राचीनम्। ओजसा। पवमानः। स्तृणन्। हरिः। देवेषु। देवः। ईयते ॥ ४ ॥

हरिः हरितवर्णोदेवोद्योतमानः सोमः पवमानः देवेषु यज्ञेषु बर्हिः प्राचीनं प्राचीनाग्रं स्तृणन् तारयन् ओजसा बलेन ईयते गच्छति ॥ ४ ॥

४. हरित-वर्ण सोमदेव यज्ञ में पूर्वाग्र में कुश-विस्तार करते हुए तेजोबल से गमन करते हैं।

उदातैर्जिहते बृहद्द्वारो देवीर्हिरण्ययीः। पवमानेन सुष्टुताः ॥५॥२४॥

उत्। आतैः। जिहते। बृहत्। द्वारः। देवीः। हिरण्ययीः। पवमानेन। सुऽस्तुताः ॥ ५ ॥ २४ ॥

हिरण्ययीः हिरण्मय्यः द्वारोदेवीर्द्वारोदेव्यः पवमानेन सोमेन सह सुष्टुताः स्तोतृभिः सम्यक् स्तुताः सत्यः बृहत् बृहतीभ्यो महतीभ्यः आतैः आताभ्योदिग्भ्यः। आता आशाइति दिङ्नामसुपाठात् उज्जिहते उद्गच्छन्ति ॥ ५ ॥

५. हिरण्मयी द्वार-देवियाँ पवमान सोम के साथ स्तुत होकर विराट् दिशाओं में चढ़ती हैं।

॥ इति षष्ठस्य सप्तमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ षष्ठी—

सुशिल्पे बृहती मही पवमानो वृषण्यति। नक्तोषासा न दर्शते ॥ ६ ॥

सुशिल्पे इति सुऽशिल्पे । बृहती इति । मही इति ।
पवमानः । वृषण्यति । नक्तोषसा । न । दर्शते इति ॥ ६ ॥

सुशिल्पे सुरूपे बृहती परिवृढे मही महत्यौ न संमतिदर्शनीये नक्तोषासा नक्तोषसौ पवमानः सोमोवृषण्यति कामयते ॥ ६ ॥

६. इस समय पवमान सोम सुन्दर-रूपा, बृहती, महती और दर्शनीया दिवारात्रि की कामना करते हैं।

उभादेवानृचक्षसाहोतारादैव्याहुवे । पवमानइन्द्रोवृषा ॥ ७ ॥

उभा । देवा । नृऽचक्षसा । होतारा । दैव्या ।
हुवे । पवमानः । इन्द्रः । वृषा ॥ ७ ॥

नृचक्षसा मनुष्याणां द्रष्टारौ दैव्या दैव्यौ देवसंबन्धिनौ होतारा होतारौ उभा उभौ देवा देवौ हुवे आह्वयामि । यज्ञे पवमानः सोमः इन्द्रोदीप्तः । तथाचयास्कः—इन्द्रइरांदृणातीति वेरां ददातीति वेरांदधातीति वेरांदारयतीति वेरांधारयतीति वेन्दवेद्रवतीति वेन्दौरमतइति वेन्धेभूतानीतिवातद्यदेनंप्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमितिविज्ञायतइति[1] । वृषा कामानांवर्षिताच भवति ॥ ७ ॥

७. मनुष्यों के दर्शक और देवों के होता दोनों देवों को मैं बुलाता हूँ। पवमान सोम दीप्त (इन्द्र) और अभीष्टवर्षक हैं।

भारतीपवमानस्यसरस्वतीळामही ।
इमंनोयज्ञमागमन्तिस्रोदेवीःसुपेशसः ॥ ८ ॥

भारती । पवमानस्य । सरस्वती । इळा । मही ।
इमम् । नः । यज्ञम् । आ । गमन् । तिस्रः । देवीः । सुऽपेशसः ॥ ८ ॥

भारती भारत्याख्या सरस्वती सरस्वत्याख्याच मही महती इळाख्याच तिस्रः सुपेशसः सुरूपा देवीर्देव्योनोस्माकं पवमानस्य सोमस्य संबन्धिनं इमं यज्ञं प्रत्यागमन् आगच्छन्तु ॥ ८ ॥

८. भारती, सरस्वती और महती इड़ा नाम की तीन सुन्दरी देवियाँ हमारे इस सोम-यज्ञ में पधारें।

त्वष्टारमग्रजांगोपांपुरोयावानमाहुवे ।
इन्दुरिन्द्रोवृषाहरिःपवमानःप्रजापतिः ॥ ९ ॥

---

1 नि० १०. ८।

त्वष्टा॑रम् । अ॒ग्र॒ऽजाम् । गो॒पाम् । पु॒रः॒ऽयावा॑नम् । आ ।
हु॒वे । इन्दुः॑ । इन्द्रः॑ । वृषा॑ । हरिः॑ । पव॑मानः । प्र॒जाऽप॑तिः ॥ ९ ॥

अग्रजां अग्रेजातं गोपां प्रजानां पालयितारं पुरोयावानं देवानां पुरस्ताद्गन्तारं त्वष्टारं देवमाहुवे अहमाह्वयामि । यज्ञे हरिः हरितवर्णः पवमानः इन्दुः सोमः इन्द्रोदेवानामीश्वरो वृषा कामानांवर्षिताच प्रजापतिः प्रजानां पालयिताच भवतीति ॥ ९ ॥

९. अग्रजात, प्रजापालक और अग्रगामी त्वष्टा को मैं बुलाता हूँ। हरित-वर्ण पवमान सोम देवेन्द्र, काम-वर्षक और प्रजापति हैं।

अथ दशमी—

वन॒स्पतिं॒पव॑मान॒मध्वा॒सम॑ङ्ग्धि॒धार॑या ।
स॒हस्र॑वल्शं॒हरि॑तं॒भ्राज॑मानं॒हि॒र॒ण्यय॑म् ॥ १० ॥

वन॒स्पति॑म् । प॒व॒मा॒न॒ । मध्वा॑ । सम् । अ॒ङ्ग्धि॒ । धार॑या ।
स॒ह॒स्र॑ऽवल्शम् । हरि॑तम् । भ्राज॑मानम् । हि॒र॒ण्यय॑म् ॥ १० ॥

हे पवमानसोम हरितं हरितवर्णं हिरण्ययं कदाचिद्धिरण्मयवर्णंच भ्राजमानं दीप्यमानं सहस्रवल्शं सहस्रशाखं वनस्पतिं देवं धारया धारामयेन मध्वा मधुना समङ्ग्धि अंक्ष्व संस्कुर्वित्यर्थः ॥ १० ॥

१०. पवमान सोम, हरित-वर्ण हिरण्यवर्ण, दीप्तिमान् और सहस्र शाखाओंवाले वनस्पति को मधुर धारा के द्वारा संस्कृत करो।

विश्वे॑देवाः॒स्वाहा॑कृतिं॒पव॑मान॒स्याग॑त ।
वा॒युर्बृह॒स्पतिः॒सूर्यो॒ग्निरिन्द्रः॑स॒जोष॑सः ॥ ११ ॥ २५ ॥

विश्वे॑ । दे॒वाः॒ । स्वाहा॑ऽकृतिम् । पव॑मानस्य ।
आ । ग॒त॒ । वा॒युः॒ । बृ॒ह॒स्पतिः॑ । सूर्यः॑ ।
अ॒ग्निः॒ । इन्द्रः॑ । स॒ऽजोष॑सः ॥ ११ ॥ २५ ॥

हे विश्वेदेवा वायुर्बृहस्पतिश्च सूर्यश्चाग्निरिन्द्रश्च सर्वे यूयं सजोषसः संगताः सन्तः पवमानस्य सोमस्य स्वाहाकृतिं स्वाहाकारं आगत प्रत्यागच्छत ॥ ११ ॥

११. विश्वदेवगण वायु, बृहस्पति, सूर्य्य, अग्नि और इन्द्र, तुम सब मिलकर सोम के स्वाहा शब्द के पास आओ।

॥ इति षष्ठस्य सप्तमे पंचविंशोवर्गः ॥ २५ ॥

मन्द्रयेति नवर्चं षष्ठं सूक्तं काश्यपस्यासितस्य देवलस्यार्षं गायत्रं पवमानसोमदेवताकं ।

तत्र प्रथमा—

मन्द्रयासोमधारयावृषापवस्वदेवयुः । अव्योवारेष्वस्मयुः ॥ १ ॥

मन्द्रया । सोम । धारया । वृषा । पवस्व ।
देवऽयुः । अव्यः । वारेषु । अस्मऽयुः ॥ १ ॥

हे सोम वृषा कामानां वर्षिता देवयुर्देवकामः अस्मयुरस्मत्कामश्च अव्यः अवेर्वारेषु वालेषु दशापवित्रे मन्द्रया मदकरया धारया पवस्व क्षर ॥ १ ॥

१. सोम, तुम अभीष्टवर्षक और देवाभिलाषी हो। तुम हमारी कामना करते हो। तुम हमारी रक्षा करो और दशापवित्र में मधुर धारा से गिरो।

अभित्यंमद्यंमदमिन्दविन्द्रइतिक्षर । अभिवाजिनोअर्वतः ॥ २ ॥

अभि । त्यम् । मद्यम् । मदम् । इन्दो इति ।
इन्द्रः । इति । क्षर । अभि । वाजिनः । अर्वतः ॥ २ ॥

हे इन्दो सोम त्वं इन्द्रईश्वरइतिकृत्वा त्यं तं मद्यं मदकरं मदं रसं अभिक्षर वर्ष । वाजिनोबलवतः अर्वतोश्वांश्चास्मदर्थं अभिक्षरेत्यर्थः ॥ २ ॥

२. सोम, तुम स्वामी हो; इसलिए मदकर सोम का वर्षण करो। बली अश्व प्रदान करो।

अथ तृतीया—

अभित्यंपूर्व्यंमदंसुवानोअर्षपवित्रआ । अभिवाजमुतश्रवः ॥ ३ ॥

अभि । त्यम् । पूर्व्यम् । मदम् । सुवानः । अर्ष । पवित्रे ।
आ । अभि । वाजम् । उत । श्रवः ॥ ३ ॥

हे सोम सुवानोभिषूयमाणस्त्वं पूर्व्यं प्रत्नं त्यं तं प्रसिद्धं मदं मदकरं रसं पवित्रे आसमन्तादभ्यर्ष अभिगमय । वाजं बलमस्मानभ्यर्ष । उतापिच श्रवोन्नमभ्यर्ष ॥ ३ ॥

३. अभिषुत होकर उस पुरातन और मदकर रस को दशापवित्र में प्रेरित करो। बल और अन्न का प्रेरण करो।

अथ चतुर्थी—

अनुद्रप्सासइन्दवआपोनप्रवतासरन् । पुनानाइन्द्रमाशत ॥ ४ ॥

अनु । द्रप्सासः । इन्दवः । आपः ।

न । प्रऽवता । असरन् । पुनानाः । इन्द्रम् । आशत ॥ ४ ॥

द्रप्सासोद्रुतगतयः पुनानाः क्षरन्तः इन्दवः सोमाः प्रवता प्रवणेन मार्गेण आपोन आपइव इन्द्रं अन्वसरन् अनुगच्छन्ति आशत व्याप्नुवन्तिच ॥ ४ ॥

४. जैसे जल निम्न दिशा की ओर जाता है, वैसे ही द्रुतगति और क्षरणशील सोम इन्द्र का अनुसरण करता और उन्हें व्याप्त करता है।

यमत्यमिववाजिनंमृजन्तियोषणोदश । वनेक्रीळन्तमत्यविम् ॥५॥२६॥

यम् । अत्यम्ऽइव । वाजिनम् । मृजन्ति । योषणः ।

दश । वने । क्रीळन्तम् । अतिऽअविम् ॥ ५ ॥ २६ ॥

अत्यविं दशापवित्रमतिक्रम्य वनेरण्ये क्रीळन्तं वर्तमानं यं सोमं दशसंख्याका योषणः स्त्रियः अंगुल्यइत्यर्थः । तथाच निगमान्तरं—तमीमण्वीःसमर्यआगृभ्णन्तियोषणोदशेति । वाजिनं बलिनमत्यमिव अश्वमिव मृजन्ति पवित्रयन्ति उत्तरयासहान्वयः ॥ ५ ॥

५. दश-अंगुलि-रूप स्त्रियाँ दशापवित्र को लांघकर वन में क्रीड़ा करनेवाले बलवान् अश्व के समान जिस सोम की सेवा करती हैं—

॥ इति षष्ठस्य सप्तमे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी—

तंगोभिर्वृषणंरसंमदायदेववीतये । सुतंभरायसंसृज ॥ ६ ॥

तम् । गोभिः । वृषणम् । रसम् । मदाय ।

देवऽवीतये । सुतम् । भराय । सम् । सृज ॥ ६ ॥

वृषणं कामानांवर्षितारं देववीतये देवानां पानाय सुतमभिषुतं तं रसं भराय संग्रामाय गोभिः पयोभिः संसृज संयोजय ॥ ६ ॥

६. पान करने पर देवों के मत्त होने के लिए अभिषुत और अभीष्ट-वर्षक उसी सोम के रस में, युद्ध के लिए गव्य मिलाओ।

अथ सप्तमी—

देवोदेवायधारयेन्द्रायपवतेसुतः । पयोयदस्यपीपयत् ॥ ७ ॥

---

1 ऋ० सं० ६. ७. १७.।

देवः । देवार्य । धारया । इन्द्राय । पवते ।
सुतः । पर्यः । यत् । अस्य । पीपर्यत् ॥ ७ ॥

देवाय द्योतमानायेन्द्राय सुतोभिषुतो देवोद्योतमानः सोमोधारया पवते । क्षरति यद्यस्मा-दस्यसोमस्य पयः पीपयत् इन्द्रमाप्यायितवत् तस्माद्धारया पवतइत्यर्थः ॥ ७ ॥

७. इन्द्र के लिए अभिषुत सोमदेव धारा के रूप में क्षरित होते हैं; क्योंकि इन्द्र इनका रस आप्यायित करता है।

अथाष्टमी–

आत्मायज्ञस्यरंह्यासुष्वाणःपवतेसुतः । प्रत्नंनिपातिकाव्यम् ॥८॥

आत्मा । यज्ञस्य । रंह्या । सुस्वानः ।
पवते । सुतः । प्रत्नम् । नि । पाति । काव्यम् ॥ ८ ॥

यज्ञस्यात्मा आत्मभूतः सुतोभिषुतः सोमः सुष्वाणः यजमानेभ्यः कामान् प्रेरयन् रंह्या वेगेन पवते क्षरति प्रत्नं पुरातनं काव्यमात्मनः कवित्वं च निपाति अभिरक्षति ॥ ८ ॥

८. यज्ञ की आत्मा और अभिषुत सोम यजमानों को अभीष्ट देते हुए वेग से गिरते हैं और अपना पुराना कवित्व (क्रान्तदर्शित्व) की भी रक्षा करते हैं।

अथ नवमी–

एवापुनानइन्द्रयुर्मदंमदिष्ठवीतये । गुहाचिद्दधिषेगिरः ॥९॥२७॥

एव । पुनानः । इन्द्रऽयुः । मदम् । मदिष्ठ ।
वीतये । गुहा । चित् । दधिषे । गिरः ॥ ९ ॥ २७ ॥

हे मदिष्ठ अतिशयेन मदकर सोम इन्द्रयुरिन्द्रकामस्त्वं वीतये इन्द्रस्य पानाय एव एवं मदं पुनानः क्षरन् गुहा गुहायां यज्ञशालायामित्यर्थः गिरश्चित् शब्दानपि दधिषे अभिषववेलायां उपरवेषु धारयसि करोषीत्यर्थः ॥ ९ ॥

९. मदकर सोम, इन्द्र की अभिलाषा से उनके पान के लिए क्षरित होकर यज्ञ-शाला में शब्द करो।

॥ इति षष्ठस्य सप्तमे सप्तविंशोवर्गः ॥ २७ ॥

असृग्रमिति नवर्चं सप्तमं सूक्तं । असृग्रमित्यनुक्रान्तं । असितोदेवलोवाऋषिः । तौच कश्यपगोत्रजौ । गायत्रंछन्दः । पवमानसोमोदेवता । उक्तोविनियोगः ।

तत्रप्रथमा–

असृग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः । विदानाअस्ययोजनम् ॥१॥

अस॑ग्रम् । इन्द॑वः । प॒था । धर्म॑न् । ऋ॒तस्य॑ ।
सु॒ऽश्रिय॑ः । वि॒दा॒नाः । अ॒स्य॒ । योज॑नम् ॥ १ ॥

सुश्रियः शोभनश्रयणा अस्येन्द्रस्य योजनं संबन्धं विदाना जानन्तइन्दवः सोमाः धर्मन् कर्मणि ऋतस्य यज्ञस्य पथा मार्गेण असृग्रं हविर्धानाः सृज्यन्ते ॥ १ ॥

१. शोभन श्रीवाले और इन्द्र का सम्बन्ध जाननेवाले सोम कर्म में, यज्ञ-मार्ग में, बनाये जाते हैं।

प्रधारा॒मध्वो॑अग्रि॒योम॒हीर॒पोविगा॑हते । ह॒विर्ह॒विष्षुवन्द्य॑ः ॥ २ ॥

प्र । धारा॑ । मध्व॑ः । अ॒ग्रि॒यः । म॒हीः । अ॒पः ।
वि । गा॒ह॒ते॒ । ह॒विः । ह॒विष्षु॑ । वन्द्य॑ः ॥ २ ॥

हविःषु हविषांमध्ये वंद्यः स्तुत्योहविः हविरात्मकोयः सोमो महीर्महतीरपोवसतीवरीर्विगाहते तस्य मध्वः सोमस्य अग्रियो मुख्याधाराः प्रपतन्तीत्यर्थः ॥ २ ॥

२. सोम हव्यों में स्तुत्य हव्य हैं। सोम महान् जल में निमज्जित होते हैं। उन्हीं सोम की श्रेष्ठ धारायें गिरती हैं।

प्रयु॒जोवा॒चोअ॑ग्रि॒योवृषाव॑चक्रद॒द्वने॑ । सद्मा॒भिस॒त्योअ॑ध्व॒रः ॥३॥

प्र । यु॒जः । वा॒चः । अ॒ग्रि॒यः । वृषा॑ । अव॑ ।
च॒क्र॒द॒त् । वने॑ । सद्म॑ । अ॒भि । स॒त्यः । अ॒ध्व॒रः ॥ ३ ॥

एतदेव दर्शयति वृषाकामानां वर्षकः सत्यः सत्यभूतः अध्वरोहिंसावर्जितः अग्रियोमुख्यः सोमः सद्म यज्ञगृहमभि प्रति वने उदके युजोयुक्ताः वाचोवाणीः प्रावचक्रदव अवक्रंदति शब्दान् करोतीत्यर्थः ॥ ३ ॥

३. अभीष्टवर्षक, सत्य, हिंसा-शून्य और प्रधान सोम यज्ञ-गृह की ओर जल से युक्त शब्द करते हैं।

अथ चतुर्थी—

परि॒यत्का॒व्या॑क॒विर्नृ॒म्णावसा॑नो॒अर्ष॑ति । स्व॑र्वा॒जीसि॑षासति॥४॥

परि॑ । यत् । का॒व्या॑ । क॒विः । नृ॒म्णा । वसा॑नः ।
अर्ष॑ति । स्व॑ः । वा॒जी । सि॒सा॒स॒ति॒ ॥ ४ ॥

कविः क्रान्तकर्मा सोमो नृम्णा धनानि वसानः आच्छादयन् स्तोतॄणां काव्या काव्यानि कविकर्माणि स्तोत्राणि यद्यदा पर्यर्षति परिगच्छति तदा स्वः स्वर्गे वाजीबलवानन्नवान्वेन्द्रः सिषासति यागं प्रत्यागन्तुं स्वकीयं बलं संभक्तुमिच्छति ॥ ४ ॥

४. जिस समय कवि सोम धन को ग्रहण करते हुए काव्य (स्तोत्र) को जानते हैं, उस समय स्वर्ग में इन्द्र बल का प्रकाश करते हैं।

पवमानोअभिस्पृधोविशोराजेवसीदति । यदीमृण्वन्तिवेधसः ॥५॥२८॥

पवमानः । अभि । स्पृधः । विशः । राजाऽइव ।
सीदति । यत् । ईम् । ऋण्वन्ति । वेधसः ॥ ५ ॥ २८ ॥

यद्यदा ईमेनं सोमं वेधसः कर्मणां कर्तारः ऋण्वन्ति प्रेरयन्ति तदा पवमानः क्षरन्नेषसोमः स्पृधः स्पर्धमानान् यागविघ्नकारिणोराक्षसान् विशः स्पर्धमानान् मनुष्यान् राजेव यथा राजा तद्वदभिसीदति नाशयितुमभिगच्छति ॥ ५ ॥

५. जिस समय कर्मकर्त्ता इस सोम को प्रेरित करते हैं, उस समय पवमान सोम, राजा के समान, यज्ञ-विघ्नकर्त्ता मनुष्यों की ओर जाते हैं।

॥ इति षष्ठस्य सप्तमेऽष्टाविंशोवर्गः ॥ २८ ॥

अथ षष्ठी—

अव्योवारेपरिप्रियोहरिर्वनेषुसीदति । रेभोवनुष्यतेमती ॥ ६ ॥

अव्यः । वारे । परि । प्रियः । हरिः । वनेषु ।
सीदति । रेभः । वनुष्यते । मती ॥ ६ ॥

हरिर्हरितवर्णः प्रियोदेवानां प्रियतमएवसोमो वनेषूदकेषु संपृक्तः अव्यः अवेः वारे वालोपेते परिसीदति निषीदति । किंच रेभोभिषववेलायां उपरवेषु शब्दं कुर्वन् मती मत्या स्तुत्या वनुष्यते सेव्यते ॥ ६ ॥

६. हरित-वर्ण और प्रिय सोम जल में मिश्रित होकर मेष के लोमों (बालों) पर बैठते और शब्द करते हुए स्तुति की सेवा करते हैं।

अथ सप्तमी—

सवायुमिन्द्रमश्विनासाकंमदेनगच्छति । रणायोअस्यधर्मभिः ॥७॥

सः । वायुम् । इन्द्रम् । अश्विना । साकम् ।
मदेन । गच्छति । रण । यः । अस्य । धर्मऽभिः ॥ ७ ॥

योयजमानोस्यसोमस्य धर्मभिः कर्मभिः क्रयणाभिषवादिभिः रण रमते सयजमानो वायुमिन्द्रंच अश्विना अश्विनौच मदेन साकं सह गच्छति प्राप्नोति ॥ ७ ॥

**७. जो सोम के इस कर्म से प्रसन्न होता है, वह वायु, इन्द्र और अश्विद्वय को मद के साथ प्राप्त करता है।**

**आमित्रावरुणाभगंमध्वःपवन्तऊर्मयः । विदानाअस्यशक्मभिः ॥८॥**

आ । मित्रावरुणा । भगम् । मध्वः । पवन्ते । ऊर्मयः ।
विदानाः । अस्य । शक्मऽभिः ॥ ८ ॥

येषां यजमानानां मध्वः सोमस्योर्मयस्तरंगाः मित्रावरुणा मित्रावरुणौ देवौ भगं भगाख्यं देवं च प्रति पवन्ते क्षरन्ति । ते यजमानाः अस्य सोमस्य इमं सोमं विदाना जानन्तः शक्मभिः सुखैः संगच्छन्तइति शेषः ॥ ८ ॥

**८. जिन यजमानों के सोमों की तरंगें मित्र, वरुण और भगदेव की ओर गिरती हैं, वे सोम को जानते हुए सुख प्राप्त करते हैं।**

**अस्मभ्यंरोदसीरयिंमध्वोवाजस्यसातये । श्रवोवसूनिसंजितम् ॥९॥२९॥**

अस्मभ्यम् । रोदसी इति । रयिम् । मध्वः । वाजस्य ।
सातये । श्रवः । वसूनि । सम् । जितम् ॥ ९ ॥ २९ ॥

हे रोदसी द्यावापृथिव्यौ युवां मध्वोदेवानां मोदयितुर्वाजस्य सोमात्मकस्यान्नस्य सातये लाभाय अस्मभ्यं काश्यपासितेभ्यः काश्यपदेवलेभ्योवा रयिं धनं श्रवोन्नंच वसूनि वासकान्यन्यान्यपि पश्वादीनि धनानि संजितं संजयतं प्रयच्छतमित्यर्थः ॥ ९ ॥

**९. द्यावापृथिवी, मदकर सोम-रूप अन्न की प्राप्ति के लिए हमें अन्न, धन और पशु आदि दो।**

॥ इति षष्ठस्य सप्तमे एकोनत्रिंशोवर्गः ॥ २९ ॥

एते सोमाइति नवर्चं अष्टमं सूक्तं ऋष्याद्याः पूर्ववत् । अनुक्रान्तंच—एते सोमाइति । उक्तः सूक्तविनियोगः । ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे सोमेमृज्यमाने मृजन्तित्वेत्येषा । सूत्रितंच—अथापरमभिरूपं कुर्यादिति गाणगारिराप्यायस्वसमेतुतइति तिस्रो मृजन्तित्वादशक्षिपइति ।

तत्र प्रथमा—

**एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन् । वर्धन्तोअस्यवीर्यम् ॥१॥**

एते । सोमाः । अभि । प्रियम् । इन्द्रस्य । कामम् ।
अक्षरन् । वर्धन्तः । अस्य । वीर्यम् ॥ १ ॥

एते अभिषुता इमे सोमाः अस्येन्द्रस्य वीर्यं शक्तिं वर्धन्तो वर्धयन्त इन्द्रस्य कामं काम्यं प्रियं प्रीतिकरं रसं अभ्यक्षरन् अभिपवन्ते अभ्यवर्षन् ॥ १ ॥

१. ये सोम इन इन्द्र के वीर्य को बढ़ाते हुए उनके अभिलषणीय और प्रीतिकर रस का वर्षण करते हैं।

पुनानासश्चमूषदोगच्छन्तोवायुमश्विना । तेनोधान्तुसुवीर्यम् ॥२॥

पुनानासः । चमूऽसदः । गच्छन्तः । वायुम् ।
अश्विना । ते । नः । धान्तु । सुऽवीर्यम् ॥ २ ॥

ते प्रसिद्धाः सोमाः पुनानासः पुनानाः अभिषूयमाणाः चमूषदः चमसेषु सीदन्तो वायुमश्विना अश्विनौच गच्छन्तः प्राप्नुवन्तो नोस्मभ्यं सुवीर्यं शोभनवीर्यं धान्तु धारयन्तु प्रयच्छन्त्वित्यर्थः ॥ २ ॥

२. वे सोम अभिषुत होते हैं, चमस में स्थित होते हैं और वायु तथा अश्विद्वय के पास जाते हैं। वायु आदि हमें सुन्दर वीर्य दें।

इन्द्रस्यसोमराधसेपुनानोहार्दिचोदय । ऋतस्ययोनिमासदम् ॥३॥

इन्द्रस्य । सोम । राधसे । पुनानः । हार्दि । चोदय ।
ऋतस्य । योनिम् । आऽसदम् ॥ ३ ॥

हे सोम पुनानोभिषूयमाणोहार्दि अभिलषितस्त्वं इन्द्रस्य राधसे संराधनाय ऋतस्य यज्ञस्य योनिं स्थानं आसदं यथेन्द्रआसीदति तथेन्द्रं चोदय प्रेरय ॥ ३ ॥

३. सोम, तुम अभिषुत और मनोज्ञ होकर इन्द्र की आराधना के लिए यज्ञ-स्थान में बैठो और इन्द्र को प्रेरित करो।

अथ चतुर्थी—

मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः । अनुविप्राअमादिषुः ॥४॥

मृजन्ति । त्वा । दश । क्षिपः हिन्वन्ति । सप्त । धीतयः ।
अनु । विप्राः । अमादिषुः ॥ ४ ॥

हे सोम त्वा त्वां दश दशसंख्याकाः क्षिपोंगुलयः । क्षिशः क्षिप इत्यंगुलिनामसुपाठात् । मृजन्ति परिचरन्ति सप्त सप्तसंख्याकाः धीतयो होत्रकाश्च त्वां हिन्वन्ति स्वस्वव्यापारैः प्रीणयन्ति विप्रामेधाविनश्च त्वामन्वमादिषुः अनुमादयन्ति ॥ ४ ॥

४. सोम, दसों अंगुलियाँ तुम्हारी सेवा करती हैं। सात होता तुम्हें प्रसन्न करते हैं और मेधावी लोग तुम्हें प्रमत्त करते हैं।

देवेभ्यस्त्वामदायकंसृजानमतिमेष्यः । संगोभिर्वासयामसि ॥५॥३०॥

देवेभ्यः । त्वा । मदाय । कम् । सृजानम् । अति ।

मेष्यः । सम् । गोभिः । वासयामसि ॥ ५ ॥ ३० ॥

हे सोम मेष्यः अवेर्लोमानि कं उदकं च अतिसृजानं त्वा त्वां देवेभ्यो देवानां विभक्तिव्यत्ययः मदाय मदार्थं गोभिर्गोविकारैः पयोभिः संवासयामसि संवासयामः ॥ ५ ॥

५. तुम मेष-लोम और जल में बनाये जाते हो। देवों की मत्तता के लिए हम तुम्हें दही आदि में मिला देंगे।

॥ इति षष्ठस्य सप्तमे त्रिंशोवर्गः ॥ ३० ॥

पुनानःकलशेष्वावस्त्राण्यरुषोहरिः । परिगव्यान्यव्यत ॥ ६ ॥

पुनानः । कलशेषु । आ । वस्त्राणि । अरुषः । हरिः ।

परि । गव्यानि । अव्यत ॥ ६ ॥

पुनानः पूयमानः कलशेषु कुंभेषु निषिच्यमानः अरुषः आरोचमानः हरिर्हरितवर्णः सोमोगव्यानि दध्यादीनि वस्त्राणि वासांसीव पर्यव्यत पर्याच्छादयति ॥ ६ ॥

६. अभिषुत, कलस में भली भाँति सिक्त, दीप्तियुक्त और हरितवर्ण सोम, वस्त्र के समान, दही आदि को आच्छादित करता है।

अथ सप्तमी—

मघोनआपवस्वनोजहिविश्वाअपद्विषः । इन्दोसखायमाविश ॥७॥

मघोनः । आ । पवस्व । नः । जहि । विश्वाः । अप ।

द्विषः । इन्दो इति । सखायम् । आ । विश ॥ ७ ॥

हे इन्दो सोम मघोनो धनवतोनोस्मान् प्रत्यापवस्व क्षर । विश्वा विश्वान् द्विषोद्वेष्टॄन् अपजहि मारयच सखायं प्रियमिन्द्रं आविश आप्नुहिच ॥ ७ ॥

७. सोम, हम धनी हैं। तुम हमारे सामने क्षरित होओ। सारे शत्रुओं का विनाश करो। मित्र इन्द्र को प्राप्त करो।

अथाष्टमी—

वृष्टिंदिवःपरिस्रवद्युम्नंपृथिव्याअधि । सहोनःसोमपृत्सुधाः ॥ ८ ॥

वृष्टिम् । दिवः । परि । स्रव । द्युम्नम् । पृथिव्याः । अधि ।
सहः । नः । सोम । पृत्ऽसु । धाः ॥ ८ ॥

हे सोम त्वं दिवोद्युलोकाद्वृष्टिं वर्षं परिस्रव वर्ष । पृथिव्याअधि पृथिव्यां । अधिः सप्तम्यर्थानुवादी । द्युम्नमन्नं चोत्पादयेतिशेषः। नोस्माकं सहोबलंच पृत्सु संग्रामेषु धाः धेहि ॥८॥

८. सोम, द्युलोक से तुम पृथिवी के ऊपर वर्षा करो। अन्न को उत्पन्न करो और युद्ध में हमें बास-स्थान दो।

नृचक्षसंत्वावयमिन्द्रपीतंस्वर्विदम् । भक्षीमहिप्रजामिषम् ॥ ९ ॥ ३१ ॥

नृऽचक्षसम् । त्वा । वयम् । इन्द्रऽपीतम् । स्वःऽविदम् ।
भक्षीमहि । प्रऽजाम् । इषम् ॥ ९ ॥ ३१ ॥

हे सोम नृचक्षसं नृणां द्रष्टारं स्वर्विदं सर्वज्ञं इन्द्रपीतं इन्द्रेण पीतं त्वा त्वां पिबन्तोवयं काश्यपासिताः काश्यपादेवलावा प्रजां पुत्रादिकामिषमन्नंच भक्षीमहि भजेमहि ॥ ९ ॥

९. सोम, तुम नेताओं के दर्शक और सर्वज्ञ हो। इन्द्र के पान करने पर हम तुम्हारा पान करते हैं। हम सन्तान और अन्न प्राप्त करें।

॥ इति षष्ठस्य सप्तमे एकत्रिंशोवर्गः ॥ ३१ ॥

परिप्रियेति नवर्चं नवमं सूक्तं ऋष्याद्याः पूर्ववत् । परिप्रियेत्यनुक्रान्तं । उक्तोविनियोगः ।

तत्र प्रथमा—

परिप्रियादिवःकविर्वयांसिनप्त्योर्हितः । सुवानोयातिकविक्रतुः ॥ १ ॥

परि । प्रिया । दिवः । कविः । वयांसि । नप्त्योः । हितः ।
सुवानः । याति । कविऽक्रतुः ॥ १ ॥

कविर्मेधावी कविक्रतुः क्रान्तप्रज्ञः क्रान्तकर्मावा सोमो नप्त्योरधिषवणफलकयोर्हितोनिहितः सुवानोभिषूयमाणो दिवोद्युलोकस्य परिप्रिया अतिप्रियाणि वयांसि ग्राव्णः तथा चमंत्रवर्णः—वयांसिश्येनाअतिथयः पर्वतानांककुभइति । याति गच्छति ॥ १ ॥

१. मेधावी और क्रान्तदर्शी सोम अभिषवण-प्रस्तर के ऊपर निहित और अभिषुत होकर द्युलोक के अतीव प्रिय पक्षियों के पास जाते हैं।

अथ द्वितीया—

प्रप्रक्षयायपन्यसेजनायजुष्टोअद्रुहे। वीत्यर्षचनिष्ठया ॥ २ ॥
प्रऽप्र । क्षयाय । पन्यसे । जनाय । जुष्टः । अद्रुहे ।
वीती । अर्ष । चनिष्ठया ॥ २ ॥

हे सोम प्रप्र अत्यन्तं क्षयाय तव निवासभूताय अद्रुहे अद्रोग्ध्रेच पन्यसे स्तोत्रे जनाय मनुष्याय वीती वीत्यै भक्षणाय जुष्टः पर्याप्तस्त्वं चनिष्ठया अन्नवत्तमया धारया अर्ष यागं प्रतिगच्छ ॥ २ ॥

२. तुम अपने निवास-भूत अद्रोही और स्तोता मनुष्य के लिए पर्याप्त हो। अन्नवाली धारा के साथ आओ।

ससूनुर्मातराशुचिर्जातोजातेअरोचयत् । महान्महीऋतावृधा ॥ ३ ॥
सः । सूनुः । मातरा । शुचिः । जातः । जाते इति ।
अरोचयत् । महान् । मही इति । ऋतऽवृधा ॥ ३ ॥

जातउत्पन्नः शुचिर्विशुद्धोमहान् हविरुत्तमः ससोमाख्यः सूनुः पुत्रो मही महत्यौ ऋतावृधा यज्ञस्यवर्धयित्र्यौ जाते विश्वस्यजनयित्र्यौ मातरा आत्मनोमातरौ द्यावापृथिव्यावरोचयत् रोचयति दीपयति ॥ ३ ॥

३. उत्पन्न, पवित्र और महान् वे सोम-रूप पुत्र महती, यज्ञ-वर्द्धयित्री, जनयित्री और माता द्यावापृथिवी को प्रदीप्त करते हैं।

ससप्तधीतिभिर्हितोनद्योअजिन्वदद्रुहः । याएकमक्षिवावृधुः ॥ ४ ॥
सः । सप्त । धीतिऽभिः । हितः । नद्यः । अजिन्वत् ।
अद्रुहः । याः । एकम् । अक्षि । ववृधुः ॥ ४ ॥

याः नद्योयमेकं मुख्यं सोमं अक्षि अक्षीणं ववृधुः वर्धयन्ति ससोमो धीतिभिरंगुलिभिः । रशना धीतय इत्यंगुलिनामसुपाठात् । हितो निहितःसन् अद्रुहो द्रोहवर्जिताः सप्त सप्तसंख्याकानद्योनदीः अजिन्वत् प्रीणयति ॥ ४ ॥

४. नदियों ने जिन अक्षीण और मुख्य सोम को वर्द्धित किया है, वेही सोम अंगुलि-द्वारा निहित होकर द्रोह-शून्य सातों नदियों को प्रसन्न करते हैं।

अथ पञ्चमी—

ताअभिसन्तमस्तृतंमहेयुवानमादधुः । इन्दुमिन्द्रतवव्रते ॥ ५ ॥ ३२ ॥

ताः । अभि । सन्तम् । अस्तृतम् । महे । युवानम् ।
आ । दधुः । इन्दुम् । इन्द्र । तव । व्रते ॥ ५ ॥ ३२ ॥

हे इन्द्र तव त्वदीये व्रते कर्मणि ता अंगुल्यः । पूर्वत्र धीतयइत्यंगुलीनामुपात्तत्वात्तच्छब्देनपरामर्शः । सन्तं विद्यमानं अस्तृतमहिंसितं युवानं नित्यतरुणं इन्दुं सोमं महे महते अभिषवादिलक्षणाय कर्मणे अभ्यादधुः ॥ ५ ॥

५. इन्द्र, तुम्हारे कर्म में उन अँगुलियों ने अहिंसित और वर्त्तमान सोम को महान् कर्म के लिए धारण किया है।

॥ इति षष्ठस्य सप्तमे द्वात्रिंशोवर्गः ॥३२॥

अभिवह्निरमर्त्यःसप्तपश्यतिवावहिः । क्रिविर्देवीरतर्पयत् ॥ ६ ॥

अभि । वह्निः । अमर्त्यः । सप्त । पश्यति । वावहिः ।
क्रिविः । देवीः । अतर्पयत् ॥ ६ ॥

योवह्निः यज्ञस्य धुरोवोढा अमर्त्यो मरणरहितो वावहिः देवानां तृप्तेरत्यन्तं वोढाच सोमः सप्तनदीः अभिपश्यति सोयं क्रिविः कूपरूपेण पूर्णोवस्थितःसन् देवीर्नदीरतर्पयत् तर्पयति ॥६॥

६. वाहक और अमर देवों के तृप्तिदाता सोम सातों नदियों का दर्शन करते हैं। वे कूप-रूप से पूर्ण होकर नदियों को तृप्त करते हैं।

अथ सप्तमी—

अवाकल्पेषुनःपुमस्तमांसिसोमयोध्या । तानिपुनानजङ्घनः ॥७॥

अव । कल्पेषु । नः । पुमः । तमांसि । सोम । योध्या ।
तानि । पुनान । जङ्घनः ॥ ७ ॥

हे पुमः पुमन् सोमकल्पेषु कल्पनीयेषु अहःसु नोस्मानव रक्ष । अपिच पुनान हे पवमान सोम त्वं योध्या योधनीयानि तमांसि रक्षांसि यानि तानि जंघनः नाशय ॥ ७ ॥

७. पुरुष सोम, कल्पनीय दिनों में हमारी रक्षा करो। पवमान सोम, जिन राक्षसों के साथ युद्ध किया जाना चाहिए, उन्हें विनष्ट करो।

अथाष्टमी—

नूनव्यंसेनवीयसेसूक्तायसाधयापथः । प्रत्नवद्रोचयारुचः ॥ ८ ॥

नु । नव्यसे । नवीयसे । सुऽउक्ताय । साधय । पथः ।
प्रत्नऽवत् । रोचय । रुचः ॥ ८ ॥

हे सोम नव्यसे नव्याय नूतनाय नवीयसे स्तुत्याय अस्माकं सूक्ताय पथोमार्गान् नु क्षिप्रं साधय अभिगच्छ। अपिच प्रत्नवत् यथा पूर्वं रुचः स्वदीप्तीरोचय प्रकाशय ॥ ८ ॥

८. सोम, तुम नये और स्तुत्य सूक्त के लिए शीघ्र ही यज्ञ-पथ से आओ और पहले की तरह दीप्ति का प्रकाश करो।

अथ नवमी–

पवमानमहिश्रवोगामश्वंरासिवीरवत्। सनामेधांसनास्वः ॥९॥३३॥

पवमान। महि। श्रवः। गाम्। अश्वम्। रासि।
वीरऽवत्। सन। मेधाम्। सन। स्वरिति स्वः ॥ ९ ॥ ३३ ॥

हे पवमान सोम यस्त्वं वीरवत् पुत्रवत् महि महत् श्रवोन्नं गां चाश्वं च रासि अस्मभ्यं प्रयच्छसि। सत्वं मेधां सनोस्मभ्यं प्रयच्छ। अपिच स्वः यदस्मदभिलषितं तत्सर्वं सन देहि ॥ ९ ॥९. शोधनकालीन सोम, तुम पुत्रवान् महान् अन्न, गौ और अश्व हमें दान करते हो। दान करो और हमें मनोरथ दो।

॥ इति षष्ठस्य सप्तमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

प्रस्वानासइति नवर्चं दशमं सूक्तं ऋष्याद्याः पूर्ववत् प्रस्वानासइत्यनुक्रान्तं। विनियोगउक्तः।

तत्र प्रथमा–

प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः। सोमासोरायेअक्रमुः ॥ १ ॥

प्र। स्वानासः। रथाःऽइव। अर्वन्तः। न। श्रवस्यवः।
सोमासः। राये। अक्रमुः ॥ १ ॥

प्रस्वानासोभिषववेलायां उपरवेषु शब्दंकुर्वन्तः सोमासः सोमाः रथाइव यथाशब्दं कुर्वन्तोरथाः अर्वन्तोन यथा शब्दंकुर्वन्तोश्वाः तथा श्रवस्यवः शत्रुभ्योन्नमिच्छन्तो राये यजमानानां धनाय अक्रमुः आगच्छन् ॥ १ ॥

१. रथ और अश्व के समान शब्द करनेवाले सोम, अन्न की इच्छा करते हुए, यजमान के धन के लिए आये हैं।

अथ द्वितीया–

हिन्वानासोरथाइवदधन्विरेगभस्त्योः। भरासःकारिणामिव ॥ २ ॥

हिन्वानासः। रथाःऽइव। दधन्विरे। गभस्त्योः।
भरासः। कारिणाम्ऽइव ॥ २ ॥

सोमा रथाइव यथारथास्तथा हिन्वानासो हिन्वाना यागदेशंप्रति गच्छन्तोभरासोभराः कारिणामिव यथा भारवाहानां बाह्वोर्धीयन्ते तथा गभस्त्योः ऋत्विजां बाह्वोः। गभस्ती बाहूइति बाहुनामसुपाठात्। दधन्विरे धीयन्ते ॥ २ ॥

२. रथ के समान सोम यज्ञ की ओर जाते हैं। जैसे भार-वाहक भुजाओं पर भार को धारण करता है, वैसे ही ऋत्विक् लोग बाहु के द्वारा उन्हें धारण करते हैं।

राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते। यज्ञोनसप्तधातृभिः॥३॥

राजानः। न। प्रशस्तिऽभिः। सोमासः। गोभिः।

अञ्जते। यज्ञः। न। सप्त। धातृऽभिः ॥ ३ ॥

सोमासः सोमाः प्रशस्तिभिः प्रशस्ताभिः स्तुतिरूपाभिर्वाग्भिः राजानोन यथाराजानः सप्तधातृभिः सप्तहोत्राभिः यज्ञोन यथाच यज्ञस्तथा गोभिर्गोविकारैः पयोभिरंजते अंज्यन्ते संस्क्रियन्तइत्यर्थः ॥ ३ ॥

३. जैसे स्तुति से राजा सन्तुष्ट होते हैं और जैसे सात होताओं के द्वारा यज्ञ संस्कृत होता है, वैसे ही गव्य के द्वारा सोम संस्कृत होता है।

अथ चतुर्थी—

परिसुवानासइन्दवोमदायबर्हणागिरा। सुताअर्षन्तिधारया ॥ ४ ॥

परि। सुवानासः। इन्दवः। मदाय। बर्हणा। गिरा।

सुताः। अर्षन्ति। धारया ॥ ४ ॥

सुवानासः सुवानाः अभिषूयमाणाः इन्दवः सोमाः बर्हणा महत्या गिरा स्तुतिरूपया वाचा सुताअभिषुताः सन्तोमदाय मदार्थं धारया पर्यर्षन्ति परितोगच्छन्ति ॥ ४ ॥

४. अभिषुत सोम महती स्तुति के द्वारा अभिषुत होकर, मत्त करने के लिए धारा-रूप से जाते हैं।

आपानासोविवस्वतोजनन्तउषसोभगम्। सूराअण्वंवितन्वते ॥५॥३४॥

आपानासः। विवस्वतः। जनन्तः। उषसः। भगम्। सूराः।

अण्वम्। वि। तन्वते ॥ ५ ॥ ३४ ॥

विवस्वत इन्द्रस्य आपानासः आपानभूता उषसोभगं जनन्तो जनयन्तः सूराः सरन्तः सोमाः अण्वं वितन्वते अभिषववेलायामुपरवेषु शब्दं कुर्वन्ति ॥ ५ ॥

५. इन्द्र के मद-गोष्ठ-रूप, उषा के भाग्य के उत्पादक तथा गिरनेवाले सोम शब्द करते हैं। ॥ इति षष्ठस्य सप्तमे चतुस्त्रिंशोवर्गः ॥ ३४ ॥

अथ षष्ठी—

अप॒द्वारा॑मती॒नांप्र॒त्नाकृ॑ण्वन्तिका॒रवः॑ । वृष्णो॒हर॑सआ॒यवः॑ ॥ ६॥

अप॑ । द्वारा॑ । म॒ती॒नाम् । प्र॒त्नाः । कृ॒ण्व॒न्ति॒ । का॒रवः॑ ।

वृष्णः॑ । हर॑से । आ॒यवः॑ ॥ ६ ॥

मतीनां स्तुतीनां कारवः कर्तारः ऋत्विजः प्रत्नाः पुराणाः वृष्णः सेचकस्य सोमस्य हरसे हरसः आहर्तारश्च आयवोमनुष्याः द्वारा यज्ञस्य द्वाराणि अपकृण्वंति ॥ ६ ॥

६. स्तोता, प्राचीन, अभीष्टवर्षक और सोम का भक्षण करनेवाले मनुष्य यज्ञ के द्वार को उद्घाटन करते हैं।

स॒मी॒ची॒नास॑आसते॒होता॑रःस॒प्तजा॑मयः । प॒दमेक॑स्य॒पिप्र॑तः ॥ ७॥

स॒म्ऽई॒ची॒नासः॑ । आ॒स॒ते॒ । होता॑रः । स॒प्तऽजा॑मयः ।

प॒दम् । एक॑स्य । पिप्र॑तः ॥ ७ ॥

समीचीनासः समीचीनाः जामयो जामिसदृशाः एकस्य सोमस्य पदं स्थानं पिप्रतः पूरयन्तः सप्तहोतारः सप्तहोत्रकाः आसते यज्ञे उपविशन्ति ॥ ७ ॥

७. उत्तम सात बन्धुओं के समान और सोम के स्थान का एकमात्र पूरण करनेवाले सात होता यज्ञ में बैठते हैं।

नाभा॒नाभिं॑न॒आद॑दे॒चक्षु॑श्चि॒त्सूर्ये॒सचा॑ । क॒वेरप॑त्य॒मादु॑हे ॥ ८ ॥

नाभा॑ । नाभि॑म् । नः॒ । आ । द॒दे॒ । चक्षुः॑ । चि॒त् । सूर्ये॑ ।

सचा॑ । क॒वेः । अप॑त्यम् । आ । दु॒हे॒ ॥ ८ ॥

नाभिं यज्ञस्य नाभिभूतं सोमं नोस्माकं नाभा नाभौ अहमाददे पिबामीत्यर्थः । पीतसोमानां अस्माकं चक्षुश्चिव् चक्षुरपि सूर्ये सचा संगतं भवति । किंच कवेः क्रान्तकर्मणः सोमस्य अपत्यं अंशुं आदुहे आपूरयामि ॥ ८ ॥

८. मैं यज्ञ की नाभि सोम को अपने नाभि-देश में ग्रहण करता हूँ। चक्षु सूर्य में सङ्गत होता है। मैं कवि सोम के प्रभावको पूर्ण करता हूँ।

अथ नवमी—

अ॒भिप्रि॒यादि॒वस्प॒दम॑ध्व॒र्युभि॒र्गुहा॑हि॒तम् । सूरः॑पश्यति॒चक्ष॑सा॥९॥२५

अ॒भि । प्रि॒या । दि॒वः । प॒दम् । अ॒ध्व॒र्युऽभिः॑ । गुहा॑ ।

हि॒तम् । सूरः॑ । प॒श्य॒ति॒ । चक्ष॑सा ॥ ९ ॥ २५ ॥

सूरः सुवीर्यइन्द्रः चक्षसा चक्षुषा दिवोदीप्तस्यात्मनः प्रिया प्रियं पदं अध्वर्युभिः गुहा गुहायां हृदये हितं निहितं पीतं सोममभि पश्यति ॥ ९ ॥

९. गमन-परायण और दीप्त इन्द्र हृदय में निहित अपने प्रिय पदार्थ सोम को नेत्र से देख सकते हैं।

॥ इति षष्ठस्य सप्तमे पंचत्रिंशोवर्गः ॥ ३५ ॥

उपास्माइति नवर्चं एकादशं सूक्तं ऋष्याद्याः पूर्ववत्। उपास्माइत्यनुक्रान्तं। उक्तः सूक्तविनियोगः। अभिष्टवे घर्मदुघोवत्सोपवनीयमाने नमसेदुपेत्येषा। सूत्रितंच—नमसेदुपसीदतसंजानाना उपसीदन्नभिश्विति।

तत्र प्रथमा—

उपास्मैगायतानरःपवमानायेन्दवे। अभिदेवाँइयक्षते ॥ १ ॥

उप। अस्मै। गायत। नरः। पवमानाय। इन्दवे।

अभि। देवान्। इयक्षते ॥ १ ॥

हे नरोनेतारो यज्ञस्य देवानिन्द्रादीन् अभीयक्षते आभिमुख्येन यष्टुमिच्छति पवमानाय क्षरते अस्माअभिषूयमाणायेन्दवे सोमाय उपगायत उपगानं कुरुत ॥ १ ॥

१. नेताओ, यह क्षरणशील सोम देवों का यज्ञ करना चाहता है। इसके लिए गाओ।

अथ द्वितीया—

अभितेमधुनापयोथर्वाणोअशिश्रयुः। देवंदेवायदेवयु ॥ २ ॥

अभि। ते। मधुना। पयः। अथर्वाणः। अशिश्रयुः।

देवम्। देवाय। देवऽयु ॥ २ ॥

हे सोम ते तव देवं देवनशीलं देवयु देवयुं देवकामं रसं देवाय देवनशीलायेन्द्राय मधुना पयः गव्येन पयसा अथर्वाणऋषयः अभ्यशिश्रयुः अभ्यश्रीणन् समस्कुर्वन्नित्यर्थः ॥२॥

२. सोम, अथर्वा ऋषियों ने तुम्हारे दीप्तिवाले और देवाभिलाषी रस को इन्द्र के लिए गोदुग्ध में संस्कृत किया है।

अथ तृतीया—

सनःपवस्वशंगवेशंजनायशमर्वते। शंराजन्नोषधीभ्यः ॥ ३ ॥

सः। नः। पवस्व। शम्। गवे। शम्। जनाय। शम्। अर्वते।

शम्। राजन्। ओषधीभ्यः ॥ ३ ॥

हे राजन् दीप्यमान सोम सःप्रसिद्धस्त्वं नोस्मकं गवे शं सुखं पवस्व क्षर। जनाय पुत्रादये च शं पवस्व। अर्वतेश्वायच शं पवस्व। ओषधीभ्यश्च शं पवस्व ॥ ३ ॥

३. राजन्, तुम हमारी गाय के लिए सरलता से गिरो। पुत्र आदि के लिए भी सुख से गिरो। अश्व के लिए सरलता से गिरो। ओषधियों के लिए सुख से गिरो।

बभ्रवे॑नु॒स्वत॑वसेऽरु॒णाय॑दिवि॒स्पृशे॑। सोमा॑यगा॒थम॑र्चत ॥ ४ ॥

ब॒भ्रवे॑। नु। स्वऽत॑वसे। अ॒रु॒णाय॑। दि॒वि॒ऽस्पृशे॑।

सोमा॑य। गा॒थम्। अ॒र्च॒त ॥ ४ ॥

हे स्तोतारः बभ्रवे बभ्रुवर्णाय स्वतवसे स्वबलाय अरुणाय कदाचिदरुणवर्णाय दिविस्पृशे दिवं स्पृशते सोमाय नु क्षिप्रं गाथं स्तुतिरूपां वाचं अर्चत उच्चारयतेत्यर्थः ॥ ४ ॥

४. स्तोताओ, तुम लोग पिङ्गलवर्ण, स्वबलरूप, अरुणवर्ण और स्वर्ग को छूनेवाले सोम के लिए शीघ्र गाथा का उच्चारण करो।

ह॒स्त॑च्युतेभि॒रद्रि॑भिः सु॒तंसोम॑म्पुनीतन। मधा॒वाधा॑वता॒मधु॑ ॥५॥३६॥

ह॒स्त॑ऽच्युतेभिः। अद्रि॑ऽभिः। सु॒तम्। सोम॑म्। पु॒नी॒त॒न।

मधौ॑। आ। धा॒व॒त॒। मधु॑ ॥ ५ ॥ ३६ ॥

हे ऋत्विजः हस्तच्युतेभिः हस्तप्रच्युतैः अद्रिभिः अभिषवग्रावभिः सुतमभिषुतं सोमं पुनीतन पवित्र पावयत। अपिच मधौ मदकरे सोमे मधु गव्यं पयआधावत प्रक्षिपत ॥ ५ ॥

५. ऋत्विको, हाथ के अभिषव-पाषाण-द्वारा अभिषुत सोम को पवित्र करो। मदकर सोम में गोदुग्ध डालो।

॥ इति षष्ठस्य सप्तमे षट्त्रिंशोवर्गः ॥ ३६ ॥

नम॒सेदुप॑सीदतद॒ध्नेद॒भिश्री॑णीतन। इन्दु॒मिन्द्रे॑दधातन ॥ ६ ॥

नम॑सा। इत्। उप॑। सी॒द॒त॒। द॒ध्ना। इत्। अ॒भि।

श्री॒णी॒त॒न॒। इन्दु॑म्। इन्द्रे॑। द॒धा॒त॒न॒ ॥ ६ ॥

हे ऋत्विजो नमसेव् नमस्कारेणैव उपसीदत सोममुपगच्छत। दध्नेव दध्नैव अभिश्रीणीतन अभिश्रीणीतच। इन्द्रे इन्दुं सोमं दधातन धत्तच ॥ ६ ॥

६. नमस्कार के साथ सोम के पास जाओ। उसमें दही मिलाओ, इन्द्र के लिए सोम दो।

अथ सप्तमी—

अ॒मि॒त्र॒हाविच॑र्षणि॒ःपव॑स्वसोम॒शंगवे॑। दे॒वेभ्यो॑अनु॒काम॒कृत् ॥७॥

अमित्रऽहा । विऽचर्षणिः । पवस्व । सोम ।
शम् । गवे । देवेभ्यः । अनुकामऽकृत् ॥ ७ ॥

हे सोम अमित्रहा अमित्राणां हन्ता विचर्षणिः विद्रष्टा देवेभ्यः अनुकामकृत् अभीष्टस्य कर्ता त्वं गवेस्माकं शं सुखं पवस्व क्षर ॥ ७ ॥

७. सोम, तुम शत्रुविनाशक हो। तुम विचक्षण और देवों के मनोरथ-पूरक हो। तुम हमारी गाय के लिए सरलता से क्षरित होओ।

इन्द्रायसोमपातवेमदायपरिषिच्यसे । मनश्चिन्मनसस्पतिः ॥ ८ ॥

इन्द्राय । सोम । पातवे । मदाय । परि । सिच्यसे ।
मनःऽचित् । मनसः । पतिः ॥ ८ ॥

हे सोम मनश्चित् मनसोज्ञाता मननस्पतिः ईश्वरः त्वमिन्द्राय इन्द्रस्य पातवे पानाय मदायच परिषिच्यसे परितः पात्रेषु सिच्यसे ॥ ८ ॥

८. सोम, तुम मन के ज्ञाता और मन के ईश्वर हो। तुम पात्रों में इसलिए सींचे जाते हो कि तुम्हें पीकर इन्द्र प्रमत्त होंगे।

पवमानसुवीर्यंरयिंसोमरिरीहिनः । इन्दविन्द्रेणनोयुजा ॥ ९ ॥ ३७ ॥

पवमान । सुऽवीर्यम् । रयिम् । सोम । रिरीहि । नः ।
इन्दो इति । इन्द्रेण । नः । युजा ॥ ९ ॥ ३७ ॥

हे इन्दो क्लिद्यमान पवमान सोम त्वं सुवीर्यं शोभनवीर्योपेतं रयिं धनं नोस्माकं संबन्धिना इन्द्रेण युजा सहायेन नोस्मभ्यं रिरीहि देहि ॥ ९ ॥

९. भींगे हुए और गिरते हुए सोम, इन्द्र के साथ तुम हमें सुन्दर वीर्य से युक्त धन दो।

॥ इति षष्ठस्य सप्तमे सप्तत्रिंशोवर्गः ॥ ३७ ॥

सोमाअसृग्रमिति नवर्चं द्वादशं सूक्तं कण्याद्याः पूर्ववत् । सोमाअसृग्रमित्यनुक्रान्तं । उक्तोविनियोगः ।

तत्र प्रथमा—

सोमाअसृग्रमिन्दवःसुताऋतस्यसादने । इन्द्रायमधुमत्तमाः ॥ १ ॥

सोमाः । असृग्रम् । इन्दवः । सुताः । ऋतस्य । सदने ।
इन्द्राय । मधुमत्ऽतमाः ॥ १ ॥

सुताः अभिषुताः मधुमत्तमाः अतिशयेन मधुमन्तः इन्दवः सोमाः ऋतस्य यज्ञस्य सादने सदने इन्द्रायेन्द्रार्थं असृग्रं सृज्यन्ते ॥ १ ॥

१. अभिषुत और अतीव मधुर सोम इन्द्र के लिए यज्ञ-गृह में प्रस्तुत हो रहा है।

अथ द्वितीया—

अभिविप्राअनूषतगावोवत्संनमातरः । इन्द्रंसोमस्यपीतये ॥ २ ॥

अभि । विप्राः । अनूषत । गावः । वत्सम् । न । मातरः ।
इन्द्रम् । सोमस्य । पीतये ॥ २ ॥

विप्राः मेधाविनः सोमस्य पीतये पानाय इन्द्रं मातरोजनयित्र्योगावो वत्सं न यथा वत्सं प्रति तद्वदभ्यनूषत अभिशब्दयन्ति ॥ २ ॥

२. जैसे गायें बछड़ों के सामने बोलती हैं, वैसे ही मेधावी लोग सोम-पान के लिए इन्द्र के पास शब्द करते हैं।

मदच्युत्क्षेतिसादनेसिन्धोरूर्माविपश्चित् । सोमोगौरीअधिश्रितः ॥ ३ ॥

मदऽच्युत् । क्षेति । सदने । सिन्धोः । ऊर्मा । विपःऽचित् ।
सोमः । गौरी इति । अधि । श्रितः ॥ ३ ॥

मदच्युत् मदकरस्य रसस्य च्यावयिता सोमः सादने सदने । संहितायां दीर्घश्छान्दसः स्थाने क्षेति निवसति । एतदेवविवृणोति—सिन्धोर्नद्याः ऊर्मा ऊर्मौ तरंगे वसतीवरीष्वित्यर्थः । विपश्चिद् विद्वान् सोमोगौरीअधि गौर्यामधि । अधीति सप्तम्यर्थानुवादः । माध्यमिकायांवाचि । गौरी गांधर्वीति वाङ्नामसुपाठात् । श्रितोमिश्रयति ॥ ३ ॥

३. मदस्रावी सोम नदी-तरङ्ग (वसतीवरी) के यहाँ रहते हैं। विद्वान् सोम माध्यमिकी वाक् (वचन) में आश्रय पाते हैं।

दिवोनाभाविचक्षणोव्योवारेमहीयते । सोमोयःसुक्रतुःकविः ॥ ४ ॥

दिवः । नाभा । विऽचक्षणः । अव्यः । वारे । महीयते ।
सोमः । यः । सुऽक्रतुः । कविः ॥ ४ ॥

यः सुक्रतुः सुप्रज्ञः कविः क्रान्तकर्मा विचक्षणोविद्रष्टा ससोमोदिवोन्तरिक्षस्य नाभा नाभौ नाभिभूदे अव्यः अवेः वारे वाले महीयते पूज्यते पूयमानः स्तूयवइत्यर्थः ॥ ४ ॥

४. सुन्दर-प्रज्ञ, क्रान्तकर्मा और सूक्ष्मदर्शक सोम अन्तरिक्ष के नाभि-स्वरूप मेषलोम में पूजित होते हैं।

अथ पञ्चमी–

यःसोमःकलशेष्वाँअन्तःपवित्रआहितः। तमिन्दुःपरिषस्वजे॥५॥३८॥

यः। सोमः। कलशेषु। आ। अन्तरिति। पवित्रे। आऽहितः।
तम्। इन्दुः। परि। सस्वजे॥ ५॥ ३८॥

यः सोमः कलशेषु कुंभेषु आस्ते यश्च पवित्रे पवित्रस्यान्तर्मध्ये आहितः निहितस्तं स्वांशभूतं सोममिन्दुः सोमोदेवः परिषस्वजे प्रविशति॥ ५॥

५. जो सोम कुम्भ में है और दशापवित्र के बीच जो निहित है, उस अपने अंश में सोमदेव प्रवेश करते हैं।

॥ इति षष्ठस्य सप्तमेष्टत्रिंशोवर्गः॥ ३८॥

अथ षष्ठी–

प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि। जिन्वन्कोशंमधुश्चुतम्॥ ६॥

प्र। वाचम्। इन्दुः। इष्यति। समुद्रस्य। अधि। विष्टपि।
जिन्वन्। कोशम्। मधुऽश्चुतम्॥ ६॥

इंदुः सोमः मधुश्चुतं मधुनश्च्यावकं कोशं मेघं। असुरः कोशइति मेघनामसुपाठात्। जिन्वन् प्रीणयन् समुद्रस्यान्तरिक्षस्याधि विष्टपि विष्टब्धे स्थाने वाचं प्रेष्यति प्रेरयति पवित्रे पूयमानः शब्दं करोतीत्यर्थः॥ ६॥

६. सोम मदस्रावी मेघ को प्रसन्न करते हुए अन्तरिक्ष के रोकनेवाले स्थान (दशापवित्र) शब्द करते हैं।

नित्यस्तोत्रोवनस्पतिर्धीनामन्तःसबर्दुघः। हिन्वानोमानुषायुगा॥७॥

नित्यऽस्तोत्रः। वनस्पतिः। धीनाम्। अन्तरिति। सबःऽदुघः।
हिन्वानः। मानुषा। युगा॥ ७॥

नित्यस्तोत्रः सन्ततस्तोत्रः सबर्दुघः अमृतस्य दोग्धा वनस्पतिः वनानांपालयिता सोमो मानुषामानुषाणि युगा युगानि अहीनैकाहात्मकानि हिन्वानः प्रीणयन् धीनां कर्मणामन्तर्मध्ये निवसतीत्यर्थः॥ ७॥

७. सदा स्तोत्रवाले और अमृत को दूहनेवाले वनस्पति (सोम) मनुष्यों के लिए एक दिन कर्म के बीच प्रसन्नता से रहते हैं।

अथाष्टमी–

अभि प्रिया दिवस्पदा सोमो हिन्वानो अर्षति । विप्रस्य धारया कविः ॥८॥

अभि । प्रिया । दिवः । पदा । सोमः । हिन्वानः । अर्षति ।
विप्रस्य । धारया । कविः ॥ ८ ॥

कविः क्रान्तकर्मा सोमो दिवोन्तरिक्षाव हिन्वानः प्रेर्यमाणो विप्रस्य मेधाविनः स्वस्य धारया प्रिया प्रियाणि पदा पदानि स्थानान्यभ्यर्षति अभिगच्छति ॥ ८ ॥

८. कवि सोम अन्तरिक्ष से भेजे जाकर मेधावियों की धारा के रूप से प्रिय स्थान में जाते हैं । अथ नवमी–

आ पवमान धारय रयिं सहस्रवर्चसम् । अस्मे इन्दो स्वाभुवम् ॥९॥३९॥

आ । पवमान । धारय । रयिम् । सहस्रऽवर्चसम् ।
अस्मे इति । इन्दो इति । सुऽआभुवम् ॥ ९ ॥ ३९ ॥

हे पवमान इन्दो सोम त्वं सहस्रवर्चसं बहुदीप्तिं स्वाभुवं शोभनभवनं रयिं धनं अस्मे अस्मासु आधारय प्रक्षिपेत्यर्थः ॥ ९ ॥

९. पवमान (क्षरणशील) सोम, तुम हमें बहुदीप्तिवाले और सुन्दर गहवाले धन दो ।

॥ इति षष्ठस्य सप्तमे एकोनचत्वारिंशोवर्गः ॥ ३९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके सप्तमोऽध्यायः ॥ ७ ॥

## ॥श्रीगणेशायनमः॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥१॥

षष्ठस्य सप्तमोध्यायः संग्रहात्संप्रदर्शितः। अथाष्टमःसुमतिना संगमेनप्रदर्श्यते ॥ २ ॥

तत्र सोमःपुनानइति नवर्चं त्रयोदशं सूक्तं असितोदेवलोवाऋषिः सोमोदेवता। पवमानगुणः सोमोविज्ञेयः काश्यपावृषी। इतिविद्यादनुक्तेपि लाघवायादृहच्युतात्॥१॥ सोमइत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

ॐमूसोमःपुनानोअर्षतिसहस्रधारोअत्यविः।वायोरिन्द्रस्यनिष्कृतम्॥१॥

सोमः। पुनानः। अर्षति। सहस्रऽधारः। अतिऽअविः।

वायोः। इन्द्रस्य। निःऽकृतम्॥ १ ॥

अयं पुनानः पावकः सोमः अर्षति गच्छति। कीदृशोयं पवमानः सहस्रधारः अपरिमितधारः। अत्यविः अत्राविशब्देन तल्लोमान्युच्यन्ते अविलोमभिर्निष्पादितं दशापवित्रमित्यर्थः। तदतिक्रम्य गच्छतीति अत्यविः। किमर्थं वायोरिन्द्रस्य च पानायेतिशेषः। किं प्रति निष्कृतं निरित्येष समित्येतस्मिन्नर्थे। संस्कृतं पात्रं प्रति॥ १॥

१. असीम धाराओंवाले और पवित्र सोम दशापवित्र को लाँघकर वायु और इन्द्र के पान के लिए संस्कृत पात्र में जाते हैं।

अथ द्वितीया—

पवमानमवस्यवोविप्रमभिप्रगायत। सुष्वाणंदेववीतये ॥ २ ॥

पवमानम्। अवस्यवः। विप्रम्। अभि। प्र। गायत।

सुस्वानम्। देवऽवीतये ॥ २ ॥

हे अवस्यवो रक्षणकामा उद्गात्रादयो यूयं पवमानं शोधकं विप्रंविशेषेण देवानांप्रीणयितारं विप्रवच्छुद्धंवा। अथवा विप्रइति मेधाविनाम। मेधाविनं देववीतये देवपानाय सुष्वाणं सूयमानं अभिप्रगायत आभिमुख्येन प्रकर्षेण स्तुत॥ २॥

२. रक्षाभिलाषियो, तुम लोग पवित्र विप्र और देवों के पान के लिए अभिषुत सोम के लिए गमन करो।

अथ तृतीया—

पवन्तेवाजसातयेसोमाःसहस्रपाजसः । गृणानादेववीतये ॥ ३ ॥

पवन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः ।
गृणानाः । देवऽवीतये ॥ ३ ॥

पवन्ते क्षरन्ते सोमाः । किमर्थं वाजसातये अन्नस्यलाभाय । कीदृशाः सहस्रपाजसो बहुलाः पातॄणां बलप्रदाइत्यर्थः । गृणानाः कर्मणिकर्तृप्रत्ययः स्तूयमानाः । पुनः किमर्थं देववीतये देवानां वीतिर्गतिः प्राप्तिर्भक्षणंवा यस्मिन् सदेववीतिर्यज्ञः तदर्थं यज्ञसिद्धिः साक्षाव प्रयोजनं तद्द्वारा वाजलाभइति ॥ ३ ॥

३. बहु-बल-दाता और स्तूयमान सोम यज्ञ-सिद्धि और अन्न-लाभ के लिए क्षरित होते हैं।

अथ चतुर्थी—

उतनोवाजसातयेपवस्वबृहतीरिषः । द्युमदिन्दोसुवीर्यम् ॥ ४ ॥

उत । नः । वाजऽसातये । पवस्व । बृहतीः । इषः ।
द्युऽमत् । इन्दो इति । सुऽवीर्यम् ॥ ४ ॥

उतापिच नोस्माकं वाजसातये अन्नलाभाय हे इन्दो सोम बृहतीरिषः महतीरसधाराः द्युमव दीप्तिमव सुवीर्यं शोभनसामर्थ्यंच पवस्व क्षर । शोभनसामर्थ्योपेताधाराः पवस्वेत्यर्थः । अथवा वाजसातये संग्रामाय बृहतीरिषो द्युमत्सुवीर्यं संपादयितुं पवस्वेति योज्यम् ॥ ४ ॥

४. सोम, हमारे अन्न-लाभ के लिए दीप्तिमती और सुन्दर वीर्य-वाली तथा महती रस-धारा बरसाओ।

अथ पञ्चमी—

तेनःसहस्रिणंरयिंपवन्तामासुवीर्यम् । सुवानादेवासइन्दवः ॥ ५ ॥ १ ॥

ते । नः । सहस्रिणम् । रयिम् । पवन्ताम् । आ ।
सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥ ५ ॥ १ ॥

ते इन्दवः सोमाः नोस्माकं सहस्रिणं सहस्रसंख्योपेतं रयिं धनं सुवीर्यंचापवन्तां । कीदृशास्ते सुवानाः सूयमानाः देवासोद्योतनादिगुणकाः ॥ ५ ॥

५. वह अभिषुत सोम देव हमें सहस्र-संख्यक धन और सुवीर्य दें।

॥ इति षष्ठस्याष्टमे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

अत्या॑हियाना॒नहे॒तृभि॒रसृ॑ग्रं॒वाज॑सातये । विवार॒मव्य॑मा॒शवः॑ ॥६॥

अत्याः॑ । हि॒या॒नाः । न । हे॒तृऽभिः॑ । असृ॑ग्रम् ।

वाज॑ऽसातये । वि । वार॑म् । अव्य॑म् । आ॒शवः॑ ॥ ६ ॥

वाजसातये संग्रामाय हियानाः प्रेर्यमाणाः अत्यान अश्वाइव ते यथा प्रेरकैः प्रेर्यमाणाः संग्रामाय शीघ्रं धावन्ति तद्वत् हेतृभिः प्रेरकैः प्रेर्यमाणाः आशवः शीघ्रगामिनः सोमाः वाजसातये अन्नलाभाय अव्यं वारं दशापवित्रं व्यसृग्रं व्यतिसृज्यन्ते ॥ ६ ॥

६. संग्राम में भेजे गये अश्व के समान प्रेरकों के द्वारा प्रेरित होकर शीघ्रगामी सोम, अन्न-प्राप्ति के लिए, दशापवित्र को लाँघकर, जा रहे हैं।

वा॒श्राअर्ष॒न्तीन्द॑वो॒भिव॒त्संनधे॒नवः॑ । द॒ध॒न्वि॒रेगभ॑स्त्योः ॥ ७ ॥

वा॒श्राः । अर्ष॒न्ति॒ । इन्द॑वः । अ॒भि । व॒त्सम् । न । धे॒नवः॑ ।

द॒ध॒न्वि॒रे । गभ॑स्त्योः ॥ ७ ॥

वाश्राः शब्दयन्तः इन्दवः सोमाः अभ्यर्षन्ति अभिगच्छन्ति पात्रंमति । वाश्राः शब्दकारिण्योधेनवोन वा यथा शब्दयन्त्योवत्सं प्रत्यागच्छन्ति तद्वत् तएव गभस्त्योर्बाह्वोः दधन्विरे ध्रियते च ॥ ७ ॥

७. जैसे गायें बोलती हुई बछड़ों की तरफ़ जाती हैं, वैसे ही सोम भी शब्द करके पात्र की ओर जाते हैं। ऋत्विक् लोग हाथ पर सोम धारण करते हैं।

अथाष्टमी—

जुष्ट॒इन्द्रा॑यमत्स॒रः॒पव॑मान॒कनि॑क्रदत् । विश्वा॒अप॒द्विषो॑जहि ॥८॥

जुष्टः॑ । इन्द्रा॑य । म॒त्स॒रः । पव॑मान । कनि॑क्रदत् ।

विश्वाः॑ । अप॑ । द्विषः॑ । ज॒हि॒ ॥ ८ ॥

इन्द्राय जुष्टः पर्याप्तोमत्सरः सोमोभवतीविशेषः । मत्सरः सोमोमन्दतेस्तृप्तिकर्मणइति निरुक्तं[1] । हे पवमान त्वं कनिक्रदत् शब्दयन् विश्वाद्विषः सर्वानस्माकं द्वेष्टॄनपजहि ॥ ८ ॥

८. सोम इन्द्र के लिए प्रिय और मदकर है। पवमान सोम, तुम शब्द करके सारे शत्रुओं का विनाश करो।

अप॒घ्नन्तो॒अरा॑व्णः॒पव॑मानाः॒स्व॒र्दृशः॑ । योना॑वृ॒तस्य॑सीदत ॥९॥२॥

---

1 नि० २.५.

अपऽघ्नन्तः । अराव्णः । पवमानाः । स्वःऽदृशः । योनौ ।
ऋतस्य । सीदत ॥ ९ ॥ २ ॥

हे पवमानाः अराव्णः अदानान् अयजमानान् अपघ्नन्तोहिंसन्तः स्वर्दृशः सर्वस्यद्रष्टारश्च यूयं ऋतस्ययोनौ यज्ञस्यस्थाने सीदत । अथवा सोमपानार्थं उक्तलक्षणादेवा ऋतस्ययोनौ सीदतेति योज्यम् ॥ ९ ॥

९. पवमान सोम, तुम अदाताओं के हिंसक और सर्वदर्शक हो। यज्ञ-स्थल में बैठो॥ इति षष्ठस्याष्टमे द्वितीयोवर्गः ॥ २ ॥

परिप्रेत्यष्टर्चं चतुर्दशं सूक्तं ऋष्यादिपूर्ववत् । परिप्राष्टावित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

परिप्रासिष्यदत्कविःसिन्धोरूर्मावधिश्रितः । कारंबिभ्रत्पुरुस्पृहम् ॥१॥

परि । प्र । असिस्यदत् । कविः । सिन्धोः । ऊर्मौ । अधि ।
श्रितः । कारम् । बिभ्रत् । पुरुऽस्पृहम् ॥ १ ॥

परिप्रासिष्यदत् परिप्रस्यन्दते कविर्मेधावी सोमः सिन्धोरूर्मौ तरंगे वसतीवर्युदकरसे अधिश्रितः आश्रितः पुरुस्पृहं बहुभिः स्पृहणीयं कारं शब्दं बिभ्रत् धारयन् परिस्यन्दतइति संबन्धः ॥ १ ॥

१. नदी-तरंग (वसतीवरी जल-रस) में आश्रित और कवि सोम अनेकों के लिए अभिलषणीय शब्द का उच्चारण करके गिर रहे हैं।

अथ द्वितीया—

गिरायदीसबन्धवःपञ्चव्राताअपस्यवः । परिष्कृण्वन्तिधर्णसिम् ॥२॥

गिरा । यदि । सऽबन्धवः । पञ्च । व्राताः । अपस्यवः ।
परिऽकृण्वन्ति । धर्णसिम् ॥ २ ॥

सबन्धवः समानबन्धनाः पंचव्राताः पंचजनाः अपस्यवः कर्मेच्छवोयद्यदाईमेनं धर्णसिं धारकं सोमं गिरा स्तुत्या परिष्कृण्वंति अलंकुर्वन्ति अस्योत्तरत्रान्वयः ॥ २ ॥

२. पांच देशों के परस्पर मित्र मनुष्य कर्म की अभिलाषा से जिस समय धारक सोम को स्तुति-द्वारा अलंकृत करते हैं—

अथ तृतीया—

आदस्यशुष्मिणोरसेविश्वेदेवाअमत्सत । यदीगोभिर्वसायते ॥३॥

आत् । अस्य । शुष्मिणः । रसे । विश्वे । देवाः ।
अमत्सत । यदि । गोभिः । वसायते ॥ ३ ॥

आत् परिष्करणानन्तरमेव शुष्मिणः बलवतोस्यसोमस्य रसे विश्वेदेवा अमत्सत अमाद्यन्त । यदि यदा गोभिः गोविकारैः विकारे प्रकृतिशब्दः क्षीरादिभिः वसायते आच्छाद्यते ॥३॥

३. उस समय, सोम के गोदुग्ध में मिलाये जाने पर, सारे देवगण बलवान् सोम-रस में प्रमत्त होते हैं ।

निरिणानोविधावतिजहच्छर्याणितान्वा । अत्रासंजिघ्रतेयुजा ॥ ४॥

निःऽरिणानः । वि । धावति । जहत् । शर्याणि ।
तान्वा । अत्र । सम् । जिघ्रते । युजा ॥ ४ ॥

अयंसोमो निरिणानः दशापवित्रादधोगच्छन् विधावति विविधं धावति । यदा तान्वा तनु दशापवित्रवस्त्रं तत्संबन्धीनि शर्याणि द्वाराणि जहत् अधः सरति । अत्रास्मिन्यज्ञे युजा सखिभूतेनेन्द्रेणसह संजिघ्रते संगतोभवति वस्त्रसुषिराद्विनिर्गत्य दशापवित्रादधः सरन् पात्रं विविधंगच्छन् होमद्वारेणेन्द्रेण संगतोभवतीत्यर्थः ॥ ४ ॥

४. दशापवित्र के वस्त्र के द्वार को छोड़कर सोम अधोदेश में दौड़ते हैं । इस यज्ञ में मित्र इन्द्र के लिए संगत होते हैं ।

नप्तीभिर्योविवस्वतःशुभ्रोनमामृजेयुवा । गाःकृण्वानोननिर्णिजम् ॥५॥३॥

नप्तीभिः । यः । विवस्वतः । शुभ्रः । न । ममृजे । युवा ।
गाः । कृण्वानः । न । निःऽनिजम् ॥ ५ ॥ ३ ॥

यः सोमोविवस्वतः परिचरणवतो यजमानस्य नप्तीभिः पौत्रस्थानीयाभिः तस्य हस्तः पुत्रः । अंगुलयः पौत्रस्थानीया इत्यभिप्रायः । मामृजे मृज्यते शुभ्रोन दीप्तोश्वोयुवाइव यथा अमवृद्धोश्वो मृज्यते स्वपरिचारकैस्तद्वत् । सएव युवा मिश्रणशीलः सोमो निर्णिजं । निर्णिगितिरूपनाम । स्वकीयं रूपं गाः न कृण्वानः गोविकारांश्च कुर्वाणोभवतीतिशेषः ॥ ५ ॥

५. जैसे जवान घोड़े को साफ़ किया जाता है, वैसे ही सोम, गव्य में अपने को मिलाते हुए परिचर्यावाले के पौत्रों (अंगुलियों) के द्वारा, मार्जित होते हैं ।

॥ इति षष्ठस्याष्टमे तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

**अतिंश्रितीतिरश्चतांगव्याजिंगात्यण्व्यां। वग्नुमियर्तियंविदे ॥ ६॥**

अतिं। श्रिती। तिरश्चतां। गव्या। जिगाति। अण्व्यां।
वग्नुम्। इयर्ति। यम्। विदे ॥ ६ ॥

अण्व्या अंगुल्या अभिषूयमाणः सोमः गव्या गव्यानि श्रिती श्रित्यै श्रयणार्थं तिरश्चता तिरश्चीनं अतिजिगाति। अंशुमतिक्रम्यगच्छति। तथांगुल्याभिषूयमाणो विदे यजमानस्य ज्ञानार्थं यं वग्नुं शब्दमियर्ति प्रेरयति ॥ ६ ॥

६. अंगुलि-द्वारा अभिषुत सोम गव्य (दही आदि) में मिलने के लिए उसके सामने जाते और शब्द करते हैं। मैं सोम को प्राप्त करूँगा।

**अभिक्षिपःसमंग्मतमर्जयन्तीरिषस्पतिम्। पृष्ठागृभ्णतवाजिनः॥७॥**

अभि। क्षिपः। सम्। अग्मत। मर्जयन्तीः। इषः।
पतिम्। पृष्ठा। गृभ्णत। वाजिनः ॥ ७ ॥

क्षिपागुलयो मर्जयन्तीः अभिमृशन्त्यः इषस्पतिं अन्नानां स्वामिनं सोमं अभि समग्मत अभिसंगच्छन्ते संगत्यच वाजिनोबलवतः सोमस्य पृष्ठा पृष्ठानि गृभ्णत गृह्णन्ति अभिषवांगुलयः ॥ ७ ॥ ७. परिमार्जन करती हुई अँगुलियाँ अन्नपति सोम के साथ मिलती हैं। वे बली सोम की पीठ पर चढ़ गईं।

**परिदिव्यानिमर्मृशद्विश्वानिसोमपार्थिवा। वसूनियाह्यस्मयुः॥८॥४॥**

परि। दिव्यानि। मर्मृशत्। विश्वानि। सोम।
पार्थिवा। वसूनि। याहि। अस्मऽयुः ॥ ८ ॥ ४ ॥

हे सोम दिव्यानि पार्थिवा पार्थिवानिच विश्वानि सर्वाणि वसूनि धनानि परिमर्मृशव परिमृशन् परिगृह्णन् अस्मयुरस्मान् कामयमानो याहि आगच्छ। एवमभिषुण्वन् रसं संबोध्य ब्रूते ॥ ८ ॥

८. सोम, तुम सारे स्वर्गीय और पार्थिव धनों को ग्रहण करते हुए हमारी इच्छा करके जाओ।

॥ इति षष्ठस्याष्टमे चतुर्थोवर्गः ॥ ४ ॥

एषधियेत्यष्टर्चं पंचदशं सूक्तं ऋष्याद्याः पूर्ववत्। एषधियेत्यनुक्रान्तं गतोविनियोगः।

तत्र प्रथमा—

एषधियायात्यण्व्याशूरोरथेभिराशुभिः । गच्छन्निन्द्रस्यनिष्कृतम् ॥१॥

एषः । धिया । याति । अण्व्या । शूरः । रथेभिः ।
आशुऽभिः । गच्छन् । इन्द्रस्य । निःऽकृतम् ॥ १ ॥

एषसोमः शूरोविक्रान्तः अण्व्या अंगुल्याभिषुतो धिया कर्मणा याति गच्छति । कं देशं प्रति उच्यते—इन्द्रस्यनिष्कृतं स्थानं दिवं प्रति रथेभीरथैराशुभिः शीघ्रगामिभिः गच्छन् इन्द्रेण रथेवस्थाप्य स्वस्थाननयनाय अंगुल्याभिषूयमाणःसन् होमद्वाराग्निनिष्पीडनद्वारा पात्रं वा गच्छतीत्यर्थः ॥ १ ॥

१. यह विक्रान्त सोम, अंगुलि-द्वारा अभिषुत होकर, कर्म-बल के द्वारा शीघ्रगामी रथ की सहायता से इन्द्र के बनाये स्वर्ग में जाते हैं।

एषपुरूधियायतेबृहतेदेवतातये यत्रामृतासआसते ॥ २ ॥

एषः । पुरु । धियाऽयते । बृहते । देवऽतातये । यत्र ।
अमृतासः । आसते ॥ २ ॥

एषः सोमः पुरु बहुलं धियायते धियं कर्मेच्छति धीशब्दात् यकारोपजनः । यद्वा द्वितीयार्थेतृतीया छान्दसश्चालुक् । कस्मै बृहते महते देवतातये यज्ञाय यत्रयस्मिन्यज्ञे अमृतासः अमृतादेवा आसते वसन्ति तदर्थं ॥ २ ॥

२. जिस विशाल यज्ञ में देवता लोग रहते हैं, उसी यज्ञ में सोम बहुत कर्मों की इच्छा करते हैं।

एषहितोविनीयतेन्तःशुभ्रावतापथा । यदीतुञ्जन्तिभूर्णयः ॥ ३ ॥

एषः । हितः । वि । नीयते । अन्तरिति । शुभ्रऽवता ।
पथा । यदि । तुञ्जन्ति । भूर्णयः ॥ ३ ॥

एष सोमो हितो निहितो हविर्धाने विनीयते तस्मात् स्थानात् आहवनीयंप्रति अन्तः तयोर्मध्यदेशे शुभ्रावता शोभावता पथा मार्गेण यदि यदा तुंजन्ति प्रयच्छन्ति देवेभ्यो भूर्णयो भरणशीलाअध्वर्य्वादयः । तदा विनीयत इतिसमन्वयः ॥ ३ ॥

३. यह सोम हविर्धान में स्थापित और तदनन्तर नीत होकर आहवनीय देश में जिस समय हव्यवर्ती और सोमवाले मार्ग में दिये जाते हैं, उस समय अध्वर्यु लोग भी प्राप्त होते हैं।

अथ चतुर्थी—

एषशृङ्गाणिदोधुवच्छिशीतेयूथ्योवृषा। नृम्णादधानओजसा॥ ४ ॥

एषः। शृङ्गाणि। दोधुवत्। शिशीते। यूथ्यः। वृषा।
नृम्णा। दधानः। ओजसा॥ ४ ॥

एषसोमः शृंगाणि शृंगवदुन्नतान् अंशून् अभिषवकाले दोधुवद् धूनोति यूथ्यो यूथार्हो-यूथपतिर्वृषा वृषभोयथा शिशीते तीक्ष्णे शृंगे धूनोति तद्वद्। कीदृशएषः ओजसा बलेन नृम्णा नृम्णानि धनानि दधानोस्मदर्थं धारयन्॥ ४ ॥

४. ये सोम सींग (ऊँचे के हिस्से) को कँपाते हैं। उनके सींग दलपति साँड़ के तेज हैं। ये बल के द्वारा हमारे लिए धन को धारण करते हैं।

अथ पञ्चमी—

एषरुक्मिभिरीयतेवाजीशुभ्रेभिरंशुभिः। पतिःसिन्धूनांभवन्॥ ५॥

एषः। रुक्मिऽभिः। ईयते। वाजी। शुभ्रेभिः।
अंशुऽभिः। पतिः। सिन्धूनाम्। भवन्॥ ५ ॥

एषसोमो रुक्मिभिः अध्वर्य्वादिभिः सह ईयते गच्छति। कीदृशएषः वाजी वेजनवान् शुभ्रेभिः शुभ्रैः दीप्तैः अंशुभिर्विशिष्टः अथवा रुक्मिभिरित्येतदप्यंशुविशेषणं। सिंधूनां स्यन्दमानानां रसानां पतिर्भवन् य ईयतइति॥ ५ ॥

५. ये वेगवान् और शुभ्र अंशों से युक्त सोम बहनेवाले सारे रसों के पति होकर जाते हैं।

अथ षष्ठी—

एषवसूनिपिब्दनापरुषाययिवाँअति। अवशादेषुगच्छति॥ ६ ॥

एषः। वसूनि। पिब्दना। परुषा। ययिऽवान्। अति।
अव। शादेषु। गच्छति॥ ६ ॥

एषसोमो वसून्याच्छादकानि पिब्दना पीडितानि रक्षांसि परुषा पर्वणा अति अतिक्रम्य ययिवान् गच्छन् शादेषु शातनीयेषु रक्षःसु अवगच्छति॥ ६॥

६. ये सोम आच्छादन करनेवाले और पीड़ित राक्षसों को अपने पर्व (अंश) के द्वारा लाँघकर उन्हें जानते हैं।

६

अथ सप्तमी—

एतंमृजन्तिमर्ज्यमुपद्रोणेष्वायवः। प्रचक्राणंमहीरिषः॥ ७॥

एतम् । मृजन्ति । मर्ज्यम् । उप । द्रोणेषु । आयवः ।

प्रऽचक्राणम् । महीः । इषः ॥ ७ ॥

आयवोमनुष्या ऋत्विजः एतं सोमं मर्ज्यं मार्जनीयं उपमृजन्ति निष्पीडयन्तीत्यर्थः । कुत्र द्रोणेषु द्रोणकलशेषु । कीदृशं महीरिषः महान्त्यन्नानि प्रचक्राणं कुर्वाणं प्रभूतरसस्राविणमित्यर्थः ॥ ७ ॥

७. मनुष्य इन मार्जनीय सोम को द्रोण-कलस में छान रहे हैं। सोम बहुत रस देनेवाले हैं।

ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे मृज्यमानेसोमे एतमुत्यमित्येषा । सूत्रितंच— एतमुत्यंदशक्षिपो मृज्यमानः सहस्त्येति ।

सैषाष्टमी—

एतमुत्यंदशक्षिपोमृजन्तिसप्तधीतयः । स्वायुधंमदिन्तमम् ॥ ८ ॥ ५ ॥

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सप्त ।

धीतयः । सुऽआयुधम् । मदिन्ऽतमम् ॥ ८ ॥ ५ ॥

त्यं तं एतमु एतमेव सोमं दशक्षिपो दशांगुल्यो मृजन्ति परिचरन्ति । सप्तधीतयः सप्तर्त्विजश्च ऋत्विजोंगुलिभिर्मृजन्तीत्यर्थः । कीदृशमेतं स्वायुधं शोभनमायुधं मदिन्तमं मादयितृतमं रक्षोहननसामर्थ्यप्रदर्शनाय स्वायुधशब्दश्रवणम् ॥ ८ ॥

८. दस अँगुलियाँ और सात ऋत्विक् शोभन आयुध और मादक सोम को परिमार्जित करते हैं।

॥ इति षष्ठस्याष्टमे पंचमोवर्गः ॥ ५ ॥

प्रतेसोतारइत्यष्टर्चं षोडशं सूक्तं ऋष्याद्याः पूर्ववत् । प्रतेइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

प्रतेसोतारओण्योरसंमदायघृष्वये । सर्गोनतक्त्येतशः ॥ १ ॥

प्र । ते । सोतारः । ओण्योः । रसम् । मदाय । घृष्वये ।

सर्गः । न । तक्ति । एतशः ॥ १ ॥

हे सोम ते तव रसं सोतारः सोमाभिषवकर्तारः ओण्योः रसं लुप्तोपममेतत् द्यावापृथिव्यारसमुदकमिव अथवा ओण्योर्द्यावापृथिव्योर्मध्ये तयोः संबन्धिनंवा रसं प्रस्रावयन्तीतिशे-

षः । किमर्थं घृष्वये शत्रुघर्षणशीलाय मदाय इन्द्रस्य मदाय अभिषवजनितः सोमः सर्गः सृष्टः एतशोन अश्वइव तक्ति गच्छति पात्रं प्रति ॥ १ ॥

१. सोम अभिषव करनेवाले द्यावापृथिवी के बीच शत्रु को हरानेवाली मत्तता के लिए उत्पन्न किया जाकर तुम अश्व के समान जाते हो।

क्रत्वा दक्षस्य रथ्यमपो वसानमन्धसा । गोषामण्वेषु सश्चिम ॥ २ ॥

क्रत्वा । दक्षस्य । रथ्यम् । अपः । वसानम् । अन्धसा ।
गोऽसाम् । अण्वेषु । सश्चिम ॥ २ ॥

वयमभिषोतारः दक्षस्य बलस्य रथ्यं नेतारं अपउदकानि रसान् वसानं आच्छादयन्तं अंधसा श्रयणान्नेन सहितं गोषां गवां सोतारं एवमुक्तलक्षणं सोमं क्रत्वा कर्मणा अण्वेषु अंगुलीषु सश्चिम संयोजयामः ॥ २ ॥

२. हम बल के नेता, जल के आच्छादक, अन्न के साथ वर्त्तमान और गौओं के प्रसवण सोम में कर्म के द्वारा अँगुलियों को मिलाते हैं।

अनप्तमप्सु दुष्टरं सोमं पवित्र आसृज । पुनीहीन्द्राय पातवे ॥ ३ ॥

अनप्तम् । अप्ऽसु । दुस्तरम् । सोमम् । पवित्रे । आ ।
सृज । पुनीहि । इन्द्राय । पातवे ॥ ३ ॥

अनप्तं शत्रुभिरनाप्तं अप्स्वान्तरिक्ष्यासु वर्तमानमितिशेषः दुष्टरं अन्यैरनभिभाव्यं नहि सोमं कश्चिदप्यतितरति ईदृशं सोमं पवित्रे दशापवित्रे आसृज प्रक्षिप । हे अध्वर्यो तवोच्यते । इन्द्रायेन्द्रस्य पातवे पातुं पुनीहि ॥ ३ ॥

३. शत्रुओं के द्वारा अप्राप्त, अन्तरिक्ष में वर्त्तमान और दूसरों के द्वारा अपराजेय सोम को दशा पवित्र में फेंको और इन्द्र के पान के लिए इसे शोधित करो।

अथ चतुर्थी—

प्र पुनानस्य चेतसा सोमः पवित्रे अर्षति । क्रत्वा सधस्थमासदत् ॥ ४ ॥

प्र । पुनानस्य । चेतसा । सोमः । पवित्रे । अर्षति । क्रत्वा ।
सधऽस्थम् । आ । असदत् ॥ ४ ॥

चेतसा स्तुत्या पुनानस्य पूयमानस्य अंशीभूतः सोमः पवित्रे दशापवित्रे अर्षति गच्छति । अथ पश्चात् क्रत्वा कर्मणा प्रज्ञानेनवा सधस्थं सहस्थानं द्रोणकलशे आसदत् आसीदति ॥ ४ ॥

४. स्तुति के द्वारा पवित्र पदार्थों में से (एक) सोम दशापवित्र में जाते और अनन्तर कर्म-बल से द्रोण-कलस में बैठते हैं।

अथ पंचमी—

प्रत्वानमोभिरिन्दवइन्द्रसोमाअसृक्षत । महेभरायकारिणः ॥ ५ ॥

प्र । त्वा । नमःऽभिः । इन्दवः । इन्द्र । सोमाः । असृक्षत ।
महे । भराय । कारिणः ॥ ५ ॥

हे इन्द्र त्वा त्वां नमोभिर्नमस्कारोपलक्षितैः स्तोत्रैः अथवा अन्नैः सह इन्दवः सोमाः प्रासृक्षत प्राप्नुवन्ति । किमर्थं महे महते भराय संग्रामाय कीदृशाः कारिणो बलकरणशीलाः॥५॥

५. इन्द्र, नमस्कार से युक्त स्तोता के साथ सोम बली होकर महा-युद्ध के लिए तुम्हारे पास जाता है।

पुनानोरूपेअव्ययेविश्वाअर्षन्नभिश्रियः । शूरोनगोषुतिष्ठति ॥ ६ ॥

पुनानः । रूपे । अव्यये । विश्वाः । अर्षन् । अभि ।
श्रियः । शूरः । न । गोषु । तिष्ठति ॥ ६ ॥

अव्यये अविमये रूपे रूप्यमाणे वस्त्रे पुनानः पूयमानो विश्वाः सर्वाः श्रियः शोभाः अभ्यर्षन् अभिगच्छन् गोषु निमित्तासु शूरोन शूरइव सयथा संग्रामे तिष्ठति तद्वदसौ तिष्ठति पात्रे ॥ ६ ॥

६. मेष-लोमवाले वस्त्र में शोधित और सारी शोभाओं से युक्त सोम, गो-प्राप्ति के लिए वीर के समान वर्त्तमान हैं।

दिवोनसानुपिप्युषीधारासुतस्यवेधसः । वृथापवित्रेअर्षति ॥ ७ ॥

दिवः । न । सानु । पिप्युषी । धारा । सुतस्य । वेधसः ।
वृथा । पवित्रे । अर्षति ॥ ७ ॥

दिवोन द्युलोकादन्तरिक्षादिव सानु समुच्छ्रितमुदकं तद्यथा अधोनिपतति तद्वद्वेधसोविधातुः बलस्य कर्तुः सुतस्याभिषुतस्य सोमस्य पिप्युषी आप्याययन्ती धारा वृथा अनायासेनैव पवित्रे दशापवित्रे अर्षति गच्छति ॥ ७ ॥

७. अन्तरिक्ष-प्रदेश में अवस्थित जल जैसे नीचे गिरता है, वैसे ही बलकारक और अभिषुत सोम की आप्यायित करनेवाली धारा दशापवित्र में गिरती है।

अथाष्टमी—

त्वंसोमविपश्चितंतनांपुनानआयुषु । अव्योवारंविधावसि ॥८॥६ ॥

त्वम् । सोम । विपःऽचितम् । तना । पुनानः । आयुषु ।
अव्यः । वारम् । वि । धावसि ॥ ८ ॥ ६ ॥

हे सोम त्वं विपश्चितं स्तोतारं आयुषु मनुष्येषु मध्ये रक्षसि । अथवा तृतीयार्थे द्वितीया । विपश्चिता अध्वर्युणा तना वस्त्रेण पुनानः पूयमानः अथवा विपश्चितमिन्द्रं प्रीणयितुं तना पुनानः सन् अव्योवारं अवेर्वाले विधावसि विविधं गच्छसि ॥ ८ ॥

८. सोम, मनुष्यों में तुम स्तोता की रक्षा करते हो। वस्त्र के द्वारा शोधित होकर तुम मेष-लोम के प्रति जाते हो।

॥ इति षष्ठस्याष्टमे षष्ठोवर्गः ॥ ६ ॥

प्रनिम्नेनेवेत्यष्टर्चं सप्तदशं सूक्तं ऋष्याद्याः पूर्ववत् । प्रनिम्नेनेवेत्यनुक्रान्तं । गतोविनियोगः

तत्र प्रथमा—

प्रनिम्नेनेवसिन्धवोघ्नन्तोवृत्राणिभूर्णयः । सोमांअसृग्रमाशवः ॥ १ ॥

प्र । निम्नेनऽइव । सिन्धवः । घ्नन्तः । वृत्राणि । भूर्णयः ।
सोमाः । असृग्रम् । आशवः ॥ १ ॥

निम्नेन प्रवणेन देशने सिन्धवो नद्यइव तथा वृत्राणि शत्रून् घ्नन्तो भूर्णयः क्षिप्रगमनाः । आशवोव्याप्ताः सोमाः प्रासृग्रं प्रगच्छन्ति द्रोणकलशं प्रति ॥ १ ॥

१. जैसे नदियाँ निम्न देश की ओर जाती हैं, वैसे ही शत्रु-विघातक, शीघ्रगामी और व्याप्त सोम द्रोण-कलस की ओर जाते हैं।

अथ द्वितीया—

अभिसुवानासइन्दवोवृष्टयःपृथिवीमिव । इन्द्रंसोमासोअक्षरन् ॥२॥

अभि । सुवानासः । इन्दवः । वृष्टयः । पृथिवीम्ऽइव ।
इन्द्रम् । सोमासः । अक्षरन् ॥ २ ॥

सुवानासः सूयमानाः इन्दवो द्रवरूपाः सोमासः सोमाः इन्द्रं प्रीणयितुं अभ्यक्षरन् किमिव वृष्टयः पृथिवीमिव ॥ २ ॥

२. जैसे वर्षा पृथिवी पर गिरती है, वैसे ही अभिषुत सोम इन्द्र की प्राप्ति के लिए गिरते हैं।

अथ तृतीया–

अत्यूर्मिर्मत्सरोमदःसोमःपवित्रेअर्षति। विघ्नन्रक्षांसिदेवयुः ॥ ३॥

अतिऽऊर्मिः। मत्सरः। मदः। सोमः। पवित्रे। अर्षति।

विऽघ्नन्। रक्षांसि। देवऽयुः ॥ ३ ॥

अत्यूर्मिः अतिक्रान्ता ऊर्मयोयस्मात् सअत्यूर्मिः अतिप्रवृद्धइत्यर्थः। मत्सरो मादनशीलो मदो मदात्मकः सोमः पवित्रे अर्षति गच्छति। किंकुर्वन् रक्षांसि विघ्नन् घातयन् देवयुर्देवान् कामयमानः अर्षतीति संबन्धः ॥ ३ ॥

३. अतीव प्रवृद्धि और मदकर सोम, राक्षसों का विनाश करते हुए, देवाभिलाषी होकर दशापवित्र में जाते हैं।

पवित्रेष्ट्यां द्वितीयाज्यभागस्याकलशेष्विति याज्या। सूत्रितंच–आकलशेषुधावति पवित्रेपरिषिच्यतइत्येके।

आकलशेषुधावतिपवित्रेपरिषिच्यते। उक्थैर्यज्ञेषुवर्धते ॥ ४ ॥

आ। कलशेषु। धावति। पवित्रे। परि। सिच्यते।

उक्थैः। यज्ञेषु। वर्धते ॥ ४ ॥

अयं सोमः कलशेष्वाधावति तदर्थं पवित्रे परिषिच्यते अध्वर्युभिः उक्थैः स्तोत्रैः यज्ञेषु निमित्तेषु वर्धते प्रवृद्धोभवति ॥ ४ ॥

४. सोम कलस में जाते हैं। वे दशापवित्र में सिक्त होते हैं और उक्थ मन्त्रों के द्वारा वर्द्धित होते हैं।

अथ पंचमी–

अतित्रीसोमरोचनारोहन्नभ्राजसेदिवम्। इष्णन्त्सूर्यंनचोदयः ॥५॥

अति। त्री। सोम। रोचना। रोहन्। न। भ्राजसे। दिवम्।

इष्णन्। सूर्यम्। न। चोदयः ॥ ५ ॥

हे सोम त्वं त्रीरोचना रोचनानि त्रीन् लोकान् अति अतिक्रम्य रोहन् उपरिस्थं दिवं द्युलोकंच भ्राजसे प्रकाशयसि। तथा इष्णन् गच्छन् सूर्यंन सूर्यंच चोदयः चोदयसि प्रेरयसि। नशब्दश्चार्थे ॥ ५ ॥

५. सोम, तुम तीनों लोकों को लांघकर और ऊपर चढ़कर स्वर्ग को प्रकाशित करते हो और गतिपरायण हो। सूर्य को प्रेरित करते हो।

अथ षष्ठी—

अभिविप्रांअनूषतमूर्धन्यज्ञस्यंकारवंः । दधांनाश्चक्षंसिप्रियम् ॥६॥

अभि । विप्राः । अनूषत । मूर्धन् । यज्ञस्य । कारवंः ।
दधांनाः । चक्षंसि । प्रियम् ॥ ६ ॥

हे सोम त्वां अभ्यनूषत अभिष्टुवन्ति विप्रामेधाविनः स्तोतारः । कुत्र यज्ञस्य मूर्धन् मूर्धनि शिरोवदुत्तमे अभिषवदिवसइत्यर्थः । कीदृशास्ते कारवः कर्तारः परिचर्यायाः यागानुष्ठातारोवा । चक्षसि द्रष्टरि सोमे प्रियंदधाना अभ्यनूषतेति समन्वयः ॥ ६ ॥

६. मेधावी स्तोता लोग अभिषव-दिवस में परिचारक और सोम के प्रिय होकर सोम की स्तुति करते हैं।

तमुंत्वावाजिनंनरोंधीभिर्विप्रांअवस्यवंः । मृजन्तिंदेवतांतये ॥७॥

तम् । ऊँ इति । त्वा । वाजिनंम् । नरंः । धीभिः । विप्राः ।
अवस्यवंः । मृजन्ति । देवऽतांतये ॥ ७ ॥

हे सोम तमु तमेव त्वा त्वां वाजिनमन्नवन्तं गमनवन्तं वा नरोनेतारो विप्रामेधाविनः अध्वर्य्वादयः धीभिः कर्मभिर्मृजन्ति शोधयन्ति देवतातये यज्ञार्थं । किमिच्छवः अवस्यवः अन्नमिच्छवः ॥७॥

७. सोम, नेता मेधावी लोग अन्नाभिलाषी होकर कर्म-द्वारा यज्ञ के लिए अन्नवाले तुम्हें ही शोधित करते हैं।

अथाष्टमी—

मधोर्धारामनुंक्षरतीव्रःसधस्थमासंदः । चारुंर्ऋतायंपीतयें ॥८॥७॥

मधोंः । धारांम् । अनुं । क्षर । तीव्रः । सधऽस्थंम् । आ ।
असदः । चारुंः । ऋतायं । पीतयें ॥ ८ ॥ ७ ॥

हे सोम त्वं मधोर्मधुररसस्य धारामनुक्षर प्रवहन् तीव्रः तीव्ररसः सन् सधस्थं सहस्थानं अभिषवस्थानं पवित्रंवा आसदः आसीद । चारुः चरणशीलःसन् ऋताय यज्ञार्थं पीतये देवानां पानाय ॥ ८ ॥

८. सोम, तुम मधुर धारा की ओर प्रवाहित होओ, तीव्र होकर अभिषव-स्थान में बैठो और मनोहर होकर यज्ञ में पान के लिए बैठो।

॥ इति षष्ठस्याष्टमे सप्तमोवर्गः ॥ ७ ॥

परिसुवानइति सप्तर्चं अष्टादशं सूक्तं । ऋष्याद्याः पूर्ववत् । परिसुवानः सप्तेत्यनुक्रान्तं । गतोविनियोगः

तत्र प्रथमा—

परिसुवानोगिरिष्ठाःपवित्रेसोमोअक्षाः । मदेषुसर्वधाअसि ॥ १ ॥

परि । सुवानः । गिरिऽस्थाः । पवित्रे । सोमः । अक्षारिति ।
मदेषु । सर्वऽधाः । असि ॥ १ ॥

अयं सोमः पवित्रे पर्यक्षाः परिक्षरति । सुवानः सूयमानः गिरिष्ठागिरिस्थायी ग्रावसु वर्तमानइत्यर्थः । सत्वं मदेषु मादकेषु स्तोतृषु सर्वधाः सर्वदा असि सर्वस्यधाता दाता वा भवसि॥१॥

१. यही सोम दशापवित्र में गिरते हैं। यही सोम सवन-काल में प्रस्तर पर अवस्थित हैं। सोम, तुम मादक पदार्थों में सबके धारक हो।

त्वंविप्रस्त्वंकविर्मधुप्रजातमन्धसः । मदेषुसर्वधाअसि ॥ २ ॥

त्वम् । विप्रः । त्वम् । कविः । मधु । प्र । जातम् । अन्धसः ।
मदेषु । सर्वऽधाः । असि ॥ २ ॥

हे सोम त्वं विप्रो विविधं प्रीणयिता विप्रसदृशोवा त्वं च कविर्मेधावी अतस्त्वं अन्धसः अन्नाज्जातं मधु मधुररसं प्रयच्छसीतिशेषः ॥ २ ॥

२. सोम, तुम मेधावी और कवि हो। तुम अन्न से उत्पन्न मधुर रस दो। मादक पदार्थों में तुम सबके धारक हो।

तवविश्वेसजोषसोदेवासःपीतिमाशत । मदेषुसर्वधाअसि ॥ ३ ॥

तव । विश्वे । सऽजोषसः । देवासः । पीतिम् । आशत ।
मदेषु । सर्वऽधाः । असि ॥ ३ ॥

हे सोम तव पीतिं पानं विश्वेदेवासोदेवाः सजोषसः समानप्रीतयः सन्तः आशत प्राप्नुवन् ॥ ३ ॥

३. समान प्रीतिवाले होकर सारे देवता तुम्हारा पान करते हैं। मादक पदार्थों के बीच तुम सबके धाता हो।

अथ चतुर्थी—

आयोविश्वानिवार्यावसूनिहस्तयोर्दधे । मदेषुसर्वधाअसि ॥ ४ ॥

आ । यः । विश्वानि । वार्या । वसूनि । हस्तयोः ।
दधे । मदेषु । सर्वऽधाः । असि ॥ ४ ॥

यः सोमो विश्वानि वार्या वरणीयानि वसूनि धनानि स्तोतुर्हस्तयोरादधे करोति प्रयच्छतीत्यर्थः। मदेषु सर्वधाअसीति सशुष्मीत्युत्तरत्र संबन्धः॥ ४॥

४. सोम सारे वरणीय धनों को स्तोता के हाथ में देते हैं। तुम सारे मादक पदार्थों में सबके धाता हो।

यइमेरोदसीमहीसंमातरेवदोहते। मदेषुसर्वधाअसि॥ ५॥

यः। इमे इति। रोदसी इति। मही इति। सम्। मातरांऽइव। दोहते। मदेषु। सर्वऽधाः। असि॥ ५॥

यः सोमः इमे मही महत्यौ रोदसी द्यावापृथिव्यौ सं दोहते उभयोः सारं परिगृह्णातीत्यर्थः। मातरेव यथा द्वे मातरौ एकोवत्सोदोहते तद्वद्॥ ५॥

५. एक शिशु को दो माताओं के समान तुम महती द्यावापृथिवी का दोहन करते हो। अथ षष्ठी–

परियोरोदसीउभेसद्योवाजेभिरर्षति। मदेषुसर्वधाअसि॥ ६॥

परि। यः। रोदसी इति। उभे इति। सद्यः। वाजेभिः। अर्षति। मदेषु। सर्वऽधाः। असि॥ ६॥

यः सोमः उभेरोदसी द्यावापृथिव्यौ सद्यस्तदानीमेव वाजेभिरन्नैः पर्यर्षति परियच्छति परिगत्य सोमाहुत्या द्यावापृथिव्यावन्नवत्यौ करोतीत्यर्थः॥ ६॥

६. वे अन्न के द्वारा तुरत द्यावापृथिवी को व्याप्त करते हैं। तुम मादक पदार्थों में सबके धारक हो।

अथ सप्तमी–

सशुष्मीकलशेष्वापुनानोअचिक्रदत्। मदेषुसर्वधाअसि॥ ७॥८॥

सः। शुष्मी। कलशेषु। आ। पुनानः। अचिक्रदत्। मदेषु। सर्वऽधाः। असि॥ ७॥ ८॥

उक्तरीत्या महान् ससोमः शुष्मी बलवान् पुनानः पूयमानः सन् कलशेषु द्रोणकलशेषु आ अचिक्रदत् शब्दं करोति। अत्र सर्वत्र यथोचितमुत्तरपादोनेयः॥ ७॥

७. वे सोम बली हैं। शोधित होने के समय वे कलस के बीच शब्द करते हैं।

॥ इति षष्ठस्याष्टमेष्टमोवर्गः॥ ८॥

यत्सोमेति सप्तर्चमेकोनविंशं सूक्तं ऋष्याद्याः पूर्ववत् । यत्सोमेत्यनुक्रान्तं । गतोविनियोगः।

तत्र प्रथमा—

यत्सोमचित्रमुक्थ्यंदिव्यंपार्थिवंवसु । तन्नःपुनानआभर ॥ १ ॥

यत् । सोम । चित्रम् । उक्थ्यम् । दिव्यम् । पार्थिवम् ।

वसु । तत् । नः । पुनानः । आ । भर ॥ १ ॥

हे सोम यच्चित्रं चायनीयं उक्थ्यं स्तुत्यं दिव्यं दिविभवं पार्थिवं पृथिवीसंबद्धंच वसु धनमस्ति तव् नोस्मभ्यं पुनानः पूयमानः सन्नाभर आहर ॥ १ ॥

१. जो कुछ स्तुत्य, पार्थिव और स्वर्गीय विचित्र धन ह, शोधित होने के समय तुम हमारे लिए वह ले आओ।

युवंहिस्थःस्वर्पतीइन्द्रश्चसोमगोपती । ईशानापिप्यतंधियः ॥ २ ॥

युवम् । हि । स्थः । स्वःपती इति स्वःऽपती । इन्द्रः । च ।

सोम । गोपती इति गोऽपती । ईशाना । पिप्यतम् । धियः ॥ २ ॥

हे सोम त्वमिन्द्रश्च युवंहि युवांखलु स्वर्पती स्वर्गस्य स्वामिनौ स्थोभवथः । तथा गोपती गवांपालकौ ईशाना ईश्वरौ सन्तौ धियोस्मदीयानि कर्माणि पिप्यतं प्याययतं ॥ २ ॥

२. सोम, तुम और इन्द्र सबके स्वामी, गौओं के पालक और ईश्वर हो। तुम हमारे कर्म को वर्द्धित करो।

वृषापुनानआयुषुस्तनयन्नधिबर्हिषि । हरिःसन्योनिमासदत् ॥३॥

वृषा । पुनानः । आयुषु । स्तनयन् । अधि ।

बर्हिषि । हरिः । सन् । योनिम् । आ । असदत् ॥ ३ ॥

वृषा कामानां वर्षकः सोमः आयुषु मनुष्येषु अध्वर्य्वादिषु पुनानः पूयमानः सन् स्तनयन् शब्दंकुर्वन् अधिबर्हिषि अधीति सप्तम्यर्थानुवादी आस्तीर्णे दर्भे हरिः हरितवर्णः सन् योनिं स्वकीयं स्थानं आसदत् आसीदति ॥ ३ ॥

३. अभिलाषदाता सोम शोधित होकर, मनुष्यों में शब्द करके और हरित-वर्ण होकर बिछे हुए कुश पर, अपने स्थान पर, बैठते हैं।

अथ चतुर्थी—

अवावशन्तधीतयोवृषभस्याधिरेतसि । सूनोर्वत्सस्यमातरः ॥ ४ ॥

अत्र॑। अ॒व॒श॒न्त॒। धी॒तय॑ः। वृ॒ष॒भस्य॑। अधि॑।

रेत॑सि। सू॒नोः। व॒त्सस्य॑। मा॒तर॑ः ॥ ४ ॥

धीतयो धीयमानाः सोमाख्येन वत्सेन पीयमाना वसतीवर्यः। क्तिन् व्यत्ययेनान्तोदात्तः। अधिरेतसि स्वकीयेसारे वृषभस्य वर्षकस्य सोमस्य सोममित्यर्थः अवावशन्त पुनः कामयन्ते सोममाप्याययितुं कामयन्ते इत्यर्थः। तदेवाह—सूनोः स्वपुत्रस्थानीयस्य वत्सस्य सोमस्य मातरोनिर्मात्र्यः प्रवृद्धिकामा मातृस्थानीयाः अवावशन्तेतिसमन्वयः ॥ ४ ॥

४. पुत्र-रूप सोम की मातृ-रूपिणी वसतीवरी (आदि), सोम-द्वारा पीत होकर, मनोरथदाता सोम की सारवत्ता की कामना करती हैं।

कु॒विद्वृ॑ष॒ण्यन्ती॑भ्यःपुना॒नोगर्भ॑मा॒दध॑त्। याःशु॒क्रंदु॑ह॒तेपय॑ः ॥५॥

कु॒वित्। वृ॒ष॒ण्यन्ती॑भ्यः। पु॒ना॒नः। गर्भ॑म्।

आ॒ऽदध॑त्। याः। शु॒क्रम्। दु॒ह॒ते। पय॑ः ॥ ५ ॥

वृषण्यन्तीभ्यः वृषणं सोममात्मनइच्छन्तीभ्यो वसतीवरीभ्यः पुनानः पूयमानो मिश्रयमाणो गर्भं स्वगर्भस्थानीयं रसं कुवित् बहुप्रभूतं आदधत् करोति। याः आपः शुक्रं दीप्तं पयो दुहते स्ववत्साय सोमाय ताभ्योगर्भमादधत् ॥ ५ ॥

५. मिलाये जाने के समय सोम सोमाभिलाषिणी वसतीवरी (आदि) को गर्भ उत्पन्न करते हैं। सोम इन जलों से दीप्त दुग्ध का दोहन करते हैं।

उप॑शिक्षापत॒स्थुषो॑भि॒यस॑मा॒धे॑हि॒शत्रु॑षु। पव॑मान॒वि॒दार॒यिम् ॥ ६ ॥

उप॑। शि॒क्ष॒। अ॒प॒ऽत॒स्थुष॑ः। भि॒यस॑म्। आ।

धे॒हि॒। शत्रु॑षु। पव॑मान। वि॒दाः। र॒यिम् ॥ ६ ॥

हे पवमानसोम उपशिक्ष त्वं समीपे कुरु। कान् अपतस्थुषः अपक्रम्य स्थितान् अस्मदभिमतानित्यर्थः शत्रुष्वस्मद्विरोधिषु भियसं भयं आधेहि कुरु जनय। अस्माकं तेषां शत्रूणां रयिं धनं विदाः विन्दसि ॥ ६ ॥

६. पवमान सोम, जो हमारा अभिमत दूरस्थ है, उसे पास में करो। शत्रुओं में भय उत्पन्न करो। उनके धन को जानो।

अथ सप्तमी—

निशत्रो॑ःसोम॒वृष्ण्य॒ंनिशुष्म॒ंनिवय॑स्तिर। दूरेवा॒स॒तोअन्ति॑वा ॥७॥९॥

नि । शत्रोः । सोम । वृष्ण्यम् । नि । शुष्मम् ।

नि । वयः । तिर । दूरे । वा । सतः । अन्ति । वा ॥ ७ ॥ ९ ॥

हे अभिषूयमाणसोम त्वं शत्रोर्वृष्ण्यं वर्षकं बलं नितिर निपूर्वस्तिरतिर्नाशार्थः नाशय । तथा शत्रोः शुष्मं शोषकं तेजः नितिर तस्यैव वयोन्नंच नितिर कीदृशस्य शत्रोः दूरे वासतः अस्मत्तोदूरे वर्तमानस्य अन्तिवा सतः अन्तिके वर्तमानस्य वा ॥ ७ ॥

७. सोम चाहे तुम दूर हो वा समीप, शत्रु के वर्षक बल का विनाश करो। उसके शोषक तेज का विनाश करो।

॥ इति षष्ठस्याष्टमे नवमोवर्गः ॥ ९ ॥

प्रकविरिति सप्तर्चं विंशं सूक्तं ऋष्याद्याः पूर्ववत् । प्रकविरित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

प्रकविर्देववीतयेऽव्योवारेभिरर्षति । साह्वान्विश्वाअभिस्पृधः ॥ १॥

प्र । कविः । देवऽवीतये । अव्यः । वारेभिः ।

अर्षति । सह्वान् । विश्वाः । अभि । स्पृधः ॥ १ ॥

कविर्मेधावी सोमो देववीतये देवानां पानाय अव्यः अवेर्वारेभिः वारैः दशापवित्रैः मार्षति प्रकर्षेणगच्छति । साह्वान् शत्रूणां सोढा सोमोविश्वाः स्पृधः सर्वान् संग्रामान् हिंसकान्वा अभिभवतीतिशेषः ॥ १ ॥

१. कवि सोम, देवों के पान के लिए मेष-लोगों के द्वारा जाते हैं। शत्रुओं के अभिभव-कर्त्ता सोम सारे हिंसकों को नष्ट करते हैं।

सहिष्मांजरितृभ्यआवाजंगोमन्तमिन्वति । पवमानःसहस्रिणम् ॥२॥

सः । हि । स्म । जरितृऽभ्यः । आ । वाजम् ।

गोऽमन्तम् । इन्वति । पवमानः । सहस्रिणम् ॥ २ ॥

सहिष्म सखलु पवमानः सोमोजरितृभ्यः स्तोतृभ्यः गोमन्तं बहुभिर्गोभिर्युक्तं सहस्रिणं सहस्रसंख्याकं वाजमन्नं आ अभिमुखमिन्वति व्याप्नोति प्रयच्छतीत्यर्थः ॥ २ ॥

२. वही पवमान सोम स्तोताओं को गोयुक्त सहस्र-संख्यक अन्न प्रदान करते हैं।

अथ तृतीया—

परिविश्वानिचेतसामृशसेपवसेमती । सनःसोमश्रवोविदः ॥ ३ ॥

परिं। विश्वांनि। चेतंसा। मृशसें। पवंसे।
मती। सः। नः। सोम। श्रवंः। विदः॥ ३॥

हे सोम त्वं चेतसा स्वकीयेनास्मदनुकूलेन चित्तेन विश्वानि सर्वाणि धनानि परिमृशसे संप्रयच्छसीत्यर्थः। मती मत्यास्मत्स्तुत्या पवसे क्षरसि रसं। सत्वं हे सोम नोस्मभ्यं श्रवोन्नं विदः देहि॥ ३॥

३. सोम, तुम अपने मन से सारा धन देते हो। सोम, वही तुम हमें अन्न प्रदान करो। अथ चतुर्थी—

अभ्यंर्षबृहद्यशोमघवंभ्योध्रुवंरयिम्। इषंस्तोतृभ्यआभंर॥ ४॥

अभि। अर्ष। बृहत्। यशः। मघवंत्ऽभ्यः।
ध्रुवम्। रयिम्। इषम्। स्तोतृऽभ्यः। आ। भर॥ ४॥

हे सोम बृहद्यशो महतीं कीर्तिं अभ्यर्ष अभिगमय। मघवद्भ्यो हविष्मद्भ्योस्मभ्यं ध्रुवं रयिं धनंचाभ्यर्ष। किंच इषमन्नं स्तोतृभ्योस्मभ्यमाभराहर॥ ४॥

४. सोम, तुम महती कीर्ति को प्रेरित करो। हव्यदाता को निश्चित धन दो। स्तोताओं को अन्न दो।

त्वंराजेवसुव्रतोगिरंःसोमाविंवेशिथ। पुनानोवंह्नेअद्भुत॥ ५॥

त्वम्। राजांऽइव। सुऽव्रतः। गिरंः। सोम।
आ। विवेशिथ। पुनानः। वह्ने। अद्भुत॥ ५॥

हे सोम सुव्रतः सुकर्मा पुनानस्त्वं राजेव गिरोस्मदीयाः स्तुतीः आविवेशिथ आविशसि। हे वह्ने वोढः अद्भुत महन् सोम॥ ५॥

५. सोम, तुम सुन्दर कर्मवाले हो। पवित्र (शोधित) होकर तुम राजा के समान हमारी स्तुति को स्वीकार करो। तुम अद्भुत और वाहक हो। अथ षष्ठी—

सवह्निंरप्सुदुष्टरोमृज्यमानोगभंस्त्योः। सोमंश्चमूषुंसीदति॥ ६॥

सः। वह्निः। अप्ऽसु। दुस्तरंः। मृज्यमानः।
गभंस्त्योः। सोमंः। चमूषुं। सीदति॥ ६॥

ससोमो वह्निर्वोढा यज्ञादेः अप्स्वन्तरिक्षे वर्तमानो दुष्टरोदुःखेनान्यैस्तरणीयो मृज्यमानः शोध्यमानो गभस्त्योर्हस्तयोः एवंभूतःसन् सचमूषु पात्रेषु सीदति ॥ ६ ॥

६. वही सोम वाहक और अन्तरिक्ष में वर्तमान है। वे हाथों के द्वारा कठिनता से रगड़े जाकर पात्र में स्थित होते हैं।

क्रीळुर्मखोनमंहयुःपवित्रंसोमगच्छसि। दधत्स्तोत्रेसुवीर्यम्॥७॥१०॥

क्रीळुः। मखः। न। मंहयुः। पवित्रम्। सोम।

गच्छसि। दधत्। स्तोत्रे। सुऽवीर्यम्॥ ७ ॥ १० ॥

हे सोम क्रीळुः क्रीडनशीलस्त्वं मंहयुः मंहतिर्दानकर्मा दानेच्छुः मखोन दानमिव पवित्रं गच्छसि। किंकुर्वन् स्तोत्रे स्तुतिकर्त्रे सुवीर्यं शोभनवीर्यं दधत् प्रयच्छन्॥ ७ ॥

७. सोम, तुम क्रीड़ा-परायण और दानेच्छुक हो। स्तोता को सुन्दर वीर्य देकर, दान के समान, दशापवित्र में जाते हो।

॥ इति षष्ठस्याष्टमे दशमोवर्गः ॥ १० ॥

एतेधावन्तीति सप्तर्चमेकविंशंसूक्तं ऋष्याद्याः पूर्ववत्। एतेधावन्तीत्यनुक्रान्तं। गतोविनियोगः

तत्र प्रथमा—

एतेधावन्तीन्दवःसोमाइन्द्रायघृष्वयः। मत्सरासःस्वर्विदः॥ १ ॥

एते। धावन्ति। इन्दवः। सोमाः। इन्द्राय।

घृष्वयः। मत्सरासः। स्वःऽविदः॥ १ ॥

एतेसोमा इन्द्राय धावन्ति गच्छन्ति। कीदृशाएते इन्दवः क्लेदयितारः दीप्तावा घृष्वयो घर्षणशीलाः मत्सरासो मादयितारः स्वर्विदः स्वर्लोकस्य लंभयितारः॥ १ ॥

१. भिगोनेवाले, दीप्त, अभिभव करनेवाले, मदकर और लोक-पालक सोम इन्द्र की ओर जाते हैं। अथ द्वितीया—

प्रवृण्वन्तोअभियुजःसुष्वयेवरिवोविदः। स्वयंस्तोत्रेवयस्कृतः॥२॥

प्रऽवृण्वन्तः। अभिऽयुजः। सुस्वये।

वरिवःऽविदः। स्वयम्। स्तोत्रे। वयःऽकृतः॥ २ ॥

प्रवृण्वन्तः सुवानं प्रकर्षेण संभजन्तः तथा अभियुजः अभियोजयितारः सुष्वये सुष्ठु अभिषवकर्त्रे वरिवोविदः वरिवइति धननाम तस्य लंभयितारः स्वयं स्तोत्रे वयस्कृतोन्नस्यकर्तारः एते धावन्तीति संबन्धः॥ २ ॥

२. ये सोम अभिषव का विशेष आश्रय करते हैं। सबके साथ मिलते हैं। अभिभव करनेवाले को धन प्रदान करते हैं। स्तोता को अन्न देते हैं।

अथ तृतीया—

वृथा॒क्रीळ॑न्त॒इन्द॑वः॒स॒धस्थ॑म॒भ्येक॒मित्। सिन्धो॑रू॒र्मा व्य॑क्षरन्॥३॥

वृथा॑। क्रीळ॑न्तः। इन्द॑वः। स॒धऽस्थ॑म्। अ॒भि।

एक॑म्। इत्। सिन्धोः॑। ऊ॒र्मा। वि। अ॒क्ष॒र॒न्॥ ३॥

वृथा अनायासेन क्रीळन्त इन्दवः सोमाः एकमिद् एकमेव सधस्थं सहस्थानं द्रोणकलशंवा अभ्यक्षरन् इतिशेषः। सिन्धोरूर्मा वसतीवरीषु व्यक्षरन्॥ ३॥

३. सरलता से क्रीड़ा करनेवाले सोम वसतीवरी में गिरते हुए एकमात्र द्रोण-कलस में क्षरित होते हैं।

ए॒तेविश्वा॑नि॒वार्या॒पव॑मानासआशत। हि॒तानसप्त॑यो॒रथे॑॥ ४॥

ए॒ते। विश्वा॑नि। वार्या॑। पव॑मानासः।

आ॒श॒त॒। हि॒ताः। न। सप्त॑यः। रथे॑॥ ४॥

एते सोमाः पवमानासः पूयमानाः विश्वानि वार्या वार्याणि वरणीयानि धनानि आशत व्याप्नुवन्। रथे हिताः स्थापितानसप्तयः सप्तयोश्वाइव ते यथा रथमभिमतं देशं प्राप्नुवन्ति तद्वद्धनमस्माकं प्रायच्छन्नित्यर्थः॥ ४॥

४. ये सोम संशोधित होकर रथ में योजित अश्वों के समान, सारे वरणीय धनों को प्राप्त करते हैं।

आस्मिन्पि॒शङ्ग॑मिन्दवो॒दधा॑ता वे॒नमा॒दिशे॑। योअ॒स्मभ्य॒मरा॑वा॥ ५॥

आ। अ॒स्मिन्। पि॒शङ्ग॑म्। इ॒न्द॒वः॒। दधा॑त। वे॒नम्।

आ॒ऽदिशे॑। यः। अ॒स्मभ्य॑म्। अरा॑वा॥ ५॥

हे इन्दवः सोमाः अस्मिन्यजमाने पिशंगं बहुरूपं मणिमुक्ताहिरण्यादिभेदेन नानारूपं वेनं कामयन्तं बहुविधंकामं आदिशे अस्मभ्यमादेशनाय आदधात आयच्छत। योयजमानोस्मभ्यं अरावा अदातृशब्दरहितः संपन्नःसन् प्रयच्छति प्राप्तकामएवखलु ऋत्विग्भ्यः प्रयच्छति॥५॥

५. सोम, इस यजमान की नाना प्रकार की कामनायें पूर्ण करने के लिए उसे धन दो। यह यजमान दान देते समय हमें (ऋत्विकों को) चुपचाप दान करता है।

अथ षष्ठी—

ऋ॒भुर्नरथ्यं॒नवं॒दधा॑ता॒केत॑मा॒दिशे॑। शु॒क्राःप॑वध्व॒मर्ण॑सा॥ ६॥

ऋभुः । न । रथ्यम् । नवम् । दधात । केतम् ।
आऽदिशे । शुक्राः । पवध्वम् । अर्णसा ॥ ६ ॥

ऋभुर्न ऋभुर्भासमानो रथस्वामीव सयथा रथ्यं रथस्य नेतारं नवं स्तुत्यं कुशलं सारथिनं अग्र आधत्ते तद्वदस्मदीयेस्मिन् आदिशे स्वामिनि केतं प्रज्ञानं दधात स्थापयत। हे सोमाः योस्मभ्यं प्रयच्छति तस्मिन्नित्यर्थः। हे सोमाः अर्णसा उदकेन शुक्राः दीप्ताः सन्तः पवध्वं क्षरध्वम् ॥ ६ ॥

६. जैसे ऋभु रथवाहक और प्रशस्य सारथि को प्रज्ञा प्रदान करते हैं, वैसे ही तुम लोग, हे सोम, इस यजमान को प्रज्ञा दो। जल से दीप्त होकर गिरो।

अथ सप्तमी—

एतउत्येअवीवशन्काष्ठांवाजिनोअक्रत । सतःप्रासाविषुर्मतिम् ॥७॥११॥

एते । ऊं इति । त्ये । अवीवशन् । काष्ठाम् । वाजिनः ।
अक्रत । सतः । प्र । असाविषुः । मतिम् ॥ ७ ॥ ११ ॥

त्ये ते एतउ एतेएव सोमाः अवीवशन् कामयन्ते यज्ञं। कांत्याच वाजिनो बलवन्तोन्नवन्तोवा सोमाः काष्ठां अक्रत निवासस्थानं अकुर्वन् द्रोणकलशादुद्गताग्रहानित्यर्थः। सतो-यजमानस्य स्तोतुर्वा मतिं बुद्धिं स्तुतिंवा प्रासाविषुः प्रेरयन् ॥ ७ ॥

७. ये सोम यज्ञ की इच्छा करते हैं। अन्नवान् सोमों ने निवास-स्थान बनाया। बली सोम ने यजमान की बुद्धि को प्रेरित किया।

॥ इति षष्ठस्याष्टमे एकादशोवर्गः ॥ ११ ॥

एतेसोमासइति सप्तर्चं द्वाविंशं सूक्तं ऋष्याद्याः पूर्ववत्। एतेसोमासइत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

एतेसोमासआशवोरथाइवप्रवाजिनः। सर्गाःसृष्टाअहेषत ॥ १ ॥

एते । सोमासः । आशवः । रथाःऽइव । प्र ।
वाजिनः । सर्गाः । सृष्टाः । अहेषत ॥ १ ॥

एते पूयमानाः सोमासः सोमाः सृष्टाः अध्वर्युणा आशवो दशापवित्रादधोगमने शीघ्राः प्राहेषत प्रहेषन्ते। शीघ्रगमने दृष्टान्तद्वयं—आजौ सृष्टाः शीघ्रा रथाइव तथा उक्तलक्षणसर्गा वाजिनइव वेजनवन्तोश्वाइव ॥ १ ॥

१. सोम बनाये जाकर दशापवित्र के पास शीघ्र जाते हैं, जिस प्रकार युद्ध प्रेरित अश्व और रथ।

अथ द्वितीया—

एतेवाताइवोरवःपर्जन्यस्येववृष्टयः। अग्नेरिवभ्रमावृथा ॥ २ ॥

एते। वाताःऽइव। उरवः। पर्जन्यस्यऽइव।
वृष्टयः। अग्नेःऽइव। भ्रमाः। वृथा ॥ २ ॥

एतेसोमा उरवो महान्तो वाताइव वायवइव वृथा अनायासेन व्यानशुरित्युत्तरत्र संबन्धनीयं। अथवाध्याहारेण निःसरन्तीति योज्यं। तथा पर्जन्यस्य वृष्टयइव वर्षा यथा तथैव। किंच अग्नेरिव भ्रमाः भ्रमणाः ज्वालासंचाराइव ॥ २ ॥

२. सोम महान् वायु, मेघ और अग्नि-शिखा के समान सब व्याप्त करते हैं।

अथ तृतीया—

एतेपूताविपश्चितःसोमासोदध्याशिरः। विपाव्यानशुर्धियः ॥ ३ ॥

एते। पूताः। विपःऽचितः। सोमासः।
दधिऽआशिरः। विपा। वि। आनशुः। धियः ॥ ३ ॥

एते सोमासः सोमाः पूताः शुद्धाः विपश्चितः प्राज्ञाः दध्याशिरोदध्याश्रयणाः विपा प्रज्ञानेन धियोस्मदीयानि कर्माणि व्यानशुः व्याप्नुवन्ति ॥ ३ ॥

३. ये सोम शुद्ध, प्राज्ञ और दधि-युक्त होकर प्रज्ञा-बल से हमें व्याप्त करते हैं।

अथ चतुर्थी—

एतेमृष्टाअमर्त्याःससृवांसोनशश्रमुः। इयक्षन्तःपथोरजः ॥ ४ ॥

एते। मृष्टाः। अमर्त्याः। ससृऽवांसः
न। शश्रमुः। इयक्षन्तः। पथः। रजः ॥ ४ ॥

एते सोमाः मृष्टाः दशापवित्रेण शोधिताः अमर्त्या अमरणधर्माणः ससृवांसो हविर्धानात्सरन्तः पथोमार्गान् रजोलोकांश्च इयक्षन्तो गन्तुमिच्छन्तो न शश्रमुः न शाम्यन्ति ॥ ४ ॥

४. ये सब सोम शोधित और अमर हैं। ये जाते समय और मार्ग में लोकों में भ्रमण करते समय नहीं थकते।

अथ पञ्चमी—

एतेपृष्ठानिरोदसोर्विप्रयन्तोव्यानशुः। उतेदमुत्तमंरजः ॥ ५ ॥

एते । पृष्ठानि । रोदसोः । विऽप्रयन्तः । वि ।

आनशुः । उत । इदम् । उत्ऽतमम् । रजः ॥ ५ ॥

एते सोमाः रोदसोर्द्यावापृथिव्योः पृष्ठानि विप्रयन्तो विविधं गच्छन्तो व्यानशुः व्याप्नुवन्ति । उतापिच इदमुत्तमं रजोद्युलोकं व्यानशुः आहुतिद्वारेणेतिभावः । रोदसोरित्यत्रान्तरिक्षोभिप्रेतः ॥ ५ ॥

५. ये सब सोम द्यावापृथिवी की पीठों पर नाना प्रकार से विचरण करके व्याप्त होते हैं। ये उत्तम द्युलोक में भी व्याप्त होते हैं।

तन्तुंतन्वानमुत्तममनुप्रवतआशत । उतेदमुत्तमाय्यम् ॥ ६ ॥

तन्तुम् । तन्वानम् । उत्ऽतमम् । अनु । प्रऽवतः ।

आशत । उत । इदम् । उत्तमाय्यम् ॥ ६ ॥

तन्तुं यज्ञं तन्वानं उत्तमं उत्कृष्टं सोमं अन्वाशत । उतापिच इदं कर्म अनेन सोमेन उत्तमाय्यं उत्तमीकृतं अथवा तन्तुं तन्वानं सोमं प्रवतः अधःस्थिताः सर्वाअन्वाशत । उतेदमुत्तमाय्यं रजोद्युलोकइत्यर्थः सोप्यन्वश्नुते पृथिव्याचान्तरिक्षेण चोत्तमीकृतमुत्तमाय्यम् ॥ ६ ॥

६. जल यज्ञ-विस्तारक और उत्तम सोम को व्याप्त करता है। सोम के द्वारा इस कार्य को उत्तम बना लिया जाता है।

त्वंसोमपणिभ्यआवसुगव्यानिधारयः । ततंतन्तुमचिक्रदः ॥ ७ ॥ १२ ॥

त्वम् । सोम । पणिऽभ्यः । आ । वसु । गव्यानि ।

धारयः । ततम् । तन्तुम् । अचिक्रदः ॥ ७ ॥ १२ ॥

हेसोम त्वं पणिभ्योसुरेभ्योलुब्धकेभ्योवा सकाशात् गव्यानि गोहितानि वसु वसूनि गोयूथानि वसूनि चेतिवा आहृत्य धारयोधारयसि । तथा तन्तुं यज्ञं प्रति ततं विस्तृतं यथाभवति तथा अचिक्रदः शब्दमकार्षीः ॥ ७ ॥

७. सोम, तुम पणियों (असुरों) के पास से गो-हितकर धन को धारण करते हो। जिस प्रकार यज्ञ विस्तृत हो, ऐसा शब्द करो।

॥ इति षष्ठस्याष्टमे द्वादशोवर्गः ॥ १२ ॥

सोमाअसृग्रमिति सप्तर्चं त्रयोविंशं सूक्तं । ऋष्याद्याः पूर्ववत् । सोमाअसृग्रमित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

सोमा असृग्रमाशवो मधोर्मदस्य धारया। अभि विश्वानि काव्या॥ १॥

सोमाः। असृग्रम्। आशवः। मधोः। मदस्य।
धारया। अभि। विश्वानि। काव्या॥ १॥

आशवः शीघ्राः सोमाः असृग्रं असृग्रन् सृज्यन्ते मधोर्मधुरस्य मदस्य मदकरस्य धारया असृग्रमितिसंबन्धः। किंप्रति उच्यते—अभिलक्षीकृत्य विश्वानि सर्वाणि काव्या काव्यानि स्तोत्राणि प्रतिस्तोत्रसमयइत्यर्थः॥ १॥

१. मधुर मद की धारा से शीघ्रगामी सोम स्तोत्र-समय में सृष्ट होते हैं।

अथ द्वितीया—

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः। रुचे जनन्त सूर्यम्॥ २॥

अनु। प्रत्नासः। आयवः। पदम्। नवीयः।
अक्रमुः। रुचे। जनन्त। सूर्यम्॥ २॥

प्रत्नासः पुराणाः केचिदाशवः शीघ्रगमनाः अश्वाः नवीयो नवतरं पदमन्वक्रमुः अनुक्रमन्ते। रूपकव्याहारेण सोमाःस्तूयन्ते रुचे दीप्त्यै सूर्यं जनन्त कुर्वन्ति दीप्तं कुर्वन्तीत्यर्थः। सोमाप्यायनेनहि चन्द्रोरोचते॥ २॥

२. कोई पुराने अश्व (सोम) नये पद का अनुसरण करते और सूर्य को दीप्त करते हैं।

अथ तृतीया—

आ पवमान नो भरार्यो अदाशुषो गयम्। कृधि प्रजावतीरिषः॥ ३॥

आ। पवमान। नः। भर। अर्यः। अदाशुषः।
गयम्। कृधि। प्रजाऽवतीः। इषः॥ ३॥

हे पवमान सोम त्वं नोस्मभ्यं अर्यः अरेः अदाशुषः अप्रयच्छतो गयं गृहं गृहोपलक्षितं धनं आभर आहर। तथास्मभ्यं प्रजावतोरिषश्च कृधि कुरु॥ ३॥

३. शोधित सोम, जो हव्यदाता नहीं है, उसका गृह हमें दे दो। हमें प्रजा से युक्त धन दो।

अथ चतुर्थी—

अभि सोमास आयवः पवन्ते मद्यं मदम्। अभि कोशं मधुश्चुतम्॥ ४॥

अभि। सोमासः आयवः। पवन्ते। मद्यम्। मदम्।

अभि। कोशम्। मधुऽश्चुतम्॥ ४॥

आयवोगन्तारः सोमासः सोमाः मद्यं मदकरं मदं रसं अभिपवन्ते क्षरन्ति। तथा मधुश्चुतं मधुस्राविणं कोशं। रसाधारेण कोशशब्देन तत्रामिश्रितो रसोलक्ष्यते। तं अभिपवन्त इतिशेषः॥ ४॥

४. गति-शील सोम मदकर रस को क्षरित करते और मधुस्रावी को (अमिश्रित) रस को भी क्षरित करते हैं।

**सोमोअर्षतिधर्णसिर्दधानइन्द्रियंरसम्। सुवीरोअभिशस्तिपाः॥ ५॥**

सोमः। अर्षति। धर्णसिः। दधानः। इन्द्रियम्।

रसम्। सुऽवीरः। अभिशस्तिऽपाः॥ ५॥

सोमोअर्षति गच्छति। कीदृशः सः धर्णसिः धारकः जगतां तथा इन्द्रियं इन्द्रियवर्धकं रसं दधानोधारयन् सुवीरः सुवीर्यः अभिशस्तिपाः अभिशस्तेः पाता अभितोहिंसा ततोरक्षकइत्यर्थः। सोमपानं ब्रह्महत्यादिनिन्दामनुमार्ष्टीति प्रसिद्धं॥ ५॥

५. संसार के धारक सोम इन्द्रिय-वर्द्धक रस को धारण करते हुए उत्तम वीर से युक्त और हिंसा से बचानेवाले हुए हैं।

अथ षष्ठी—

**इन्द्रायसोमपवसेदेवेभ्यःसधमाद्यः। इन्दोवाजंसिषाससि॥ ६॥**

इन्द्राय। सोम। पवसे। देवेभ्यः। सधऽमाद्यः।

इन्दो इति। वाजम्। सिसाससि॥ ६॥

हे सोम सधमाद्यः सधमादोयज्ञः तदर्हस्त्वं इन्द्राय देवेभ्यश्चान्येभ्यः पवसे क्षरसे। हे तादृशेन्दो सोम अस्मभ्यं वाजमन्नं सिषाससि दातुमिच्छसि॥ ६॥

६. सोम, तुम यज्ञ के योग्य हो। तुम इन्द्र और अन्यान्य देवों के लिए गिरते हो और हमें अन्न-दान करने की इच्छा करते हो।

अथ सप्तमी—

**अस्यपीत्वामदानामिन्द्रोवृत्राण्यप्रति। जघानजघनच्चनु॥ ७॥ १३॥**

अस्य। पीत्वा। मदानाम्। इन्द्रः। वृत्राणि।

अप्रति। जघान। जघनत्। च। नु॥ ७॥ १३॥

मदानां मदकराणां मध्ये अतिशयेन मदकरं अस्य अमुं सोमं पीत्वा वृत्राणि शत्रून् प्रतिगतः सन् इन्द्रोजघान हतवान् नु क्षिप्रं जघनच्च हन्तुंचेदानीमिति ॥ ७ ॥

७. मदकर पदार्थों में अत्यन्त मदकर इस सोम का पान करके अपराजेय इन्द्र ने शत्रुओं को मारा था। वे अब भी मार रहे हैं।

॥ इति षष्ठस्याष्टमे त्रयोदशोवर्गः ॥ १३ ॥

प्रसोमासइति सप्तर्चं चतुर्विंशं सूक्तं असितोदेवलोवाऋषिः गायत्रीछन्दः सोमोदेवता प्रसोमासइत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

प्रसोमासोअधन्विषुःपवमानासइन्दवः। श्रीणानाअप्सुमृंजत ॥१॥

प्र। सोमासः अधन्विषुः। पवमानासः। इन्दवः।
श्रीणानाः। अप्ऽसु। मृंजत ॥ १ ॥

सोमासः सोमाः पवमानासः पूयमाना इन्दवोदीप्ताः सोमाः प्राधन्विषुः धन्वतिर्गतिकर्मा प्रगच्छन्ति। किंच श्रीणानाः गोभिः श्रयमाणाः अप्सु वसतीवरीषु च मृंजत मृज्यन्ते ॥ १ ॥

१. शोधित और दीप्त होकर सोम जाते हैं और मिश्रित होकर जल (वसतीवरी) में मार्जित होते हैं।

अभिगावोअधन्विषुरापोनप्रवतायतीः। पुनानाइन्द्रमाशत ॥ २ ॥

अभि। गावः। अधन्विषुः। आपः। न। प्रऽवता। यतीः।
पुनानाः। इन्द्रम्। आशत ॥ २ ॥

गावो गमनशीलाइन्दवः अभ्यधन्विषुः अभिगच्छन्ति दशापवित्रं। किमिव प्रवता प्रवणवता देशेन यन्तीर्गच्छन्त्य आपोन आपइव पश्चात्पुनाना इन्द्रं प्रीणयितुं आशत व्याप्नुवन् आहुतिं प्रणाडयेन्द्रमेवव्राव्यामुवन् ॥ २ ॥

२. गमनशील सोम निम्नाभिमुखगामी जल के समान जाते हैं और अनन्तर इन्द्र को व्याप्त करते हैं।

अथ तृतीया—

प्रपवमानधन्वसिसोमेन्द्रायपातवे। नृभिर्यतोविनीयसे ॥ ३ ॥

प्र। पवमान। धन्वसि। सोम। इन्द्राय। पातवे।
नृऽभिः। यतः। वि। नीयसे ॥ ३ ॥

हे पवमानसोम इन्द्रायेन्द्रस्य पातवे पानाय प्रधन्वसि प्रगच्छसि आहवनीयंप्रति हविर्धानात्। तदेवाह—नृभिर्नेतृभिर्ऋत्विग्भिर्यतो विनीतो विनीयसे हविर्धानात्। अथवा पवमान प्रधन्वसि पात्रं प्रति इन्द्रपानाय तदर्थं हविर्धानाद्विनीयसे ॥ ३ ॥

३. शोधित सोम, मनुष्य तुम्हें जहाँ से ले जाते हैं, तुम वहीं से इन्द्र के पान के लिए जाते हो।

त्वंसोमनृमादनःपवस्वचर्षणीसहे। सस्नियोअनुमाद्यः ॥ ४ ॥

त्वम्। सोम। नृऽमादनः। पवस्व। चर्षणिऽसहे।

सस्निः। यः। अनुऽमाद्यः ॥ ४ ॥

हे सोम त्वं नृमादनः नृणां मादयिता त्वं चर्षणीसहे चर्षणयोमनुष्याद्वेष्टारः तेषां समभिभविने इन्द्राय पवस्व क्षर। यस्त्वं सस्निः शुद्धःअनुमाद्यः स्तुत्यः सपवस्वेति समन्वयः ॥ ४ ॥

४. सोम, तुम मनुष्यों के लिए मदकर हो। शत्रुओं को दबानेवाले इन्द्र के लिए सोम, तुम क्षरित होओ।

इन्दोयदद्रिभिःसुतःपवित्रंपरिधावसि। अरमिन्द्रस्यधाम्ने ॥ ५ ॥

इन्दो इति। यत्। अद्रिऽभिः। सुतः। पवित्रम्।

परिऽधावसि। अरम्। इन्द्रस्य। धाम्ने ॥ ५ ॥

हे इन्दो त्वं यद्यदा अद्रिभिर्ग्रावभिः सुतोभिषुतः पवित्रं दशापवित्रं परिधावसि परिगच्छसि। तदा इन्द्रस्य धाम्ने स्थानायाधारकाय उदराय वा अरं पर्याप्तोभवसि ॥ ५ ॥

५. सोम, तुम जिस समय प्रस्तर के द्वारा अभिषुत होकर दशापवित्र की ओर जाते हो, उस समय इन्द्र के उदर के लिए पर्याप्त होते हो।

पवस्ववृत्रहन्तमोक्थेभिरनुमाद्यः। शुचिःपावकोअद्भुतः ॥ ६ ॥

पवस्व। वृत्रहन्ऽतम। उक्थेभिः।

अनुऽमाद्यः। शुचिः। पावकः। अद्भुतः ॥ ६ ॥

हे वृत्रहन्तम शत्रूणां अतिशयेन हन्तरिन्द्र त्वं पवस्व क्षर। कीदृशस्त्वं उक्थेभिः शस्त्रैः अनुमाद्यः स्तुत्यः शुचिः शुद्धः पावकः अन्यस्यशोधकः अद्भुतो महान् एवं महानुभावः पवस्व ॥ ६ ॥

६. सर्वापेक्षा वृत्रघ्न इन्द्र, क्षरित होओ। तुम उक्थ मन्त्र के द्वारा स्तुत्य, शुद्ध, शोधक और अद्भुत हो।

अथ सप्तमी—

शुचिः पावक उच्यते सोमः सुतस्य मध्वः। देवावीरघशंसहा ॥७॥१४॥

शुचिः। पावकः। उच्यते। सोमः। सुतस्य।
मध्वः। देवऽअवीः। अघशंसऽहा ॥ ७॥ १४॥

सुतस्याभिषुतस्य मध्वः मदकरस्य वल्यात्मकः सोमोरसरूपः शुचिः स्वयं शुद्धः पावकः शोधकश्चोच्यते। तथा देवावीः देवानामविता तर्पयिता अघशंसहा अघं पापं शंसंतीत्यघशंसा असुराः तेषां हन्तेति चोच्यते ॥ ७॥

७. अभिषुत और मदकर सोम शुद्ध और शोधक कहे जाते हैं। वे देवों को प्रसन्न करनेवाले और शत्रुओं के विनाशक हैं।

॥ इति षष्ठस्याष्टमे चतुर्दशोवर्गः ॥ १४॥

॥ इति नवमे मंडले प्रथमोनुवाकः ॥ १॥

द्वितीयेनुवाके षट्त्रिंशत्सूक्तानि तत्र पवस्वेति षळृचं प्रथमं सूक्तं दृळ्हच्युतनाम्नोगस्त्यपुत्रस्यार्षं गायत्रं पवमानसोमदेवताकं। अनुक्रान्तंच—पवस्वषट् दृळ्हच्युतआगस्त्यइति। गतोविनियोगः।

तत्र प्रथमा—

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे। मरुद्भ्यो वायवे मदः ॥ १॥

पवस्व। दक्षऽसाधनः। देवेभ्यः। पीतये।
हरे। मरुत्ऽभ्यः। वायवे। मदः ॥ १॥

हे हरे हरितवर्ण पापहर्तर्वा सोम दक्षसाधनः दक्षोबलं तस्यसाधको मदोमदकरश्च त्वं पवस्व क्षर देवेभ्यः इन्द्रादिभ्यः पीतये पानाय। तथा मरुद्भ्योवायवेच पीतये पवस्व ॥ १॥

१. पाप-हर्त्ता सोम, तुम बल-साधक और मदकर हो। तुम देवों, मरुतों और वायु के पान के लिए क्षरित होओ।

अथ द्वितीया—

पवमान धिया हितो३ऽभि योनिं कनिक्रदत्। धर्मणा वायुमा विश ॥२॥

पवमान। धिया। हितः। अभि। योनिम्।
कनिक्रदत्। धर्मणा। वायुम्। आ। विश ॥ २॥

हे पवमान सोम धिया कर्मणा अस्मद्व्यापारेण अंगुल्यावा हितोधृतःसन् कनिक्रदत् शब्दंकुर्वन् योनिं स्थानं ग्रहं वा अभिविशेतिशेषः। तदेवाह धर्मणा कर्मणा वायुं वायुसंबंधिनं पात्रमित्यर्थः। तदाविश प्रविश ॥ २ ॥

२. शोधनकालीन सोम, हमारे कर्म से धृत होकर शब्द करते हुए अपने स्थान में प्रवेश करो। कर्म-द्वारा वायु में प्रवेश करो।

सं॒दे॒वैःशो॑भते॒वृषा॑क॒विर्योना॒वधि॑प्रि॒यः। वृ॒त्र॒हादे॑व॒वीत॑मः ॥ ३ ॥

सम्। दे॒वैः। शो॒भ॒ते॒। वृषा॑। क॒विः। योनौ॑।
अधि॑। प्रि॒यः। वृ॒त्र॒ऽहा। दे॒व॒ऽवीत॑मः ॥ ३ ॥

अयं सोमः संशोभते देवैः सह योनौ स्थाने स्वीये अधिष्ठितः वृषा कामानां वर्षकः कविः क्रान्तप्रज्ञः प्रियः प्रियभूतः सर्वेषां। यद्वा प्रीणयिता वृत्रहा वृत्रस्यहन्ता देववीतमः अतिशयेन देवान् कामयमानः एवं महानुभावः सोमः संशोभते ॥ ३ ॥

३. ये सोम अपने स्थान में अधिष्ठित, काम-वर्षक, क्रान्त, प्रज्ञ, प्रिय, वृत्रघ्न और अतीव देवाभिलाषी होकर शोधित होते हैं।

विश्वा॑रू॒पाण्या॒वि॒शन्पु॑ना॒नोया॑तिह॒र्य॒तः। यत्रा॒मृता॑स॒आस॑ते ॥४॥

विश्वा॑। रू॒पाणि॑। आ॒ऽवि॒शन्। पु॒ना॒नः।
या॒ति॒। ह॒र्य॒तः। यत्र॑। अ॒मृता॑सः। आस॑ते ॥ ४ ॥

विश्वा सर्वाणि रूपाणि आविशन् पुनानः पूयमानोहर्यतः कमनीयः हर्यगतिकान्त्योः। ईदृशोयाति गच्छति यत्रामृतासः अमृतादेवा आसते तिष्ठंति तं देशं याति ॥ ४ ॥

४. शोधित और कमनीय सोम सारे रूपों में प्रवेश करते हुए, जहाँ देवता रहते हैं, वहाँ जाते हैं।

अ॒रु॒षोज॒नय॒न्गिरः॒सोमः॑पवतआयु॒षक्। इन्द्रं॒गच्छ॒न्क॒विक्र॑तुः ॥५॥

अ॒रु॒षः। ज॒नय॑न्। गिरः॑। सोमः॑। प॒व॒ते॒।
आ॒यु॒षक्। इन्द्र॑म्। गच्छ॑न्। क॒विऽक्र॑तुः ॥ ५ ॥

अरुष आरोचमानः सोमोगिरः शब्दान् जनयन् पवते क्षरति। किंकुर्वन् आनुषक् अनुषक्तमिन्द्रं गच्छन् व्याप्नुवन् कविक्रतुः क्रान्तप्रज्ञः ॥ ५ ॥

५. शोभन सोम शब्द करते हुए क्षरित होते हैं। निकटवर्त्ती इन्द्र के पास जाकर प्रज्ञा से युक्त होते हैं।

अथ षष्ठी–

आपवस्वमदिन्तमपवित्रंधारयाकवे। अर्कस्ययोनिमासदम् ॥६॥१५॥

आ। पवस्व। मदिन्ऽतम। पवित्रम्। धारया।
कवे। अर्कस्य। योनिम्। आऽसदम् ॥ ६ ॥ १५ ॥

हे मदिन्तम मादयितृतम कवे क्रान्तप्रज्ञ सोम त्वं पवित्रं अतिक्रम्य धारया आपवस्व। किमर्थं अर्कस्यार्चनीयस्येन्द्रस्य योनिं स्थानं आसदं प्राप्तुम् ॥ ६ ॥

६. सर्वापेक्षा मदकर और कवि सोम, पूजनीय इन्द्र के स्थान को प्राप्त करने के लिए दशापवित्र को लाँघकर धारा के रूप में प्रवाहित होओ।

॥ इति षष्ठस्याष्टमे पञ्चदशोवर्गः ॥ १५ ॥

तममृक्षन्तेति षळृचं द्वितीयंसूक्तं दृह्लच्युतपुत्रस्य इध्मवाहनाम्नआर्षं गायत्रं पवमानसोमदेवताकं। अनुक्रान्तंच–तममृक्षन्तेध्मवाहो दार्ढच्युतइति। गतोविनियोगः।

तत्र प्रथमा–

तममृक्षन्तवाजिनमुपस्थेअदितेरधि। विप्रासोअण्व्याधिया ॥१॥

तम्। अमृक्षन्त। वाजिनम्। उपऽस्थे।
अदितेः। अधि। विप्रासः। अण्व्या। धिया ॥ १ ॥

तं वाजिनमश्वं अश्ववदाशुं व्याप्तमित्यर्थः अदितेः पृथिव्याउपस्थे उत्संगे अधीति सप्तम्यर्थानुवादी। अमृक्षन्त शोधितवन्तः। के विप्रासो मेधाविनोध्वर्य्वादयः। केन साधनेन अण्व्या अंगुल्या धिया प्रज्ञया स्तुत्या वा अमृक्षन्त अथवा अण्व्या सूक्ष्मया धिया अंगुल्येति विशेष्यविशेषणभावः ॥ १ ॥

१. पृथिवी की गोद में उस वेगवान् सोम को मेधावी लोग अङ्गुलि और स्तुति के द्वारा मार्जित करते हैं।

अथ द्वितीया–

तंगावोअभ्यनूषतसहस्रधारमक्षितम्। इन्दुंधर्तारमादिवः ॥ २ ॥

तम्। गावः। अभि। अनूषत। सहस्रऽधारम्।
अक्षितम्। इन्दुम्। धर्तारम्। आ। दिवः ॥ २ ॥

तं सोमं गावोगंत्र्यः स्तुतयः अभ्यनूषत अस्तुवन्। कीदृशं तं सहस्रधारं बहुधारं अक्षितं अक्षीणं इन्दुं दीप्तं दिवोद्युलोकस्य आधर्तारं सर्वतोधारकं सोमाधारत्वात् द्युलोकवासिनां संस्थानस्य ॥ २ ॥

२. स्तुतियाँ बहुधाराओंवाले, अक्षीण, दीप्त और स्वर्ग के धारक सोम की स्तुति करती हैं।

तंवे॒धांमे॒धया॑ह्य॒न्पव॑मान॒मधि॒द्यवि॑ । ध॒र्ण॒सिंभूरि॑धायसम् ॥ ३ ॥

तम् । वे॒धाम् । मे॒धया॑ । अ॒ह्य॒न् । पव॑मानम् ।
अधि॑ । द्यवि॑ । ध॒र्ण॒सिम् । भूरि॑ऽधायसम् ॥ ३ ॥

वेधां विधातारं पवमानं तं मेधया प्रज्ञया अह्यन् प्रहिन्वन्ति कं प्रति अधिद्यवि द्युलोकं प्रति। पुनः कीदृशं धर्णसिं सर्वस्यधारकं भूरिधायसं बहूनां कर्तारं ॥ ३ ॥

३. सबके धारक, बहु-कर्म-कारी, सबके विधाता और शुद्ध सोम को प्रज्ञा के द्वारा लोग स्वर्ग के प्रति प्रेरित करते हैं।

तम॑ह्य॒न्भु॒रिजो॑र्धि॒या सं॒वसा॑नं॒वि॒वस्व॑तः । पतिं॑वा॒चोअदा॑भ्यम् ॥४॥

तम् । अ॒ह्य॒न् । भु॒रिजोः॑ । धि॒या । स॒म्ऽवसा॑नम् ।
वि॒वस्व॑तः । पति॑म् । वा॒चः । अदा॑भ्यम् ॥ ४ ॥

तं सोमं विवस्वतः परिचरतः ऋत्विजोभुरिजोर्बाह्वोर्धिया अंगुल्या अह्यन् प्राहिन्वन्। कीदृशं तं संवसानं वसन्तं पात्रे। वाचः स्तुतेःपतिं स्वामिनं अदाभ्यं अदंभनीयम् ॥ ४ ॥

४. सोम पात्र में अवस्थित, स्तुति-पति और अहिंसनीय हैं। परिचर्याकारी ऋत्विक् दोनों हाथों की अँगुलियों से सोम को प्रेरित करते हैं।

तंसाना॒वधिजा॒मयो॒हरिं॑हिन्व॒न्त्यद्रि॑भिः । ह॒र्य॒तंभूरि॑चक्षसम् ॥५॥

तम् । सानौ॑ । अधि॑ । जा॒मयः॑ । हरि॑म् । हि॒न्व॒न्ति॒ ।
अद्रि॑ऽभिः । ह॒र्य॒तम् । भूरि॑ऽचक्षसम् ॥ ५ ॥

तं सोमं हरिं हरितवर्णं सानावधि समुच्छ्रितेदेशे अधीति सप्तम्यर्थानुवादी जामयोंगुलयः हिन्वंति प्रेरयन्ति अधिषुण्वंत्यद्रिभिर्ग्रावभिः। कीदृशं हर्यतं कमनीयं भूरिचक्षसं बहुद्रष्टारं ॥५॥

५. अँगुलियाँ उन हरित-वर्ण सोम को उन्नत प्रदेश में प्रेरित करती हैं। वे कमनीय और बहु-दर्शक हैं।

अथ षष्ठी–

तंत्वांहिन्वन्तिवेधसःपवमानगिरावृधम्। इन्दविन्द्रायमत्सरम्॥६॥१६॥

तम्। त्वा। हिन्वन्ति। वेधसः। पवमान।

गिराऽवृधम्। इन्दो इति। इन्द्राय। मत्सरम्॥ ६ ॥ १६ ॥

हे पवमानसोम उक्तगुणविशिष्टं तं त्वा त्वां हिन्वन्ति प्रेरयन्ति कस्मै इन्द्राय के वेधसो-विधातारऋत्विजः। कीदृशं त्वां गिरावृधं स्तुत्या वर्धमानं इंदुं दीप्तं सरूपं वा मत्सरं मद-करं॥ ६ ॥

६. शोधक सोम, तुम्हें ऋत्विक् लोग इन्द्र के लिए प्रेरित करते हैं। तुम स्तुति के द्वारा वर्द्धित, दीप्त और मदकर हो।

॥ इति षष्ठस्याष्टमे षोडशोवर्गः ॥ १६ ॥

एषकविरिति षळृचं तृतीयं सूक्तं नृमेधनाम्नआंगिरसस्यार्षं गायत्रं सौम्यं। एषकविर्नृ-मेधइत्यनुक्रान्तं। उक्तोविनियोगः।

तत्र प्रथमा–

एषकविरभिष्टुतःपवित्रेअधितोशते। पुनानोघ्नन्नपस्रिधः॥ १ ॥

एषः। कविः। अभिऽस्तुतः। पवित्रे। अधि।

तोशते। पुनानः। घ्नन्। अप। स्रिधः॥ १ ॥

एषसोमः कविर्मेधावी अभिष्टुतः अभितः स्तुतः पवित्रेअधि दशापवित्रमतीत्य तोशते। यद्यपि तोशतिर्वधकर्मा तथापि हनने गतिसद्भावादत्र गतिमात्रेवर्तते गच्छतीत्यर्थः। अथवा पवित्रेअधि कृष्णाजिने तोशते हन्यते पीड्यतइत्यर्थः। किंकुर्वन् पुनानः पूयमानः स्रिधः शत्रूनपघ्नन् अपगमयन्॥ १ ॥

१. ये सोम कवि और चारों ओर से स्तुत हैं। ये दशापवित्र को लाँघकर जाते हैं। ये शोधित होकर शत्रुविनाश करते हैं।

अथ द्वितीया–

एषइन्द्रायवायवेस्वर्जित्परिषिच्यते। पवित्रेदक्षसाधनः॥ २ ॥

एषः। इन्द्राय। वायवे। स्वःऽजित्। परि।

सिच्यते। पवित्रे। दक्षऽसाधनः॥ २ ॥

एषसोमः स्वर्जित् स्वर्गस्य सर्वस्य वा जेता सोम इन्द्राय वायवेच पवित्रे परिषिच्यते। कीदृश एषदक्षसाधनः बलकारी ॥ २ ॥

२. सोम सबके जेता और बलकारक हैं। इन्द्र और वायु के लिए इन्हें दशापवित्र में सिक्त किया जाता है।

एषनृभिर्विनीयतेदिवोमूर्धावृषासुतः। सोमोवनेषुविश्ववित् ॥ ३ ॥

एषः। नृऽभिः। वि। नीयते। दिवः। मूर्धा।
वृषा। सुतः। सोमः। वनेषु। विश्वऽवित् ॥ ३ ॥

एषसोमो नृभिः कर्मनेतृभिः ऋत्विग्भिर्विनीयते विविधं नीयते। एष कीदृशः दिवोद्यु-लोकस्य मूर्धा शिरोवत्प्रधानभूतः वृषा अभिमतवर्षकः सुतोभिषुतः। कुत्र नीयते वनेषु वननी-येषु पात्रेषु वनसंभूतद्रुमविकारेषुवा पात्रेषु। विश्ववित् सर्वज्ञएषइति समन्वयः ॥ ३ ॥

३. ये सोम मनुष्यों (ऋत्विकों) के द्वारा नाना प्रकारों से रखे जाते हैं। सोम द्युलोक के सिर हैं। ये मनोहर पात्र में अवस्थित हैं। वे अभिषुत और सर्वज्ञ हैं। अथ चतुर्थी—

एषगव्युरचिक्रदत्पवमानोहिरण्ययुः। इन्दुःसत्राजिदस्तृतः ॥ ४ ॥

एषः। गव्युः। अचिक्रदत्। पवमानः।
हिरण्यऽयुः। इन्दुः। सत्राऽजित्। अस्तृतः ॥ ४ ॥

एषसोमः पवमानः पूयमानः अचिक्रदत् शब्दंकरोति। कथंभूतःसन् गव्युः अस्माकं गा-इच्छन् हिरण्ययुः धनमिच्छन् इन्दुर्दीप्तःसन् सत्राजित् महतः शत्रोरसुरादेर्जेता अस्तृतः स्वयम-न्यैरहिंस्यश्चसन् ॥ ४ ॥

४. ये सोम शोधित होकर शब्द करते हैं। ये हमारी गौ और हिरण्य की इच्छा करते हैं। ये दीप्त, महाशत्रु-जेता और स्वयं अहिंस-नीय हैं। अथ पञ्चमी—

एषसूर्येणहासतेपवमानोअधिद्यवि। पवित्रेमत्सरोमदः ॥ ५ ॥

एषः। सूर्येण। हासते। पवमानः। अधि।
द्यवि। पवित्रे। मत्सरः। मदः ॥ ५ ॥

एषपवमानः पूयमानः सोमः सूर्येण देवेन अधिद्यवि द्युलोकेन्तरिक्षे पवित्रे हासते परि-त्यज्यते मत्सरो मदकरः मदः सोमः यद्यप्यध्वर्युहस्ताद्दशापवित्रे परित्यज्यते सोमः तथापि

अन्तरिक्षे सूर्येण पवित्रेत्यज्यतइति भावना वीर्यवत्वाय। सत्स्वप्यन्यदेवेषु सोमस्रावणे सूर्यस्य कःप्रसंगइति नवाच्यं सूर्यरश्मिभिरेव सोमस्याप्यायनात् ॥ ५ ॥

५. ये शोधक सोम, सूर्य के द्वारा पवित्र द्युलोक में परित्यक्त होते हैं। सोम अतीव मदकर हैं। अथ षष्ठी—

एषशुष्म्यसिष्यददन्तरिक्षेवृषाहरिः। पुनानइन्दुरिन्द्रमा॥६॥१७॥

एषः। शुष्मी। असिष्यदत्। अन्तरिक्षे। वृषा।

हरिः। पुनानः। इन्दुः। इन्द्रम्। आ॥ ६ ॥ १७ ॥

एषशुष्मी बलवान्सोमोन्तरिक्षे दशापवित्रे असिष्यदत् स्यन्दते। कीदृशएषः वृषा वर्षको-हरिर्हरितवर्णः पुनानः पयमानइन्दुर्दीप्तश्च इन्द्रमा इन्द्रंचाभिगच्छतीतिशेषः। आइतिचार्थे ॥ ६ ॥

६. ये बलवान् सोम अन्तरिक्ष (दशापवित्र) में जाते हैं। ये काम-वर्षक, हरित-वर्ण, पवित्र-कर्त्ता और दीप्त हैं। ये इन्द्र की ओर जाते हैं।

॥ इति षष्ठस्याष्टमे सप्तदशोवर्गः ॥ १७ ॥

एषवाजीति षळृचं चतुर्थं सूक्तं प्रियमेधस्यार्षं गायत्रं सौम्यं। एषवाजीप्रियमेधइत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

एषवाजीहितोनृभिर्विश्वविन्मनसस्पतिः। अव्योवारंविधावति ॥ १ ॥

एषः। वाजी। हितः। नृऽभिः। विश्वऽवित्। मनसः।

पतिः। अव्यः। वारम्। वि। धावति ॥ १ ॥

एषसोमो वाजी गमनशीलो नृभिः हितः अध्वर्युभिः पात्रेनिहितः विश्ववित् सर्वज्ञः मनसः स्तोत्रस्य पतिः स्वामी। अथवा सोमस्यमनोभिमानित्वात् मनसः स्वामित्वं। चन्द्रमा मनोभूत्वा हृदयं प्राविशदिति[1]श्रुतेः। तादृशोसौ अव्योवारं अवेर्वालं दशापवित्रं विधावति विविधं गच्छति ॥ १ ॥

१. ये सोम गमनशील, पात्र में स्थापित, सर्वज्ञ और सबके स्वामी हैं। ये मेषलोम पर दौड़ते हैं।

अथ द्वितीया—

एषपवित्रेअक्षरत्सोमोदेवेभ्यःसुतः। विश्वाधामान्याविशन् ॥ २ ॥

---

१ ऐतरेयोपनिषत्.।

एषः । पवित्रे । अक्षरत् । सोमः । देवेभ्यः । सुतः ।
विश्वा । धामानि । आऽविशन् ॥ २ ॥

एषसोमो देवेभ्यो देवार्थं सुतोभिषुतःसन् पवित्रेअक्षरत् स्रवति । विश्वा सर्वाणि धामानि देवशरीराणि आविशन् प्रविशन् प्रवेष्टुमित्यर्थः ॥ २ ॥

२. ये सोम देवों के लिए अभिषुत होकर उनके सारे शरीरों में प्रवेश पाने के लिए दशापवित्र में जाते हैं।

एषदेवःशुभायतेधियोनावमर्त्यः । वृत्रहादेववीतमः ॥ ३ ॥

एषः । देवः । शुभायते । अधि । योनौ ।
अमर्त्यः । वृत्रऽहा । देवऽवीतमः ॥ ३ ॥

एषसोमोदेवः शुभायते शोभते कुत्र अधियोनौ स्वीये स्थाने । कीदृशएषः अमर्त्यः अमरणधर्मा वृत्रहा शत्रुहन्ता देववीतमो विशेषेण देवानां कामयिता ॥ ३ ॥

३. ये अमर वृत्रघ्न और देवाभिलाषी सोम अपने स्थान में शोभा प्राप्त करते हैं। अथ चतुर्थी—

एषवृषाकनिक्रदद्दशभिर्जामिभिर्यतः । अभिद्रोणानिधावति ॥ ४ ॥

एषः । वृषा । कनिक्रदत् । दशऽभिः । जामिऽभिः ।
यतः । अभि । द्रोणानि । धावति ॥ ४ ॥

एषसोमः वृषा वर्षिता कामानां कनिक्रदत् शब्दंकुर्वन् दशभिर्जामिभिरंगुलिभिः यतोधृतो द्रोणानि द्रुममयानि पात्राण्यभिधावति अभिगच्छति ॥ ४ ॥

४. ये अभिलाषा-दाता, शब्दकर्त्ता और अँगुलियों के द्वारा धृत सोम द्रोण-कलस की ओर जाते हैं। अथ पंचमी—

एषसूर्यमरोचयत्पवमानोविचर्षणिः । विश्वाधामानिविश्ववित् ॥ ५ ॥

एषः । सूर्यम् । अरोचयत् । पवमानः ।
विऽचर्षणिः । विश्वा । धामानि । विश्वऽवित् ॥ ५ ॥

एषसोमः सूर्यमरोचयत् रोचयति स्वरसेन । पवमानः पूयमानो विचर्षणिः सर्वस्य द्रष्टा विश्ववित् सर्ववित् । नकेवलं सूर्यं किंतु विश्वा सर्वाणि धामानि तेजःस्थानानि रोचयति ॥ ५ ॥

५. शोधनकालीन, सबके द्रष्टा और सर्वज्ञ सोम सूर्य और समस्त तेजःपदार्थों को शोधित करते हैं।

अथ षष्ठी—

एषशुष्म्यदाभ्यःसोमःपुनानोअर्षति। देवावीरघशंसहा ॥६॥१८॥

एषः। शुष्मी। अदाभ्यः। सोमः। पुनानः।
अर्षति। देवऽअवीः। अघशंसऽहा ॥ ६ ॥ १८ ॥

एषसोमः शुष्मी बलवान् अदाभ्यः अदंभनीयः पुनानः पूयमानः अर्षति गच्छति देवावीर्देवानामविता अघशंसहा अघान् शंसतीत्यघशंसास्तेषां हन्ता ॥ ६ ॥

६. ये शोधनकालिक सोम बलवान् और अहिंसनीय हैं। ये देवों के रक्षक और पापियों के घातक हैं।

॥ इति षष्ठस्याष्टमेष्टादशोवर्गः ॥ १८ ॥

प्रास्येति षळृचं पंचमं सूक्तं नृमेधस्यांगिरसस्यार्षं गायत्रं पवमानसोमदेवताकं। अनुक्रम्यतेच—प्रास्यनृमेधइति। गतोविनियोगः।

तत्र प्रथमा—

प्रास्यधाराअक्षरन्वृष्णःसुतस्यौजसा। देवाँअनुप्रभूषतः ॥ १ ॥

प्र। अस्य। धाराः। अक्षरन्। वृष्णः। सुतस्य।
ओजसा। देवान्। अनु। प्रऽभूषतः ॥ १ ॥

अस्य सोमस्य वृष्णोवर्षकस्य सुतस्याभिषुतस्य देवाननु प्रभूषतः प्रभवितुमिच्छतः ओजसा स्ववीर्येण धाराः प्राक्षरन् प्रकर्षेण क्षरन्ति ॥ १ ॥

१. वर्षक, अभिषुत और देवों के ऊपर प्रभाव डालने की इच्छावाले इस सोम की धारा क्षरित होती है।

सप्तिंमृजन्तिवेधसोगृणन्तःकारवोगिरा। ज्योतिर्जज्ञानमुक्थ्यम् ॥२॥

सप्तिम्। मृजन्ति। वेधसः। गृणन्तः। कारवः।
गिरा। ज्योतिः। जज्ञानम्। उक्थ्यम् ॥ २ ॥

सप्तिं अश्वस्थानीयं सर्पणस्वभावं वा सोमं मृजन्ति शोधयन्ति। के गृणन्तः स्तुवन्तः वेधसोविधातारः कारवः कर्मकर्तारः अध्वर्य्वादयो गिरा स्तुत्या साधनेन। कीदृशं सप्तिं ज्योतिर्दीप्यमानं सोमं जज्ञानं जायमानं प्रवृद्धमित्यर्थः। अथवा ज्योतिर्जायमानं। अयंवैज्योतिर्यत्सोमइतिश्रुतेः। उक्थ्यं स्तुत्यं ॥ २ ॥

२. स्तोता, विधाता और कर्मकर्त्ता अध्वर्यु लोग दीप्तिमान्, प्रवृद्ध, स्तुत्य और सर्पण-स्वभाव सोम को मार्जित करते हैं।

अथ तृतीया—

सुषहांसोमतानितेपुनानायप्रभूवसो। वर्धासमुद्रमुक्थ्यम्॥ ३॥

सुऽसहा। सोम। तानि। ते। पुनानाय। प्रभुवसो इति प्रभुऽवसो। वर्ध। समुद्रम्। उक्थ्यम्॥ ३॥

हे सोम प्रभुवसो प्रभूतधन पुनानाय पूयमानस्य ते तव तानि तेजांसि सुषहा शोभनानि भावुकानि। यस्मादेवं तस्मात् समुद्रं समुद्रसदृशं द्रोणकलशं उक्थ्यं स्तुत्यं तं वर्ध वर्धय रसेन॥ ३॥

३. प्रभूत धनवाले सोम, शोधन-समय में तुम्हारे वे सब तेज शोभन होते हैं; इसलिए तुम समुद्र के समान और स्तुत्य द्रोण-कलस को पूर्ण करो।

अथ चतुर्थी—

विश्वावसूनिसंजयन्पवस्वसोमधारया। इनुद्वेषांसिसध्र्यक्॥ ४॥

विश्वा। वसूनि। सम्ऽजयन्। पवस्व। सोम। धारया। इनु। द्वेषांसि। सध्र्यक्॥ ४॥

हे सोम विश्वा सर्वाणि वसूनि अस्मदर्थं संजयन् पवस्व क्षर। धारया द्वेषांसि द्वेष्याणि सर्वाणि सध्र्यक् सहैव इनु प्रेरय दूरदेशंप्रति॥ ४॥

४. सोम, सारे धनों को जीतते हुए धारा-प्रवाह से गिरो और सारे शत्रुओं को एक साथ दूर देश में भेज दो।

रक्षासुनोअररुषःस्वनात्समस्यकस्यचित्। निदोयत्रमुमुच्महे॥ ५॥

रक्ष। सु। नः। अररुषः। स्वनात्। समस्य। कस्य। चित्। निदः। यत्र। मुमुच्महे॥ ५॥

हे सोम नोस्मान् सु सुष्ठु रक्ष पालय। कस्मात् अररुषः अदातुः स्वनात् शब्दात् निंदारूपात् किमेकस्यादानशीलस्य न समस्य सर्वस्य योस्ति तस्य सर्वस्य कस्यचित् कंचन अमुंचन्नित्यर्थः। नकेवलमदातुः स्वनात् किंतर्हि कस्यचित् कस्यापि निदो निंदकात् रक्ष। यत्र मुमुच्महे यस्मिन् रक्षणेसति वयं मुक्ताभवेम तेन रक्षणेन रक्षयेति॥ ५॥

५. सोम, जो दान नहीं करते, उनसे और अन्यान्य निन्दकों की निन्दा से हमारी रक्षा करो। ताकि हम मुक्त हो सकें।

अथ षष्ठी—

एन्दोपार्थिवंरयिंदिव्यंपवस्वधारया । द्युमन्तंशुष्ममाभर ॥६॥१९॥

आ । इन्दो इति । पार्थिवम् । रयिम् । दिव्यम् । पवस्व ।
धारया । द्युऽमन्तम् । शुष्मम् । आ । भर ॥ ६ ॥ १९ ॥

हे इन्दो क्लिद्यमान सोम त्वं धारया आपवस्व स्वर्वतः क्षर । पार्थिवं दिव्यंच रयिं धनं द्युमन्तं दीप्तिमन्तं शुष्मं बलं चाभर आहरास्मभ्यं ॥ ६ ॥

६. सोम, तुम धारा-रूप से क्षरित होओ। पृथिवीस्थ और स्वर्गीय धन तथा दीप्तिमान् बल को ले आओ।

॥ इति षष्ठस्याष्टमे एकोनविंशोवर्गः ॥ १९ ॥

प्रधाराइति षळृचं षष्ठं सूक्तं बिन्दुनाम्नआंगिरसस्यार्षं गायत्रं पवमानसोमदेवताकं । प्रधाराबिन्दुरित्यनुक्रमणिका । गतोविनियोगः ।

तत्र प्रथमा—

प्रधाराअस्यशुष्मिणोवृथापवित्रेअक्षरन् । पुनानोवाचमिष्यति ॥१॥

प्र । धाराः । अस्य । शुष्मिणः । वृथा । पवित्रे ।
अक्षरन् । पुनानः । वाचम् । इष्यति ॥ १ ॥

शुष्मिणोबलवतोस्य सोमस्य धाराः पवित्रे दशापवित्रे वृथा अप्रयत्नेन प्राक्षरन् स्रवन्ति । तदानीं पुनानः पूयमानः सोमो वाचं स्तुतिं स्वीयं ध्वनिं वा इष्यति प्रेरयति ॥ १ ॥

१. बली इन सोम की धारा अनायास दशापवित्र में गिर रही है। शोधन-समय में ये अपनी ध्वनि को प्रेरित करते हैं।

इन्दुर्हियानःसोतृभिर्मृज्यमानःकनिक्रदत् । इयर्तिवग्नुमिन्द्रियम् ॥ २॥

इन्दुः । हियानः । सोतृऽभिः । मृज्यमानः ।
कनिक्रदत् । इयर्ति । वग्नुम् । इन्द्रियम् ॥ २ ॥

अयमिन्दुर्दीप्तः सोमोहियानः प्रेर्यमाणोऽभिप्रियमाणः कैः सोतृभिर्ऋत्विग्भिः पश्चाद्दशापवित्रे मृज्यमानः शोध्यमानः कनिक्रदत् शब्दं कुर्वन् इन्द्रियमिन्द्रस्य संबन्धिनं इन्द्रियमपि करं वग्नुं शब्दमियर्ति प्रेरयति ग्रहणसमये ॥ २ ॥

२. ये सोम, अभिषवकारियों के द्वारा प्रेरित होकर, शोधन समय में शब्द करते हुए इन्द्र-सम्बन्धी शब्द प्रेरित करते हैं।

अथ तृतीया—

आ नः शुष्मं नृषाह्यं वीरवन्तं पुरुस्पृहम्। पवस्व सोम धारया ॥ ३ ॥

आ। नः। शुष्मम्। नृऽसह्यम्। वीरऽवन्तम्।
पुरुऽस्पृहम्। पवस्व। सोम। धारया ॥ ३ ॥

हे सोम त्वं धारया आपवस्व। किं शुष्मं बलं। कीदृशं नृषाह्यं नृणामस्मद्विरोधिनामभिभावुकं वीरवन्तं पुत्रोपेतं पुरुस्पृहं बहुभिः स्पृहणीयं नोऽस्माकं शुष्ममापवस्व एतस्यलाभाय पवस्वेत्यर्थः। रसस्रावेसति होमद्वारा तत्सिद्धे शुष्मं पवस्वेत्युपचर्यते ॥ ३ ॥

३. सोम, तुम धारा-रूप से क्षरित होओ। उससे मनुष्यों के अभिभवकर, वीरवान् और अनेकों के द्वारा अभिलषणीय बल प्राप्त हो।

प्र सोमो अति धारया पवमानो असिष्यदत्। अभि द्रोणान्यासदम् ॥ ४ ॥

प्र। सोमः। अति। धारया। पवमानः।
असिस्यदत्। अभि। द्रोणानि। आऽसदम् ॥ ४ ॥

अयं पवमानः सोमोधारया अति अतिक्रम्य दशापवित्रं प्रासिष्यदत् प्रस्यन्दते। किमर्थं द्रोणानि द्रोणकलशादीनि अभ्यासदं आसादनाय ॥ ४ ॥

४. शोधन-काल में ये सोम धारा-रूप से द्रोण-कलश में जाने के लिए दशापवित्र को लाँघकर क्षरित होते हैं।

अप्सु त्वा मधुमत्तमं हरिं हिन्वन्त्यद्रिभिः। इन्दविन्द्राय पीतये ॥ ५ ॥

अप्ऽसु। त्वा। मधुमत्ऽतमम्। हरिम्।
हिन्वन्ति। अद्रिऽभिः। इन्दो इति। इन्द्राय। पीतये ॥ ५ ॥

हे इन्दो सोम अप्सु वसतीवरीषूदकेषु मधुमत्तमं अतिशयेन मधुमन्तं हरिं हरितवर्णं त्वा त्वां अद्रिभिरभिषवग्रावभिर्हिन्वंति प्रेरयन्ति। किमर्थं इन्द्रायेन्द्रस्य पीतये पानाय ॥ ५ ॥

५. सोम, तुम जल (वसतीवरी) में सबसे अधिक मधुर और हरितवर्ण (हरे रंग के) हो। इन्द्र के पान के लिए तुम्हें पत्थर से पीसा जाता है।

अथ षष्ठी—

सुनोता मधुमत्तमं सोममिन्द्राय वज्रिणे। चारुं शर्धाय मत्सरम् ॥ ६ ॥ २० ॥

सुनोत । मधुमत्ऽतमम् । सोमम् । इन्द्राय ।

वज्रिणे । चारुम् । शर्धाय । मत्सरम् ॥ ६ ॥ २० ॥

हे ऋत्विजोयूयं मधुमत्तमं मधुररसोपेतं सोमं इन्द्राय वज्रिणे वज्रयुक्ताय सुनोत सुनुत। पुनःकीदृशं चारुं चरणीयं मत्सरं मदकरं शर्धायास्माकं बलाय इन्द्रस्य पानायच सोमं सुनुतेतिब्रूते यजमानः स्वीयान् ॥ ६ ॥

६. ऋत्विको, तुम लोग अत्यन्त मधुर रसवाले, मनोहर और मदकर सोम को हमारे बलार्थ, इन्द्र के पान के लिए, अभिषुत करो।

॥ इति षष्ठस्याष्टमे विंशोवर्गः ॥ २० ॥

प्रसोमासइति षळृचं सप्तमं सूक्तं राहूगणस्य गोतमस्यार्षं सौम्यं गायत्रं । प्रसोमासोगोतमइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

प्रसोमासःस्वाध्यं१ःपवमानासोअक्रमुः । रयिंकृण्वन्तिचेतनम् ॥ १ ॥

प्र । सोमासः । सुऽआध्यः । पवमानासः ।

अक्रमुः । रयिम् । कृण्वन्ति । चेतनम् ॥ १ ॥

प्राक्रमुः प्रायच्छन्ति कलशंप्रति । केसोमासः सोमाः । कीदृशाः स्वाध्यः सुध्यानाः सुकर्माणोवा पवमानासः पूयमानाः चेतनं प्रज्ञापनं रयिं धनं कृण्वन्ति कुर्वंत्यस्माकम् ॥ १ ॥

१. उत्तम कर्मवाले और शोधनकालीन सोम जा रहे हैं। वे हमें प्रज्ञापक धन दे रहे हैं। अथ द्वितीया—

दिवस्पृथिव्याअधिभवेन्दोद्युम्नवर्धनः । भवावाजानांपतिः ॥ २ ॥

दिवः । पृथिव्याः । अधि । भव । इन्दो इति ।

द्युम्नऽवर्धनः । भव । वाजानाम् । पतिः ॥ २ ॥

हे इन्दो वाजानामन्नानांपतिः स्वामी त्वं दिवोद्युलोकस्य पृथिव्या भूलोकस्यअधि द्युम्नवर्धनो द्योतमानस्य हिरण्यादिलक्षणधनस्य वर्धयिता भव अस्माकं लोकद्वये यत् द्युम्नमस्ति तस्य वर्धयिता भवास्मभ्यमित्यर्थः ॥ २ ॥

२. सोम, तुम अन्नों के स्वामी हो। तुम द्यावापृथिवी के प्रकाशक धन के वर्द्धक होओ। अथ तृतीया—

तुभ्यंवाताअभिप्रियस्तुभ्यमर्षन्तिसिन्धवः । सोमवर्धन्तितेमहः ॥ ३ ॥

तुभ्यम् । वाताः । अभिऽप्रियः । तुभ्यम् ।
अर्षन्ति । सिन्धवः । सोम । वर्धन्ति । ते । महः ॥ ३ ॥

हे सोम तुभ्यं त्वदर्थं वाता वायवः अभिप्रियोभितर्पयितारोभवन्ति । तथा सिन्धवः स्यन्दमाना नद्यः तुभ्यं अर्षन्ति गच्छन्ति अभिषूयमाणस्य तवाप्यायनायैवं कुर्वन्तीत्यर्थः । तदुभये अमी ते तव महो महत्वं वर्धन्ति वर्धयन्ति ॥ ३ ॥

३. सारे वायु तुम्हारे लिए तृप्तिकर होते हैं; नदियाँ तुम्हारे लिए जाती हैं। वे तुम्हारी महिमा को बढ़ावें।

आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् । भवावाजस्यसंगथे ॥४॥

आ । प्यायस्व । सम् । एतु । ते । विश्वतः ।
सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ॥ ४ ॥

हे सोम त्वं वायुभिरद्भिश्चाप्यायस्व प्रवृद्धोभव । ते त्वां विश्वतोवृष्ण्यं वर्षयोग्यं बलं समेतु संगच्छतां । संगथे संग्रामे वाजस्यान्नस्य प्रापको भव ॥ ४ ॥

४. सोम, तुम वायु और जल के द्वारा प्रवृद्ध होओ। वर्षक बल तुममें चारों ओर से मिले। तुम संग्राम में अन्न के प्रापक होओ।

तुभ्यंगावोघृतंपयोबभ्रोदुदुह्रेअक्षितम् । वर्षिष्ठेअधिसानवि ॥ ५॥

तुभ्यम् । गावः । घृतम् । पयः । बभ्रो इति ।
दुदुह्रे । अक्षितम् । वर्षिष्ठे । अधि । सानवि ॥ ५ ॥

हे बभ्रो बभ्रुवर्ण सोम तुभ्यं त्वदर्थं गावोघृतं पयश्च अक्षितं अक्षीणं दुदुह्रे दुहते वर्षिष्ठे प्रवृद्धे अधिसानवि समुच्छ्रिते प्रदेशे स्थिताय तुभ्यं ॥ ५ ॥

५. पिङ्गलवर्ण सोम, गो-समूह तुम्हारे लिए घृत और अक्षीण दुग्ध दोहन करता है। तुम उन्नत प्रदेश में अवस्थित हो।

अथषष्ठी—

स्वायुधस्यतेसतोभुवनस्यपतेवयम् । इन्दोसखित्वमुश्मसि ॥६॥२१॥

सुऽआयुधस्य । ते । सतः । भुवनस्य । पते ।
वयम् । इन्दो इति । सखिऽत्वम् । उश्मसि ॥ ६ ॥ २१ ॥

हे भुवनस्य भूतजातस्य पते स्वामिन् पालक सोम। सोमस्य जगदाप्यायकत्वं तत्स्वामित्वं। हे इन्दो सोम वयं अनुष्ठातारः स्वायुधस्य ते तव सतः सखित्वमुश्मसि कामयामहे ॥६॥

६. भुवन के पति सोम, हम तुम्हारे बन्धुत्व की कामना करते हैं। तुम उत्तम आयुधवाले हो।

॥ इति षष्ठस्याष्टमे एकविंशोवर्गः ॥ २१ ॥

प्रसोमासइति षळृचमष्टमं सूक्तं आत्रेयस्य श्यावाश्वस्यार्षं गायत्रं सौम्यं। अनुक्रम्यते-च—प्रसोमासःश्यावाश्वइति। गतोविनियोगः।

तत्र प्रथमा—

प्रसोमा॑सोमद॒च्युत॒ःश्रव॑सेनोम॒घोन॑ः। सु॒ताविद॒थे॑अक्रमुः ॥ १ ॥

प्र। सोमा॑सः। म॒द॒ऽच्युत॑ः। श्रव॑से। न॒ः।
म॒घोन॑ः। सु॒ताः। वि॒दथे॑। अ॒क्र॒मुः॥ १ ॥

सोमासः सोमा मदच्युतो मदस्राविणः सुताअभिषुताः सन्तो विदथे यज्ञे मघोनो हविष्मतो नोस्मान् श्रवसे अन्नाय कीर्तयेवा प्राक्रमुः प्रगच्छन्ति ॥ १ ॥

१. सोम मदस्रावी और अभिषुत होकर यज्ञ में हव्यदाता के अन्न के लिए जाते हैं।

अथ द्वितीया—

आदीं॑त्रि॒तस्य॒योष॑णो॒हरिं॑हिन्व॒न्त्यद्रि॑भिः। इन्दु॒मिन्द्रा॑यपी॒तये॑॥२॥

आत्। ई॒म्। त्रि॒तस्य॑। योष॑णः। हरि॑म्। हि॒न्व॒न्ति॒।
अद्रि॑ऽभिः। इन्दु॑म्। इन्द्रा॑य। पी॒तये॑॥ २ ॥

आत् अपिच ईं एनं हरिं हरितवर्णं सोमं त्रितस्य ऋषेर्योषणोंगुल्य अद्रिभिर्ग्रावभिः हिन्वन्ति प्रेरयन्ति। किमर्थं इन्दुं दीप्तं सोमं इन्द्राय इन्द्रस्य पीतये पानाय ॥ २ ॥

२. इन्द्र के पान के लिए इन हरित-वर्ण सोम को त्रित ऋषि की अंगुलियां पत्थर से प्रेरित करती हैं।

अथ तृतीया—

आदीं॑हं॒सोयथा॑ग॒णंविश्व॑स्यावीवश॒न्म॒तिम्। अत्यो॒नगोभि॑रज्यते॥३॥

आत्। ई॒म्। हं॒सः। यथा॑। ग॒णम्। विश्व॑स्य।
अ॒वी॒व॒श॒त्। म॒तिम्। अत्य॑ः। न। गोभि॑ः। अ॒ज्य॒ते॒॥ ३ ॥

आव् अपिच ईमयं सोमो हंसो यथा गणं जनसंघं स्वगतिविशेषेण स्वनेन वा प्रविशति तद्वद्विश्वस्य सर्वस्य स्तोतृजनस्य मतिं स्तुतिं बुद्धिं वा अवीवशत् वशं नयति। सच सोमः अत्यो न अश्वइव गोभिर्गव्यैरुदकैर्वा अज्यते सिच्यते स्निग्धीक्रियते ॥ ३ ॥

३. जैसे हंस जल में प्रवेश करता है, वैसे ही सोम सारे स्तोताओं के मन को वश में करते हैं। ये सोम गव्य के द्वारा स्निग्ध होते हैं।

उभेसोमावचाकशन्मृगोनतक्तोअर्षसि। सीदन्नृतस्ययोनिमा ॥४॥

उभे इति। सोम। अवऽचाकशत्। मृगः। न।
तक्तः। अर्षसि। सीदन्। ऋतस्य। योनिम्। आ ॥ ४ ॥

हे सोम उभे द्यावापृथिव्यौ अवचाकशत् पश्यतिकर्मैदं पश्यन् मृगो न मृगइव तक्तोगव्यैः पयआदिभिर्मिश्रितःसन्। दध्ना तनक्तीत्यादौ तथा दृष्टत्वात्। अर्षसि गच्छसि च। किं कुर्वन् ऋतस्य यज्ञस्य योनिं स्थानं आसीदन् आश्रयन् गच्छसि यज्ञसाधनाय गच्छसीत्यर्थः ॥ ४ ॥

४. सोम, तुम यज्ञ-स्थान को आश्रय करते हुए, मिश्रित होकर, मृग के समान, द्यावापृथिवी को देखते हो।

अभिगावोअनूषतयोषाजारमिवप्रियम्। अगन्नाजिंयथाहितम् ॥५॥

अभि। गावः। अनूषत। योषा। जारम्ऽइव।
प्रियम्। अगन्। आजिम्। यथा। हितम् ॥ ५ ॥

हे सोम त्वां गावः शब्दाः अभ्यनूषत अभिष्टुवन्ति। योषा प्रियं जारमिव सा यथा तं स्तौति तद्वत्। ससोमः आजिं गंतव्यं हितं मित्रमिव तं यथा अन्यः अगन् स्वहिताय गच्छति तद्वत्। अथवा हितं धनमापकत्वेन हितकरं वा आजिं शूरइव अयमागच्छति पात्रं ॥५॥

५. जैसे रमणी जार की स्तुति करती है, वैसे ही, हे सोम, शब्द तुम्हारी स्तुति करते हैं। वे सोम, मित्र के समान, अपने हितार्थ गन्तव्य स्थान को जाते हैं।

अथ षष्ठी—

अस्मेधेहिद्युमद्यशोमघवद्भ्यश्चमह्यंच। सनिंमेधामुतश्रवः ॥६॥२२॥

अस्मे इति। धेहि। द्युऽमत्। यशः। मघवत्ऽभ्यः।
च। मह्यम्। च। सनिम्। मेधाम्। उत। श्रवः ॥ ६ ॥ २२ ॥

हे सोम अस्मे अस्मभ्यं द्युमद् दीप्तिमद् यशोन्नं धेहि देहि । कीदृशेभ्योस्मभ्यं मघवद्भ्यश्च हविर्लक्षणान्नवद्भ्यश्च मह्यंच स्तुतिकर्त्रेच । अथवा मह्यमस्मभ्यमित्यर्थः । अस्मे मघवद्भ्यश्च मह्यंचेति तेषामेवाशंसनाभेदादुभयत्र चशब्दोयुक्तः । किंच सनिं धनं मेधां प्रज्ञां उतापिच श्रवः कीर्तिं च धेहि ॥ ६ ॥

६. सोम, हम हविवाले और मुझ स्तोता के लिए दीप्तिशाली अन्न प्रदान करो। धन मेधा और कीर्त्ति दो।

॥ इति षष्ठस्याष्टमे द्वाविंशोवर्गः ॥ २२ ॥

प्रसोमासइति षळृचं नवमं सूक्तं त्रितस्यार्षं गायत्रं पवमानसोमदेवताकं । प्रसोमासस्त्रितइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

प्रसोमा॑सोविप॒श्चितो॒ऽपां॑नय॑न्त्यू॒र्मय॑ः । वना॑निमहि॒षाइ॑व ॥ १ ॥

प्र । सोमा॑सः । वि॒प॒ःऽचित॑ः । अ॒पाम् । न ।
य॒न्ति॒ । ऊ॒र्मय॑ः । वना॑नि । म॒हि॒षाःऽइ॑व ॥ १ ॥

विपश्चितोमेधाविनः सोमासः सोमाः प्रनयन्ति प्रगच्छन्ति पात्राणिप्रति । किमिव अपामूर्मयः न । तेयथा सन्ततमुद्भवन्ति तद्वद् । बाहुल्येअयं दृष्टान्तः । दर्शतो गमनेदृष्टान्तान्तरमभिधीयते—वनानि महिषाः प्रवृद्धा मृगाइव । अथवा स्वाश्रयाद् प्रपतने प्रथमोदृष्टान्तः द्वितीयस्तु दशापवित्रादधः प्रवेशे ॥ १ ॥

१. मेधावी सोम पात्रों के प्रति, जल-तरंग के समान, जाते हैं, वृद्ध मृग जैसे वन में जाते हैं, वैसे ही सोम जाते हैं।

अ॒भिद्रोणा॑निब॒भ्रव॑ःशु॒क्राऋ॒तस्य॒धार॑या । वाजं॒गोम॑न्तमक्षरन् ॥२॥

अ॒भि । द्रोणा॑नि । ब॒भ्रव॑ः । शु॒क्राः । ऋ॒तस्य॑ ।
धार॑या । वाज॑म् । गोऽम॑न्तम् । अ॒क्ष॒र॒न् ॥ २ ॥

अभि क्षरन्तीतिशेषः । उपसर्गश्रुतेरुचितक्रियाध्याहारः । प्रति द्रोणानि द्रोणकलशान् यद्यपि द्रोणकलशएकएव तथापि तत्प्राधान्यादितरेपिपात्रा द्रोणाइत्युच्यन्ते अथवैकस्मिन्नेव पूजार्थं बहुवचनं । के बभ्रवो बभ्रुवर्णाः सोमाः शुक्रादीप्ताः । केन प्रकारेण ऋतस्यामृतस्य धारया धाराकारेण । किंच वाजमन्नं गोमन्तं बहुगोयुक्तं अक्षरन् क्षरन्ति अस्माकं अथवैकमेववाक्यं उक्तविधाः सोमाः द्रोणान् प्रत्यक्षरन् धारया किंकुर्वन्तो गोमन्तं वाजं प्रयच्छन्तइत्यर्थः ॥ २ ॥

२. पिङ्गल-वर्ण और दीप्त सोम, गोमान् अन्न प्रदान करते हुए, धारा-रूप से द्रोण-कलश में झरते हैं।

अथ तृतीया–

सुताइन्द्रायवायवेवरुणायमरुद्भ्यः। सोमाअर्षन्तिविष्णवे ॥ ३ ॥

सुताः। इन्द्राय। वायवे। वरुणाय।

मरुत्ऽभ्यः। सोमाः। अर्षन्ति। विष्णवे ॥ ३ ॥

सुता अभिषुताः सोमाः इन्द्राय इन्द्रार्थं वायवेच वरुणायच मरुद्भ्यश्च विष्णवेच एषामर्थं अर्षन्ति गच्छन्ति ॥ ३ ॥

३. अभिषुत सोम इन्द्र, वायु, वरुण, मरुद्गण और विष्णु के प्रति गमन करते हैं।

अथ चतुर्थी–

तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः। हरिरेतिकनिक्रदत् ॥ ४ ॥

तिस्रः। वाचः। उत्। ईरते। गावः। मिमन्ति।

धेनवः। हरिः। एति। कनिक्रदत् ॥ ४ ॥

तिस्रोवाचः ऋगादिभेदेन त्रिविधास्तुतिरुदीरते मोद्गमयन्ति ऋत्विजः। धेनवः आशिरेण प्रीणयित्र्योगावः मिमन्ति शब्दयन्ति दोहार्थं। हरिर्हरितवर्णश्च सोमः कनिक्रदच्छब्दंकुर्वन्नेति गच्छति कलशं ॥ ४ ॥

४. ऋक् आदि तीन वाक्य (स्तुतियाँ) उच्चारित हो रहे हैं। दूध देने के लिए गायें शब्द कर रही हैं। हरित-वर्ण सोम शब्द करते हुए गमन करते हैं।

अथ पञ्चमी–

अभिब्रह्मीरनूषतयह्वीऋतस्यमातरः। मर्मृज्यन्तेदिवःशिशुम् ॥५॥

अभि। ब्रह्मीः। अनूषत। यह्वीः। ऋतस्य।

मातरः। मर्मृज्यन्ते। दिवः। शिशुम् ॥ ५ ॥

ब्रह्मीर्ब्राह्मणप्रेरिताः यह्वीर्महत्यः यह्वइतिमहन्नाम ऋतस्य यज्ञस्य मातरोनिर्मात्र्यः स्तुतयोऽभ्यनूषत स्तुवन्ति। किं दिवोद्युदेवतायाः शिशुं शिशुस्थानीयं सोमं तमेव मर्मृज्यन्ते मृजन्ति। तृतीयस्यामितोदिवि सोमआसीदित्यादिश्रुतेः[1]। द्युशिशुत्वं तस्य ॥ ५ ॥

५. स्तोताओं (ब्राह्मणों) के द्वारा प्रेरित, यज्ञ की मातृ-स्वरूपा और महती स्तुतियाँ उच्चारित हो रही हैं और द्युलोक के शिशु-समान सोम मार्जित हो रहे हैं।

---

1 तै० ब्रा० ३. २. १.।

अथ षष्ठी—

रायः॑ समु॒द्राँश्च॒तुरो॒ऽस्मभ्यं॑ सोम वि॒श्वतः॑ । आ प॑वस्व सह॒स्रिणः॑ ॥६॥२३॥

रा॒यः । स॒मु॒द्रान् । च॒तुरः॑ । अ॒स्मभ्य॑म् । सो॒म॒ ।
वि॒श्वतः॑ । आ । प॒व॒स्व॒ । स॒ह॒स्रिणः॑ ॥ ६ ॥ २३ ॥

रायो धनस्य संबन्धिनः चतुरः समुद्रान् धनपूर्णानित्यर्थः तादृशान्समुद्रानस्मभ्यमर्थाय हे सोम विश्वतः सर्वतः आपवस्व । तथा सहस्रिणः अपरिमितान्कामानापवस्व आयच्छ । चतुःसमुद्रस्थधनविशेषमाप्तेः तन्मध्यगतभूमिस्वामित्वमन्तरेणासंभवाच्चतुःसमुद्रमुद्रितभूमंडलस्वामित्वमेवाशास्ते यजमानः ॥ ६ ॥

६. सोम, धन-सम्बन्धी चारों समुद्रों (अर्थात् चारों समुद्रों से वेष्टित निखिल भूमण्डल के स्वामित्व) को चारों दिशाओं से हमारे पास ले आओ और असीम अभिलाषाओं को भी ले आओ।

॥ इति षष्ठस्याष्टमे त्रयोविंशोवर्गः ॥ २३ ॥

प्रसुवानइति षळृचं दशमं सूक्तं ऋष्याद्याः पूर्ववत् । प्रसुवानइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

प्र सु॑वा॒नो धार॑या॒ तनेन्दु॑र्हिन्वा॒नो अ॑र्षति । रु॒जद्दृ॒ळ्हा व्योज॑सा ॥ १॥

प्र । सु॒वा॒नः । धार॑या । तना॑ । इन्दुः॑ । हि॒न्वा॒नः ।
अ॒र्ष॒ति॒ । रु॒जत् । दृ॒ळ्हा । वि । ओज॑सा ॥ १ ॥

इंदुः सोमः सुवानः सूयमानः हिन्वानोध्वर्युणा प्रेर्यमाणो धारया तना पवित्रं मार्षति गच्छति । अथ प्रत्यक्षेणोच्यते दृळ्हा दृढान्यपि शत्रुपुराणि ओजसा बलेन विरुजत् विरुजति विश्लथयति ॥ १ ॥

१. अभिषुत सोम प्रेरित होकर धारा-रूप से दशापवित्र में जाते हैं और सुदृढ़ शत्रुओं-पुरियों को भी ढीली करते हैं।

अथ द्वितीया—

सु॒त इन्द्रा॑य वा॒यवे॒ वरु॑णाय म॒रुद्भ्यः॑ । सोमो॑ अर्षति॒ विष्ण॑वे ॥ २ ॥

सु॒तः । इन्द्रा॑य । वा॒यवे॑ । वरु॑णाय ।
म॒रुत्ऽभ्यः॑ । सोमः॑ । अ॒र्ष॒ति॒ । विष्ण॑वे ॥ २ ॥

अयं सुतोभिषुतः सोम इन्द्राद्यर्थं अर्षति गच्छति इन्द्राय वायवे वरुणाय मरुद्भ्यश्च विष्णवेच अर्षति गच्छति ॥ २ ॥

२. अभिषुत सोम इन्द्र, वायु, वरुण, मरुद्गण और विष्णु के अभिमुख जाते हैं।

अथ तृतीया—

वृषाणंवृषभिर्यतंसुन्वन्तिसोममद्रिभिः । दुहन्तिशक्मनापयः॥३॥

वृषाणम् । वृषऽभिः । यतम् । सुन्वन्ति । सोमम् ।
अद्रिऽभिः । दुहन्ति । शक्मना । पयः ॥ ३ ॥

वृषाणं रससेक्तारं यतं नियतं सोमं वृषभीरसस्यवर्षकैरद्रिभिर्ग्रावभिः सुन्वन्ति शक्मना कर्मणा दुहंत्यध्वर्य्वादयः पयः सोमरसं । सोमं पयोदुहन्तीति द्विकर्मकोयम् ॥ ३ ॥

३. अध्वर्यु लोग, रस के सेचक और नियत सोम को वर्षक प्रस्तर के द्वारा अभिषुत करते हैं। वे कर्म-बल से सोम-रूप दुग्ध को दूहते हैं।

भुवत्त्रितस्यमर्ज्योभुवदिन्द्रायमत्सरः । संरूपैरज्यतेहरिः ॥ ४ ॥

भुवत् । त्रितस्य । मर्ज्यः । भुवत् । इन्द्राय ।
मत्सरः । सम् । रूपैः । अज्यते । हरिः ॥ ४ ॥

त्रितस्य सूक्तद्रष्टुर्ऋषेः सोयं मत्सरो मदकरः सोमो मर्ज्यो भुवत् शुद्धोभवति तस्य यागार्थं शेषपानार्थंच तथा इन्द्रायेन्द्रपानाय मर्ज्योभुवत् रूपै रूपकैश्च क्षीरादिभिर्हरिर्हरितवर्णः सोमः समज्यते ॥ ४ ॥

४. त्रित ऋषि का मदकर सोम उनके लिए और इन्द्र के पान के लिए शुद्ध हो रहा है। वे हरित-वर्ण सोम अपने रूप से प्राप्त हुए हैं।

अभीमृतस्यविष्टपंदुहतेपृश्निमातरः । चारुप्रियतमंहविः ॥ ५ ॥

अभि । ईम् । ऋतस्य । विष्टपम् । दुहते ।
पृश्निऽमातरः । चारु । प्रियऽतमम् । हविः ॥ ५ ॥

ईमेनं सोमं ऋतस्य विष्टपं स्थानं यज्ञाश्रयमित्यर्थः तादृशं पृश्निमातरोमरुतोभिदुहते । किंप्रियतममिन्द्रादीनां हविर्होमसाधनं चारु रमणीयं सोमं मरुत्प्रेरितवृष्ट्या सोमवृद्धेस्तद्दोग्धृत्वं ॥ ५ ॥

५. पृश्नि के पुत्र मरुद्गण यज्ञाश्रय, होमसाधक और रमणीय सोम का दोहन करते हैं।

अथ षष्ठी–

समेनमह्रुताइमागिरोअर्षन्तिसस्रुतः। धेनूर्वाश्रोअवीवशत् ॥६॥२४॥

सम् । एनम् । अह्रुताः । इमाः । गिरः । अर्षन्ति ।

सऽस्रुतः । धेनूः । वाश्रः । अवीवशत् ॥ ६ ॥ २४ ॥

समर्षन्ति संगच्छन्ते एनं सोमं अह्रुता अकुटिलागिरोस्मदीयाःस्तुतयः सस्रुवः सरंत्यः ताश्च धेनूः प्रीणयित्र्यः स्तुतीर्वाश्रः शब्दयन् अवीवशत् कामयते सोमः ॥ ६ ॥

६. अकुटिल स्तुतियां उच्चारित होकर सोम के साथ मिल रही हैं। सोम भी शब्द करते हुए प्रीतिकर स्तुतियों की कामना करते हैं।

॥ इति षष्ठस्याष्टमे चतुर्विंशोवर्गः ॥ २४ ॥

आनइति षळृचमेकादशं सूक्तं आंगिरसस्य प्रभूवसोरार्षं गायत्रं पवमानसोमदेवताकं । अनुक्रान्तंच–आनःपवस्वप्रभूवसुरिति । गतोविनियोगः ।

तत्र प्रथमा–

आनःपवस्वधारयापवमानरयिंपृथुम् । ययाज्योतिर्विदासिनः ॥१॥

आ । नः । पवस्व । धारया । पवमान । रयिम् ।

पृथुम् । यया । ज्योतिः । विदासि । नः ॥ १ ॥

हे पवमानसोम त्वं धारया नोस्माकं आपवस्व सर्वतः क्षर । किं रयिं धनं पृथुं विस्तीर्णं यया धारया ज्योतिर्द्योतमानं यज्ञं स्वर्गंवा विदासि लंभयसि नोस्माकं ॥ १ ॥

१. प्रवाह-शील सोम, तुम धारा-रूप से हमारे चारों ओर क्षरित होओ। विस्तीर्ण धन और प्रकाशमान यज्ञ हमें दो।

इन्दोसमुद्रमीङ्खयपवस्वविश्वमेजय। रायोधर्तानओजसा ॥ २॥

इन्दो इति । समुद्रम्ऽईङ्खय । पवस्व ।

विश्वम्ऽएजय । रायः । धर्ता । नः । ओजसा ॥ २ ॥

हे इन्दो सोम हे समुद्रमींखय समुद्रमित्युदकनाम ईंखयतिर्गतिकर्मा उदकप्रेरक तथा हे विश्वमेजय विश्वस्य सर्वस्यास्मच्छत्रोः कंपयितः सोम त्वं ओजसा त्वदीयेन बलेन नोस्मभ्यं रायो धनस्य धर्ता धारकः पवस्व भवेत्यर्थः। अत्र यद्यप्युदकप्रेरणसर्वशत्रुकंपने संबोधनान्तर्गतत्वादुद्देश्यगते तथापि यजमानस्यापेक्षितेइति रायो धर्तृत्ववदाशास्ये अधिगन्तव्ये ॥ २ ॥

२. जल-प्रेरक और शत्रुओं को कंपानेवाले सोम, अपने बल से तुम हमारे धन के धारक होओ।

अथ तृतीया—

त्वयावीरेणवीरवोभिष्यामपृतन्यतः । क्षराणोअभिवार्यम् ॥ ३ ॥

त्वया । वीरेण । वीरऽवः । अभि । स्याम ।

पृतन्यतः । क्षर । नः । अभि । वार्यम् ॥ ३ ॥

हे वीरवो वीरवन् सोम वीरेण त्वया साधनेन पृतन्यतः संग्राममिच्छतः शत्रूनभिष्याम अभिभवेम अतोनोस्माकं वार्यं वरणीयं धनमभिक्षर अभिगमयेत्यर्थः । अथवा वरणीयं सोमाख्यं धनं क्षर पवस्व ॥ ३ ॥

३. वीर सोम, तुम्हारे बल से हम संग्रामाभिलाषी शत्रुओं को हरावेंगे। हमारे सामने स्वीकार के योग्य धन भेजो।

प्रवाजमिन्दुरिष्यतिसिषासन्वाजसाऋषिः । व्रताविदानआयुधा ॥४॥

प्र । वाजम् । इन्दुः । इष्यति । सिसासन् । वाजऽसाः ।

ऋषिः । व्रता । विदानः । आयुधा ॥ ४ ॥

सोमः वाजमन्नं प्रेष्यति प्रेरयति यजमानेभ्यः । किंकुर्वन् सिषासन् यजमानान् संभक्तुमिच्छन् ईदृशइन्दुर्वाजसाः अन्नस्य दाता ऋषिः सर्वस्यद्रष्टा व्रता व्रतानि कर्माणि आयुधानि च विदानोजानन् ॥ ४ ॥

४. यजमानों का आश्रय करने की इच्छा से अन्नदाता, सर्वदर्शी तथा कर्म और आयुध को जाननेवाले सोम अन्न प्रेरित करते हैं।

तंगीर्भिर्वाचमीङ्खयंपुनानंवासयामसि । सोमंजनस्यगोपतिम् ॥५॥

तम् । गीःऽभिः । वाचम्ऽईङ्खयम् । पुनानम् ।

वासयामसि । सोमम् । जनस्य । गोऽपतिम् ॥ ५ ॥

तं सोमं गीर्भिः स्तुतिभिः स्तौमीतिशेषः । किंच वाचमीङ्खयं वाचःप्रेरयितारं पुनानं पूयमानं तं सोमं वासयामसि वासयामः श्रयणद्रव्यैः । कीदृशं सोमं जनस्य गोपतिं गवां पालकं यद्वैकमेववाक्यं उक्तविशेषणविशिष्टं सोमं स्तुतिभिर्वासयामइति । माधवस्तु—वाचमितिपृथक्पदं विकल्पंकृत्वा वाक्यद्वयं चकार ॥ ५ ॥

५. मैं स्तुति-वचनों से उन्हीं सोम की स्तुति करता हूँ, जो गो-पालक हैं। हम स्तुति-प्रेरक और पवित्र सोम को वासित करेंगे।

अथ षष्ठी–

विश्वोयस्यंव्रतेजनोदाधारधर्मणस्पतेः। पुनानस्यंप्रभूवंसोः ॥६॥२५॥

विश्वः। यस्य। व्रते। जनः। दाधार। धर्मणः।
पतेः। पुनानस्य। प्रभुऽवंसोः॥ ६ ॥ २५॥

विश्वः सर्वोजनो मनुष्यो यजमानः यस्य सोमस्य व्रते कर्मणि दाधार धारयति मन-इतिशेषः। कीदृशस्य यस्य धर्मणः कर्मणः पतेः पालकस्य पुनानस्य पूयमानस्य प्रभूवसोः प्रभूतधनस्य ॥ ६ ॥

६. सारे मनुष्य कर्मपति, पवित्र और प्रभूत धनवाले सोम के कर्म में मन लगाते हैं।

॥ इति षष्ठस्याष्टमे पंचविंशोवर्गः ॥ २५॥

असर्जीतिषळृचं द्वादशं सूक्तं ऋष्याद्याः पूर्ववत्। असर्जीत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा–

असर्जिरथ्योयथापवित्रेचम्वोःसुतः। कार्ष्मन्वाजीन्यक्रमीत्॥१॥

असर्जि। रथ्यः। यथा। पवित्रे। चम्वोः। सुतः।
कार्ष्मन्। वाजी। नि। अक्रमीत्॥ १ ॥

रथ्योयथा रथसंबन्धीअश्वइव सयथा विसृज्यते तद्वत् चम्वोरधिषवणफलकयोः सुतोभिषुतः सोमः असर्जि सृष्टोभूत् पवित्रे। तथा भूतोवाजी वेजनवान् सोमाख्योश्वः कार्ष्मन् कार्ष्मेयुद्धं इतरेतरघर्षणाव अत्र देवानामाकर्षणवति यज्ञाख्ये संग्रामे न्यक्रमीव नितरां क्रामयति ॥ १ ॥

१. रथ में जोते गये अश्व के समान दोनों चमुओं (स्रुकों) में अभिषुत सोम दशापवित्र में बनाये गये वेगवान् सोम युद्ध में विचरण करते हैं।

सवह्निःसोमजागृविःपवस्वदेववीरति। अभिकोशंमधुश्चुतम् ॥२॥

सः। वह्निः। सोम। जागृविः। पवस्व। देवऽवीः।
अति। अभि। कोशम्। मधुऽश्चुतम्॥ २ ॥

हे सोम सवह्निर्वाहकः जागृविर्जागरूको देववीर्देवकामस्त्वं मधुश्चुतं मधुस्राविकोशं दशापवित्रमतिक्रम्याभिपवस्व द्रोणकलशं प्रति क्षर ॥ २ ॥

२. सोम, तुम वाहक, जागरूक और देवाभिलाषी हो। तुम मधुस्रावी दशापवित्र को लाँघकर क्षरित होओ।

अथ तृतीया–

सनोज्योतींषिपूर्व्यपवमानविरोचय। क्रत्वेदक्षायनोहिनु॥ ३॥

सः। नः। ज्योतींषि। पूर्व्य। पवमान। वि।
रोचय। क्रत्वे। दक्षाय। नः। हिनु॥ ३॥

हे पूर्व्य पुराण पवमान सोम सत्वं नोस्माकं ज्योतींषि दिव्यानि स्थानानि विरोचय प्रकाशय। किंच क्रत्वे कर्मणे यागाय दक्षाय बलाय बलप्रदाय यागायवा नोस्मान् हिनु प्रेरय॥ ३॥ ३. प्राचीन क्षरणशील सोम, तुम हमारे दिव्य स्थानों को प्रकाशित करो और हमें यज्ञ तथा बल के लिए प्रेरित करो।

शुम्भमानऋतायुभिर्मृज्यमानोगभस्त्योः। पवतेवारेअव्यये॥४॥

शुम्भमानः। ऋतयुऽभिः। मृज्यमानः।
गभस्त्योः। पवते। वारे। अव्यये॥ ४॥

ऋतायुभिः यज्ञकामैः ऋत्विग्भिः शुंभमानोलंक्रियमाणः तेषामेव गभस्त्योर्हस्तयोर्मृज्यमानः सोमः अव्यये अविमये वारे वाले दशापवित्रे पवते पूयते॥ ४॥

४. यज्ञाभिलाषी ऋत्विकों के द्वारा अलंकृत और उनके हाथों से परिमार्जित सोम मेषलोममय दशापवित्र में शोधित होते हैं।

सविश्वादाशुषेवसुसोमोदिव्यानिपार्थिवा। पवतामान्तरिक्ष्या॥५॥

सः। विश्वा। दाशुषे। वसु। सोमः। दिव्यानि।
पार्थिवा। पवताम्। आ। अन्तरिक्ष्या॥ ५॥

सोभिषूयमाणः सोमोदाशुषे हविर्दात्रे विश्वा सर्वाणि वसु वसूनि धनानि आपवतां प्रयच्छतु। विश्वानीत्युक्तस्य विवरणं शिष्टं। दिव्यानि दिविभवानि पार्थिवा पृथिवीसंबन्धीनि अंतरिक्ष्या अन्तरिक्षेभवानिच पवतां॥ ५॥

५. वह अभिषुत सोम हविर्दाता को द्युलोक, भूलोक और अन्तरिक्ष के सारे धनों को दें।

अथ षष्ठी–

आदिवस्पृष्ठमश्वयुर्गव्ययुःसोमरोहसि। वीरयुःशवसस्पते॥६॥२६॥

आ । दिवः । पृष्ठम् । अश्वऽयुः । गव्यऽयुः ।
सोम । रोहसि । वीरऽयुः । शवसः । पते ॥ ६ ॥ २६ ॥

हे सोम त्वं स्तोतृणां अश्वयुरश्वमिच्छन् गव्ययुर्गाइच्छन् वीरयुः पुत्रानिच्छन् दिवः पृष्ठं द्युलोकमारोहसि आहुतिद्वारा हे शवसस्पते अन्नस्यपालक ॥ ६ ॥

६. बलाधिपति सोम, तुम स्तोताओं के लिए अश्व, गो और वीरपुत्र के अभिलाषी होकर स्वर्गपृष्ठ पर चढ़ो।

॥ इति षष्ठस्याष्टमे षड्विंशोवर्गः ॥ २६ ॥

ससुतइति षळृचं त्रयोदशं सूक्तं रहूगणस्यार्षं गायत्रं सौम्यं अनुक्रम्यतेच—ससुतोरहूगणइति । गतोविनियोगः ।

तत्र प्रथमा—

ससुतःपीतयेवृषासोमःपवित्रेअर्षति । विघ्नन्रक्षांसिदेवयुः ॥ १ ॥

सः । सुतः । पीतये । वृषा । सोमः । पवित्रे ।
अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ १ ॥

सः सोमः पीतये इन्द्रादिपानाय सुतोभिषुतो वृषा वर्षणः सन् पवित्रे अर्षति गच्छति । किंकुर्वन् रक्षांसि विघ्नन् देवयुर्देवकामः सइत्यन्वयः ॥ १ ॥

१. इन्द्र आदि के पान के लिए अभिषुत सोम काम-वर्षक, राक्षस-नाशक और देव-कामी होकर दशापवित्र में जाते हैं।

सपवित्रेविचक्षणोहरिरर्षतिधर्णसिः । अभियोनिंकनिक्रदत् ॥२॥

सः । पवित्रे । विऽचक्षणः । हरिः । अर्षति ।
धर्णसिः । अभि । योनिम् । कनिक्रदत् ॥ २ ॥

ससोमो विचक्षणः पश्यतिकर्म एतत् सर्वस्यद्रष्टा हरिर्हरितवर्णः सोमो धर्णसिः सर्वस्य धारकः पवित्रे अर्षति गच्छति पश्चात् कनिक्रदत् शब्दंकुर्वन् योनिं स्थानं द्रोणकलशमभि गच्छति ॥ २ ॥

२. वह सोम सबके दर्शक, हरित-वर्ण और सबके धारक होकर दशा-पवित्र में जाते हैं। अनन्तर शब्द करते हुए द्रोण-कलश में जाते हैं।

अथ तृतीया—

सवाजीरोचनादिवःपवमानोविधावति । रक्षोहावारमव्ययम् ॥३॥

स: । वाजी । रोचना । दिवः । पवमानः । वि ।
धावति । रक्षः॒ऽहा । वार॑म् । अव्यय॑म् ॥ ३ ॥

सवाजी वेजनवानश्वस्थानीयोदिवः स्वर्गस्य रोचना रोचकः पवमानः पूयमानो विधावति । कीदृशः रक्षोहा रक्षोहन्ता अव्ययं वारं दशापवित्रमतीत्य च धावति ॥ ३ ॥

३. वेगशाली, स्वर्ग के दीप्ति-प्रद और क्षरणशील सोम राक्षस-विनाशक होकर मेषलोममय दशापवित्र को लाँघकर जा रहे हैं।

सत्रितस्याधिसानविपवमानोअरोचयत् । जामिभिः सूर्यंसह ॥४॥

स: । त्रितस्य॑ । अधि । सान॑वि । पव॑मानः ।
अरोचयत् । जामिऽभिः । सूर्य॑म् । सह ॥ ४ ॥

ससोमस्त्रितस्य महर्षेः अधिसानवि समुच्छ्रिते यज्ञे । अधीति सप्तम्यर्थानुवादी । पवमानः पूयमानः जामिभिः प्रवृद्धैः बन्धुभूतैर्वा स्वतेजोभिः सह सहितःसन् सूर्यमरोचयत् प्रकाशितवान् ॥ ४ ॥ ४. उन सोम ने त्रित ऋषि के उन्नत यज्ञ में पवित्र होकर अपने प्रवृद्ध तेजों से सूर्य को प्रकाशित किया।

सवृत्रहावृषासुतोवरिवोविददाभ्यः । सोमोवाजमिवासरत् ॥ ५ ॥

स: । वृत्र॒ऽहा । वृषा॑ । सुतः । वरिवः॒ऽवित् ।
अदाभ्यः । सोम॑: । वाज॑म्ऽइव । असरत् ॥ ५ ॥

सवृत्रहा वृषा वर्षकः सुतोभिषुतो वरिवोवित् यष्टुर्धनस्यलंभकः अदाभ्यः आ दातृभ्योन्यैरदंभनीयः सोमो वाजमिव संग्राममश्वइवासरत् गच्छति कलशं ॥ ५ ॥

५. जैसे अश्व युद्ध-भूमि में जाता है, वैसे ही वृत्रघ्न, अभिलाषादाता अभिषुत अहिंसनीय सोम कलश में जाते हैं।

अथ षष्ठी—

सदेवःकविनेषितो३ऽभिद्रोणानिधावति । इन्दुरिन्द्रायमंहना ॥६॥२७॥

स: । देवः । कविना॑ । इषितः । अभि । द्रोणा॑नि ।
धावति । इन्दुः । इन्द्राय । मंहना॑ ॥ ६ ॥ २७ ॥

ससोमो देवइन्दुः क्लिद्यमानः कविना क्रान्तप्रज्ञेन अध्वर्युणा इषितः प्रेरितःसन् द्रोणान् द्रोणकलशानभिधावति अभिगच्छति । किमर्थं इन्द्रायेन्द्रार्थं मंहना महान् सइति समन्वयः॥६॥

६. वे महान्, भींगे हुए, कवि के द्वारा प्रेरित सोम, इन्द्र के लिए द्रोण-कलश में जाते हैं।

॥ इति षष्ठस्याष्टमे सप्तविंशोवर्गः॥ २७ ॥

एषइति षळृचं चतुर्दशंसूक्तं ऋष्याद्याः पूर्ववत्। एषउस्यत्रितइत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

एषउस्यवृषारथोऽव्योवारेभिरर्षति। गच्छन्वाजंसहस्रिणम् ॥ १ ॥

एषः। ऊँ इति। स्यः। वृषा। रथः। अव्यः। वारेभिः।
अर्षति। गच्छन्। वाजम्। सहस्रिणम् ॥ १ ॥

स्यः सप्रसिद्धः एषोभिषुतः सोमोवृषा वर्षितारथोरंहणस्वभावः अव्योवारेभिः अवेर्वालैः दशापवित्रेणार्षति गच्छति कलशं। वाजमन्नं सहस्रिणं सहस्रसंख्याकं यजमानाय प्रदातुं गच्छन् द्रोणकलशं प्रविशन्नर्षतीत्यर्थः उपूरणः॥ १ ॥

१. वे सोम अभिलाष-प्रद और रथस्वभाव (गति-परायण) होकर यजमान को बहुत अन्न देने के लिए मेषलोमों से दशापवित्र से होकर द्रोण-कलस में जाते हैं।

एतंत्रितस्ययोषणोहरिंहिन्वन्त्यद्रिभिः। इन्दुमिन्द्रायपीतये ॥२॥

एतम्। त्रितस्य। योषणः। हरिम्।
हिन्वन्ति। अद्रिऽभिः। इन्दुम्। इन्द्राय। पीतये ॥ २ ॥

एतमिन्दुं क्लिद्यमानं हरिं हरितवर्णं सोमं त्रितस्य ऋषेर्योषणोंगुलयोद्रिभिः हिन्वन्ति इन्द्रायेन्द्रस्य पीतये पानाय ॥ २ ॥

२. इन्द्र के पान के लिए त्रित ऋषि की अँगुलियां इन क्लेदवाले और हरित-वर्ण सोम को पत्थर से पीस रही हैं।

अथ तृतीया—

एतंत्यंहरितोदशमर्मृज्यन्तेअपस्युवः। याभिर्मदायशुंभते ॥ ३ ॥

एतम्। त्यम्। हरितः। दश। मर्मृज्यन्ते।
अपस्युवः। याभिः। मदाय। शुंभते ॥ ३ ॥

एतं त्यं तं सोममध्वर्योर्दश हरितो हरणस्वभावा अंगुलयः अपस्युवः कर्मेच्छवः सत्यो-मर्मृज्यन्ते शोधयन्ति याभिरिन्द्रस्य मदाय शुंभते दीप्यते शोध्यतइत्यर्थः तं एतमिति संबन्धः ॥ ३ ॥

३. दस हरित-वर्ण अंगुलियाँ, कर्माभिलाषिणी होकर, इन सोम को मार्जित करती हैं। इनकी सहायता से इन्द्र के मद के लिए सोम शोधित होते हैं। अथ चतुर्थी—

एषस्यमानुंषीष्वाश्येनोनविक्षुसीदति । गच्छंञारोनयोषितंम् ॥४॥

एषः । स्यः । मानुंषीषु । आ । श्येनः । न । विक्षु ।
सीदति । गच्छंन् । जारः । न । योषितंम् ॥ ४ ॥

स्यः सएषसोमो मानुषीषु विक्षु प्रजासु यजमानरूपासु अनुग्रहेण आसीदति श्येनोन श्येनइव । पुनः कइव योषितं गच्छन् अभिगच्छन् जारोन जारइव सयथा संकेतितः तस्याः कामपूरणाय गूढोगच्छति तद्वदित्यर्थः ॥ ४ ॥

४. ये सोम मानव-प्रजा के बीच श्येन पक्षी के समान, बैठते हैं। जैसे उपपत्नी के पास जार जाता है, वैसे ही सोम जाते हैं।

एषस्यमद्योरसोवंचष्टेदिवःशिशुंः । यइन्दुर्वारमाविंशत् ॥ ५ ॥

एषः । स्यः । मद्यंः । रसंः । अवं । चष्टे । दिवः ।
शिशुंः । यः । इन्दुंः । वारंम् । आ । अविंशत् ॥ ५ ॥

स्यः सएषः मद्योमदनिमित्तोरसोवचष्टे सर्वमवपश्यति दिवः शिशुः द्युपुत्रः । तत्रोत्पत्तेः पुत्रत्वमस्य । यइन्दुर्दीप्तः सोमो वारं दशापवित्रमाविशदाविशति सएषइति ॥ ५ ॥

५. सोम के ये मादक रस सारे पदार्थ को देखते हैं। वे सोम स्वर्ग के पुत्र हैं। दीप्त सोम दशापवित्र में प्रवेश करते हैं।

एषस्यपीतयेंसुतोहरिरंर्षतिधर्णसिः । क्रन्दन्योनिंमभिप्रियम् ॥६॥२८॥

एषः । स्यः । पीतयें । सुतः । हरिंः । अर्षति । धर्णसिः ।
क्रन्दंन् । योनिंम् । अभि । प्रियम् ॥ ६ ॥ २८ ॥

एषस्यः ससोमः पीतये पानाय सुतोभिषुतो हरिर्हरितवर्णो धर्णसिर्धारकः प्रियं स्वप्रियभूतं योनिंस्थानं द्रोणकलशं क्रंदन् शब्दयन् अभ्यर्षति गच्छति ॥ ६ ॥

६. पान के लिए अभिषुत, हरितवर्ण और सबके धारक सोम शब्द करते हुए अपने प्रिय स्थान (द्रोण-कलश में) जाते हैं।

॥ इति षष्ठस्याष्टमेष्टाविंशोवर्गः ॥ २८ ॥

आशुरर्षेति षळृचं पंचदशं सूक्तं आंगिरसस्य बृहन्मतेरार्षं गायत्रं पवमानसोमदेवताकं। आशुरर्षबृहन्मतिरित्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

**आ॒शुर॑र्षबृहन्मते॒परि॑प्रि॒येण॒धाम्ना॑। यत्र॑दे॒वाइति॒ब्रव॑न्॥ १॥**

**आ॒शुः। अ॒र्ष॒। बृ॒ह॒त्ऽम॒ते॒। परि॑। प्रि॒येण॑।**

**धाम्ना॑। यत्र॑। दे॒वाः। इति॑। ब्रव॑न्॥ १॥**

हे बृहन्मते महामते सोम प्रियेण देवानां प्रियतमेन धाम्ना शरीरेण धारया आशुः शीघ्रःसन् पर्यर्ष परिगच्छ। यत्रदेवाइन्द्रादयो वर्तन्ते इतिब्रवन् ब्रुवन्नुच्चारयन् तां दिशं गच्छामीति ब्रुवन्नित्यर्थः॥ १॥

१. महामति सोम, देवों के प्रियतम शरीर से युक्त होकर शीघ्र गमन करो। "देवता लोग जहाँ हैं उसी दिशा को जाता हूँ"—ऐसा सोम कह रहे हैं।

अथ द्वितीया—

**प॒रि॒ष्कृ॒ण्वन्ननि॑ष्कृतं॒जना॑यया॒तय॒न्निषः॑। वृ॒ष्टिं॑दि॒वःपरि॑स्रव॥२॥**

**प॒रि॒ऽकृ॒ण्वन्। अनि॑ःऽकृतम्। जना॑य।**

**या॒तय॑न्। इषः॑। वृ॒ष्टिम्। दि॒वः। परि॑। स्र॒व॒॥ २॥**

हे सोम अनिष्कृतं संस्कृतं यजमानं स्थानं वा परिष्कृण्वन् संस्कुर्वन् जनाय यागकर्त्रे इषोन्नानि यातयन् निर्गमयन् दिवोन्तरिक्षात् वृष्टिं परिस्रव॥ २॥

२. असंस्कृत स्थान वा यजमान को संस्कृत करते हुए और याज्ञिक को अन्न देते हुए अन्तरिक्ष से, हे सोम, वृष्टि करो।

**सु॒तए॑तिप॒वित्र॒आत्विषिं॒दधा॑नओज॑सा। वि॒चक्षा॑णोविरो॒चय॑न्॥ ३॥**

**सु॒तः। ए॒ति॒। प॒वित्रे॑। आ। त्विषि॑म्। दधा॑नः। ओज॑सा।**

**वि॒ऽचक्षा॑णः। वि॒ऽरो॒चय॑न्॥ ३॥**

सुतोभिषुतः सोमःसन् पवित्रे दशापवित्रे आइत्यनर्थकः ओजसा बलेन शीघ्रं एति गच्छति। कीदृशःसन् त्विषिं दीप्तिं दधानो धारयन् विचक्षणः सर्वं पश्यन् विरोचयन् दीपयंश्च। किं देवानितिशेषः॥ ३॥

३. अभिषुत सोम दीप्ति धारण करके और सारे पदार्थों को देख और दीप्त करके बल से शीघ्र दशापवित्र में जाते हैं।

अथ चतुर्थी—

अयंसयोदिवस्परिरघुयामापवित्रआ । सिन्धोरूर्माव्यक्षरत् ॥४॥

अयम् । सः । यः । दिवः । परि । रघुऽयामा । पवित्रे । आ ।
सिन्धोः । ऊर्मा । वि । अक्षरत् ॥ ४ ॥

अयं ससोमः पवित्रे आसिच्यमानइतिशेषः । सिंधोर्जलस्राविण्याऊर्मा ऊर्मौ संघाते व्यक्षरत् विविधं क्षरति । सइत्युक्तं कइत्याह—योदिवस्परि द्युलोकस्योपरि रघुयामा लघुगमनः देवप्राप्तौ सोयमिति संबन्धः ॥ ४ ॥

४. ये सोम दशापवित्र में सिंचित होकर जल-तरङ्ग से क्षरित होते हैं। ये स्वर्ग के ऊपर शीघ्र गमन करते हैं।

आविवासन्परावतोअथोअर्वावतःसुतः । इन्द्रायसिच्यतेमधु ॥५॥

आऽविवासन् । पराऽवतः । अथो इति । अर्वाऽवतः ।
सुतः । इन्द्राय । सिच्यते । मधु ॥ ५ ॥

सुतोभिषुतःसोमः परावतः दूरनामैतत् दूरस्थानात् अथो अपिचार्वावतोन्तिकस्थांश्च देवानाविवासन् रसेन परिचरणायेत्यर्थः इन्द्रायेन्द्रार्थं मधु मधुसदृशः सोमः सिच्यते ॥ ५ ॥

५. दूर और पास के देवों की सेवा के लिए अभिषुत सोम, इन्द्र के लिए, मधु के समान सिंचित होते हैं।

समीचीनाअनूषतहरिंहिन्वन्त्यद्रिभिः । योनावृतस्यसीदत ॥६॥२९॥

सम्ऽईचीनाः । अनूषत । हरिम् । हिन्वन्ति । अद्रिऽभिः ।
योनौ । ऋतस्य । सीदत ॥ ६ ॥ २९ ॥

समीचीनाः सम्यगंचिताः संगताःस्तोतारोनूषत स्तुवन्ति । किंच सोमं हरिं हरितवर्णं हिन्वन्ति प्रेरयन्ति गमयन्ति अद्रिभिर्ग्रावभिः । यस्मादेवं तस्मात् ऋतस्य यज्ञस्य योनौ स्थाने सीदत निषण्णाभवत हे देवाः ॥ ६ ॥

६. भली भाँति मिले हुए स्तोता स्तुति करते हैं। वे हरित-वर्ण सोम को, पत्थर की सहायता से, प्रेरित करते हैं। अतएव देवो, यज्ञस्थान में बैठो।

॥ इति षष्ठस्याष्टमे एकोनत्रिंशोवर्गः ॥ २९ ॥

पुनानइति षळृचं षोडशं सूक्तं ऋष्याद्याः पूर्ववत् । पुनानइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

पुनानोअंक्रमीदभिविश्वामृधोविचर्षणिः । शुम्भन्तिविप्रंधीतिभिः॥१॥

पुनानः । अक्रमीत् । अभि । विश्वाः । मृधः । विऽचर्षणिः ।
शुंभन्ति । विप्रम् । धीतिऽभिः ॥ १ ॥

पुनानः पूयमानो विचर्षणिः द्रष्टा सोमः विश्वा सर्वान्मृधोहिंसकान् शत्रूनभ्यक्रमीत् अतिक्रान्तवान् तं विप्रं मेधाविनं धीतिभिः कर्मभिरभिषवादिभिः स्तुतिभिर्वा शुंभन्ति दीपयंत्यलंकुर्वन्ति ॥ १ ॥

१. क्षरणशील और सर्वदर्शक सोम सारे हिंसकों को लांघ गये। उन मेधावी सोम को स्तुति-द्वारा सब अलंकृत करते हैं।

आयोनिमरुणोरुंहद्गमदिन्द्रंवृषासुतः । ध्रुवेसदंसिसीदति ॥ २ ॥

आ । योनिम् । अरुणः । रुहत् । गमत् । इन्द्रम् । वृषा ।
सुतः । ध्रुवे । सदसि । सीदति ॥ २ ॥

अयमरुणोरुणवर्णः सोमो योनिं स्थानं द्रोणकलशमारुहदारोहति ततइन्द्रं गमद्गच्छति । कुतः सन्नयं वृषावर्षकः फलानां सुतोभिषुतः सन् गत्वा ध्रुवेसदसि स्थिरेस्थाने द्युलोकाख्ये सीदति निवसति ॥ २ ॥

२. अरुण-वर्ण (कृष्ण-लोहित ?) सोम द्रोण-कलश में जा रहे हैं। अनन्तर अभिलाषा-दाता और अभिषुत होकर इन्द्र के पास जाते हैं और निश्चित स्थान में बैठते हैं।

नूनोंरयिंमहामिन्दोस्मभ्यंसोमविश्वतः । आपवस्वसहस्रिणंम्॥३॥

नु । नः । रयिम् । महाम् । इन्दो इति । अस्मभ्यम् । सोम ।
विश्वतः । आ । पवस्व । सहस्रिणम् ॥ ३ ॥

हे सोमाभिषुतस्त्वं हे इन्दो नोस्मभ्यं नु क्षिप्रं महां महान्तं सहस्रिणं असंख्यातं रयिं धनं विश्वतः आपवस्व सर्वतः परिस्रव ॥ ३ ॥

३. हे इन्द्र (दीप्त) सोम, तुम अभिषुत होकर हमारे लिए शीघ्र महान् और बहुत धन, चारों ओर से, दो।

अथ चतुर्थी—

विश्वासोमपवमानद्युम्नानीन्दवाभर । विदाःसहस्रिणीरिषः ॥ ४ ॥

विश्वा । सोम । पवमान । द्युम्नानि । इन्दो इति ।

आ । भर । विदाः । सहस्रिणीः । इषः ॥ ४ ॥

हे सोम पवमान पूयमान इन्दो दीप्त त्वं विश्वा सर्वाणि बहुविधानि द्युम्नानि द्रविणानि आभराहर । विदाः लंभयच सहस्रिणीः सहस्रसंख्याकानि इषोन्नानि ॥ ४ ॥

४. क्षरणशील और दीप्त सोम, तुम बहुविध अन्न ले आओ और सहस्र-संख्यक अन्न प्रदान करो।

सनःपुनानआभररयिंस्तोत्रेसुवीर्यम् । जरितुर्वर्धयागिरः ॥ ५ ॥

सः । नः । पुनानः । आ । भर । रयिम् । स्तोत्रे ।

सुऽवीर्यम् । जरितुः । वर्धय । गिरः ॥ ५ ॥

हे सोम सत्वं नोस्मभ्यं स्तोत्रे स्तोतृभ्यः पुनानः पूयमानोभिषूयमाणः आ भराहर । किं रयिं धनं । कीदृशं सुवीर्यं सुपुत्रं । किंच जरितुः स्तोतुर्गिरः स्तुतीः वर्धय ॥५॥

५. सोम, तुम हमारे स्तोताओं के लिए पवित्र और अभिपुत होकर सुपुत्रवाला धन ले आओ और स्तोता की स्तुति को वर्द्धित करो।

पुनानइन्दवाभरसोमद्विबर्हसंरयिम् । वृषन्निन्दोनउक्थ्यम् ॥ ६॥३०॥

पुनानः । इन्दो इति । आ । भर । सोम । द्विऽबर्हसम् ।

रयिम् । वृषन् । इन्दो इति । नः । उक्थ्यम् ॥ ६ ॥ ३० ॥

हे इन्दो सोम पुनानः पूयमानस्त्वं आभराहर । किं रयिं धनं । कीदृशं धनं द्विबर्हसं संधयोर्द्युपृथिव्याख्ययोः स्थानयोः परिवृढं । तदेवाह हे इन्दो वृषन् वर्षक नोस्मभ्यं उक्थ्यं स्तुत्यं धनमाभर ॥ ६ ॥

६. सोम, तुम शोधन-समय में हमारे लिए द्यावापृथिवी में परिवृद्ध धन ले आओ। वर्षक इन्दु (सोम), हमें स्तुत्य धन दो।

॥ इति षष्ठस्याष्टमे त्रिंशोवर्गः ॥ ३० ॥

प्रयेगावइति षळृचं सप्तदशं सूक्तं काण्वस्य मेध्यातिथेरार्षं गायत्रं पवमानसोमदेवताकं तथाचानुक्रान्तं—प्रयेगावोमेध्यातिथिरिति । गतोविनियोगः ।

तत्र प्रथमा—

प्रयेगावोनभूर्णयस्त्वेषाअयासोअक्रमुः । घ्नन्तःकृष्णामपत्वचम् ॥१॥

प्र । ये । गावः । न । भूर्णयः । त्वेषाः । अयासः ।
अक्रमुः । घ्नन्तः । कृष्णाम् । अप । त्वचम् ॥ १ ॥

ये अभिषुताः सोमाः गावोन उदकानीव तानि यथा तूर्णमधः पतन्ति तद्वत् एवंचोपमीयन्ते । यद्वा गावः स्वगोष्ठं प्रत्याशु गच्छन्ति तद्वत् । अथवा गावः स्तुतिवाचः तायथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति तद्वत् । भूर्णयः क्षिप्राः त्वेषाः दीप्ताः अयासः अयाः गमनशीलाः कृष्णां त्वचं कृष्णा त्वग्रक्षाः तं निघ्नंतः । त्वचिः संवरणकर्मा । ईदृग्भूताः सोमाः अक्रमुः तान् स्तुवतेतिशेषः ॥ १ ॥

१. जो अभिषुत सोम, जल के समान, शीघ्र दीप्तियुक्त और गतिशील होकर काले चमड़ेवालों को मारकर विचरण करते हैं, उन सोमों की स्तुति करो।

अथ द्वितीया—

सुवितस्यमनामहेतिसेतुंदुराव्यम् । साह्वांसोदस्युमव्रतम् ॥ २ ॥

सुवितस्य । मनामहे । अति । सेतुम् ।
दुःऽआव्यम् । सह्वांसः । दस्युम् । अव्रतम् ॥ २ ॥

सुवितस्य शोभनंप्राप्तः सुवितः शोभनस्य सोमस्य सेतुं रक्षोविषयं बन्धं दुष्टमतिं च रक्षसां बंधनं तेषां हननबुद्धिंच सोमकर्तृका मनामहे स्तुमः । कथंस्तुमइति तदुच्यते अव्रतं दुराव्यं तद्वयं कर्माणं दस्युं शत्रुं साह्वांसोभिभवन्तः ॥ २ ॥

२. व्रत-शून्य और दुष्टमति को दबाकर हम सुन्दर सोम की राक्षस-बन्धन और राक्षस-हननवाली इच्छा की स्तुति करेंगे।

शृण्वेवृष्टेरिवस्वनःपवमानस्यशुष्मिणः । चरन्तिविद्युतोदिवि ॥३॥

शृण्वे । वृष्टेःऽइव । स्वनः । पवमानस्य ।
शुष्मिणः । चरन्ति । विऽद्युतः । दिवि ॥ ३ ॥

शृण्वे श्रूयते किं सोमस्वनः । किमिव वृष्टेर्वर्षणस्य स्वनइव तस्य यथा महान् स्वनः श्रूयते तद्वत् प्रभूतरसापातसमये श्रूयते । कस्य स्वनइति तत्राह पवमानस्य पूयमानस्य शुष्मिणोबलवतः तस्यैव विद्युतोदीप्तयो दिव्यन्तरिक्षे चरन्ति ॥ ३ ॥

३. अभिषव-समय में बली सोम की दीप्तियाँ अन्तरिक्ष में विचरण करती हैं। वृष्टि के समान सोम का शब्द सुनाई देता है।

अथ चतुर्थी—

आपवस्वमहीमिषंगोमदिन्दोहिरण्यवत् । अश्वावद्वाजवत्सुतः ॥४॥

आ । पवस्व । महीम् । इषम् । गोऽमत् । इन्दो इति ।
हिरण्यऽवत् । अश्वऽवत् । वाजऽवत् । सुतः ॥ ४ ॥

हे इन्दो सोम सुतोभिषुतस्त्वं महीमिषं महदन्नं आपवस्व । कीदृशमन्नं गोमत् बहुगोभि-रुपेतं एवं हिरण्यवत् हिरण्यैः अश्ववत् अश्वैः वाजवत् वाजैर्बलैश्चोपेतं ॥ ४ ॥

४. सोम, तुम अभिषुत होकर गौ, अश्व और बल से युक्त महान्न हमारे सामने प्रेरित करो।

सपवस्वविचर्षणआमहीरोदसीपृण । उषाःसूर्योनरश्मिभिः ॥ ५॥

सः । पवस्व । विऽचर्षणे । आ । मही इति । रोदसी इति ।
पृण । उषाः । सूर्यः । न । रश्मिऽभिः ॥ ५ ॥

हे विचर्षणे विद्रष्टः सोम सत्वं पवस्व क्षर रसं । तथा कृत्वा तेनरसेन मही महत्यौ रोदसी द्यावापृथिव्यौ आपृण आपूरय उषाः उषसः एकदेशवाचिनोषःशब्देन तदुपलक्षित-महरुच्यते तत्प्राधान्यात् अहानि रश्मिभिः सूर्योन सूर्यइव ॥ ५ ॥

५. सर्वदर्शक सोम, तुम प्रवाहित होओ। जैसे सूर्य अपनी किरणों से दिनों को पूर्ण करते हैं, वैसे ही तुम द्यावापृथिवी को पूर्ण करो।

परिणःशर्मयन्त्याधारयासोमविश्वतः । सरारसेवविष्टपम् ॥ ६॥ ३१॥

परि । नः । शर्मऽयन्त्या । धारया । सोम ।
विश्वतः । सर । रसाऽइव । विष्टपम् ॥ ६ ॥ ३१ ॥

हे सोम नोस्मभ्यं शर्मयंत्या सुखयन्त्या धारया विश्वतः सर्वतः परिसर परिचर रसेव रसेनेव विष्टपं भूलोकं । यद्वा रसा नदी स्थानं सा प्रवणरूपमिव ॥ ६ ॥

६. सोम, हमारी सुखकरी धारा के द्वारा चारों ओर वैसे ही पूर्ण करो, जैसे नदियाँ भूमण्डल को पूरित करती हैं।

॥ इति षष्ठस्याष्टमे एकत्रिंशोवर्गः ॥ ३१ ॥

जनयन्निति षळृचमष्टादशंसूक्तं ऋष्याद्याः पूर्ववत् । जनयन्नित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

जनयन्रोचनादिवोजनयन्नप्सुसूर्यम् । वसानोगाअपोहरिः ॥ १॥

जनयन् । रोचना । दिवः । जनयन् । अप्ऽसु ।
सूर्यम् । वसानः । गाः । अपः । हरिः ॥ १ ॥

अयं हरिः सोमो दिवोद्युसंबन्धीनि रोचना रोचनानि नक्षत्रग्रहमंडलानि जनयन् तथा अप्स्वन्तरिक्षे सूर्यंच जनयन् तथा गाः अधोगंत्रीरपोवसानो भूमिमात्मानंवा आच्छादयन् पवतइत्युत्तरत्र संबंधः ॥ १ ॥

१. ये हरित-वर्ण सोम द्युलोक-सम्बन्धी नक्षत्रादि और अन्तरिक्ष में सूर्य को उत्पन्न करके अधोगामी जलों से ढक कर जाते हैं।

एषप्रत्नेनमन्मनादेवोदेवेभ्यस्परि । धारयापवतेसुतः ॥ २ ॥

एषः । प्रत्नेन । मन्मना । देवः । देवेभ्यः ।
परि । धारया । पवते । सुतः ॥ २ ॥

एषः देवः सोमः प्रत्नेन पुराणेन मन्मना मननीयेन स्तोत्रेण युक्तः सुतोभिषुतश्च सन् देवेभ्यः परि परितो धारया स्वीयया पवते ॥ २ ॥

२. ये सोम प्राचीन स्तोत्र से युक्त और अभिषुत होकर देवों के लिए धारा-रूप से गिरते हैं। अथ तृतीया—

वावृधानायतूर्वयेपवन्तेवाजसातये । सोमाःसहस्रपाजसः ॥ ३ ॥

वावृधानाय । तूर्वये । पवन्ते । वाजऽसातये ।
सोमाः । सहस्रऽपाजसः ॥ ३ ॥

वावृधानाय वर्धमानाय तूर्वये क्षिप्राय वाजसातये संग्रामायान्नलाभायवा पवन्ते पूयन्ते के सोमाः । कीदृशाः सहस्रपाजसो परिमितबलाः असंख्यातवेगाइत्यर्थः ॥ ३ ॥

३. वर्द्धमान अन्न की शीघ्र प्राप्ति के लिए असंख्यात-वेग सोम क्षरित होते हैं।

अथ चतुर्थी—

दुहानःप्रत्नमित्पयःपवित्रेपरिषिच्यते । क्रन्दन्देवाँअजीजनत् ॥ ४ ॥

दुहानः । प्रत्नम् । इत् । पयः । पवित्रे । परि ।
सिच्यते । क्रन्दन् । देवान् । अजीजनत् ॥ ४ ॥

प्रत्नमिव पुराणमेव पयोरसं दुहानः दधानः सोमः पवित्रे परिषिच्यते। किंच क्रन्दन् शब्दं कुर्वन् देवानजीजनत् जनयति स्वसमीपे यत्र सोमोऽभिषूयते तत्र देवानियतं प्रादुर्भवन्ति अतो जनयतीत्युपचर्यते ॥ ४ ॥

४. पुराण रसवाले सोम दशापवित्र में होते और शब्द करते हुए देवों को प्रादुर्भूत करते हैं। अथ पञ्चमी—

अभिविश्वानिवार्याभिदेवाँऋतावृधः। सोमःपुनानोअर्षति ॥५॥

अभि। विश्वानि। वार्या। अभि। देवान्।
ऋतऽवृधः। सोमः। पुनानः। अर्षति ॥ ५ ॥

अयं सोमः पुनानः पूयमानो विश्वानि वार्या वरणीयानि धनान्यभ्यर्षति तथा ऋतावृधो यज्ञवर्धकान् देवानभ्यर्षति ॥ ५ ॥

५. ये सोम अभिषव-समय में सारे स्वीकरणीय धनों और यज्ञ-वर्द्धक देवों के सामने जाते हैं।

गोमन्नःसोमवीरवदश्वावद्वाजवत्सुतः। पवस्वबृहतीरिषः ॥६॥३२॥

गोऽमत्। नः। सोम। वीरऽवत्। अश्वऽवत्।
वाजऽवत्। सुतः। पवस्व। बृहतीः। इषः ॥ ६ ॥ ३२ ॥

हे सोम सुतस्त्वं नोऽस्मभ्यं गोमत् गोभिर्युक्तं वीरवद्बहुभिः वीरैरुपेतं अश्वावदश्वैर्युक्तं वाजवद्वाजैर्बलैः संग्रामैर्वोपेतं धनं बृहतीरिषः प्रभूतान्यन्नानि पवस्व प्रयच्छेत्यर्थः ॥ ६ ॥

६. सोम, तुम अभिषुत होकर हमें गौ, अश्व, वीर और संग्राम से युक्त धन तथा बहुत अन्न दो।

॥ इति षष्ठस्याष्टमे द्वात्रिंशोवर्गः ॥ ३२ ॥

योअत्यइवेति षळृचमेकोनविंशंसूक्तं ऋष्याद्याःपूर्ववत् योअत्यइवेत्यनुक्रान्तं गतोविनियोगः।

तत्र प्रथमा—

योअत्यंइवमृज्यतेगोभिर्मदायहर्यतः। तंगीर्भिर्वासयामसि ॥१॥

यः। अत्यःऽइव। मृज्यते। गोभिः। मदाय।
हर्यतः। तम्। गीःऽभिः। वासयामसि ॥ १ ॥

यः सोमः अत्यइव अतनशीलोऽश्वइव गोभिर्वसतीवरीभिरद्भिर्गोविकारैः पयआदिभि-र्वा मृज्यते मिश्र्यते किमर्थं मदाय देवानां । कीदृशोयः हर्यतः कान्तः तं सोमं गीर्भिः स्तुति-भिर्वासयामसि वासयामः ॥ १ ॥

१. जो सोम निरन्तर गमनवाले अश्व के समान देवों के मद के लिए गव्य-द्वारा मिश्रित होते हैं और जो कमनीय हैं, हम उन्हीं सोम को स्तुति-द्वारा प्रसन्न करेंगे ।　　अथ द्वितीया—

तन्नोविश्वाअवस्युवोगिरःशुम्भन्तिपूर्वथा । इन्दुमिन्द्रायपीतये ॥ २॥

तम् । नः । विश्वाः । अवस्युवः । गिरः । शुम्भन्ति ।
पूर्वऽथा । इन्दुम् । इन्द्राय । पीतये ॥ २ ॥

तमिन्दुं सोमं नोस्माकं विश्वाः सर्वाअवस्युवः अवोरक्षणं तदिच्छंत्योगिरः स्तुतयः पूर्वथा पूर्वमिव पूर्वं यथा तथैवेदानीमपि शुंभन्ति दीपयंति किमर्थमिन्द्रायेन्द्रस्य पीतये पानाय ॥ २ ॥

रक्षणाभिलाषिणी स्तुतियां, पहले के समान, इन्द्र के पान के लिए इन सोम को दीप्त करती हैं । २.

पुनानोयातिहर्यतःसोमोगीर्भिःपरिष्कृतः । विप्रस्यमेध्यातिथेः॥३॥

पुनानः । याति । हर्यतः । सोमः । गीःऽभिः ।
परिऽकृतः । विप्रस्य । मेध्यऽअतिथेः ॥ ३ ॥

पुनानः पूयमानोहर्यतः कमनीयः सोमोगीर्भिः परिष्कृतः स्तुतिभिरलंकृतोयाति कलशंम-ति । किमर्थं विप्रस्य मेधाविनो मेध्यातिथेर्ममयागार्थं यद्वा ममगीर्भिरिति संबंधः ॥ ३ ॥

३. मेधावी मेध्यातिथि के लिए, शोधन-समय में, कमनीय सोम स्तुतियों के द्वारा अलंकृत होकर कलश की ओर जाते हैं ।

पवमानविदारयिमस्मभ्यंसोमसुश्रियम् । इन्दोसहस्रवर्चसम्॥४॥

पवमान । विदाः । रयिम् । अस्मभ्यम् । सोम ।
सुऽश्रियम् । इन्दो इति । सहस्रऽवर्चसम् ॥ ४ ॥

हे पवमानसोम इन्दोस्मभ्यं सुश्रियं शोभनया श्रिया युक्तं सहस्रवर्चसं बहुदीप्तिं रयिं धनं विदाः देहीत्यर्थः ॥ ४ ॥

४. क्षरणशील (पवमान), शोधनकालीन अथवा अभिषवकालिक इन्दु (सोम), हमें उत्तम दीप्तिवाले और बहु-श्री-सम्पन्न धन दो ।

अथ पंचमी—

इन्दुरत्योनवाजसृत्कनिक्रन्तिपवित्रआ। यदक्षारतिदेवयुः॥५॥

इन्दुः। अत्यः। न। वाजऽसृत्। कनिक्रन्ति।
पवित्रे। आ। यत्। अक्षाः। अति। देवऽयुः॥ ५॥

यः इन्दुः वाजसृत् संग्रामसरणः अत्योन अश्वइव पवित्र आ पवित्रे कनिक्रन्ति शब्दं करोति यद्यदा अक्षाः क्षरति। क्षरसंचलने इत्यस्माच्छान्दसे लुङि तिपि सिच् बहुलंछन्दसी-तीडभावः इडभावश्च रात्सस्येतिसलोपः। देवयुर्देवकामः सन् तदा अतिशब्दं करोति॥ ५॥

५. संग्रामगामी अश्व के समान जो सोम दशापवित्र में शब्द करते हैं, वे जब देवाभिलाषी होते हैं, तब अत्यन्त (ध्वनि) करते हैं।

अथ षष्ठी—

पवस्ववाजसातयेविप्रस्यगृणतोवृधे। सोमरास्वसुवीर्यम्॥६॥३३॥

पवस्व। वाजऽसातये। विप्रस्य। गृणतः।
वृधे। सोम। रास्व। सुऽवीर्यम्॥ ६॥ ३३॥

हे सोम पवस्व क्षर। किमर्थं वाजसातयेन्नस्य लाभाय। तथा गृणतः स्तुवतो विप्रस्य मम मेध्यातिथेर्वृधे वर्धनायच हे सोम सुवीर्यं शोभनवीर्योपेतं पुत्रंच रास्व देहीति॥ ६॥

६. सोम, हमें अन्न देने और स्तोता मेध्यातिथि को (मुझे) बढ़ाने के लिए प्रवाहित होओ। सोम, सुन्दर वीर्यवाला पुत्र भी दो।

॥ इति षष्ठस्याष्टमे त्रयस्त्रिंशोवर्गः॥ ३३॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः॥ १॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टकेष्टमोध्यायः॥ ८॥

॥ इतिषष्ठोष्टकः समाप्तः॥ ६॥

## वैदिक-संहिता

- ☆ **ऋग्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **ऋग्वेद संहिता।** मूलमात्र।
- ☆ **ऋग्वेद संहिता।** भाषामात्र। रामगोविन्द त्रिवेदी
- ☆ **ऋग्वेद संहिता।** सायणाचार्य कृत भाष्य एवं हिन्दी व्याख्या सहित। 1-8 भाग सम्पूर्ण
- ☆ **ऋग्वेद संहिता।** (प्रथम अध्याय, सूक्त 1-19) हिन्दी व्याख्या तथा हिन्दी अंग्रेजी अनुवाद। सम्पादक-प्रो. उमाशंकर शर्मा 'ऋषि'
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **शुक्लयजुर्वेद संहिता।** सम्पा. श्री दौलतराम गौड़
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र। (निर्णयसागर संस्करण)
- ☆ **शुक्लयजुर्वेद संहिता।** पदपाठ-उव्वट-महीधरभाष्य संवलित तत्त्वबोधिनी हिन्दी व्याख्या सहित। डॉ. रामकृष्ण शास्त्री
- ☆ **सामवेद संहिता।** मूलमात्र (गुटका)
- ☆ **सामवेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप शर्मा 'गौड' कृत हिन्दी भाषानुवाद सहित।
- ☆ **अथर्ववेद संहिता।** मूलमात्र (गुटका)
- ☆ **अथर्ववेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप 'गौड' कृत हिन्दी भाषानुवाद सहित। 1-8 भाग

**चौखम्बा विद्याभवन**

**वाराणसी**